**श्रीध०** [1]ननु सिद्धस्य [2]तव कुतोऽध्ययने प्रवृत्तिस्तत्राऽऽह **परिनि[3]ष्ठितोऽपीति**। गृहीतचेता आकृष्टचित्तः।।९।।

**तदिति**। महापुरुषो विष्णुः तदीयः [4]महापौरुषिकः। [5]यस्यं यस्मिन् [6]श्रद्दधतां श्रद्धां कुर्वतां सती अहैतुकी।।१०।।

साधकानां सिद्धानां च न अतःपरं अन्यच्छ्रेयोऽस्तीत्याह **एतदिति**। इच्छतां [7]कामिनां [8]तत्तत्फलसाधनमेतदेव। निर्विद्यमानानां मुमुक्षूणां मोक्षसाधनमेतदेव। योगिनां ज्ञानिनां [9]अकुतोभयं कुतश्चिदपि भयरहितं फलं चैतदेव निर्णीतम्। नात्र प्रमाणं [10]प्रवक्तव्यमित्यर्थः।।११।।

अल्पमेव आयुरवशिष्टं किमहं साधयेयमिति मा शुच इत्याह - **किमिति** त्रिभिः। परोक्षैः अलक्षितैः हायनैः वर्षैः। [11]किं विदितम्?वृथा यातीति [12]विदितं ज्ञातम्। यतो येन ज्ञानेन [13]घटेत यत्नं [14]कुर्यात् ।।१२।।

**वीर०** ननु सिद्धस्य तव कुतोऽध्ययने प्रवृत्तिस्तत्राऽऽह- **परिनिष्ठित** इति। नैर्गुण्ये परिनिष्ठितः काष्ठां गतः [15]अपि शास्त्रनैरपेक्ष्येण भगवदनुसन्धानप्रकारे स्थित इत्यर्थः। ईदृशोऽप्यहमुत्तमश्लोकलीलया भगवल्लीलया गृहीतचेताः आकृष्ट[16]चित्तः। राजर्षे! यदाख्यानं पुराणमधीतवानस्मि। तदभिधास्यामीत्युत्तरश्लोकेनान्वयः।।९।।

आरूढानां मादृशामपि अस्य पुराणस्य उपादेयत्वात् कैमुत्य[17]न्यायेन आरुरुक्षोः तव सुतरां इदमुपादेयमिति तुभ्यमुपदिशामीत्याह- **[18]तदहमिति**। तत्पुराणं ते तुभ्यमभिधास्यामि कथयिष्यामि चिरमशुश्रूषवे मह्यं कथमभिधास्यसि इत्यत आह- महा[19]पौरुषिक इति। महा[20]पुरुषो भगवान् "वेदाहमेतं पुरुषं महान्तम्" (पु.सू.1-7) इति श्रुतेः। स उपास्यत्वेन अस्यास्तीति महा[21]पौरुषिको महापुरुषभक्तो भवान्। न हि भगवद्भक्तानां रहस्यार्थोपदेशने चिरं शुश्रूषापेक्षेति भावः। यत्र पुराणे श्रद्दधतां श्रद्धां कुर्वतां मुकुन्दे मोक्षप्रदे भगवति सती अहैतुकी मतिर्भक्तिः स्यात् [22]भवेत्।।१०।।

मुमुक्षूणां नातः परं अन्यत् मोक्षसाधनं इत्याह- **एतदिति**। तापत्रया[23]दिहेतुकनिर्वेदं प्राप्तानामकुतोभयं मोक्षमिच्छतां योगिनामनभिसंहितफलकर्म योगनिष्ठानां हे नृप! हरेर्नामानुकीर्तनं स्वरूपादि चिन्तनादेरप्युपलक्षणमिदं तन्नामानुकीर्तनं तत्स्वरूपादिचिन्तनं च इत्येतदेव मुक्तिसाधनं नान्यदि[24]त्यर्थः।।११।।

---

1. A.B.Omit ननु 2. H.V.Omit तव 3. H.V. °ष्टोऽपि 4. A.B.Omit महापौरुषिकः 5. H.V. यत्र 6. A.B. Omit श्रद्दधतां 7. H.V. सकामानां 8. H.V. Omit तत् 9. A.B. Omit अकुतोभयं कुतश्चिदपि भयरहितं 10. B.H.V. Omit प्र° 11. A.B. Omit किं 12. A.B. Omit विदितं 13. H.V. घटते 14. H.V. करोति। 15. A.B. Omit अपि 16. W. °चेताः 17. W. °न्° 18. A.B. Omit तदहमिति 19. W. °पू° 20. W. °पू° 21. W. °पू° 22. W.Omits भवेत् 23. W. °भिहति° 24. W. °ति भावः

अल्पमेव आयुरवशिष्टं किमहं साधयेयमिति मा शुच इत्याह- **किमिति**। प्रमत्तस्य देहापत्य-कलत्रादिष्वासक्तस्य परोक्षैः अज्ञाततयैव गतैः बहुभिः हायनैः संवत्सरैः[1] किम्? किं प्रयोजनाम्? न किमपीत्यर्थः। विदितं वृथा यातीति ज्ञातं मूहर्तमेव वरम्, यतः येन विदितेन मुहूर्तेन श्रेयसे घटेत यत्नं कुर्यात्।।१२।।

**विज०** नन्वस्तु भवतो भागवताध्ययनं तत्किमर्थमिति तत्राऽऽह- **परिनिष्ठित** इति। यत्र यच्छ्रद्दधतां यत्र यस्मिन् भागवते प्रतिपादितमर्थं श्रद्दधतामिति वा अहं भागवतं नाम यदाख्यानमधी-तवान्। तत्ते तुभ्यमभिधास्यामीत्यन्वयः। अभिधाने निमित्तमाह- महापुरुषिक इति। पूर्णषड्गुणत्वात् पुरुषो भगवान् तद्भक्ताः पुरुषिकाः तेषां मध्ये महानिति यत्तस्मादित्यर्थः। स्थितप्रज्ञतया कृतकृत्यस्य भवतो भागवताध्ययनं किमर्थमिति तत्राऽऽह- परिनिष्ठित इति। नैर्गुण्ये मुक्तौ परिनिष्ठितः मुक्तिरस्य भवतीति निश्चयवानपि "उदरं संशयः प्रोक्तः परिनिष्ठा विनिश्चयः" इत्यभिधानात्। कथमनेनास्य परिहार आयात इति तत्राऽऽह उत्तमश्लोकेति। अनेन एवंविधमाहात्म्यात् अतिशयो भगवान् इत्युक्तं भवति ।।९,१०।।

न केवलं तवैव एतन्निर्णीतं, अपि तु सर्वयोगिनामपीत्याह- **एतदिति**। निर्विद्यमानानां विरज्यमानानां, क्लेशैरिति शेषः। अकुतोभयं मोक्षः। एवं वैराग्यादिसाधनसामग्रीमतां योगिनां हरेर्नामा-नुकीर्तनं यदेतत् तदन्ते हरिस्मरणकारणमित्यर्थः।।११।।

अनेन भागवताकर्णनमभिप्रेतं तदत्यान्ताल्पायुष्ट्वेन न घटत इति शङ्का मा भूदित्याह- **किमिति**। हायनैर्वत्सरैः परोक्षैः आगामिभिः यतो येन मुहूर्तेन हरिस्मरणाख्यश्रेयसे घटेत[2] तदेकं मुहूर्तं घटिकाद्वयमपि परम् उत्तमं विदितं प्रख्यातम्।।१२।।

**रा०कृ०** हे राजर्षे! नैर्गुण्ये निर्गुणपरब्रह्मणि परिनिष्ठितोऽपि निश्चितान्तःकरणोऽपि उत्तमश्लो-कलीलया उत्तमकीर्तेः भगवतो लीलया गृहीतचेताः यदिदं भागवतमधीतवान्।।९।।

यत्र भागवते श्रद्दधतां श्रद्धां कुर्वतां मुकुन्दे सती मतिः आशु स्यात् तत् भागवतं यतो भवान् महापौरुषिकः महापुरुषे भगवति भक्तोऽसि ततस्तेऽभिधास्यामि कथयिष्यामि।।१०।।

हे नृप! निर्विद्यमानानां तापत्रयहेतुकं निर्वेदं प्राप्तानाम्। अत एव अकुतोभयं मोक्षं इच्छतां योगिनाम् एतद्धरेः नामानुकीर्तनं निर्णीतं मोक्षसाधनत्वेन विज्ञैः निश्चितम्।।११।।

---

1. A.B. Omit संवत्सरैः 2. M.Ma. घटते

प्रमत्तस्य कलत्रपुत्रदिष्वासक्त्या कर्तव्यानुसन्धानशून्यस्य परोक्षैः अज्ञाततया गतैः बहुभिः हायनैः संवत्सरैः इह नरजन्मनि किं सिद्ध्यति? विदितं बहवो वत्सराः वृथा गता इति ज्ञातं मुहूर्तमपि वरम् श्रेष्ठमेव यतो येन विदितेन मुहूर्तेन श्रेयसे मोक्षाय घटेत जनो यत्नं कुर्यात्।।१२।।

**खट्वाङ्गो नाम[1] राजर्षिर्ज्ञात्वेयत्तामिहायुषः।**
**मुहूर्तात्सर्वमुत्सृज्य गतवानभयं हरिम्।।१३।।**

**तवा[2]प्येतर्हि कौरव्य! सप्ताहं जीवितावधिः।**
**उपकल्पय तत्सर्वं तावद्यत्साम्परायिकम्।।१४।।**

**अन्तका[3]ले तु पुरुष आगते गतसाध्वसः।**
**छिन्द्यादसङ्गशस्त्रेण स्पृहां देहे[4]ऽनु ये च तम्।।१५।।**

**गृहात् प्रव्रजितो धीरः पुण्यतीर्थ[5]जलाप्लुतः।**
**शुचौ विविक्त आसीनो विधिवत्कल्पितासने।।१६।।**

**अभ्यसेन्मनसा शुद्धं त्रिवृद्ब्रह्माक्षरं परम्।**
**मनो यच्छेज्जितश्वासो ब्रह्मबीजमवि[6]स्मरन्।।१७।।**

**श्रीध० खट्वाङ्ग** इति। खट्वाङ्गो हि[7] देवपक्षे स्थित्वा दैत्यानजयत्। त[8]तः प्रसन्नैर्देवैः 'वरं वृणीष्व' इत्युक्तो[9]ऽतः तेनोक्तं प्रथमं ता[10]वन्ममायुः कथ्यतामिति। ततो देवैरुक्तं त[11]त्तु मुहूर्तमात्रमस्तीति। ततोऽतिशीघ्रं[12] विमानेन भुवमागत्य हरिं शरणं गत इति। य[13]त इयं स्वर्गभूमी रजोधिका कर्मभूमिः पृथ्वी।।१३।।

**तवेति**। तव तु एतर्ह्यपि इदानीमपि। तावदिति तावता कालेन साम्परायिकं पारलौकिकं साधनं उ[14]पकल्पय सम्पादय।।१४।।

तत्र वैराग्यं तावदाह - **अन्त काल** इति। गतसाध्वसो मृत्युभयशून्यः असङ्गो ना[15]म अनासक्तिः तेन शस्त्रेण स्पृहां सुखेच्छां तं देहमनु ये पुत्रकलत्रादयः तेष्वपि स्पृहां छिन्द्यात्।।१५।।

---

1. M.Ma. °ङ्ग° 2. H.V. °व त्वे 3. AF.GF. °लेऽपि 4. AF.GF. °हानायायिनीम्। 5. AF.GF. °परि° 6. H.M.Ma.V. °नु° 7. H.V. °ऽपि 8. H.V. तैः 9. H.V. °क्ते तैं° 10. H.V.Omit तावत् 11. H.V.Omit तत्तु 12. B. adds देवैर्दत्तेन 13. H.V. Omit यतः.......पृथ्वी। 14. A.B. Omit उपकल्पय 15. H.V. Omit नाम

**गृहादिति।** किञ्च[1] गहात् प्रव्रजितो[2] निर्गत[3]: गृहे स्थितस्य पुनरप्यासक्तिसम्भवात्[4] तत्र अष्टाङ्गयोगमाह। धीर इति ब्रह्मचर्यादियमोपलक्षणम्। पुण्यतीर्थेति स्नानादिनियमोपलक्षणम्। आसनमाह शुचाविति। विविक्ते एकान्ते विधिवत् कुशाजिनचेलैः क्रमेण निर्मिते।।१६।।

जपगर्भं प्राणायामं वक्तुं जप्यमाह - **अभ्यसेदिति।** त्रिवृत् त्रिभिरकारादिभिर्वर्तितं ग्रथितं ब्रह्माक्षरं प्रणवं मनसा अभ्यसेदावर्तयेत्। मनसा इन्द्रियप्रत्याहारं वक्तुं प्राणायामेन मनोनियमनमाह। मनो यच्छेत्[5] वशीकुर्यात्। ब्रह्मबीजं प्रणवमविस्मरन्नेव[6] जितश्वासस्सन्।।१७।।

**वीर०** विदितस्य मुहूर्तस्य श्रेयोघटकत्वे इतिहासमाह- **खट्वाङ्ग** इति। खट्वाङ्गो हि देवपक्षे स्थित्वा दैत्यानजयत्। ततः प्रसन्नैर्देवैः वरं वृणीष्वेत्युक्ते तेनोक्तं प्रथमं ममायुः कथ्यतामिति। ततो देवैरुक्तं मुहूर्तमात्रमस्तीति। ततः[7] शीघ्रं विमानेन भुवमागत्य हरिं शरणं गत इति[8] नवमस्कन्धे प्रसिद्धम्। खट्वाङ्गो नाम राजर्षिरायुष इयत्तां एतावत्तां ज्ञात्वा इहास्मिन् लोके सर्वं देहादिषु आत्मात्मीयत्वाद्यभिमानमुत्सृज्य हित्वाऽभयं भयप्रतिभटं हरिं गतवान् प्राप्तः।।१३।।

कैमुत्यन्यायेन आह - **तवेति** । अपिस्त्वर्थः तव तु इत्यर्थः। हे कौरव्य! तव तु एतर्हि इदानीमपि जीविताવધિः जीवितस्यावधिः परिमाणं सप्ताहं सप्तदिनपर्यन्तं तावत् तावता सप्ताहेन कालेन साम्परायिकं परलोकहितं एतत्सर्वं उपकल्पय सम्पादय।।१४।।

तावद्वैराग्यमाह - **अन्तकाल** इति। अन्तकाले देहावसानकाले आगते प्राप्ते सति पुरुषः गतसाध्वसः निवृत्तभयः असङ्गोऽनासक्तिः। स[9] एव शस्त्रं तेन देहे तं देहमनु अनुसृत्य ये वर्तमाना अपत्यकलत्रादयो देहानुबन्धिनः तेषु च स्पृहाम् आत्मात्मीयत्वाभिमानप्रयुक्तभोगेच्छां छिन्द्यात्।।१५।।

किञ्च गृहात् प्रव्रजितः निर्गतः 'धीर' इत्यादिना "आश्रयं भद्रमीक्षतः"(भाग.2-1-21) इत्यन्तेन अष्टाङ्गयोगसंक्षेपोक्तिः। धीरः जितेन्द्रियः अनेन ब्रह्मचर्यादिलक्षणो यम उक्तः।[10] पुण्यतीर्थजलेषु आप्लुतः[11] स्नात इत्यनेन[12] स्नानदानादिनियमः[13] उक्तः। शुचौ परिशुद्धे विविक्ते एकान्ते। विधिवच्चैलाजिनकुशोत्तर[14] इति व्युत्क्रमेण कल्पिते आसने विधिवदासीनः ऋजुकायत्वस्वस्तिकासनत्वादीननतिक्रम्य उपविष्टः अनेन आसनरूपाङ्गमुक्तम्।।१६।।

---

1. H.V. Omit किञ्च 2. H.V. add गृहादिकं विहाय 3. B. °निष्क्रान्तः 4. H.V. °रास° 5. B.H.V. Omit वशीकुर्यात्। 6. H.V. °न्° 7. W. adds अति° 8. W. Omits इति.......सिद्धम्। 9. W. तत् 10. W. adds पुण्यतीर्थजलाप्लुतः 11. W. Omits आप्लुतः 12. W. Omits इति 13. W. स्नानादि 14. W. °ञ्चै°

प्राणायामस्य जपगर्भत्वात्तावज्जप्य[1]मन्त्रमाह- **अभ्यसेदिति**। त्रिवृत् त्रयाणाम्, अकारोकारमकाराणां वृत् वर्तनं यस्मिन्नक्षरत्रयग्रथितमित्यर्थः। ब्रह्माक्षरं ब्रह्मप्रतिपा[2]दकमक्षरं प्रणवं मनसा अभ्यसेदावर्तयेत्। जितश्वासो जितप्राणो ब्रह्मबीजं प्रणवमविस्मरन् स्मरन्नेव मनो यच्छेत् नियच्छेत्[3]। **इदञ्च** प्राणायामरूपमङ्गं [4]उक्तम्।।१७।।

**विज०** एतमर्थमाख्यानेन द्रढयति- **खट्वाङ्ग** इति। नाम शब्दः प्रख्यात्यर्थे। इह मनुष्यलोके मुहूर्तात् पूर्वमायुष इयत्तां मर्यादां ज्ञात्वा राज्यादिसङ्गमुत्सृज्य हरिमुद्दिश्य इन्द्रियाणि च दत्वा अभयलक्षणं मोक्षं गतवान् इत्यन्वयः। 'त्यागो विहायितं दानमुत्सर्जनविसर्जने' (अम.को.2-428) पुरुषार्थरूपं हरिं गतवानिति वा ।।१३।।

तव तदपेक्षया अनेकायुष्ट्वान्न हृत्तापः कार्य इत्यतः तत्सर्वं हरिचरणारविन्दस्मरणविषयत्वेन कल्पयेत्याह- **तवापीति**। एतर्हि इदानीं सप्तानामह्नां समाहारः सप्ताहम् जीवितावधिरायुष्यस्य इतत्ता यत्तावदायुः तत्सर्वमपि साम्पराय उत्तरकालो मुक्तिकालः तत्सम्बन्धि यथा भवति तथा तावन्तं कालं हरिचरणस्मरणगोचरमुपकल्पय, भागवताकर्णने तात्पर्यं कुर्वित्यर्थः। "साम्परायस्तु सङ्ग्राम आपदागामिकालयोः" (वैज.को.8-1-48) इति यादवः। मरणलक्षणापत्काले हरिचरणस्मरणं यथा भवति तथा तावन्तं कालं भागवताकर्णनं कुर्विति वा।।१४।।

मरणकालं ज्ञात्वा हरिस्मरणमिच्छतो वैराग्यं प्रथमसाधनमित्याह - **अन्तकाल** इति। आगते स्वतः [5]परतो वा ज्ञाते सति गतसाध्वसः[5] देहनाशप्रयुक्तभयरहितः पुत्रादिस्नेहलक्षणः सङ्गः तद्विरोधि विवेकज्ञानलक्षणोऽसङ्गः तेन शस्त्रेण तं देहमनु ये स्त्रीपुत्रादयः तेषु च स्पृहां छिन्द्यादित्यन्वयः।।१५।।

अथ किं कर्तव्यम्? अत्राऽऽह- **गृहादिति**। गृहात् प्रव्रजितः सन्न्यासलक्षणवैराग्यं प्राप्तः **धीरः** प्रतिबन्धकनिवर्तनसमर्थः पुण्यतीर्थजलाप्लुतो भागवतादिपुण्यशास्त्रजलस्नातः तथा गङ्गादिपुण्यतीर्थजलस्नातो निर्धूतबाह्यान्तर्मलस्सन् शुचौ शुद्धे विविक्ते दुर्जनसङ्गरहिते देशे "नात्युच्छ्रितं नातिनीचम्" (भ.गी.6-11) इति विधिवत्कल्पितासन आसीनो, भवेदिति शेषः।।१६।।

स्थिरासनस्य कृत्यमाह- **अभ्यसेदिति**। रेचकादिक्रमपरम्परया प्राणायामेन जितश्वासः प्राप्त - प्राणप्रसादः मनो यच्छेत् स्ववशं कुर्यात्। एवं जितमनस्कः सन् बीजं सर्वजगद्व्यञ्जकं **शुद्धं परं ब्रह्म**

---

1. W. प्यं 2. A.B. "पाद्य" 3. W. adds नियतं कुर्यात् 4.W.Omits उक्तम्। 5- -5. A.B.Omit प.......सः

अनुस्मरन् अकारादीन् त्रीन् वर्णान् विवृणोति त्रिवृदक्षरं ब्रह्मवाचकत्वात् सर्वगतं परम् उत्कृष्टम् ओङ्कारम् मनसा अभ्यसेत् आवर्तयेदित्यन्वयः।।१७।।

**रा०कृ०** खट्वाङ्गो नाम राजर्षिः आयुषः इयत्तां ज्ञात्वा मुहूर्तात् इह भुवि सर्वमुत्सृज्य अभयं भयनिवर्तकं हरिं गतवान्। शरण्यत्वेन प्राप्तवान्।।१३।।

हे कौरव्य! तव एतर्ह्यपि अधुनापि सप्ताहं सप्तदिनपर्यन्तं, जीवितावधिरस्तीति शेषः। तावत् तावता सप्तदिनपरिमितेन कालेन साम्परायिकं परलोकहितं जननमरणातीतस्थितिदायकमिति यावत् यद्वर्तते तत्सर्वमुपकल्पय कुरु।।१४।।

अन्तकाले तु आगते सति पुरुषः गतसाध्वसः वीतभयः असङ्गशस्त्रेण अनासक्तिनाम्ना शस्त्रेण देहे तं देहम् अनु अनुसृत्य ये च कलत्रपुत्रादयो वर्तन्ते तेषु च स्पृहां छिन्द्यात्।

शरीरत्यागसमये मनोविभ्रमः परिहरणीयः। विभ्रान्तं हि मनः आत्मविस्मरणाख्यं मरणमाप्नोति। देहादिषु स्पृहाच्छेदश्च तदन्तर्यामीश्वरभावनया भवति।।१५।।

गृहात् प्रव्रजितः निर्गतः पुरुषः धीरः वशीकृतमानसः पुण्यतीर्थजलाप्लुतः पावनतीर्थजलास्नातः शुचौ विविक्ते निर्जनस्थले विधिवत् कल्पितासने सम्पादिते आसने असीनः शुद्धं परं सर्वमन्त्रश्रेष्ठं त्रिवृत् अकारोकरमकारात्मकं ब्रह्माक्षरं ब्रह्मप्रतिपादकं प्रणवं मनसा अभ्यसेत् जपेत्। ततो जितश्वासः सन् ब्रह्मबीजं प्रणवं अविस्मरन् मनो यच्छेत् वशीकुर्यात्। साधकः गृहान्निर्गत्य तीर्थयात्रां कुर्यात्। तेन पुत्रकलत्रादिसङ्गः च्छिन्नो न वेति ज्ञायेत। पुण्यतीर्थस्नानेन च तस्य देहात्मशुद्धिः भवति। ततश्च सः विविक्तस्थले उपविश्य परितः स्वं मनसा समबाहु त्रिभुजाकारं निर्माय, तदन्तर्वर्तुलस्थितमात्मानं मन्येत। पुनश्च स्वहृदये समबाहु त्रिभुजाकारं प्रकल्प्य तन्मध्ये केन्द्रबिन्दुभूते 'सोऽहं'-भावात्मके प्रणवे श्वासम्, अनुसन्दधीत। तेन वायुजयस्सिद्ध्यति।।१६,१७।।

**नियच्छेद्विषयेभ्योऽक्षान्मनसा बुद्धिसारथिः।**
**नमः कर्मभिराक्षिप्तं शुभार्थे धारयेद्धिया।।१८।।**

**तत्रैकावयवं ध्यायेदव्युच्छिन्नेन चेतसा।**
**मनो निर्विषयं युक्त्वा ततः किञ्चन न स्मरेत्।**
**पदं तत्परमं विष्णोः मनो यत्र प्रसीदति।।१९।।**

---

1.C.H.M.Ma.N.V.W. °इक्त्वा 2. M.Ma.W. °ञ्चित्र संस्म°

**रजस्तमोभ्यामाक्षिप्तं विमूढं मन आत्मनः।**
**यच्छेद्धारणया धीरो हन्ति या तत्कृतं मलम्।।२०।।**

**यस्यां[1] सन्धार्यमाणायां योगिनो भक्तिलक्षणः।**
**आशु सम्पद्यते योग आश्रयं भद्रमीक्षतः।।२१।।**

**राजोवाच**

**यथा सन्धार्यते ब्रह्मन्! धारणा यत्र सम्मता।**
**यादृशी वा हरेदाशु पुरुषस्य मनोमलम्।।२२।।**

**श्रीध०** प्रत्याहारमाह- **नियच्छेदिति**। नियच्छेत् [2]निगृह्णीयात्। अक्षान् इन्द्रियाणि निश्चयात्मिका बुद्धिः सारथिर्यस्य सः। धारणामाह मन इति। पुनश्च कर्मभिः तद्वासनाभिः आक्षिप्तमाकृष्टं शुभार्थे भगवद्रूपे।।१८।।

ध्यानमाह- **तत्रेति**। एक[3]मेकं पादाद्यवयवम् अव्युच्छिन्नेन समग्ररूपादवि[4]युक्तेन। [5]आश्रयविशे[6]षे सामान्यतः चित्तस्थिरीकरणं धारणा। अवयवविभावनया तद्दाढर्यं ध्यानमिति भेदः। [7]तत्र च मनोवृत्तेः विलयः समाधिरिति विवेकः। समाधिमाह मन इति। निर्विषयं मनो यु[8]क्त्वा समाधाय स्थिरीभूते मनसि स्फुरत्परमानन्दमात्राकारं कृत्वेत्यर्थः। प्रसीदति उपशाम्यति।।१९।।

गुणवशात् पुनरपि क्षोभे सति धारणामेव स्थिरीकुर्यादित्याह- **रज** इति। रजसा आक्षिप्तं तमसा विमूढं स्वीयं मनो निरुन्ध्यात्। तत्कृतम् रजस्तमोभ्यां कृतम्।।१०।।

**यत** इति। यतः यस्यां[9] क्रियमाणायां भद्रं सुखात्मकं [10]आश्रयं विषयं पश्यतः तत्रैव प्रीतिर्भवति।।२१।।

**यथेति**। यथा यत्र यादृशी[11]ति च इतिकर्तव्यताविषयत[12]त्तद्विशेषाणां प्र[13]श्नाः।।२२।।

**वीर०** इन्द्रियप्रत्याहारमाह- **नियच्छेदिति**। विषयेभ्यः शब्दादिभ्यः। अक्षान् श्रोत्रादीन्द्रियाणि बुद्धिः सारथिर्यस्य स तथा भूतः प्रग्रहभूतेन मनसा नियच्छेत् "बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च"

1. B.C.N. °तः 2. H.V. Omit निगृह्णीयात् 3. V. °वं° 4. H.V. °मु° 5. H.V.आत्म° 6. A. °षेण° 7. A.B. Omit तत्र.....कः 8. A.H.V. °इक्त्वा 9. B. adds (धारणायां) 10. H.V. Omit आश्रयं 11. A. Omits °ति 12. H.V. Omit °त्त° 13. H.V. °श्नः

(कठ.उ.1-3-3) इति श्रवणात्। धारणामाह मन इति। पुनश्च कर्मभिः तद्वासनाभिः आक्षिप्तं विक्षिप्तं मनः शुभार्थे शुभाश्रये भगवद्रूपे निश्चयात्मिकया बुद्ध्या धारयेत् स्थिरं कुर्यात्। शुभाश्रये मनसोऽवस्थापनं धारणम्। शुभाश्रयस्य पुनः पुनः चिन्तनं ध्यानम्। तस्य विजातीय प्रत्ययान्तराव्यवहितत्वं समधिरिति भेदः।।१८।।

ध्यानमाह - **तत्रेति**। अव्युच्छिन्नेन समग्रशुभाश्रया[1]वियुक्तेन चेतसा चित्तेन एकावयवं प्रधानाङ्ग [2]सुखाकारं ध्यायेत्। अनेनास्य चिन्तायाः पूर्वभावित्वं सिद्धम्। पूर्णध्यानाशक्तः एकावयवं स्मरेदित्यर्थः। समाधिमाह मन इति। निर्विषयं बाह्यविषयानुभवरहितं मनो युक्त्वा समाधाय किञ्चन बाह्यविषया[3]दिकं न स्मरेदित्यर्थः। आनन्दसंप्लवे लीनत्वात् न किञ्चित् स्मर्तुं द्रष्टुं वा क्षमत इति चार्थः। शुभाश्रय[4]रूपमाह पदमिति। यत्र मनः प्रसीदति यस्मिन् स्वरूपे- चिन्त्यमाने मनो रागाद्यकलुषितं भवति तदेव विष्णोः परमं, प[5]रं मा यस्मात् तत्परमं सर्वोत्कृष्टं पदं स्वरूपमित्यर्थः।।१९।।

कदचित् रागादिकालुष्य सम्भावनामाशङ्क्य आह- **रजस्तमोभ्यामिति**। रजसा आक्षिप्तं [6]विक्षिप्तं तमसा विमूढम् आत्मनः स्वस्य मनः धारणया यच्छेत्। धारणामाहात्म्यमाह- या धारणा तत्कृतं राजस्तमोभ्यां कृतं मलं रागादिकं हन्ति निवर्तयति।।२०।।

यस्यां धारणायां सन्धार्यमाणायां [7]पाकं पचतीतिवन्निर्देशः धारणायां क्रियमाणायामित्यर्थः। भक्ति लक्षणो योगः। 'प्रीतिपूर्वमनुध्यानं भक्तिरित्यभिधीयते' इत्युक्तलक्षण[8]रूपो योगः। भद्रं शुभमाश्रयम्। ईक्षतः ध्यातुराशु सम्पद्यते सम्पन्नो भवति एतादृशमाहात्म्यवती धारणा इत्यभिप्रायः।।२१।।

एवं सङ्ग्रहेण अष्टाङ्गयुक्ते योगे उपदिष्टे पुनर्विस्तरबुभुत्सया [9]परीक्षित् पृच्छति - **यथेति**। [10]यत्रेति धारणाविषयप्रश्नः। यादृशीति धारणादशाविशेषप्रश्नः, यथेति यत्नक्रमप्रश्नः, ननु धारणाया एव दशाविशेषादीनां विशेषेण प्रश्नः न तु प्रधानभूतस्य ध्यानस्येति चेन्न। धारणापूर्वकत्वात् ध्यानस्य, धारणानुसारेणैव ध्यानाच्च, तत्प्रश्नेनैव गतार्थत्वात् एवमुत्त[11]रत्रानुसन्धेयम्।।२२।।

**विज०** जाप्यमुक्त्वा ध्यानप्रकारमाह- **नियच्छेदिति**। बुद्धिः सारथिः यस्य स तथा सत्पुरुषो जितेन मनसा अक्षान् इन्द्रियाणि विषयेभ्यो नियच्छेत् प्रत्याहरेत्। प्रत्याहृत्य च संस्कारवशात् बहिर्मुखतया कर्मभिराक्षिप्तं मनः स्वधिया सारथिना शुभार्थे परममङ्गलार्थे हरौ धारयेदित्यन्वयः।।१८।।

---

1. W. °दि° 2. W. मु° 3. W. °यानुभवा° 4. W. °यस्वरू° 5. B. °रो 6. W. Omits विक्षिप्तं 7. A.B. Omit पाकं......शः 8. W. °णो यो° 9. W. Omits परीक्षित् 10. A.B. Omit यत्रेति 11. A.B. °रेष्व°

एवं हरौ नियतचेतसो येगिनो ध्यानाभ्यासप्रकारमाह- **तत्रेति**। तत्र युगपत् सर्वावयवध्यानाशक्तौ विषयैः अव्युच्छिन्नेन अखण्डितेन चेतसा एकावयवम् एकैकावयवं श्रीपादादिलक्षणं ध्यायेत्। एवमनायासेन स्मरणविषयं कुर्यात्। तत्परिपाकमाह मन इति। एवमभ्यासपाटवेन युगपत् सर्वायवस्मरणसमर्थः सन् ततोऽनन्तरं निर्विषयं विषयेभ्यो निर्गत्य स्थितं मनः तस्मिन् हरौ सर्वावयवव्यापितया युक्त्वा[1], नियुज्य यत्र मनः प्रसीदति निरतिशयं सुखं लभते, तद्विष्णोः परमं समग्ररूपमेव स्मरेत्। ततोऽन्यत् किञ्चिन्न स्मरेदित्यन्वयः।।१९।।

अखण्डध्यानोपायमाह - **रजस्तमोभ्यामिति**। रजसा आक्षिप्तम् इतस्ततः विषयैराकृष्टं तमसा विमूढं कृत्याकृत्यज्ञानशून्यं आत्मनः स्वस्य मनः धारणया तैलधारावदव्युच्छिन्नया स्मृत्या यच्छेत् विषयेभ्यः आवृत्य ध्यानमग्नं कुर्यात्। या धारणा तत्कृतं रजस्तमोभ्यामाक्षिप्तं रागाविद्यादिमलं हन्ति तथेत्यन्वयः।।२०।।

न केवलं मलनाशो धारणायाः फलं किन्तु निरन्तरं भक्तिलक्षणयोगश्चेत्याह - **यस्यामिति**। यस्यां धारणायाम्। सर्वजगदाश्रयं भद्रं भगवन्तमीक्षतः चिन्तयतो योगिनो भक्तिलक्षणो योगः आशु सम्पद्यत इत्यन्वयः। 'भिदि-कल्याण' इति धातोः। कल्याणं मङ्गलं मङ्गलं भगवान् विष्णुरिति वचनम्।।२१।।

परीक्षित् विशेषबुभुत्सया शुकं पृच्छति- **यथेति**। अत्र यथा यत्र यादृशीति यच्छब्दाः प्रश्नार्थाः। यतश्चोदेति सूर्यः। "यच्छब्दस्तु परामर्शे प्रश्नार्थे चापि भण्यते" इत्यभिश्रुत्यभिधानाभ्यां निश्चितत्वात्। तथा च यथा कथं यत्र कुत्र यादृशी कीदृशीति सम्पद्यत इत्यर्थः।।२२।।

**रा०कृ०** अनन्तरं स पुरुषः बुद्धिसारथिः मनसा प्रग्रहभूतेन विषयेभ्यः शब्दादिभ्यः अक्षान् श्रोत्रादीनीन्द्रियाणि नियच्छेत् निगृह्णीयात्। अपि च कर्मभिः आक्षिप्तम् आकृष्टं मनः शुभार्थे शुभाश्रये भगवद्रूपे धिया निश्चयात्मिकया बुद्ध्या धारयेत् स्थिरीकुर्यात्।

श्रोत्रादीनीन्द्रियाणि अश्वा इव शब्दादीन् विषयाननुधावन्ति। ततः प्रज्ञा बहिर्मुखी भवति। तथा चान्तर्यामिणः ईश्वरस्य विस्मृत्या इन्द्रियार्थाः पृथक्दृश्यमानाः परस्परमनुबद्धाः भवन्ति। तस्मात् विषयेभ्यः इन्द्रियाणि निश्चयात्मकबुद्धिसहकृतेन मनसा निगृह्यात्। मनसा च इन्द्रियनिग्रहे विग्रहः आवश्यको भवति। स च भगवद्विग्रह एव। एतद्विग्रहाराधने चायं क्रमः - कमप्यभिमतं भगवतो विग्रहमाराधयन् साधकः क्रमशस्तन्मयं विश्वं पश्यन् विश्वमयभगवदाराधनपरायणो भवेत्। ततश्च अन्यथा चाञ्चल्यहेतुषु लौकिकेषु सर्वेष्वेव वस्तुषु भगवन्मयत्वभावानाभ्यासेन मनो निश्चलं भवति।।१८।।

1.M.Ma. इक्त्वा

तत्र भगवद्रूपे अव्युच्छिन्नेन सम्पूर्णरूपात् अवियुक्तेन चेतसा एकावयवम् एकं पादाद्यवयवं ध्यायेत्। मनः निर्विषयम् तद्भिन्नविषयानुसन्धानरहितं युक्त्वा कृत्वा ततः अनन्तरं किञ्चन किमपि न स्मरेत्। यत्र स्थितं मनः प्रसीदति प्रसन्नं भवति, रागद्वेषादिविरहितं भवतीति भावः, तत् विष्णोः परमं सर्वोत्कृष्टं पदं स्थानमेव।।१९।।

यदा आत्मनः मनः रजस्तमोभ्यामाक्षिप्तं विमूढं च रजसा आक्षिप्तं तमसा विमूढं वा भवति, तदा साधको धीरस्सन् या धारणा तत्कृतं रजस्तमःकृतं मलं विक्षेपादिदोषं हन्ति निवर्तयति, तया धारणया तन्मनः यच्छेत् वशीकुर्यात्।।२०।।

अपि च यस्यां धारणायां सन्धार्यमाणायां क्रियमाणायां भद्रं मङ्गलात्मकमाश्रयं भगवत्स्वरूपमीक्षतः ध्यातुः योगिनः भक्तिलक्षणः भगवति नारायणे परमप्रेमरूपो योगः तत्प्राप्त्युपायरूपः आशु सम्पद्यते तया धारणया मनो यच्छेदिति पूर्वेणान्वयः।

भगवत्समग्ररूपायत्तेन मनसा लोके सर्वस्मिन्नेव रूपे भगवदंशमनुध्यायन् साधकः सर्वमपि भगवन्मयं भावयेत्। ततश्च सर्वत्र विष्णुमयत्वभावनया सर्वमपि मनःप्रसादनिदानं भवति। मनःप्रसादोऽपि रजस्तमःकृतमलनिवृत्तिरूपः। कर्मादिषु फलाभिसन्धिव्यामोहश्रमादयो रजस्तमःकृतमलात्मकाः। एतन्मलनिवृत्तिश्च प्रागुक्ते भगवति सर्वमये भद्राश्रये परमप्रेमरूपभक्तेः निरन्तरधारणया सिद्ध्यति। ततश्च आत्यन्तिकदुःखनिवृत्तिरूपमोक्षसिद्धिः।।२१।।

हे ब्रह्मन्! धारणा यथा येन प्रकारेण सन्धार्यते सम्यक् क्रियते? यत्र यस्मिन् भगवद्रूपे सम्मता धारणा तवाभिमता? यादृशी वा धारणा आशु पुरुषस्य मनो मलं विक्षेपादिकं हरेत्? तत्सर्वं, कथयेति शेषः। अत्र यथेत्यादयः शब्दाः प्रश्नार्थकाः।।२२।।

**श्रीशुक उवाच**

**जितासनो जितश्वासो जितसङ्गो जितेन्द्रियः।**
**स्थूले भगवतो रूपे मनः सन्धारयेद्धिया।।२३।।**

**विशे[1]षस्तस्य देहोऽयं स्थविष्ठ[2]श्च स्थवीयसाम्।**
**यत्रेदं दृ[3]श्यते विश्वं भूतं भव्यं भवच्च स[4]त्।।२४।।**

---

1. H.V. °षय° 2. H.V. °स्य 3. I. व्यज्यते° 4. M.Ma.W. यत्°

**आ[1]ण्डकोशे शरीरेऽस्मिन् सप्तावरणसंयुते[2]।**
**वैराजः पुरुषो योऽसौ भगवान् धारणाश्रयः।।२५।।**

**पातालमेतस्य हि पादमूलं पठन्ति पार्ष्णिप्रपदे रसातलम्।**
**महातलं विश्वसृजो[3]ऽथ गुल्फौ तलातलं वै पुरुषस्य जङ्घे।।२६।।**

**श्रीध०** यथेत्यस्य उत्तरं - **जितासन** इति। विषयमाह - स्थूल इति सार्धेन ।।२३।।

**विशेष** इति। विशेषो विराड्देहः अतिस्थूलानाम[4]तिस्थूलतरः सत् इति[5] कार्यमात्रम्।।२४।।

अस्य च उपलक्षणत्वेन विषयत्वम्। वस्तुतस्तु विराट् जीवनियन्ता भगवानेव विषय इत्याह- **आण्डकोश** इति। अ[6]ण्डकोशे अण्डकोशान्तर्वर्तिनि कटाह एव पृथिव्यावरणं ततोऽप्तेजोवाय्वाकाशाहङ्कार-महत्तत्वानीति सप्त ।।२५।।

विराड्देहतज्जीवतदन्तर्यामिणाम् अभेदमारोप्य उपासनं कर्तव्यमित्याऽऽशयेनाह- **पातालमिति**। पातालं पादमूलं पादस्य अधोभाग[7]म्। पातालादीनां तदवयवता विधीयते। पातालादीनि अतलान्तानि अधस्त[8]नाद[9]ारभ्य सप्त भूविवराणि। पठन्ति गृणन्तीत्यादि प्रमाणप्र[10]दर्शनम्। पार्ष्णिप्रपदे पादस्य पश्चात्पुरोभागौ।।२६।।

**वीर०** तत्र "एकं वा संयोगरूपचोदनाख्याविशेषात्" (पूर्व.मी.सू.2-4-9) "नानाशब्दादिभेदात्" (ब्र.सू.3-3-58) इत्यादि न्यायेन उपास्यब्रह्मरूपाणां नानात्वेन उपासनानामपि नानात्वात् प्रथमं स[11]मस्तजगच्छरीरकस्योपासनमाह मुनिः **जितासन** इति। जितासनः आसनकृतायासरहितः। जितप्राणः [12]स्ववशीकृतप्राणः, जितसङ्गः जितान्तःकरणः, जितेन्द्रियः जितबाह्येन्द्रियः, स्थूले स्थविष्ठे भगवतो रूपे स्वीयं मनः सारथिभूतया धिया धारयेत्।।२३।।

चिदचिदात्मकप्रपञ्चस्य भगवच्छरीरकत्वकथनपूर्वकं तस्य धारणाविषयत्वमाह- **विशेष** इत्या[13]दिना। विशेषः कार्यकारणाकारः पृथिव्यादिभूतमयप्रपञ्चः तस्य देहः स्थवीयसां स्थूलतरानामपि मध्ये स्थविष्ठः स्थूलतरः यत्र देहे विश्वं समस्तं भूतं भव्यं[14]भवञ्च भूतभविष्यद्वर्तमानकालगोचरं समष्टिव्यष्ट्यात्मकं पदार्थजातं दृश्यते अन्तर्गतत्वेनोपास्यते।।२४।।

1. H.I.V. अ' 2. AF.GF. °तः 3. M.Ma °जस्तु' 4. A.B. °पि 5. A.B.Omit इति 6. A.B. Omit अण्डकोशे 7. H.V. °गः 8. H.V. °स्था' 9. B. °ला' 10. B.H.V. Omit प्र' 11. A.B. Omit °समस्त' 12. A. Omits स्ववशीकृतप्राणः 13. A.B. Omit आदिना 14. A.B. add च

एतच्छरीरकोऽनिरुद्धांशभूतः पुरुषो विषय इत्याह - **अण्डकोश** इति। सप्तावरणसंयुते पृथिव्यप्तेजोवाय्वाकाशाहङ्कारमहत्तत्त्वानि सप्तावरणानि। तैर्युक्तेऽण्डकोशाख्यशरीरे वैराजः विराट् अनिरुद्धः तदंशभूतः पुरुषः वैराजः। न चतुर्मुखः तस्यैवं पुरा धारणया आत्मयोनिरित्येतद्रूपोपासकत्त्वावगमात्, **असौ वैराजः** पुरुषः भगवान् धारणाश्रयः धारणाविषयः।।२५।।

एवं चतुर्दश भुवनात्मकाण्डकोशस्य तच्छरीरत्वं सामान्येनोक्त्वा अण्डकोशान्तर्गतपदार्थान् विभज्य पादाद्यवयवत्वेन उपासनामाह - **पाताल**मिति। एतस्य वैराजपुरुषस्य पादमूलं पादस्याधोभागं[1] पातालं पठन्ति[3] वदन्ति। पादतलत्वेन पातालमुपास्यं वदन्तीत्यर्थः। एवमग्रेऽपि। पार्ष्णिश्च प्रपदश्च पार्ष्णिप्रपदे पार्ष्णिः पादमूलं प्रपदं पादाग्रं एतदुभयं रसातलमित्यर्थः। विश्वसृजः विश्वस्रष्टुः द्वावपि गुल्फौ महातलम्। द्वे अपि जङ्घे तलातलम्।।२६।।

**विज०** तत्र प्रथमतो यथाप्रश्नं परिहरति- **जितासन** इति। यत्रेत्यनन्तरं प्रश्नं प्रत्याह स्थूल इति।।२३।।

क्रमप्राप्तत्वात् यादृशीति प्रश्नं प्रतिवक्ति - **विशेष** इति। यदिदं भूतं भव्यं भवच्च जडाजडं तद्विश्वं यत्राण्डकोशे दृश्यते सोऽयं स्थवीयसां स्थूलतराणां सकाशात् स्थविष्ठः स्थूलतमो विशेष आण्डकोशः शिलालक्षणप्रतिमावत्तस्य तदन्तस्स्थस्य हरेर्देहः न तु साक्षाद्देह इत्यन्वयः। तदुक्तम् "शिलावत्तस्य देहोऽयमण्डकोशस्तु सा वृतिः" (ब्रह्मवैवर्ते) इति।।२४।।

पृथिव्यादिपञ्चभूताहङ्कारमहत्तत्वसंज्ञैः सप्तभिः आवरणैः कवचस्थानीयैः संयुते बहिरावृते। शरीरे शीर्यमाणत्वात्। तस्मिन् आण्डकोशे योऽसौ विशेषणप्रकाशनात् विराजाख्याण्डान्तर्वर्तित्वात् सर्वतो वरत्वात् वैराजाख्यः पुरुषः, पुरु बहु कर्मफलं सनोति ददातीति पुरुषः। असौ भगवान् धारणाश्रयः तद्विषयतया कृता धारणा मनोमलं हरतीत्यन्वयः। "अण्डकोशो विराट्प्रोक्तो विशेषेण प्रकाशनात्। वैराजः तद्गतः" ( भागवततन्त्रे ) इत्यादेः।।२५।।

उपदिष्टरूपध्यानप्रकारमाह - **पाताल**मित्यादिना। अण्डाख्यप्रतिमायाः पातालादिसत्यलोकपर्यन्ता लोकाः पादमूलादिशिरोन्तान्यङ्गानि न त्वण्डस्थितस्य तस्य हरेः तान्यङ्गानि। किं तर्हि? तत्पादमूलाद्यवयवेभ्यो जातानि तदाश्रितानि वा। अतो न तेषां केवलं चिदानन्दाद्यात्मकभगवदवयवैरभेदः शङ्कनीयः। एतस्य पादमूलमित्याद्यभेदोक्तिस्तु "ब्राह्मणोऽस्य मुखमासीत्" (पु.सू.1-5)

1. A.B. ऑ° 2. W. °गः 3. A.B. Omit पठन्ति

इत्यादिवत् युज्यते, एवमेव इन्द्रादिदेवादीनामत्र तदवयवेन्द्रियगोलकाद्यभेदकथनं तत्तदङ्गादिभ्यः उत्पन्नत्वात् तदाश्रितत्वात् तदधीनत्वाभिप्रायं न तु स्वरूपैक्याभिप्रायम्। तेषाः स्वतः तेभ्यो भिन्नत्वात् "प्रतिमापेक्षयाङ्गानि भूरादीनि स्वरूपतः" (ब्रह्मतर्के) इत्यादेः। तथा च अक्षरयोजना। एतस्याण्डान्तर्वर्तिनो हरेः पादमूलं पातालं पठन्तीत्यन्वयः। चिदानन्दाद्यात्मकत्वात् पादमूलाज्जातं तदाश्रितं चेति ज्ञानिनः शिष्टेभ्य उपदिशन्ति। उपदिष्टाः तथोपासते चेत् तत्रापि एवमेवानुसन्धेयम्। हिशब्दः उक्तार्थ प्रमाणप्रसिद्धिप्रकाशकः। पार्ष्णिश्च प्रपदञ्च पार्ष्णिप्रपदे पार्ष्णिः पादस्य पृष्टभागः, प्रपदं पादाग्रं विश्वं सृजतीति विश्वसृट् तस्य गुल्फौ प्रशस्तलक्षणपिण्डकाख्यापर्वणी महातलं पठन्तीति पूर्वेणन्वयः।।२६।।

**रा०कृ०** जितासनः अभ्यासवशात् आसनकृतश्रमरहितः जितश्वासः प्राणायामाभ्यासबलेन वशीकृतप्राणः। जितासङ्गः सदसद्विवेकबलेन पुत्रकलत्रादिष्वासक्तिरहितः, जितेन्द्रियः तेनैव सदसद्विवेकबलेन शब्दादिविषयेभ्यः प्रत्याहृतेन्द्रियः साधक इति शेषः। धिया निश्चयात्मिकया बुद्ध्या भगवतः स्थूले रूपे मनः सन्धारयेत् सम्यक् धारयेत्।

अभ्याससम्पादितः आसनजयः श्वासजयसम्पादनाय कल्पते। श्वासजयश्च प्राणपञ्चकस्य क्रमानुगतो निरोध एव। सङ्कोचव्याकोचव्यापारवतां पञ्चप्राणानां मध्ये प्राणापानौ उच्छ्वासनिः-श्वासहेतुभूतौ। यद्यप्युच्छ्वासनिःश्वासौ स्वतः प्रवृत्तौ, न मनःकर्तृकौ, तथाऽपि यथायोगं मनस्समाहितौ तौ मनःकृतौ तौ भवतः यावत्पर्यन्तं प्राणापायो न स्यात्। भौतिकदेहो वा तद्गतप्राणशक्तिर्वा तदुभयसम्बन्धो वा न जीवस्य मनसा सम्बध्यते, किन्तु तस्य पूर्वजन्मकर्मणैव। तच्च जीवसम्बन्धिकर्म जगत्कर्मणो मनस्सञ्चितमेव। जगत्कर्म तु दैवायत्तम्।

प्राणदेहसम्बन्धोऽप्यापाततो जीवकर्माधीनोऽप्यन्ते जगत्कर्माधीनमेव। एतत्सर्व विषयैरनु-बद्धमस्माकं मनः अस्मदनुप्रवर्तमानप्राणापानाभ्यां सम्बध्यते। मनस्समाहितौ उच्छ्वासनिःश्वासौ सुव्यवस्थितौ सुखहेतू भवतः विपरीतौ तु सुखदुःखादिद्वन्द्वाभिभवदशायां क्रममपहाय अव्यवस्थां प्राप्नुतः। तेन हृदयस्पन्दनं क्रमविरहितं भवति। ततश्च रोगशोकाद्यनर्थपरम्परावाप्तिः दुर्निवारैव। एतदनर्थजालं परिजिहीर्षुः साधकः समाहितेन मनसा प्रशान्तं सुकुमारं मन्दगमनोपेतम् उच्छ्वासनिः श्वासव्यापारं अनुपालयेत्। अपि च मनस्समाहितप्राणायामाभ्यासमिमं कस्मिंश्चित् शुचौ प्रदेशे प्रतिदिनं निर्णीतसमये कुर्यात्। अनेनाभ्यासेन गच्छति काले प्राणापानाभ्यां सहकृतं मनः तयोर्लीनं भवति। तदेवं श्वासजयः साधनीयः।

यद्यपि 'श्वास' पदेन पञ्चापि प्राणाः विवक्षिताः भवन्ति, तथाऽपि मनसः प्राणापानाभ्यामेव सम्बन्धात् शिष्टानां प्राणानां सम्बन्धो नात्र प्रसक्तो भवति। तथा च यथा यथा श्वासानुध्यानेन मनसो लयः साध्यते, तथा तथा श्वासोऽपि सुव्यवस्थितो भवति।

अस्मन्मनसः अस्मत्परिसरस्थितैः कलत्रपुत्रमित्रादिभिः जनैः गृहारामक्षेत्रादिभिः वस्तुभिः विद्योद्योगादि नानालक्ष्यसाधनसन्निवेशैश्च अविभेद्यः अभ्यासप्रयुक्तः सङ्गो वर्तते। एतदलाभकाले दुःखमनुभवन्तो वयं विघ्ननिमित्तेषु कोपादिकं प्रदर्शयामः, न तु एतदनर्थमूलकारणभूतं सङ्गमभिजानीमहे। सङ्गश्चायं मनःकृत एव। एतदनर्थोपशमाय परिसरैर्वा परिसरस्थितैर्जनादिभिर्वा सङ्घर्षः न प्रयोजकः, किन्तु मनसः सङ्गनिवृत्तिरेव कर्तव्या। श्वासविजयेन तु सङ्गनिवृत्तिसङ्कल्पसहकृतेन मनस्सङ्गो निवर्तते। ततश्च एतत्सङ्कल्पसहकृतमनः, श्वासद्वयं समवेतं द्रुतं सत् बुद्धिरूपतां भजते। तथा हि - प्रत्येकं प्रभिन्ना अपि सिताखण्डाः सलिले विन्यस्ताः विद्रुताः तत्सलिलं च सम्भूय पानकं नाम रसायनं सम्पद्यते। लोके हि इदमित्थं भवतु, एतदेवं सम्भवतु इत्याकारको भावः कामो भवति न सङ्कल्पः। मनःश्वासबन्धसमन्वितो भावः तु सङ्कल्पो भवति न कामः - इत्येषः कामसङ्कल्पयोर्भेदः। कामवासनावासितं मनः दुःखभाजनं भवति। तथा हि - वस्त्रं यद्वस्तु सङ्गतं ग्रथ्यते तद्वस्तुवासनावासितं भवति। एवं भावितवस्तुकर्मवासनाः मनसि निविष्टाः सङ्गाः सम्पद्यन्ते, तथाऽपि तदेव वस्त्रं वह्निकणेन सह सम्बद्धं सत् न केवलं वह्निवासनया स्पृश्यते अपि तु दग्धं तस्मिन् लीनं भवति। एवमेव श्वासलीनं मनश्च यदि भवेत् सङ्कल्पबद्धं तत्सङ्कल्पवासनाभिरस्पृष्टं सत् बुद्धौ लीयते। तदा बुद्धिरेकैव मनोरूपेण इन्द्रियव्यापाररूपेण च प्रवर्तते। एवं च साधकः तिरोहितेन्द्रियव्यापारः अथवा जितेन्द्रियो भवति। अयं च प्रक्रमः "मनो हृदि निरुद्ध्य च" (भ.गी.8-12) इत्यत्र भगवता श्रीकृष्णेन "येगश्चित्तवृत्तिनिरोधः" (पा.यो.सू.1-1) इत्यत्र पतञ्जलिमहर्षिणा च सूचितः।

अनन्तरं साधकः भगवतः स्थूलरूपे अथवा विश्वरूपे निश्चयात्मिकया बुद्ध्या मनः सन्धारयेत्। कथम्? उच्यते--पूर्वोक्तसाधनपरिनिष्ठितस्य अहङ्कारविरहात् स्वपररूपभेदो वा दृश्यश्रव्यवस्तुशब्दरूपभेदो वा न विद्यते। सत्सु च रूपेषु तद्रूपदर्शी स साधकः पानके सिताखण्ड इव सर्वान्तर्याम्यात्मभावेन अपृथगेव वर्तते। एवञ्चायमात्मसहितमखिलमपि विश्वं विष्णुमयमेव सर्वदा सर्वत्र भावयेत्।।२३।।

यत्र भगवद्देहे इदं भूतं भव्यं भवच्च सत् समष्टिव्यष्ट्यात्मकं कार्यमात्रं विश्वं दृश्यते, सोऽयं तस्य भगवतो विशेषो देहः विराड्देहः स्थवीयसां अतिस्थूलानां मध्ये स्थविष्ठश्च स्थूलतमश्च।।२४।।

सप्तावरणसंयुते सप्तभिः आवरणैः पृथिव्यप्तेजोवाय्वाकाशाहङ्कारमहत्तत्त्वाख्यैः संयुते अण्डकोशे अण्डकोशाख्ये अस्मिन् शरीरे योऽसौ वैराजः वैराजाख्यः पुरुषो वर्तते स भगवान् धारणाश्रयः धारणाया विषयो भवतीति शेषः।

पक्षिण इव भगवतोऽपि तद्रूपसम्बन्ध्यण्डं उत्पद्यते। तस्मिन् सर्वसृष्टिः क्रमशः प्रवर्तमाना तत्प्रतिबिम्बतया च परिणता सती पुनस्तत्रैव लीयते। तदेतत् परिणामशीलं विश्वं 'विराट्' पदेन

व्यवह्रियते। तादृशविराड्देहावच्छिन्नप्रज्ञावतां भूतभविष्यद्वर्तमानभेदविलसितः कालो विद्यते। विश्वरूपस्य तु भगवतः कालातीतत्त्वात् न कालानुवृत्तिः।

विराड्देहभूतश्चाण्डकोशः केवलं विहगाण्डमिव न भवति। किन्तु सपत्रो मुकुल इव सावरणो विकसनशीलश्च विद्यते। अपि च सर्पशरीरात् कूर्पासा इव एतदण्डकोशादपि पृथिव्यप्तेजोवाय्वाकाशाहङ्कारमहदाख्यानि सप्तावरणानि तत्तत्कालेषूत्पद्यते पृथक् भवन्ति च। ब्रह्माण्ड इव पिण्डाण्डेऽप्ययमेव क्रमोऽभ्युपगम्यते। एतत्सप्तावरणान्याश्रित्य जीवो विद्यते, तदन्तर्यामी तदतीतश्च ईश्वरो विद्योतते। जीवेन तत्तद्रूपान्तर्यामिणः ईश्वरस्य सम्भावनैव धारणा। तस्मात् 'भगवान् धारणाश्रयः' इति सुष्ठूक्तं भगवता व्यासेन ।।२५।।

एतस्य वैराजपुरुषस्य पादमूलं पातालं पठन्ति, अभिज्ञा इति शेषः। पार्ष्णिप्रपदे रसातलं पठन्ति। अथ विश्वसृजः पुरुषस्य गुल्फौ महातलं पठन्ति। जङ्घे वै तलातलं पठन्ति।।२६।।

**द्वे जानुनी सुतलं विश्वमूर्तेरूरुद्वयं वितलं चातलं च।**
**महीतलं तज्जघनं महीपते! नभस्तलं नाभिसरो गृणन्ति।।२७।।**

**उरःस्थलं ज्योतिरनीकमस्य ग्रीवा[1] महर्वदनं वै जनोऽस्य।**
**तपो[2] रराटीं[3] विदुरादिपुंसः सत्यं तु शीर्षाणि सहस्रशीर्ष्णः।।२८।।**

**इन्द्रादयो बाहव आसुरुस्राः[4] कर्णौ दिशः श्रोत्रममुष्य शब्दः।**
**नासत्यदस्रौ परमस्य नासे[5] घ्राणो[6]ऽस्य गन्धो मुखमग्निरिद्धः।।२९।।**

**द्यौरक्षिणी चक्षुरभूत्पतङ्गः पक्ष्माणि विष्णोरहनी उभे च[7]।**
**तद्भ्रूविजृम्भः परमेष्ठिधिष्ण्यमापोऽस्य तालू रस एव जिह्वा।।३०।।**

**श्रीध० द्वे** इति। ऊरुद्वयं[8] तस्याधोभागे वितलमुत्तरभागे अतलमिति ज्ञेयम्। नभस्तलं भुवर्लोकम्। नाभिरेव सरः।।२७।।

**उरस्स्थलमिति**। उरस्स्थलं ज्योतिरनीकं, ज्योतिषां समूहं स्वर्गम्। म[9]हर्लोकं ग्रीवेति गृणन्ति। तपोलोकं[10] रराटीं ललाटं सत्यं सत्यलोकम् [11]तच्छिरः।।२८।।

1. A.B. C.G.H.I.M.Ma.N.V. °वा 2.H.V. ललाटं, I. वराटीं 3. M.Ma °टिं,W. °टं 4. M.Ma °रस्य 5. AF. GF. °सा 6. M.Ma °णं च; W. °णश्च 7. H.V. °ऽस्य 8. A. °यस्या° 9. V. Omits म....तच्छिरः 10. H.Omits रराटीं 11. A.B. Omit तच्छिरः

**इन्द्रादय** इति। उस्रा देवाः तेजोमयशरीरत्वात्, ते बाहव इत्याहुः। दिशोऽस्मदादि श्रोत्राधिष्ठात्र्यो देवताः[1] कर्णौ श्रोत्रस्याधिष्ठानम्[2] शब्दस्तु श्रोत्रविषयः सः तस्य श्रोत्रेन्द्रियम्[3]। एवं नासिकादिष्वपि। नासत्यदस्रौ अश्विनौ नासे नासापुटे। इद्धो दीप्तः।।२९।।

**द्यौरिति**। द्यौरन्तरिक्षं चन्द्रसूर्याधिष्ठानभूतत्वात्[4]। अक्षिणी नेत्रगोलके चक्षुरिन्द्रियं पतङ्गः सूर्यः [5]अहनी रात्र्यहनी [6]अहश्शब्दस्यैकशेषः। पक्ष्माणि[7] नेत्ररोमाणि परमेष्ठिधिष्ण्यं ब्रह्मपदम्। भ्रूविजृम्भः[8] भ्रूविक्षेपसमकालः तालु[9] अधिष्ठानं जिह्वा इन्द्रियम्।।३०।।

**वीर०** विश्वमूर्तेः द्वे जानुनी सुतलम्। वितलमतलञ्च[10] ऊरुद्वयम्। हे[11] महीपते! महीतलं भूलोकं[12] तस्य जघनं कट्याः पुरोभागम्। नभःस्थलं भुवर्लोकं नाभिरेव सरस्तत्त्वेनोपास्यं गृणन्ति वदन्ति तत्तत्त्वविद[13] इति शेषः।।२७।।

अस्य वैराजस्य उरस्स्थलं उरःप्रदेशं ज्योतिरनीकं ज्योतिश्चक्रं ग्रीवात्वेन महर्लोक उपास्य इत्यर्थः। अस्य वदनं जनलोकः[14] आदिपुंसः रराटी[15] ललाटं तपोलोकं विदुः सहस्रशीर्ष्णः सहस्रशिरसः शीर्षाणि शिरांसि सत्यं सत्यलोकं विदुरित्यर्थः।।२८।।

इन्द्रादयः उस्राः देवाः बाहव इत्याहुः अमुष्य कर्णौ श्रोत्रेन्द्रियाधिष्ठानभूतकर्णबिले दिशः तदधिष्ठेयं[16] श्रोत्रेन्द्रियं तु, शब्दः ध्वन्यात्मको वर्णात्मकश्च। एवमग्रेऽपि। परमस्य समाभ्यधिकरहितस्य नासे[17] नासापुटे नासत्यदस्रावश्विनौ गन्धः शान्तोग्रादिरूपेण नानाविधो गन्धः तदिन्द्रियम्। इद्धः दीप्तः अग्निः तस्य मुखम्।।२९।।

द्यौः द्युलोकः अक्षिणी नेत्रगोलके[18]। तत्र चक्षुरिन्द्रियं पतङ्गः सूर्यः। विष्णोः वैराजस्य पक्ष्माणि उभेऽहनी अहोरात्रे[19]। तस्य वैराजस्य भ्रूविजृम्भः भ्रूविनामः[20] भ्रूविलास इति यावत्। परमेष्ठिधिष्ण्यं परमेष्ठिनः चतुर्मुखस्य स्थानम्। अस्य वैराजस्य तालु[21] आपः तदभिमानी वरुणः अस्य जिह्वा रसः एव[22]।।३०।।

**विज०** अधोभागे वितलं, उपरिभागे तु अतलमिति विभागः। जघनं कटितलम्, एतत्स्मरणं विशेषात् त्वया कार्यमित्यतो महीपते इति सम्बोधितम्। अगाधत्वब्रह्मजनकपद्मनिदानत्वाभिप्रायेण नाभिसर इत्युक्तम्। नभस्स्थलं भुवर्लोकः।।२७।।

---

1. B.Omits देवताः 2. H.V. °त्रधि° 3. B.H.V. °त्रमि° 4. A.B. Omit चन्द्र.......त्वात् 5. V. Omits अहनी......इन्द्रियम्। 6. A.B. Omit अह....शेषः 7. B.H. Omits पक्ष्मा....रोमाणि 8. A.B. Omit भ्रू....कालः 9. B. °लुः, H. °लु 10. W. Omits वि° 11. A.B. Omit हे....ते! 12. A.B. °लों° 13. W. Omits त.....शेषः। 14. W. °नों° 15. W. °टं 16. A.B. °यं 17. A.B. Omit नासे 18. W. °कं 19. W. °त्रम्। 20. A.B. °तानः 21. W. °लु 22. A.B.Omit एव।

ज्योतिरनीकं ज्योतिश्चक्रस्थानं स्वर्लोकः। महर्लोकोऽस्य हरेः ग्रीवेति गृणन्ति। जनो जनलोकः। तपस्तपोलोकः रराटिं ललाटम्।।२८।।

इन्द्रादयो लोकपालास्तस्य बाहव इत्याहुः। दिशः कर्णौ गोलकस्थानीयौ। अमुष्य हरेः श्रोत्रमिन्द्रियं शब्द इति। नासत्यदस्रावश्विनौ नासे नासिके। गन्धो भूमेर्गुणः घ्राणं गन्धग्राहीन्द्रियं गन्ध जनकमाहुरित्यर्थः। इद्धो दीप्तः।।२९।।

द्यौ द्युलोकः अक्षिणी गोलके पतङ्गः सूर्यः मनुष्याणामहनी देवादीनामहनी इति उभे च विष्णोः पक्ष्माणि। ततो जाते तदाश्रिते च परमेष्ठिधिष्ण्यं ब्रह्मलोकः मधुरादिरसः।।३०।।

**रा०कृ०** हे महीपते! विश्वमूर्तेः द्वे जानुनी सुतलं गृणन्ति, वेदितार इति शेषः। ऊरुद्वयं अतलं वितलं च गृणन्ति। एवं पातालादीनि सप्ताधो भुवनान्युक्तानि। तज्जघनं तस्य पुरुषस्य जघनं महीतलं भूलोकं गृणन्ति, नाभिसरः नभस्तलं भुवर्लोकं गृणन्ति।।२७।।

अस्य वैराजस्य उरःस्थलं ज्योतिरनीकं नक्षत्रसमूहं स्वर्लोकं गृणन्ति। ग्रीवा महः महर्लोक इति गृणन्ति। अस्य पुरुषस्य वदनं जनः जनलोक इति वदन्ति। अस्य आदिपुंसः ललाटं तपः तपोलोकं विदुः। सहस्रशीर्ष्णः सहस्रशिरसः अस्य शीर्षाणि तु सत्यं सत्यलोकं विदुः। एवं भूलोकाद्याः सप्त ऊर्ध्वलोकाः कथिताः।।२८।।

अमुष्य पुरुषस्य बाहवः इन्द्रादयः उस्राः देवा इत्याहुः। कर्णौ दिश इत्याहुः। श्रोत्रं श्रोत्रेन्द्रियं शब्द इत्याहुः। परमस्य सर्वोत्कृष्टस्य तस्य नासे नासिकारन्ध्रे नासत्यदस्रौ अश्विनावित्याहुः। अस्य घ्राणः घ्राणेन्द्रियं गन्ध इत्याहुः। मुखं इद्धः प्रदीप्तः अग्निरित्याहुः।।२९।।

विष्णोः अक्षिणी द्यौरभूत्। चक्षुरिन्द्रियम् पतङ्गः सूर्योऽभूत्, पक्ष्माणि उभे अहनी अहोरात्रमभूत्। तद्भ्रूविजृम्भः तस्य परमपुरुषस्य भ्रूविजृम्भः परमेष्ठिधिष्ण्यं चतुर्मुखब्रह्मणः स्थानं अभूत्, अस्य तालुः आपः अभूवन्। जिह्वेन्द्रियं रस एवाभूत्।।३०।।

**छन्दांस्यनन्तस्य शिरो[1] गृणन्ति दंष्ट्रा यमः[2] स्नेहकला[3] द्विजानि।**
**हासो जनोन्मादकरी च[4] माया दुरन्तसर्गो यदपाङ्गमोक्षः।।३१।।**

---

1. M.Ma. गि° 2. M.Ma. °यमेन्दुगुणा 3. AF.GF. स्वेदकला द्विजालयः 4. AF.GF. हि

**व्रीडोत्तरोष्ठोऽधर एव लोभो धर्मः[1] स्तनोऽधर्मपथोऽस्य पृष्ठम्[2]।**
**कस्तस्य मेढ्रं वृषणौ च मित्रौ[3] कुक्षिः समुद्रा गिरयोऽस्थिसङ्घाः।।३२।।**

**नद्योऽस्य नाड्योऽथ तनूरुहाणि महीरुहा विश्वतनोर्नृपेन्द्र!**
**[4]अनन्तवीर्यः[5]श्वसितं मातरिश्वा गतिर्वयः कर्म गुणप्रवाहः।।३३।।**

**ईशस्य केशान् विदुरम्बुवाहान् वासस्तु सन्ध्यां[6] कुरुवर्य भूम्नः।**
**अव्यक्तमाहुर्हृदयं मनश्च[7] स चन्द्रमाः सर्वविकार कोशः।।३४।।**

**श्रीध० छन्दांसीति**। [8]छन्दांसि छन्दःप्रधानाः वेदाः शिरो ब्रह्मरन्ध्रं स्नेहकलाः पुत्रादिस्नेहलेशाः [9]द्विजानि दन्ताः [10]क्लीबत्वमार्षम्। दुरन्तोऽपारः सर्गः इति यत्सः [11]तस्य कटाक्षः [12]निखिलप्रपञ्चसर्गस्यापि भगवत्कटाक्षविक्षेपाधीनत्वात्।।३१।।

**व्रीडेति**। अधर्ममार्गो[13]ऽस्य पृष्ठभागः। कः प्रजापतिः मित्रौ मित्रावरुणौ।।३२।।

**नद्य** इति। [14]अनन्तं वीर्यं यस्य[15]वयः कालस्तस्य गमनम्। गुणप्रवाहः प्राणिनां संसारः कर्म तस्य [16]क्रीडा।।३३।।

**ईशस्येति**। भूम्नो [17]विभोः अव्यक्तं प्रधानम् [18]हृदयमाहुः। स प्रसिद्धश्चन्द्रमाः तदीयं मनः सर्वेषां विकाराणां [19]कामादीनां कोश इवाश्रय[20]भूतम्। [21]चन्द्रोऽपि सर्वविकारकोश उच्यते धूमादिमार्गत्वात्।।३४।।

**वीर०** अनन्तस्य त्रिविधपरिच्छेदशून्यस्य शिरः छन्दांसि गृणन्ति, दंष्ट्रा यमः द्विजानि, दन्ताः, नपुसंकत्वमार्षं स्नेहकलाः स्नेहस्य कला अंशा अस्मदादीनां स्नेहकला वैराजस्य दन्ता इत्यर्थः। तस्य हासः हसनं [22]जनोन्मादकरी जनोन्मोहकरी। माया आश्चर्यशक्तिः। मायाशब्दस्य सर्वत्रानुगतं प्रवृत्ति निमित्तमाश्चर्यमेव।[23]तच्च विस्मयनीयत्वरूपं, तच्च नानाविधकार्यकरत्वात्। यस्यापाङ्गमोक्षः [24]कटाक्षः दुरन्तसर्गः अपारसर्गः।।३१।।

व्रीडा लज्जा, उत्तरोष्ठः अधरः अधरोष्ठः लोभः, धर्मः स्तनः, अधर्मपथः अधर्ममार्गः, अस्य [25]पृष्ठः पृष्ठभागः तस्य वैराजस्य मेढ्रं [26]कः प्रजापतिः। वृषणौ [27]मित्रौ मित्रावरुणौ, समुद्राः कुक्षिः उदरं, [28]गिरयः तस्यास्थिसङ्घाः।।३२।।

---

1. AF.GF. °थः स्वपृष्ठः; H.V.W. °थश्च पृष्ठः 2. C.N. °ष्ठः 3. M.Ma. °त्रः 4. M.Ma. अन्नं च वीर्यं च 5. A.B.C.G.I. °र्यं, 6. M.Ma.W. °न्ध्ये 7. M.Ma. °स्तु 8. A.B.Omit छन्दःप्रधानाः 9. V.Omits द्वि...त्वात्। 10. A.B. षण्ढ° 11. A. Omits तस्य 12. A.B.Omit निखि....त्वात् 13. H.V. °र्गस्तस्य 14. H.V. अनन्तवीर्यस्य 15. B. adds सः 16. H.V क्रिया 17. H.V. प्र° 18. A.B.Omit हृदयमाहुः 19. A.B. Omit कामादीनां 20. H.V. °यी° 21. A.B. Omit चन्द्रो.....र्गत्वात्। 22. A.B.Omit जनोन्मादकरी 23. W. adds तस्य 24. A.B. Omit कटाक्षः 25. W. Omits पृष्ठः 26. A. Omits कः 27. A.B. Omit मित्रौ 28. W. अद्रयः

नद्यः गङ्गायमुनादयोऽस्य नाड्यः तनूरुहाणि रोमाणि महीरुहाः वृक्षाः। विश्वतनोर्विश्वशरीरकस्य। हे नृपेन्द्र! अनन्तवीर्यश्वसितम् अनन्तवीर्यस्य अपारवीर्यस्य श्वसितं प्राणः मातरिश्वा वायुः गतिर्गमनं वयः कालः तस्य कर्मगुणप्रवाहः गुणानां सत्त्वरजस्तमसां प्रवाहः कार्यं प्राणिनां संसार इत्यर्थः।।३३।।

ईशस्य भगवतः केशान् अम्बुवाहान् मेघान् विदुः। हे कुरुवर्य! भूम्नः विभोर्वासः वस्त्रं सन्ध्ये, सायंप्रातस्सन्ध्ये तस्य हृदयं हृदयकमलमव्यक्तं प्रधानमाहुः, सः प्रसिद्धः सर्वविकारकोशः सर्वौषधिविकारहेतुश्चन्द्रमाः तदीयं मनः इत्यर्थः। मनो हि सर्वविकाराश्रयभूतम्।।३४।।

**विज०** गायत्र्यादिच्छन्दांसि गिरो वचनानि गृणन्ति। अर्यमेन्दू सूर्यचन्द्रौ, दंष्ट्राद्वयाज्ज्ञाताविति शेषः। बहुरूपत्वात् पुनर्वचनम्। "बह्वङ्गत्वं बहुत्वतः" (ब्रह्मतर्के) इति वचनात्। उडुगणा नक्षत्राणि। द्विजानि दन्ताः अत्र प्रगृह्य संज्ञाऽभावो लिङ्गव्यत्ययश्च वैलक्षण्यद्योतनायेति ज्ञातव्यम्, माया मोहनशक्तिः "हासो हासादभिव्यक्ता सप्तसु प्रथमेति" सूत्रात् दुरन्तसर्गोऽनवसानविश्वसृष्टिः।।३१।।

व्रीडा लज्जा। अधरोऽधरोष्ठः। एवशब्दोऽन्ययोगव्यवच्छेदकः। कः प्रजापतिः मेढ्रमिन्द्रियम्। वृषणौ बीजद्वयम्। मित्र इत्युपलक्षणम् वरुणश्च।।३२।।

विश्वा[2] तत्तत्पदार्थेषु प्रविष्टा[3] तनुर्यस्य स तथा तस्य विश्वं तनुः प्रतिमा यस्य सः तथा तस्येति वा। वीर्यं रेतोऽन्नं प्राणिभोग्यं गतिर्गमनं तस्माद्वय आयुः प्राणिनां जीवनावधिलक्षणमुत्पन्नं कर्मव्यापारः तस्मात् सत्त्वादिगुणानां प्रवृत्तिक्रमः।।३३।।

सन्ध्ये द्वे। अव्यक्तं मूलप्रकृतिम्। मनोऽभिमानत्वाच्चन्द्रस्य, कामादिनानाविकारगृहत्वमुपचारः। मनो मनसो जातः।।३४।।

**रा०कृ०** अनन्तस्य तस्य शिरः छन्दांसि गायत्र्यादीनीति गृणन्ति। दंष्ट्रा यमः द्विजानि दन्ताः स्नेहकलाः पुत्राद्यनुरागलेशाः। हासः जनोन्मादकरी माया चेति गृणन्ति। यदपाङ्गमोक्षः यस्यापाङ्गमोक्षः दुरन्तसर्गः अपारसृष्टिरिति च गृणन्ति।।३१।।

अस्य पुरुषस्य उत्तरोष्ठः उपरितनोष्ठः व्रीडा, अधरः अधरोष्ठः लोभ एव। स्तनः धर्मः, पृष्ठं

1. A.B. सर्वविकाराश्रयइत्यर्थः। 2. A. °श्वाति 3. A.B. तिष्ठति

पृष्ठभागः अधर्मपथः अभूत्। तस्य मेढ्रं कः प्रजापतिः, वृषणौ मित्रौ च मित्रावरुणौ च। कुक्षिः समुद्राः, अस्थिसङ्घाः गिरश्चाभूवन्।।३२।।

हे नृपेन्द्र! अथ विश्वतनोरस्य नाड्यो नद्यः, तनूरुहाणि महीरुहाः, श्वसितम् अनन्तवीर्यो मातरिश्वा वायुः, गतिः वयः कालः, कर्मगुणप्रवाहः सत्त्वरजस्तमोगुणप्रवाहः इति वदन्ति।।३३।।

हे कुरुवर्य! ईशस्य तस्य केशान् अम्बुवाहान् विदुः। भूम्नः महत्तमस्य तस्य वासस्तु वस्त्रं तु सन्ध्यां सायंप्रातस्सन्ध्ये विदुः। तस्य हृदयम् अव्यक्तं प्रधानं विदुः। तस्य मनश्च सर्वविकारकोशः सर्वौषध्यादिविकारहेतुभूतः चन्द्रमाः? अभवदिति शेषः।।३४।।

**विज्ञानशक्तिं[1] महिमामनन्ति सर्वात्मनोऽन्तःकरणं गिरित्रम्[2]।**
**अश्वाश्वतर्युष्ट्रगजानखानि सर्वे मृगाः पशवः श्रोणिदेशे[3]।।३५।।**

**वयांसि[4] तद्व्याकरणं[5] विचित्रं मनुर्मनीषा मनुनो निवासः।**
**गन्धर्वविद्याधरचारणाप्सरः स्वरस्मृतीरसुरानीक[6]वीर्यः[7]।।३६।।**

**ब्रह्माननं[8] क्षत्रभुजो महात्मा विडूरुरङ्घ्रिश्रितकृष्णवर्णः।**
**[9]नानाभिधाभीज्य [10]गणोपपन्नो [11]द्रव्यात्मकः कर्मवितानयोगः।।३७।।**

**इयानसावीश्वर विग्रहस्य यस्सन्निवेशः कथितो मया ते।**
**सन्धार्यतेऽस्मिन् [12]वपुषि स्थविष्ठे मनः स्वबुद्ध्या न यतोऽस्ति किञ्चित्।।३८।।**

*** [13]स सर्वधीवृत्त्यनुभूतसर्व आत्मा यथा स्वप्नजनेक्षितैकः।**
**तं सत्यमानन्दनिधिं भजेत नान्यत्र सज्जेद्यत आत्मपातः।।३९।।**

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
द्वितीयस्कन्धे माहापुरुषसंस्थानुवर्णने प्रथमोऽध्यायः।।१।।

---

1.M.Ma. °ति° 2. M.Ma °त्रः 3. C. °शः 4. M.Ma "चां° 5. M.Ma. °ह° 6. H.V.W. °तिह्यं" ; AF.GH. °तिवैभा" 7. W. "व" 8. M.Ma. °नः 9. M.Ma स्वाहास्वधावीर्यगु 10. W. °गु° 11. M.Ma. हु° 12. H.V. पुरुषे *This verse comes after the 6th verse in the second chapter of the second Skandha in M&Ma. स सर्वविद्धद्यनुभूश्चसर्व आत्मा यथासुप्तजनेक्षितैकः। तं सत्यमानन्दनिधिं भजेत सर्वात्मनातोऽन्यत आत्मघातः।। 13.M. add in foot note अत्र सर्ववित् आत्मा सत्यं आनन्दनिधिमिति पदचतुष्टयेन "आनन्दादयः प्रधानस्य" (ब्र.सू.3-3-11) इत्यत्रोक्तम् सर्वाधिकारि साधारणं उपसंहार्यं सच्चिदानन्द आत्मेति गुण चतुष्टयं सूचितमिति ज्ञातव्यम्।

**श्रीध० विज्ञानशक्तिम्** इति। विज्ञानशक्तिं [1]ज्ञानरूपां भगवच्छक्तिं चित्तम्। महिं महत्तत्त्वम्। अन्तःकरणमहङ्कारम्। गिरित्रं श्रीरुद्रम्। गर्दभाद्वडबायामुत्पन्ना अश्वतरी।।३५।।

**वयांसि** इति। वयांसि पक्षिणस्तस्य व्याकरणं "नामरूपे व्याकरवाणि" (छन्दो.उ.6-3-2) इति श्रुत्युक्तं[2] शि[3]ल्पनैपुण्यम्। य[4]थाऽऽहुः - "येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः। मयूराश्चित्रिता येन स [5]ते वृत्तिं विधास्यति" (हितोपदेशः) इति। [6]मनुः स्वायंभुवः। मनीषा बुद्धिः। [7]मनुजः पुरुषः निवास आश्रयः। "पुरुषत्वे चाविस्तरामात्मा" इति श्रुतेः। गन्धर्वादीनां द्वन्द्वैक्यम् गन्धर्वादयः। स्वरस्मृतीः षड्जादिस्वरस्मृतयः इत्यर्थः। असुरानीकं वीर्यं यस्य सः। स्वरः स्मृतिरसुरानीकवर्य इति पाठे गन्धर्वादयः स्वरः असुरसमूहश्रेष्ठः प्रह्लादः स्मृतिः तस्येति।।३६।।

**ब्रह्मा** इति। ब्रह्मा विप्रः तस्य आननं मुखम्। क्षत्रं क्षत्रियो भु[8]जौ यस्य, विट् वैश्यः ऊरू यस्य, अङ्घ्रिश्रितः कृष्णवर्णः शूद्रो यस्य, [9]नानारूपाः अभिधाः नामानि येषां ते च तेऽभीज्या देवास्तेषां गणैः वसुरुद्रादिभिरुपपन्नो युक्तः। द्रव्यात्मको हविस्साध्यः वितानयोगो यज्ञप्रयोगः तस्य कर्म कार्यम्। आवश्यकोऽभिप्रेतः इत्यर्थः।।३७।।

**इयान्** इति। इयानेतावान् सन्निवेशोऽवयवसंस्थानम्। अस्मिन् स्वबुद्ध्या मनः सन्धार्यते मुमुक्षुभिः यतो [10]यद्व्यतिरिक्तं किञ्चिन्नास्ति तस्मिन्।।३८।।

तदेवं चित्तस्थैर्यार्थं विराड्देहजीवेश्वराणाम् अभेदेनोपासनमुक्तम्। तत्र तु देहजीवावीश्वरे प्रविलाप्य स एव ध्येय इति [11]सदृष्टान्तं निर्धारयति **स** इति। सर्वेषां [12]धीवृत्तिभिरनुभूतं सर्वं येन स एक एव सर्वान्तर आत्मा तमेव सत्यं भजेत। अन्यत्रोपलक्षणे न सज्जेत्। यत [13]आसङ्गादात्मनः पातः संसारो भवति। एकस्य तत्तदिन्द्रियैः सर्वानुभूतौ दृष्टान्तः। स्व[14]प्ने जनानामीक्षिता यथेति स्वप्ने हि कदाचित् बहून् [15]देहान् [16]प्रकल्प्य जीवः त[17]त्तदिन्द्रियैः सर्वं पश्यति तद्वत्। ईश्वरस्य तु विद्याशक्तित्वान्न बन्धः।।३९।।

इति श्रीमद्भागवते द्वितीयस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां प्रथमोऽध्यायः।।१।।

---

1. A.B. Omit ज्ञानरूपां भगवच्छक्तिं 2. B. adds विदित्रं 3. H.V. °ल्पि° 4. H.V. °दा° 5. H.V. नो 6. H.V.Omit मनु....तस्येति 7. A. Omits मनुजः 8. H.V. °जः 9. A.B. नानाऽभि° 10. A. व्यतिरिक्तं; H.V. अतिरिक्तं 11. A.B.H. Omit सदृष्टान्तं 12. H.V. बुद्धि° 13. H.V. Omit आ° 14. A. °प्न° 15. H.V. जीवान् 16. H.V. परि° 17. H.V. Omit °त्त°

**वीर०** तस्य[1] विज्ञानशक्तिं व्यवसायशक्तिं तां महिं महत्तत्वम् आमनन्ति उपासते। सर्वात्मनः सर्वान्तर्यामिणः गिरित्रं रुद्रम् अन्तःकरणमहङ्कारम्। अत एव "रुद्रो वक्षसि चाभव" दिति विश्वरूपे[2] कथितम्। अहङ्कारश्च अनात्मन्यात्माभिमानहेतुरिति मोहकस्य गिरित्रस्य तदात्मकत्वं युक्तम्। रासभाद्वडबायामुत्पन्नाऽश्वतरी अश्वाश्वतर्युष्ट्रगजास्तस्य नखानीत्यर्थः। सर्वे मृगाः पशवश्च तस्य श्रोणिदेशे उपास्याः तत्त्वेनानुसन्धेयाः इत्यर्थः।।३५।।

वयांसि वेदात्मकतित्तिर्यादयः पक्षिणः तस्य व्याकरणं "नामरूपे व्याकरवाणि" (छन्दो.उ.6-3-2) इति श्रुत्युक्तं[3] शिल्पनैपुण्यं मनुर्मन्त्रः तस्य मनीषा बुद्धिः मनुजः[4] मनुष्यवर्गः तन्निवासस्थानं गन्धर्वादीनां द्वन्द्वैक्यं[5] गन्धर्वादिरप्सरोऽन्तो[6] वर्गः। अस्य स्वरः षड्जादिस्वरः तेषां गानाद्यन्वयात् तत्स्वरत्वं युक्तम्। असुरानीकवर्यः असुरसमूहश्रेष्ठः प्रह्लादः तस्य स्मृतिः।।३६।।

ब्रह्मा ब्रह्मणः तस्य आननं महात्मा वैराजः। क्षत्रभुजः क्षत्रं क्षत्रियो भुजो यस्य सः। विट् वैश्यः ऊरू यस्य सः[7] तथोक्तः। अङ्घ्रिश्रितकृष्णवर्णः अङ्घ्रौ श्रितः[8] कृष्णवर्णः शूद्रो यस्य सः कृष्णवर्णस्तु[9] तदङ्घ्रित्वेनानुसन्धेय इत्यर्थः। नानाभिधाभीज्यगणा[10] नानानामका अभीज्या यष्टव्या वसुरुद्रादयस्तेषां गणैरुपपन्नो[11] युक्तः यो द्रव्यात्मको हविस्साध्यः वितानयोगः यज्ञादियोगः स तस्य आराधनरूपं कर्मेत्यर्थः।।३७।।

ईश्वरविग्रहस्य वैराजविग्रहस्य यः सन्निवेशः[12] अवयवसंस्थानं मया[13] ते तुभ्यं कथितः। असौ इयानेतावानेव स्थविष्ठेऽस्मिन् वैराजसम्बन्धिनि वपुषि स्वकीयबुद्ध्या मुमुक्षुभिर्मनः सन्धार्यते यतः यस्मात् ईश्वरशरीरादन्यद्बहिर्भूतं नास्ति सर्वं तच्छरीरान्तर्भूतमित्यर्थः।।३८।।

एतदेवाऽऽह - **स** इति। "दृश्यते श्रूयतेऽपि वा" (म.ना.उ.9-5) इति श्रुत्यर्थ उच्यते। सर्वधीवृत्तिभिः प्रत्यक्षानुमानादिसर्वविधज्ञानैरनुभूताः सर्वे ते पदार्थाः तेऽन्तर्बहिश्चाधिष्ठेयतया यस्य सः[14] तथोक्तः। एवञ्च तदधिष्ठेयपदार्थानां तच्छरीरत्वमर्थसिद्धम्। तत्र दृष्टान्तमाह- यथा एक आत्मा जीवः स्वप्नजनेक्षिता स्वप्नजनद्रष्टा ह्यात्मा स्वकीयसुकृतदुष्कृतानुसारेण परमात्मसृष्टान् स्वेनैवानुभाव्यान् तत्कालमात्रावसानान् पदार्थानधिष्ठाय राज्याभिषेकशिरच्छेदादिसुखदुःखादिकमनुभवति[15] तथा अत्रैकस्यानेकपदार्थेषु अधिष्ठातृत्वमात्रे दृष्टान्तः। एवं दृष्टश्रुतचेतनाचेतनशरीरकत्वेऽपि शरीरगतदोषा-

1. A.B. Omit तस्य 2. A.B. °पेण 3. W. adds अद्भुतं 4. W. Omits मनुजः 5. W. क्यम् 6. W. °द्यप्स 7. A.B. Omit सः 8. W. adds आश्रितः 9. W. Omits तु 10. W. °गु° 11. W. गु° 12. A.B. °सन्निवेशः 13. A.B.Omit मया ते तुभ्यं 14. W. Omits सः 15. A.B. °खम°

संस्पर्शित्वमाह सत्यमिति। सत्यं स्वरूपतो गुणतश्च निर्विकारम्। तस्य पुरुषार्थत्वमाह-आनन्दनिधिमिति। आनन्दाश्रयमित्यर्थः। आनन्दस्वरूपत्व[1]स्याप्युपलक्षणं "आनन्दं ब्रह्मणो विद्वान्" (तैत्ति.उ.2-4) "विज्ञानमानन्दम्" (बृह.उ.3-9-34) इत्युभयत्रापि श्रवणात्। भजेत उपासीत। यद्वा सत्यम् इत्यचिद्व्यावृत्तिः। आनन्दनिधिमिति क्षेत्रज्ञव्यावृत्तिः अन्यत्र न सज्जेदब्रह्मात्मकं स्वतन्त्रं वस्तु किञ्चित् परिकल्प्य तत्रासक्तो न भवेत्, यतस्तदासङ्गादात्मपातः। आत्मनः स्वस्य पातः संसारः स्यात् तस्मान्न सज्जेदित्यर्थः।।३९।।

इति श्रीवत्सान्वयपयःपारावार राकासुधाकरस्य सर्वविद्यानिधेः चक्रवर्तिनः
श्रीशैलगुरोः सुतेन तच्चरणकमलपरिचर्याप्रसादिततत्सूक्तिसमधिगत
श्रीमद्भागवतार्थहृदयेन श्रीवैष्णवदासेन श्रीवीरराघवविदुषा लिखितायां
श्रीमद्भागवतचन्द्रचन्द्रिकायां श्रीमद्भागवतव्याख्यायां
द्वितीयस्कन्धे प्रथमोऽध्यायः।।१।।

**विज०** विज्ञानशक्तिं विरिञ्चं गिरिं कैलासं त्रायत इति गिरेः वायोस्त्राणं यस्य सः तथेति वा। गिरित्रो रुद्रः सर्वात्मनः सर्वस्वामिनः अन्तःकरणमहङ्कारः तस्माज्जातः नखानि नखेभ्यः। गर्दभाद्वडबायामुत्पन्ना अश्वतरी श्रोणिदेशे स्थिताः तस्माज्जाताश्च ।।३५।।

वचांसि लौकिकवैदिकानि। विचित्रं तस्य व्याहरणं शब्दः व्याहरणाश्रितानि तज्जातानि च। मनुर्वायुः तस्य मनीषा बुद्धिः "ते वायवे मनवे बाधिताय" इति श्रुतिः, मनुः स्वायंभुवो वा मनीषा विचारः भगवद्विचारशक्तिजातत्वात्। स्मृतिकर्तृत्वं मनोर्निवासो निवसनं कर्मजनितत्वात्। गन्धर्वादीनामुत्पादिके स्वरस्मृती यस्य स तथा। स्वरः षड्जादिलक्षणः स्मृतिरतीतादिविषया असुरानीकस्य जनकं वीर्यं यस्य स तथा।।३६।।

ब्रह्मणः ब्राह्मणजातेर्जनकमाननं यस्य स तथा। क्षत्रजातेरुत्पादकौ भुजौ यस्य स तथा। विशां जनकौ ऊरू यस्य स तथा। अङ्घ्रिश्रितः कृष्णवर्णः शूद्रजातिः यस्य स तथा। देवपितृभ्यो विनियुज्यमाना स्वाहास्वधा तयोरुत्पादको वीर्यगुणो रेतोगुणस्तेनोपपन्नः हव्यजनक आत्मा मध्यदेहो यस्य सः तथा। अग्निष्टोमादिकर्मवितानस्योत्पादको योग उपायो यस्य सः तथा। वितानं विस्तारः।।३७।।

उक्तार्थमुपसंहरति- **इयान्** इति। ईश्वरविग्रहस्य वैराजाख्यहरिदेहस्य यः सन्निवेशोऽवस्थितिविशेषः

1. W. Omits "त्व"

सः इयान् इत्यम्भूतो मया ते तव कथितः यतोऽस्मादीश्वरविग्रहात् स्थविष्ठमुत्तमं च नास्ति। योगिभिः मनः अस्मिन् स्थविष्ठे सर्वोत्तमे वपुषि स्वबुद्ध्या सन्धार्यते, मनोनैर्मल्यायेति शेष इत्यन्वयः।।३८।।

**भजनापरपर्यायोपासनं** गुणोपसंहारेण कार्यमिति यदतस्तद्गुणकथनपूर्वकं तदेवोपासनं स्पष्टीकुर्वन् विपक्षे बाधकमाह - **स सर्वविदिति।** "प्राण एवैतस्मिन्पुरे जाग्रति" (प्रश्न.उ.4-3) इति श्रुतेः। पञ्चावृत्तिरेको मुख्य प्राण एव यथा सुप्तजनस्येक्षिता द्रष्टा। तथा स हरिः, सर्वान्वेत्तीति सर्ववित्। हृदि स्थित्वाऽनुभूर्यथेष्टानन्दानुभवनात्। सर्वो गुणपूर्णः आत्मा स्वामीत्येवं गुणानुपसंहृत्य सत्यं सर्वतः सारमानन्दनिधिं तं विष्णुम्भजेतोपासीत। आधिव्याध्यादिसमुद्भवेऽप्युपासनं न हातव्यमित्याशयेनोक्तं सर्वात्मनेति। अतोऽन्यतः परमात्मानुपासनेऽपि आत्मघातः अहितकरणादिना स्वात्महननाख्यदोषापत्त्या नित्यदुःखतमप्राप्तिः स्यादित्यन्वयः। चशब्दस्तत्तद्योग्यतानुसारेणेत्यस्मिन्नर्थे। "यथैकस्तु बहून्सुप्तानसुप्तः पश्यति प्रभुः। यथेष्टभवनाद्विष्णुरनुभूः परिकीर्तितः" (व्योमसंहितायां) इत्यादेरुक्त एवार्थ इति। स्वेच्छयाऽनुकूलविग्रहग्रहणाद्वाऽनुभूः अनेन प्राणेन दत्तानि चेष्टालक्षणानि कर्माणीत्यानन्दशब्देन कर्माण्युच्यन्ते। तेषां फलपर्यन्तं निधायकत्वेन निधिपालनत्वात् स्वामित्वाद्वाऽऽनन्दनिधिर्हरिस्तश्च।।३९।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
द्वितीयस्कन्धे प्रथमोऽध्यायः।।१।।

**रा०कृ०** सर्वात्मनः तस्य विज्ञानशक्तिं महिं महत्तत्त्वम्, आमनन्ति वदन्ति। अन्तःकरणं गिरित्रं रुद्रम् आमनन्ति। तस्य नखानि अश्वाश्वतर्युष्ट्रगजा इति वदन्ति। तस्य श्रोणिदेशे श्रोणिस्थानीयाः सर्वे मृगाः हरिणादयः पशवः गोमहिषादय इति वदन्ति।।३५।।

विदित्रं तव्द्याकरणं तस्य व्याकरणं वयांसि विचित्ररूपाः पक्षिण इति, मनीषा मनुरिति, निवासो मनुज इति, स्वरस्मृतिः षड्जादिस्वरस्मृतयः गन्धर्वविद्याधरचारणाप्सरः, गन्धर्वविद्याधरचारणाप्सरसां वर्ग इति च वदन्ति। अपि च सः असुरानीकवीर्यः असुरानीकं वीर्यस्थानीयं यस्य तथाभूत इत्यर्थः।।३६।।

अस्य पुरुषस्य आननं ब्रह्म ब्राह्मणः। महात्मा स पुरुषः क्षत्रभुजः, विडूरुः वैश्योरुः अङ्घ्रिश्रितकृष्णवर्णः पादाश्रितशूद्रः। तस्य भुजौ ऊरू वैश्याः। अङ्घ्री शूद्रा इति भावः। तस्य कर्मनानाऽभिधाऽभीज्य गणोपपन्नः नानानामकयष्टव्यदेवगणयुक्तः द्रव्यात्मकः वितानयोगः, यज्ञादिप्रयोगः, भवतीति शेषः।।३७।।

यो मया ते तुभ्यं कथितः सोऽसौ ईश्वरविग्रहस्य सन्निवेशः अवयवसन्निवेशः इयान् एतावानेव। यतो यस्मादीश्वरविग्रहात् भिन्नं वस्तु किञ्चिदपि नास्ति। अस्मिन् स्थविष्ठे अतिस्थूले वपुषि योगिभिः स्वबुद्ध्या मनः सन्धार्यते।

पूर्वोक्तैः लक्षणैः सर्वमयस्य सर्वेश्वरस्य विराड्विग्रहो निष्पद्यते। मोक्षार्थी प्रथमं तद्विग्रहभागेषु मनो निधाय क्रमशः सर्वस्मिन्नेव शरीरे सन्धारयेत्। तथाहि- चञ्चलं मनो यत्र परिभ्रमति तत्र तत्र भगवदङ्गत्वं स्वबुद्ध्या भावयेत्। तथा च मनसः सर्वे स्वाभाविकाः विषयाः भगवदंशा एवेति धिया सर्वमपि चिन्तनं भगवच्चिन्तनत्वेन पर्यवस्येत्। एवञ्च स्पर्धावमानादयो मनोदोषाः नैवोत्पद्येरन्। स्पर्धादिदोषविषयाणां मनुष्यादीनामपि भगवदङ्गभूततया ध्येयान्तःपातित्वात् मानवजीवितचर्यायाः सर्वस्या अपि ईश्वराराधनत्वभावनायां श्रीशङ्करभगवत्पादवचनं प्रमाणम्। तद्यथा-आत्मा त्वं गिरिजा मतिः परिजनाः प्राणाः शरीरं गृहम्। पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः। सञ्चारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरः। यद्यत् कर्म करोमि तत्तदखिलं शम्भो! तवाराधनम्।।३८।।

स्वप्नजनेक्षिता स्वप्ने कल्पितानां जनानां ईक्षिता आत्मा तथा आत्मेव जीव इव सर्वधीवृत्त्य-नुभूतसर्वः सर्वेषां धीवृत्तिभिः अनुभूतं सर्वं भोगैश्वर्यादिकं येन तथाभूतः सः परमात्मा एक एव। सत्यम् आनन्दनिधिं तं भजेत। यतः सङ्गात् आत्मपातः आत्मनः स्वस्य पातः संसारमध्ये पातः भवति तादृशि अन्यत्र कलत्रपुत्रगृहादौ न सज्जेत् न सक्तो भवेत्।

स्वप्नजनेक्षिता जीवात्मेव सर्वधीवृत्त्यनुभूतसर्वः परमात्मा' इत्यत्र किञ्चिदुच्यते - जीवः स्वप्ने मनः - कल्पितानां नानानामरूपप्रकृतीनां व्यक्तिविशेषाणां दर्शनस्पर्शनादिकं मनःकल्पितैरेव इन्द्रियैः कुर्वन् पुनर्जागृतिं प्राप्य स्वस्वरूपमधिगच्छति। स्वप्नदृष्टान् सर्वानप्यात्ममयानभिजानाति। तथाहि - स्वप्ने दृष्टान् व्यक्तिविशेषान् पृथक् पश्यन्नपि जीवः स्वयं स्वेनैव दर्शनस्पर्शनादिकं करोतीति सर्वेषामनुभव- सिद्धो विषयः। एवमेव ईश्वरो जीवानां हृदयेषु स्थितः तद्बुद्धिवृत्तीः प्राचोदयन् अधिगतसर्वविषयैः तैस्सह क्रीडते।

जीवस्वप्नेश्वरसृष्ट्योरियान् भेदः जीवः स्वस्वप्नबद्धः भयदुःखादिकमनुभवति। ईश्वरस्तु निद्रास्वप्नजननमरणादीनां नियामकत्वात् तैरबद्धः तज्जन्यसुखदुःखाद्यतीतः सत्यस्वरूपस्सन् सृष्टिगत वैविध्येन क्रीडतीति।

एवं संसार्यपि जीवः पुत्रकलत्रादिरूपेणावस्थितस्य ईश्वरस्य सेवनं केवलकर्तव्यधिया समाचरन् ईश्वरस्थितिमासाद्य असङ्गानन्दं भजते। तदव्यतिरेकेण केवलपुत्रकलत्रादीन् आसक्त्या सेवमानः संसारबद्धो भवति।।३९।।

इति श्रीमद्भागवते द्वितीयस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां व्याख्यायां
द्वितीयस्कन्धे प्रथमोऽध्यायः।।१।।

oooOooo

# द्वितीयोऽध्यायः

**श्रीशुक उवाच**

**एवं पुरा धारणयाऽऽत्मयोनिर्नष्टां स्मृतिं प्रत्यवरु[1]ध्य तु[2]ष्टात्।**
**तथा ससर्जेदममोघदृष्टि[3]र्यथाप्ययात् प्राक् व्यवसायबुद्धिः।।१।।**

**[4]शाब्दस्य हि ब्रह्मण एष पन्था यन्नामभिर्ध्यायति धीरपार्थैः।**
**परिभ्रमंस्तत्र न विन्दतेऽर्थान् मायामये वासनया शयानः।।२।।**

**[5]अतः कविर्नामसु यावदर्थः स्यादप्रमत्तो व्यवसायबुद्धिः।**
**सिद्धेऽन्यथार्थे न यतेत [6]तत्र परिश्रमं [7]तत्र समीक्षमाणः।।३।।**

**सत्यां क्षितौ किं कशिपोः प्रयासैर्बाहौ [8]स्वसिद्धे ह्युपबर्हणैःकिम्।।**
**सत्यञ्जलौ किं पुरु[9]धान्नपात्र्या दिग्वल्क[10]लादौ सति किं दुकूलैः।।४।।**

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

द्वितीये तु ततः स्थूलधारणातो जितं मनः। सर्वसाक्षिणि सर्वेशे विष्णौ धार्यमितीर्यते।।
दृश्यालम्बनरूपैवमुक्ता वैराजधारणा। इहोच्यते तु तत्साध्या सर्वान्तर्यामिधारणा।।

तत्र तावत् पूर्वोक्तधारणायाः अवान्तरफ[12]ले विश्वसृष्ट्यादिकमाह - **एवमिति**। एवं [13]या धारणा तया तुष्टाद्धरेः पुरा प्रलयसमये नष्टां सृष्टिस्मृतिं प्रत्यवरुध्य लब्ध्वा [14]ब्रह्मा अप्ययात् [15]प्रलयात् प्राक् इदं विश्वं यथाऽऽसीत् तथा ससर्ज। व्यवसायात्मिका बुद्धिः यस्य [16]सः। अत एव अमोघा दृष्टिः यस्य इति। अतः तया धारणया विश्वसृष्टिसामर्थ्यं भवति।।१।।

उपासनाफलाद[17]पि विरक्तस्य शुद्धात्मधारणायां अधिकारोऽतो वैराग्यार्थं सर्वं कर्मफलं निन्दति-**शाब्दस्येति**। शाब्दं शब्दमयं ब्रह्म वेदः तस्य एष पन्थाः कर्मफलबोध[18]नप्रकारः। कोऽसौ? अपार्थैः अर्थशून्यैरेव स्वर्गादिनामभिः [19]साधकस्य [20]धीः ध्यायति तत्तदिच्छां करोतीति यत्। अपार्थत्वमेवाऽऽह। तत्र मायामये पथि सुखमिति [21]वासनया [22]शयानः स्वप्नान् पश्यन्निव परिभ्रमन् अर्थान् न विन्दति तत्तल्लोकं प्राप्तोऽपि निरवद्यं सुखं न लभत इत्यर्थः।।२।।

---

1. M.Ma.°ह्य 2. M.Ma. °ध्यन् 3. AF.G. °श्र 4. M.Ma. श° 5. H.V. त° 6. M.Ma तत्तत् 7. AF.GF. त्वत्र 8. AF. GF. च 9. M.Ma °पर्णपात्रैः 10. M.Ma. °कलाभे 11. H.V. °धाद्धा 12. A.B. °लमाह 13. H.V. धारणया त° 14. B.H.V. Omit ब्रह्मा 15. A.B. Omit प्रलयात् 16. H.V. Omit सः 17. H.V. °ति° 18. A. Omits न 19. B.H.V. Omit साधकस्य 20. H.V, Omit धीः 21. H.V. Omit वासनया 22. H.V. मन्यमानः

तर्हि सर्वथा कर्मफलत्यागे सद्य एव देहपातः स्यात् इत्याशङ्क्य आह **अत**[1] इति। अतः[2] कविः नामसु[3] नाममात्रेषु[4] नाममात्रसारेषु भाग्येषु यावता अर्थेन[5] अर्थः देहनिर्वाहो यस्य सः[6] तथाभूतः स्यात्। अप्रमत्तः तावन्मात्रेऽपि अनासक्तः व्यवसायबुद्धिः नेदं सुखमिति निश्चयवान्। तदाऽपि[7] तत्र तस्मिन्नर्थे अन्यथैव सिद्धे सति तत्र[8] यत्ने परिश्रमं पश्यन् न यतेत।।३।।

अन्यथासिद्धिमाह द्वाभ्याम् **सत्यामिति**। कशिपोः शय्यायाः[9]। स्वतः सिद्धे बाहौ सति उपबर्हणैः उच्छीर्षकैः। किम्? पुरुधा बहुप्रकारया अन्नपात्र्या भोजनपात्रेण। दिक्सद्भावो नाम नग्नत्वमेव।।४।।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं वैराजधारणामुक्त्वा मुमुक्षोः हृदये उपास्यं रूपं[10] तदुपासनानिष्ठस्यार्चिरादिना गतिञ्च वक्ष्यन् उक्तायाःवैराजधारणाया एव तावत् माहात्म्यमाह मुनिः **एवमिति**। एवं या धारणा तया तुष्टाद्धरेः पुरा प्रलयसमये नष्टां पूर्वकल्पे[11] चतुर्मुखेन सह विनष्टां स्मृतिं सर्गविषयकं ज्ञानं प्रत्यवरुध्य लब्ध्वा व्यवसायबुद्धिः स्मृतिविषयव्यवसायरूपज्ञानः अत एव अमोघदृष्टिः अमोघा यथाऽवस्थिता दृष्टिः तत्तद्वस्तुविषयकज्ञानं यस्य स तथोक्तः। आत्मयोनिः चतुर्मुखः अप्ययात् प्रलयात् प्राक् यथा तथा ससर्ज। पूर्वकल्पपदार्थसजातीयानेव पदार्थान् ससर्ज इत्यर्थः। अत्र यद्यपि पूर्वकल्पे विनष्टां स्मृतिं प्रत्यवरुध्य[12] इत्यनेन पूर्वकल्पे यः चतुर्मुखः स एव अस्मिन् कल्पेऽपि[13] प्रतीयते, तथाऽपि प्रतिकल्पं चतुर्मुखानां भेद एव, न्याय्यः तत्तत्कल्प[14] चतुर्मुखस्य "ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे", "ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे" (मना.उ.10-6) इति मुक्त्यवगमेन पुनरावृत्त्यसम्भवात् भगवत्पूर्णकृपापात्रस्य पुनः संसारायोगाच्च। तथा हि वक्ष्यति भगवान् -"ऋषिमाद्यं न बध्नाति पापीयांस्त्वां रजोगुणः नाऽऽत्मावसीदत्यस्मिंस्ते। वर्षीयान्मदनुग्रहः" (भाग.3-9-35) इति। अतः प्रतिकल्पं विभिन्ना एव चतुर्मुखाः। अत एव यद्यपि पूर्वानुभूतवस्तुविषयकज्ञानपरः स्मृतिशब्दः, तथाऽपीह सर्गविषयकज्ञानमात्रपरः, स्मृतिशब्दप्रयोगस्तु ज्ञातृज्ञेयज्ञानानाम् अत्यन्त साजात्याभिप्रायकृतः, पूर्वदृष्टात्यन्तसजातीये गवान्तरे स एवायं गौरिति प्रत्यभिज्ञावत्। ननु वैराजधारणया[15] विश्वसृष्टिसामर्थ्ये[16] विश्वसृष्टौ च सत्यां सृष्टानां पातालादीनां वैराजपादतलादिरूपेण धारणा इति इतरेतराश्रयवदाभाति, न च स्रक्ष्यमाणपदार्थविषयकज्ञानसद्भावेन पातालादीनामवयवत्वकल्पनं युक्तम्। स्मृतिं प्रत्यवरुध्येत्यनेन ज्ञानस्यापि धारणातो लभ्यत्वावगमात्। सत्यं, भगवन्नाभिकमलाच्चतुर्मुखे उत्पन्ने

---

1. H.V. तº 2. H.V. तº 3. B.H.V. Omit नामसु 4. A.B. Omit नाममात्रसारेषु 5. H.V. Omit अर्थेन 6. H.V. Omit सः 7. H.V. Omit तदाऽपि 8. B. adds प्र 9. A.B. Omit दिक्स....मेव। 10. A.B. Omit रूपं 11. W. ºल्प 12. A.B. परित्यज्य 13. W. पतिः 14. W. adds ºस्य º 15. W.º णाº 16. W.º र्थ्ये

तदीय[1]तपश्चर्यया भगवति प्रसन्ने " भूयस्त्वं तप आतिष्ठ विद्याञ्चैव मदाश्रयाम्। ताभ्यामन्तर्हृदि ब्रह्मन् लोकान् द्रक्ष्यस्यपावृतान्। तत आत्मनि लोके च भक्तियुक्तः समाहितः। द्रष्टाऽसि मां ततं ब्रह्मन् मयि लोकांस्त्वमात्मनः" (भाग.3-9-30,31) इति वक्ष्यमाणरीत्या स्रक्ष्यमाणेषु सर्वेषु पदार्थेषु दृष्टेषु तेषां च पदार्थानां भगवदवयवत्वेन धारणया सृष्टिविषयज्ञानसृष्टि[2]सामर्थ्य[3]लाभस्याभिधानात्। दैनन्दिनकल्पाभिप्रायं वा। एवं प्रपञ्चशरीरकतदाश्रयभगवद्ध्यानात् ब्रह्मणः सृष्टिक्षमत्वलाभ उक्तः।।१।।

अथ मुमुक्षुभि[4]र्हृदि उपास्यं रूपं वक्ष्यन् " यावानर्थ उदपाने सर्वतः सम्प्लुतोदके" (भ.गी.2-46) इति न्यायेन वेदे[5] मुमुक्षोः साकल्येन अर्था[6]नुपादेयत्वमाह **शाब्दस्येति**। शाब्दस्य शब्दात्मकस्य ब्रह्मणो वेदस्यैष पन्था एषा दिक्। क इत्यत आह - यदिति अपार्थैरपगतपरमपुरुषार्थैः नामभिः स्वर्गादिविषयशब्दैः धीः बुद्धिः ध्यायति चिन्तां करोतीति यत्स्वर्गादिफले श्रुते तत्र धीः। प्रवणा स्यात् इत्यर्थः। नाम्ना सारवत्त्वं न स्वरूपत इति द्योतनार्थं नामपदप्रयोगः। तृतीया च अध्ययनेन वसति इत्यादिवत् हेत्वर्थे। नाममात्रसारभूतस्वर्गाद्यर्थकर्मणि बुद्धिप्रावण्यापादनमिति यदयं वेदमार्ग इत्यर्थः। स्वर्गादीनाम् अपार्थत्वमेवाऽऽह परिभ्रमन्निति। मायामये प्रपञ्चे वासनया अनादिकर्मवासनया शयानो वर्तमानः तत्र स्वर्गादिविषये परिभ्रमन् अर्थात् मोक्ष - तदुपायादीन् न विन्दते न लभते।।२।।

ननु मातापितृसहस्रेभ्योऽपि वत्सलतमो वेद आत्मोज्जीवने प्रवृत्तः कथं नाममात्रसारभूतस्वर्गाद्यर्थकर्म बोधयन् प्रतारयेत् इत्याशङ्कां परिहरन् मुमुक्षोः अपेक्षितांशस्योपादेयतामाह **अत** इति। अतः वेदोक्तस्य साकल्येनानुपादेयत्वात् कविः त्याज्योपादेय[8]विषय[9]विवेकवान् अनेनोक्ता शङ्का परिहृता[10]। वेदो हि तमःप्रचुराणां रजःप्रचुराणां सत्त्वप्रचुराणां च लोकानां वत्सलतयैव हितम् अवबोधयति। यद्येषां स्वगुणानुगुण्येन स्वर्गादिसाधनमेव हितं नावबोधयेत्[11] तदा एते रजस्तमःप्रचुरतया सात्त्विकफलमोक्षविमुखाः स्वपेक्षित[12]फलमजानन्तः कामप्रावण्यविवशा[13] अनुपाये उपायभ्रान्त्या प्रणष्टा भवेयुरिति गुणत्रयप्रचुराणां स्वर्गादि[14]फलानि तत्साधनानि वा[15] अवबोधयति। केवलसात्त्विकस्य तु मुमुक्षोः तानि परित्याज्यानि परिगृहीतानि वा तत्तत्[16]फलानि परित्यज्य सर्वाणि कर्माणि मोक्षैकफलतया अनुष्ठेयानीति विवेकसम्पन्नः अप्रमत्तः कदाचित् देहधारणाद्यर्थतया परिग्राह्येष्वप्यन्नपश्वादिषु अनासक्तः व्यवसायबुद्धिः स्वर्गादीनां क्षयिष्णुत्वसातिशयत्वनिश्चयात्मकज्ञानवान् नामसु नाममात्रसारभूतेषु भोगेषु[17] यावदर्थः स्यात्, यावत्प्रयोजनवान् स्यात्, न तु प्रयोजनाभासेषु रतः स्यादित्यर्थः। नानाविधेषु फलेषु तत्साधनभूतेषु बहुषु कर्मसु वेदबोधितेषु सत्स्वपि यावता देहधारणमुपासनानिर्वृत्तिश्च[18] भवति, तावत् परिग्रहवान् स्यादित्यर्थः। देहधारणार्थं क्षुद्रफलेष्वपि यतितव्यमित्यत आह - सिद्ध इति।

1. A.B. Omit तदीय 2. W. Omits सृष्टि 3. W. °र्थ्ययोर्ला° 4. W. °क्षोर्हृदये 5. W. °देषु 6. W. °र्थानामनु 7. W. रत्वं 8. W. adds विभाग° 9. W. °यक 10. A.B. °वृ° 11. W. °यति 12. W स्वा° 13. A.B. Omit वि 14. W. °दीनि 15. W. च 16. A.B. Omit तत् 17. W. °ग्ये 18. A.B. °ति

अर्थे अपेक्षितेऽर्थेऽन्यथा पूर्वकर्मानुरूपे सिद्धे सति तत्तत् क्षुद्रफलतदुपायादिष्वपि न यतेत कथम्भूतो न यतेत तत्र यत्ने क्रियमाणे परिश्रमं समीक्षमाणः भवितव्यमेव भवति परिश्रमस्तु फलति इत्यर्थः।।३।।

अन्यथासिद्धिं विवृणोति **सत्यामित्यादिना** द्वयेन। क्षितौ सत्यां कशिपोः शय्यायाः पर्यङ्कादेः प्रयासैः तदर्जनानुकूलप्रयत्नैः किम्? न किमपि। किन्तु परिश्रम एवेत्यर्थः। स्वतस्सिद्धे बाहौ सति उपबर्हणैः उपधानैः किम्? अञ्जलौ सति पुरुधाऽन्नपात्र्या नानाविधं भोजनपात्रेण किम्? दिग्वल्कलादौ सति दिक्षु उत्तरीयस्थानीयासु सतीषु वल्कलेषु अन्तरीयस्थानीयेषु सत्सु न तु वल्कलाभावे दिक्षु सतीषु इत्यर्थः स्वरसः, 'अपवित्रकरो नग्न' इति नग्नस्य कर्मानर्हत्वस्मरणात्, मुमुक्षोरप्यावश्यकानाम् अनुष्ठेयत्वात्। दुकूलैः क्षौमैः किम्?।।४।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

एवं वैराजाख्यस्थूलरूपस्य धारणाश्रयत्वमुक्त्वा अस्मिन्नध्याये तत्तद्धृदयकमलकर्णिकान्तर्वर्तिनो हरेरात्माख्यरूपस्य धारणाविषयत्वं तदुपासकानां फलं चोपदिशति। तत्र प्रथमतः धारणायां क्षिप्रप्रवृत्तये कुत्र कस्य दृष्टफलेयं धारणेति शङ्काशङ्कुमुन्मूलयन् "ब्रूहि यद्वा विपर्ययम्" (भाग.1-19-38) इति प्रश्नं परिहरति **एवमित्यादिना**। आत्मा परमात्मा योनिः कारणं यस्य स तथा। सः ब्रह्मा पुरा आदिसृष्टौ कालेन नष्टां तिरोहितां प्राक्कल्पविषयां स्मृतिं एवमुक्तधारणया प्रत्यवरुह्य अङ्कुरीकृत्य प्रतिलभ्य तुष्यन् अलम्बुद्धिं गच्छन् व्यवसाये जगत्सर्जनलक्षणोद्योगे बुद्धिः यस्य स तथा तत एव धारणया एवामोघदृष्टिः। अप्ययात् प्रलयात् पूर्वं यथा अवस्थितं तथा इदं जगत् ससर्ज इत्यन्वयः। ब्रह्मणो दृष्टफलत्वादियं विश्वसनीयेति विज्ञायते।।१।।

वाङ्मनोऽगोचरस्य कथं धारणावलम्बनत्वमात्राऽऽह **शब्दस्येति**। उक्तप्रकारेण श्रोतव्यादित्वेन विपश्चितां सम्मतत्वात् स्वतन्त्रत्वात् ब्रह्मादिसर्वजगत्स्रष्टृत्वात् सर्वान्तःस्थितत्वात् सर्वस्य तदधीनत्वात् सर्वगुणसम्पूर्णत्वाच्च, शब्दस्य ब्रह्मणो वेदादिसर्वशब्दराशेः एष हरिः पन्था विषयो मुख्यवाच्य इत्यन्वयः। इन्द्रादिनाम्नां पुरन्दरादिष्वेव रूढत्वात् हरेः तन्नामवाच्यत्वे रूढेः क्वापि अप्रयोजकत्वमत्राऽऽह यन्नामभिरिति। मायामये ईश्वरेच्छानिर्मितत्वात् तदधीने संसारे शयानः परिभ्रमन् किमपि अजानन् वर्तमानः अत एव वासनया नानाकर्मवासनया नानायोनिषु परिभ्रमन् यो जीवः तस्य धीः यत्पुरन्दरादिकं इन्द्रादिनामभिः ध्यायति तत्र पुरन्दरादौ अर्थात् इन्द्रादिनाम्नामनुपहत-परमैश्वर्यादिलक्षणान् न विन्दते अलम्बुद्धिः न प्राप्नोति। किञ्च तदुपास्त्या तेभ्यः पुरुषार्थांश्च न लभते।

1. W. °दां 2. A.B. °षये 3. W. °त्र्या

कुत इत्यत उक्तम् अपार्थैरिति तत्र ऐश्वर्याद्यर्थानामसम्भवात् अतो हरिरेव परमैश्वर्यादिगुणाकारत्वेनाभिधेय इति स एव स्मर्तव्य इति अन्यत्सर्वमस्मर्तव्यं प्राधान्येनेति भावः। अनुपसर्गेऽपि क्विप्प्रत्ययविधानात् ध्यायतीति धीः ज्ञानाश्रयः पुरुषो वा यदित्यस्याव्ययत्वेन अपार्थैरित्यनेन संयोज्य यदपार्थैः यस्मिन् पुरन्दरादौ अपार्थैरिन्द्रादिनामभिः पुरन्दरादिकं ध्यायति तत्र पुरन्दरादौ इति वा। "सर्वनामा यतो विष्णुः तदन्यार्थान्न तु स्मरेत्" इति स्मृतिप्रसिद्धिं हिशब्देनाऽऽह।।२।।

सर्वशब्दानां विष्ण्वैकविषयत्वे विदुषामभिवादनादि सर्वव्यवहारोच्छेदप्रसङ्ग इति तत्राऽऽह **अत** इति। एवं सर्वनामार्थतया हरिरेव ध्येयः तद्व्यवहार्यश्च यतोऽतः कविः सर्वज्ञः। अप्रमत्तो जागरणशीलो नाम्नां हरिविषयत्वमविस्मरन् इत्यर्थः। अत एव व्यवसायबुद्धिर्निश्चयबुद्धिर्नामसु हरीतरविषयेषु घटादिषु अभिवादनादिना यावदर्थः स्वप्रयोजनं यस्य स तथा स्यात्। नातोऽधिकप्रयोजन इत्यर्थः। अन्यथा घटादिलोकविषयव्यवहारमन्तरेणार्थे स्वप्रयोजने सिद्धे स्वयमेव सम्पन्नो न तत्र यततेत्यन्वयः। कुतोऽऽत्राह तत्तदिति। तत्तत्पदार्थेषु तत्तत्परिश्रमम् अर्थपूर्त्यभावेन मनःक्लेशं समीक्षमाण इत्यन्वयः।।३।।

इदानीं स्वतःसिद्धिप्रकारं दर्शयति - **सत्यामिति**। देवनिर्मितायां क्षितौ सत्यां कशिपोः शय्यायाः सम्पादने प्रयासैः किम्? न किमपि प्रयोजनम्। शरीरयात्रानिर्वाहस्य द्रव्यान्तरेण सिद्धत्वादिति भावः। बाहौ स्वसिद्धे स्वतोऽनायासेन सम्पन्ने सति उपबर्हणैः शिरःपीठैः उच्छीर्षकैः किम्? कराञ्जलौ सति पुरुभिर्विस्तीर्णैः पर्णपात्रैः किम्? " बर्हं पर्णं दलं पत्रम् " इत्यभिधानम्। दिशामेव वस्त्राणां लाभे सति दुकूलैः निष्कापाद्यक्षौमादिवसनैः किम्?।।४।।

## श्रीराधाकृष्णप्रणीता सुधीसुधा

एवं धारणया वैराजविग्रहधारणया तुष्टात् हरेरिति शेषः। पुरा नष्टां स्मृतिं सृष्टिस्मृतिं प्रत्यवरुध्य प्राप्य व्यवसायबुद्धिः एवमेतत् स्रष्टव्यमिति निश्चयात्मकबुद्धिः अत एव अमोघदृष्टिः यथार्थज्ञानः आत्मयोनिः ब्रह्मा अप्ययात् प्रलयात् प्राक् इदं विश्वं यथा आसीत् तथा ससर्ज।

ननु आत्मयोनेः ब्रह्मणोऽपि कथं नष्टस्मृतित्वादिकम्? उच्यते- सर्वाऽपि सृष्टिः स्वप्नतुल्या। न हि स्वप्नजगति प्रथमपात्रभूतः स्वप्नानुभविता स्वातन्त्र्येण स्वप्नं कल्पयितुं प्रभवति। तस्मिन् स्वप्नोऽनुसन्धानप्रज्ञारूपेण आरोप्यते अथवा स्मृत्याकृत्या अवतरति। एवं विश्वसृष्टौ प्रथमपात्रभूतो ब्रह्माऽपि वैराजाख्यविष्णुस्मरणमाधायैव निश्चयबुद्धिर्यथार्थज्ञानस्सन् यथापूर्वं विश्वं सृजतीति ब्रह्मणः परब्रह्माधीनप्रवृत्तित्वकथने न काऽपि विप्रतिपत्तिः।

ब्रह्मा स्वस्मात् प्रागपि विष्णाववस्थितायाः कालातीतायाः शाश्वत्याश्च स्वकर्तव्य विज्ञानादिसकलसृष्ट्याः धारणया तत्सृष्टित्वेन अभिव्यक्तोऽभिव्याप्तश्चाभूदिति परमार्थः। ब्रह्मा नाम बृंहणशीलोऽथवा व्यापनशील इत्यर्थोऽनुसन्धेयः।।१।।

अपार्थैः अपगतपरमार्थैः नामभिः स्वर्गादिनामभिः धीः साधकस्य बुद्धिः ध्यायति तत्तत्फलाभिलाषं करोतीति यत् स एषः शाब्दस्य शब्दमयस्य ब्रह्मणः वेदस्य पन्थाः कर्मफलबोधनमार्गः। मायामये भगवदिच्छया कल्पिते पुत्रकलत्रादिमये प्रपञ्चे वासनया सुखेच्छया शयानः आत्मीयतया कृताभिमानः तत्र स्वर्गादौ परिभ्रमन्नपि अर्थान् शाश्वतसुखजनकान् पदार्थान् न विन्दते न प्राप्नोति। भौतिकाध्यात्मिकादि निखिलविश्वविज्ञानं वेदेऽन्तर्भवति। शब्दप्रपञ्चेनाभिधीयमानस्य तस्य वेदस्य सकलसृष्टिनिदानभूतपरब्रह्मैकप्रभवतया शाब्दब्रह्मत्वम्। तेन दर्शितेषु बहुषु मार्गेषु अन्यतमः कर्मफलबोधनमार्गः। स च मार्गः तत्तत्फलाभिसन्धिना परमार्थविरहितस्वर्गादिनानाभोग्यवस्तुजालस्य नामान्यनुध्यायता साधकेनानुस्त्रियते। अन्तर्यामीश्वरभावनानैरपेक्ष्येण पुत्रकलत्रादिमयस्थूलप्रपञ्चे ममकारवासनासहितः स साधकः स्वर्गादौ भोगलोके च सुखसम्पादनप्रवृत्तिनिमित्तकनिरन्तरपरिश्रमस्सन् आत्यन्तिकसुखेन दूरीक्रियते।।२।।

अतः कविः विवेकशाली नामसु नाममात्रेषु सारहीनेषु भोग्यवस्तुषु यावदर्थः यावता वस्तुना शरीरनिर्वाहो भवति तावत्यपि वस्तुनि अप्रमत्तः अवहितः व्यवसायबुद्धिः नेदं वस्तु सुखावहमिति निश्चयबुद्धिः स्यात्। तत्र शरीरनिर्वाहरूपेऽर्थे अन्यथा लघूपायेन सिद्धे सति तत्र प्रयत्ने परिश्रमं समीक्षमाणः कविः न यतेत यत्नं न कुर्वीत।

अन्नबुभुक्षुः यथा व्रीहिमवहत्य निस्तुषं कृत्वा तण्डुलमादत्ते, तथा बुद्धिमानपि सकलविद्यासारभूतं परमात्मानं भजते। अपि च बालिशः स्वभावमनुसृत्य जीवति, न तु तं स्वानुकूलतया परिवर्तयितुं प्रभवति। विज्ञस्तु विविधजीवितसन्निवेशान् वस्तुसाधनसम्पत्तिं च यथाऽवसरमुपयुज्य अनावश्यकं वस्तूपेक्षेतेति भावः।।३।।

क्षितौ भूम्यां सत्यां कशिपोः शय्यापर्यङ्कादेः प्रयासैः किं प्रयोजनम्? बाहौ स्वसिद्धे स्वतःसिद्धे उपबर्हणैः उपधानादिभिः किं प्रयोजनम्? अञ्जलौ सति पुरुधा बहुविधया अन्नपात्र्या किं प्रयोजनम्? दिग्वल्कलादौ सति दुकूलैः सूक्ष्मपट्टवस्त्रैः किं प्रयोजनम्?।।४।।

**चीराणि किं पथि न सन्ति दिशन्ति भिक्षां नोवाङ्घ्रिपाः[1] परभृतः[2] सरितोऽप्यशुष्यन्[3]।**
**रुद्धा गुहाः किमजितोऽवति[4] नोपसन्नान्[5] कस्माद् भजन्ति कवयो धनदुर्मदान्धान्।।५।।**

**एवं स्वचित्ते स्वत एव सिद्ध आत्मा प्रियोऽर्थो[6] भगवाननन्तः।**
**तं[7] निर्वृतो नियतार्थो भजेत संसारहेतूपरमश्च यत्र।।६।।**

---

. A.B.C.G.I.N. नैं॰ 2. AF.GF. फलं॰ 3. H.V. ॰तो व्यं॰ 4. M.Ma. ॰वधूतसुहृत्र कृष्णः? 5. H.V.W. ॰पं॰ 6. AF.GF. ॰यार्थो 7. AF.GF. सुं॰

* क[1]स्तां त्वनादृत्य परानुचिन्तामृते प[2]शूनसतीं नाम यु[3]ञ्ज्यात्।
पश्यन् जनं पतितं वैतरण्यां स्वकर्मजान् परि[4]तापान् जुषाणम्।।७।।

केचित् स्वदे[5]हान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम्।
चतुर्भुजं कञ्जरथाङ्गशङ्खगदाधरं धारणया स्मरन्ति।।८।।

**श्रीध०** ननु [6]दिक्सद्भावो नाम नग्नत्वमेव वल्कलम्, अन्नं तोयं वासः स्थानं [7]तु याच्ञा प्रयत्नं विना कथं प्राप्येत तत्राऽऽह- **चीराणीति**। चीराणि वस्त्रखण्डानि। परान् बिभ्रति पुष्णन्ति फलादिभिर्ये [8]ते भिक्षां फलादिरूपां न दिशन्ति किम्? किं वा सरितः स्यान्दमाना नद्यः किमशुष्यन्? [9]गुहाः गिरिदर्यः [10]रुध्याः किम्? राजादिभिः निरुद्धाः किम्? ननु [11]कदाचित् [12]एषामलाभे किं कार्यं[13] [14]तत्र आह - अजितो हरिः [15]उपसन्नान् शरणागतान् किं नावति न रक्षति? किंशब्दस्य पूर्वत्रापि सम्बन्धः। [16]उक्तं च - "भोजनाच्छादने चिन्तां वृथा कुर्वन्ति वैष्णवाः। योऽसौ विश्वम्भरो देवः कथं भक्तानुपेक्षते" इति। धनेन यो दुर्मदः तेन अन्धान् [17]नष्टविवेकवान्।।५।।

[18]तदा तेन किं कर्तव्यं हरिस्तु सेव्य इत्याह - **एवमिति**। एवं विरक्तस्सन् तं भजेत। भजनीयत्वे हेतवः। स्वचित्ते स्वत एव सिद्धः। यत[19]आत्मा अत एव[20] प्रियः। [21]प्रियस्य च सेवा सुखरूपैव। [22]किञ्च अर्थः[23]सत्यो, न त्वनात्मवन्मिथ्या। भगवान् भजनीयगुणश्च[24] अनन्तश्च[25] नित्यः य एवम्भूतः तं भजेत। [26]नियतार्थः निश्चितस्वरूपः तदनुभवानन्देन निर्वृतस्सन् इति स्वतः सुखात्मकत्वं दर्शितम्। किञ्च, यत्र यस्मिन् भजने सति संसारहेतोः अविद्याया उपरमो नाशो भवति।।६।।

एतदेवान्यचिन्तानिन्दया द्रढयति - **क** इति। तां तथाभूतां परस्य हरेः अनुचिन्तां धारणामनादृत्य पशून् कर्मजडान् विना। "यथा पशुरे[27]वायं स देवानाम्"(मुण्ड.उ.1-4-10) इति श्रुतेः। असतीं विषयचिन्तां को नाम कुर्यात्? [28]यया चिन्तया वैतरण्यां पतितम्। तत्र च स्वकर्मजान् आध्यात्मिकादिक्लेशान् सेवमानं [29]जनं पश्यन्। वैतरणी य[30]मद्वारस्था नदी। तत्तुल्यत्वात् संसृतिः वैतरणी।।७।।

---

* (This V. beginning with स सर्व..... and occuring here in M&Ma is to be found along with commentary at the end of 1st Chapter of this Skandha) 1. M.Ma.W. °स्तं 2. M.Ma. °शुत्वम° 3. B.I.W. कुर्यात् 4. W. पाकान् 5. AF.GF. °हेऽन्तर्हृदो व° 6. H.V.Omit दिक्सद्भावो नाम नग्नत्वमेव 7. B.H.V. च 8.B.H.V. Omit ते....किमुशुष्यन्? 9. H.V. add सुखशयनोपवेशनाद्युपयुक्ताः 10. A.B. Omit रुध्दयाः निरुद्धाः किम्? 11. H.V. Omit कदाचित् 12. H.V. तै° 13. add स्यात् 14. H.V. अतः 15. H.V. प° 16. A.H.V. Omit उक्तं...इति 17. B.H.V. Omit नष्टविवेकान् 18. H.V. Omit तदा...कर्तव्यं 19. H.V. add एव 20. B. adds यः 21. B. तस्य 22. B.H.V. Omit किञ्च 23. H.V. add च 24. B. Omits च 25. Omits च 26. H.V. Omit निय...स्वरूपः 27. B. °व सः; H.V. °वं सर्व दे° 28. B. तथा; H.V. तच्चिन्त 29. H.V. Omit जनं 30. A. °मस्य द्वा°

तामेव धारणां सविशेषमाह[1] - **केचिदिति** षड्भिः। केचित्[2] विरलाः स्वदेहस्यान्तर्मध्ये यद्धृदयं तत्र योऽवकाशः तस्मिन् वसन्तम्। प्रादेशः तर्जन्यङ्गुष्ठयोर्विस्तारः स एव मात्रा प्रमाणं यस्य इति[3] हृदयपरिमाणं तत्रोपचर्यते। कञ्जं पद्मम्। रथाङ्गं चक्रम्।।८।।

**वीर०** ननु वल्कलमन्नं तोयं वासस्थानञ्च याच्ञादिप्रयत्नं विना कथं प्राप्येत? तत्राऽऽह - **चीराणीति**। जीर्णवस्त्रखण्डानि पथि मार्गे न सन्ति किम्? परभृतः परान् बिभ्रति पुष्णन्ति फलादिभिः ये ते[4] अङ्घ्रिपाः भिक्षां न दिशन्ति वा किम्? न प्रयच्छन्ति किम्? इत्यर्थः। सरितो नद्यः अशुष्यन् किम्? गुहाः पर्वतबिलानि रुद्धाः निरुद्धाः[5] किम्? ननु कदाचिदेषामलाभे किं कार्यं स्यात्? तत्राह - अजित इति। उपसन्नान्[6] शरणागतान् अजितः सर्वेश्वरः नावति? न रक्षति किम्? कवयो धनेन यो दुर्मदः तेन अन्धान् कार्याकार्यानभिज्ञान्[7] कस्माद्धेतोः भजन्ति? कविभिरन्नाद्यर्थमपि धनदुर्मदान्धा[8] न भजनीया इत्यर्थः।।५।।

इतरे दुस्सेव्याः, हरिस्तु सुसेव्यः उक्तरीत्या अवस्थितस्य इतरवैतृष्ण्यात् भगवत एव प्रीतिविषयत्वादित्याऽऽह - **एवमिति**। स्वचित्ते स्वकीयचित्ते एवं सिद्धे - उक्तानुसाधनपरे सति विषयान्तरविरक्तचित्तविषयभृतो यः आत्मत्वादिगुणकः यत्र च यस्मिन् सेव्यमाने संसारहेतूपरमश्च बन्धहेतुभूताविद्यानिवृत्तिश्च भवति, तं भजेतेत्यन्वयः। भजनीयत्वौपयिकगुणानाह[9] - आत्मेत्यादि। आत्मा अन्तःप्रविश्य धारकः, धार्यस्य शरीरस्य जीवात्मनः धारकपरमात्मानुवर्तित्वं युक्तम् इत्यभिप्रायः। यत आत्मा अत एव प्रियः निरतिशयप्रीतिविषयः[10]। आत्मसम्बन्धादेव हि देहापत्यकलत्रादिकं सर्वं प्रियवदाभाति। आत्मनोऽप्यात्मा हरिः प्रिय इति किमु वक्तव्यम्। प्रिय इति निरतिशयसुखस्वरूपत्वस्यापि उपलक्षणम्। अत एव अर्थः निरतिशयपुरुषार्थस्वरूपः निरतिशयसुखमेव हि परमपुरुषार्थः। पुरुषार्थस्वरूपस्यापि दुर्भगत्वेऽभजनीयत्वं स्यात्।

अत आह भगवान् हेयप्रतिभटसमग्रज्ञानशक्तिबलैश्वर्यवीर्यतेजस्सम्पन्नः स्वरूपस्य ज्ञानादिगुणानाञ्च परिच्छिन्नत्वशङ्कां व्यावर्तयति अनन्त इति। तमुक्तविधं स्वप्राप्ति विरोधिभूताविद्यानिवर्तकं आत्मानं निर्वृतः इतरविषयवैतृष्ण्यात् निरतिशयसुखरूपपरमात्मोपासनाच्च सुखितः। नियतार्थः नियमितप्रयोजनः[11] फलान्तरनिवृत्त इत्यर्थः। भजेत उपासीतेत्यर्थः।।६।।

एतदेवार्थान्तरचिन्तानिन्दया द्रढयति - **क** इति। तं ईश्वरं अनादृत्य। तामिति पाठे ईश्वरचिन्तामनादृत्येत्यर्थः। को लोकः ऋते पशून् विना परानुचिन्ताम् अर्थान्तरचिन्ताम् असतीम् अशोभनाम्

---

1. A. °षणामा° 2. A.H.V. Omit केचित् विरलाः 3. H.V. Omit इति 4. W. adds परभृतः 5. A. Omits निरुद्धाः 6. W. °पं° 7. A.B. Omit कार्या 8. A.B. Omit धन° 9. A.B. °त्वस्य औप° 10. A.B. °यकः। 11. A.B. Omit °मि°

**कुर्यान्नाम? पशुरेव तथा कुर्यात्, तथा कुर्वन् पशुरित्यर्थः। परानुचिन्तया वैतरण्यां यमलोकसिन्धौ तत्सदृशे संसारे इत्यर्थः। पतितं तत्र च स्वकर्मजान् आध्यात्मिकादिक्लेशान् जुषाणं सेवमानं पश्यन् कः कुर्यात् इति पूर्वेण सम्बन्धः।।७।।**

एवं फलान्तर-तदुपायनिवृत्तस्य भगवद्ध्यानप्रकारमाह - **केचिदित्यादिना**। भगवदुपासना-बाहुल्येन, उपासकबाहुल्यात् केचिदित्युक्तिः, न तु स्वासम्मतत्वेन। स्वदेहस्य अन्तः मध्ये यो हृदयावकाशः तत्र वसन्तं प्रादेशमात्रं प्रादेशसम्बन्धिनी मात्रा वपुः परिमाणं यस्य तं हृदयान्तः-प्रदेशसम्बन्धिमात्रया परिच्छिन्नम्। "यस्त्वेतमेनं[1] प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" (छान्दो.उ.5-18-1) इति त्रैलोक्यशरीरकेऽप्युपासकानुग्रहाय[2] उपासनीयाः[3] प्रदेशसम्बन्धिमात्रया परिच्छिन्नत्वश्रवणात्। हृदयकमलस्याङ्गुष्ठमात्रत्वाच्च। एतेन तर्जन्यङ्गुष्ठविस्तारः प्रादेशः तत्परिमितं[4]-मित्ययुक्तमिति बोद्धव्यम्। कञ्जं कमलम्। रथाङ्गं चक्रम्। दक्षिणबाहुभ्यां कञ्जरथाङ्गे[5] वामाभ्यां शङ्खगदे बिभ्रतमित्यर्थः। एवंविधं पुरुषं केचिद्योगीश्वराः धारणया स्मरन्ति धारणापूर्वकमुपासत इत्यर्थः।।८।।

**विज०** ननु भवादृशानां योगिनां क्षित्यादिना शरीरयात्रासिद्धावप्यपरिपक्वयोगिनां पुंसां कथमुपभोगः सम्पत्स्यत[6] इत्यत्राऽऽह - **चीराणीति**। " पटचीराणि गृहिभिर्देयानि पथि तोरणे। दरिद्राणाञ्च भिक्षूणामाच्छादनकराणि च" इति स्मृतेः। पथि तोरणे गृहस्थैः निहितानि चीराणि जीर्णवस्त्राणि मूषकादिप्रभिन्नानि वा। न सन्ति किं भोजनार्थमिति चेत् परान् फलपाकादिना बिभ्रतीति परभृतः अङ्घ्रिपाः वृक्षाः फलादिना नो दिशन्ति वा? दिशन्त्येव। उदकार्थमिति चेत् - सरितः स्यन्दमानाः नद्यः अशुष्यन्नपि किम्? नाशुष्यन्नित्यर्थः। शयनार्थमिति चेत् गुहाः रुद्धाः पिहिताः किम्? केनचिदिति शेषः। गुहासु सिंहादिभयेन कथं वासः सम्पद्यत इति तत्राऽऽह-किमिति। कृष्णोऽवधूतानां धूलिधूसराङ्गानां योगिनां[7] सुहृन्न किम्? सुहृदेव। अतो वस्त्राद्याश्रया कवयो धनादिदुर्मदेन अन्धान् विवेकचक्षु[8]रहितान् राजादीन् कस्माद्भजन्ति न भजन्त्येव अतो मुमुक्षुणा यदृच्छया लब्धाशनादिना भाव्यमिति भावः।।५।।

इदानीमुक्तानुष्ठानपरिपाकप्रकारमाह **एवमिति**। एवमुक्तप्रकारेण यदृच्छया लब्धाशनादिना वृत्तिं **दृष्ट्वा** प्रसन्नस्य स्वतः स्वतन्त्रस्य हरेः प्रसादात् स्वचित्ते स्वाधीनतया वर्तमाने सति भगवान् ऐश्वर्यादिगुणसमुद्रोऽनन्तः परिच्छेदशून्यः आत्मा परमात्मा देहपुत्रादिभ्यः अत्यन्तं प्रियोऽर्थ इति कृत्वा निर्वृतः समुद्भूतरोमाञ्चो नियतार्थः * "एतमितः प्रेत्याभिसम्भावितास्मि" (छन्दो.उ.3-14-4) इति

---

1. W. °वं° 2. W. °ना° 3. W. °नाप्र° 4. W. °त इत्य° 5. W. Omits कञ्जरथाङ्गे 6. Ma. °द्य° 7. A.B. Omit योगिनां 8. A.B. °क्षुं°
*A.B.M.Ma. add in foot note इतश्चरमदेहात् प्रेत्य मृत्वा एतं हरिं अभि आभिमुख्येन सम्भाविता स्मि सम्यक् यथायोग्यं प्राप्तो भविष्यामीति नियतार्थ इति

निश्चितार्थः पुरुषस्तं भगवन्तं भजेत। कदाचिदपि तद्भजनं न मुञ्चेत्। ततः किं फलमत्राऽऽह - संसारेति। यत्र यस्मिन् सेव्यमाने सेवकस्य संसारहेतूनामविद्यादीनामुपरमः। अविद्यादीनां सद्भावो सो अस्तीति शक्यशङ्का त एव न सन्ति यत इति शङ्कमानोऽसुरप्रकृतिरिति भावः। "तदेतत्प्रेत्य" (बृह.उ.1-4-8) इत्यादि श्रुतिसिद्धं हरेः प्रियार्थत्वञ्च। न केवलं संसारहेतूपरमः फलं, किन्तु निर्दुःखानन्दानुभवलक्षणमोक्षप्राप्तिश्चेति चशब्दः।।६।।

भगवदुपासनामकुर्वाणस्य पशोरपि वैलक्षण्यं नास्तीत्याह - **कस्तमिति**। नरके विगततरणत्वात् वैतरणी नाम नदी या तस्यां हरेः अनुपासनाख्यदोषात् पतितं स्वकर्मजान् स्वकृतकर्मसमुद्भूतान् परितापान् सर्वतोदिशमायातान् दुःखविशेषान् जुषाणं भुञ्जानं जनं गुरुशास्त्रोपदेशदृष्ट्या पश्यन् तुशब्दसूचिततादृशदुःखनिवर्तकालम्बुद्धिगोचरसुखप्रदं हरिं च पश्यन् को विवेकी तं भगवन्तमनादृत्य असतीम् अशुभां परानुचिन्तामितरविषयाम् उपास्तिलक्षणां स्मृतिं युञ्ज्यात् पशुत्वं विवेकबुद्धिराहित्यमृते। यदि युञ्ज्यात् तर्हि स पशुरेव, न विवेकीत्यन्वयः। " चतुर्वेद्यपि यो विप्रो वासुदेवं न विन्दति। वेदभारभराक्रान्तः स वै ब्राह्मणगर्दभः" इति।।७।।

योग्यतातारतम्येन अधिकारिणां बहुत्वात् स्थूलरूपोपासनायोग्यानां तदुपास्तिमभिधाय अधुना स्वदेहहृदयकमलकर्णिकानिकेतनात्मोपासनायोग्यानां तदुपासनां विधत्ते - **केचिदिति**। केचिदात्मोपासनायोग्याः स्वदेहान्तर्हृदयावकाशे वसन्तं प्रादेशमात्रं प्रदेशपरिमाणम्। कञ्जं पद्मं रथाङ्गं सुदर्शनं शङ्खं पाञ्चजन्यं, गदां कौमोदकीं धारयतीति कञ्जरथाङ्गगदाधरः तं धारणया तैलधारवदखण्डितमनोवृत्त्या स्मरन्तीत्यन्वयः।।८।।

**रा०कृ०** चीराणि जीर्णवस्त्रशकलानि पथि मार्गे न सन्ति किम्? परभृतः फलादिभिः परान् पोषयन्तः अङ्घ्रिपाः पादपाः वृक्षा इत्यर्थः भिक्षां नैव दिशन्ति किमिति शेषः। सरितो नद्यः अपि अशुष्यन् किम्? शुष्काः अभवन् किम्? गुहाः रुद्धाः किं निरुद्धाः किम्? अजितः केनाप्यजितः अतिसमर्थः स्वतन्त्रो भगवान् उपसन्नान् शरणागतान् नावति किम्? न रक्षति किम्? एवं स्थिते कवयो विवेकिनः धनदुर्मदान्धान् धनदुर्मदेन कार्याकार्यानभिज्ञान् कस्मात् कारणात् भजन्ति?

यद्यपि पर्यङ्कोपधानदुकूलादिसुखसाधनवस्तुविस्तरस्य अप्रयत्नलब्धस्यानुभवे न कोऽपि दोषः। तथाऽपि तदनुभवाभ्यासपराधीने जने तद्वस्तुविस्तराभावप्रयुक्तः क्लेशाख्यः सङ्गदोषः सम्भाव्यते, किञ्च तदलब्धसुखसाधनवस्तुप्राप्तिप्रयत्ने क्रियमाणे क्लेशः तदप्राप्तौ दुःखं, तद्वत्स्वसूया स्वस्मिन्नसामर्थ्यदैन्यारोपणादयो दोषाः मोक्षधर्मप्रमादहेतुभूताश्च सङ्क्रामन्ति।

निस्सङ्गास्तु यदृच्छालब्धानि सुखान्यनुभवन्तोऽपि न तेष्वनुषक्ताः भवन्ति। किन्तु ये केचन सत्यामप्ययत्नलब्धपर्यङ्कादिसुखसाधनसम्पत्तौ दुराग्रहपरवशाः बुद्धिपूर्वकं भूम्यां शयानाः तपस्विताभिमानं कुर्वन्ति तेऽपि असङ्गसङ्गिन एव। तस्मात् सुखलाभालाभयोरपि समचित्तत्वमेव साधनीयम्।

अथात्र धनदुर्मदान्धभजननिरासः केवलजीवयात्रानिर्वहणैकप्रयत्नक्लेशनिरासार्थकः। तेन धनतामपि परमभागवतोत्तमानां अम्बरीषप्रभृतीनां प्रभुवर्याणामाश्रयो भगवत्प्राप्तिसाधनभूतो नैव दोषावहः इति सिध्यति। किञ्च यस्य कस्यापि वस्तुनः प्राप्त्यै कालव्ययमनस्समाधिभङ्गहेतुभूतः प्रयत्नो न कर्तव्य इति च पर्यवस्यति।।५।।

एवं स्वचित्ते स्वत एव सिद्धः अन्तर्यामितया स्थितः आत्मा सर्वात्मभूतः अत एव प्रियः अर्थः परमपुरुषार्थरूपः अनन्तः नाशरहितः भगवान्, वर्तत इति शेषः। यत्र यद्भजने कृते सति संसारहेतूपरमः संसारहेतुभूतायाः अविद्यायाः उपरमः भवति तं भगवन्तं निर्वृतः परमानन्दभरितः नियतार्थस्सन् निश्चितपरमपुरुषार्थस्सन् भजेत सेवेत। सर्वान्तर्यामिणमीश्वरं विस्मृत्य केवलजीवस्मरणमविद्या। तादृश्यविद्या सर्वान्तर्यामि स्मरण- रूपिण्या विद्यया निवर्तते।।६।।

स्वकर्मजान् स्वकीयपापकर्मजातान् परितापान् नरकसम्बन्धिनः परितापान् जुषाणं भुञ्जानं तथा वैतरण्यां यातनानद्यां पतितं जनं पश्यन् पशून् पशुप्रायान् ज्ञानशून्यानित्यर्थः तान् ऋते विना को नाम को वा पुरुषः तां तु परानुचिन्तां परस्य भगवतोऽनुचिन्तां अनादृत्य असतीं शब्दादिविषयसङ्गेन दुष्टां चिन्तां युञ्ज्यात् कुर्यात्? न कोऽपीति भावः।

अन्तर्यमीश्वरस्मरणविरहात् केवलजीवसङ्गप्रयुक्तकामक्रोधलोभाद्याविलबुद्धिना कृतो दुष्कृतसमुदायो नरकः तद्दुष्कृताचरणजन्यचित्तक्षोभनैराश्यसंशयदुःखादियातना च वैतरणीवह्निज्वालामयी। तस्मात् साधकः परिसरवर्तिव्यक्तिषु विनासङ्गमन्तर्यामिणमीश्वरमनुसन्दध्यात्। तेन नरकयातनानिवृत्तिरिह परत्र च ।।७।।

केचित् विवेकिनः स्वदेहान्तः स्वदेहस्य मध्ये हृदयावकाशे वसन्तमन्तर्यामितया कृतावासं प्रादेशमात्रं प्रादेशप्रमाणं चतुर्भुजं चत्वारो धर्मादिपुरुषार्थप्रदाः भुजाः यस्य तं कञ्जरथाङ्गशङ्खगदाधरं पद्मचक्रशङ्खगदाधरं पुरुषं पुरुषाकारं भगवन्तं धारणया स्मरन्ति।।८।।

**प्रसन्नवक्त्रं नलिनायतेक्षणं कदम्बकिञ्जल्कपिशङ्गवाससम्।**
**लसन्महारत्न[1]हिरण्मयाङ्गदं स्फुरन्महारत्नकिरीटकुण्डलम्।।९।।**

---

1. M.Ma 'हार'

**उन्निद्रहृत्पङ्कजकर्णिकालये योगे[1]श्व[2]रा[3]स्थापितपादपल्लवम्।**
**श्रीलक्ष्म[4]णं कौस्तुभरत्नकन्धरमम्लानलक्ष्म्या वनमालया[5]ऽऽचितम्।।१०।।**

**विभूषितं मेखलयाऽङ्गुलीयकैर्महाधनैर्नूपुरकङ्कणादिभिः।**
**स्निग्धामलाकु[6]ञ्चितनीलकुन्तलैर्विरोचमानाननहासपेशलम्।।११।।**

**अदीनलीलाहसितेक्षणोल्लसद् भ्रूभङ्गसंसूचितभूर्यनुग्रहम्।**
**ईक्षेत चिन्तामयमे[7]नमीश्वरं यावन्मनो धारणयाऽवतिष्ठते।।१२।।**

**श्रीध० प्रसन्नेति**। नलिनं पद्मं तद्वत्प्रसन्ने आयते दीर्घे ईक्षणे यस्य। कदम्बकुसुमस्य किञ्जल्कैः[8] केसरैः[9] तद्वत्पिशङ्गे पीते[10] वाससी यस्य। लसन्ति महारत्नानि येषु तानि सुवर्णमयान्यङ्गदानि यस्य। स्फुरन्ति च तानि महारत्नानि च[11] तन्मयानि किरीटकुण्डलानि यस्य।।९।।

**उन्निद्रेति**। उन्निद्रं विकसितं यत् हृत्पङ्कजं तस्य कर्णिकैवाऽऽलयः स्थानं तस्मिन्। योगेश्वरैः आ[12]स्थापितौ पादपल्लवौ यस्य। श्रीः लक्ष्मीः[13] एव लक्ष्म चिह्नं तद्युक्तम्। पामादिविहितो मत्वर्थीयो नप्रत्ययः। कौस्तुभरत्नं कन्धरायां यस्य। अम्लाना लक्ष्मीः शोभा यस्याः तया वनमालयाऽऽचितं व्याप्तम्।।१०।।

**विभूषितमिति**। स्निग्धत्वादिविशिष्टैः कुन्तलैः विरोचमाने आनने यो हासः तेन पेशलं सुन्दरम्।।११।।

**अदीनेति**। अदीनम् उदारं यल्लीलाहसितं तेन यदीक्षणं तस्मिन्नुल्लसन्तो ये भ्रूभङ्गा भ्रूवि[14]क्षेपाः तैः संसूचितो भूर्यनुग्रहो येन चिन्तामयं चिन्त[15]या आविर्भवन्तम्। कियन्तं[16] कालम् इत्यत्राऽऽह-यावत्समं मनोऽवतिष्ठते स्थिरीभवति तावत्।।१२।।

**वीर०** ए[17]वमेव पुरुषं विशिनष्टि - **प्रसन्नवक्त्रमिति**। अनुग्रहोन्मुखं[18] मुखं नलिनं पद्मं तद्वत्प्रसन्ने आयते दीर्घे ईक्षणे यस्य। कदम्बकुसुमस्य किञ्जल्कः केसरः तद्वत् पिशङ्गे वाससी यस्य। लसन्ति महारत्नानि येषु तानि हा[19]राङ्गदानि यस्य। स्फुरन्ति महारत्नानि तन्मयानि किरीटकुण्डलानि यस्य तम् ।।९।।

---

1. AF. GF. °यं 2. W. °गी° 3. H.V. °र° 4. I.M.Ma. °क्ष° 5. M.Ma. °याऽञ्चि° 6. H.M.Ma.V.W. °लैः 7. H.V. °व°; AF.GF. °त° 8. A. °का: 9. A. °रा: 10. H.V. Omit पीते 11. H.V. Omit च 12. V. Omits आ° 13 A.B. Omit लक्ष्मीः 14. H.V. Omit °वि° 15. A.B. °न्त° 16. B.H.V. Omit कियन्तं.....तावत्। 17. W. °त° 18. W. °ख° 19. W. हिरण्मया°

उन्निद्रं विकसितं यत् हृत्पङ्कजं हृदयकमलं तस्य। कर्णिकैव आलयः स्थानं तस्मिन्। योगीश्वरैः[1] आस्थापितौ ध्यानविषयीकृतौ पादपल्लवौ यस्य। श्रीः लक्ष्मीरेव लक्ष्म चिह्नं अस्यास्तीति श्रीलक्ष्मणः। पामादिविहितमत्वर्थीयो नप्रत्ययः, तस्य आकृतिगणत्वात्। कौस्तुभरत्नं कन्धरायां यस्य। अत्र कन्धराशब्दः तदासन्नवक्षःपरः। अम्लाना लक्ष्मीः शोभा यस्याः तया वनमालया आचितं व्याप्तम्।।१०।।

मेखलया कटिसूत्रेण महाधनैः अनर्घैः अङ्गुलीयकैः नूपुरकङ्कणादिभिश्च विभूषितं विशेषेणालङ्कृतं स्निग्धत्वादिविशिष्टैः कुन्तलैः विरोचमाने[3] आनने[4] यो हासः तेन पेशलं सुन्दरं तत्र[5] स्निग्धाः सस्नेहा आकुञ्चिता वक्राः।।११।।

अदीनम् उदारं यल्लीलाहसितं तेन युक्तं यत्[6] ईक्षणं तेनोल्लसन्तो ये[7] भ्रूभङ्गाः भ्रूविक्षेपाः तैः संसूचितो भूर्यनुग्रहो येन तं चिन्तामयं चिन्ताविषयम्। चिन्ताप्रचुरम् ईक्षेतेति क्रियाविशेषणं वा। एवंविधमीश्वरं यावद्धारणया मनोऽवतिष्ठते तावत् ईक्षेत उपासीत इत्यर्थः।।१२

**विज०** श्लोकचतुष्टयेन तमेव विशिनष्टि - **प्रसन्नवक्त्रमित्यादिना**। नलिनवत् रक्तपद्मदलवत् आयते दीर्घे ईक्षणे यस्य स तथा तम्। कदम्बः कृष्णप्रियः तरुः तस्य पुष्पस्य किञ्जल्कमङ्कुरविशेषः तद्वात्पिशङ्गं पीतं वासो यस्य स तथा तम्। लसन्महाहारश्च हिरण्मयाङ्गदश्च लसन्महाहारहिरण्मयाङ्गदः तम्। स्फुरन्ति शोभमानानि महान्ति च रत्नानि तैर्युक्तं किरीटं कुण्डले च यस्य स तथा तम्।।९।।

उन्निद्रस्य विकसितस्य हृत्पङ्कजस्य कर्णिकाख्याऽऽलये योगेश्वरैः सनकादिभिरास्थापितौ पादपल्लवौ यस्य स तथा तम्। श्रीरेव लक्षणं चिह्नं यस्य वक्षसि स तथा तम्। श्रीरेव लक्षणं चिह्नं यस्य वक्षसि स[8] तथा तम्। कुस्तुभात् समुद्रात् जातं कौस्तुभं तेन रत्नेन युक्ता कन्धरा यस्य स तथा तम्। अम्लानानां नवपल्लवदलानां लक्ष्मीः यस्याः सा तथा तया।।१०।।

मेखलया काञ्च्या अङ्गुलीयकैः अङ्गुलीभूषणैः महान्ति धनानि गह्णन्तीति महाधनानि तैः स्निग्धाश्चामलाश्च ते, तैः कुञ्चिता वक्राश्च नीलाश्च ते कुन्तलाः तैः विरोचमाने आनने यो हासः तेन पेशलं सुन्दरम् ।।११।।

अदीनलीलयोद्भूताभ्यां हसितेक्षणाभ्याम् उल्लसन्त्योः भ्रुवोः भङ्गेन स्फुरणविशेषेण संसूचितो भूर्यनुग्रहो येन स तथा तम्। ईक्षेत चिन्तयेत[9]। चिन्तामयं चिन्ताप्रधानं, "यस्मात्सञ्चिन्तितो विष्णुः

---

1. A.B. हृदयप॰ 2. A.B. ॰रास्था॰ 3. W. ॰न 4. W. ॰न 5. W. Omits तत्र....वक्रा.। 6. A. Omits यत् 7. A. Omits ये 8. Ma Omits स. 9. A. Omits चिन्तयेत

चिन्तितं प्रददात्यज" (बृहत्संहितायाम्) इत्यादेः। कियन्तं कालं चिन्तनमत्राऽऽह - यावदिति। यावद्धारणया समग्राङ्गे मनोऽचलमवतिष्ठते तावदिति शेषः।।१२।।

**रा०कृ०** प्रसन्नवक्त्रं सानुग्रहवदनं नलिनायतेक्षणं कमलविशाललोचनं कदम्बकिञ्जल्कपिशङ्गवाससं कदम्बकुसुमकेसर इव पिशङ्गे पीते वाससी वस्त्रे यस्य तम्। लसन्महारत्नहिरण्मयाङ्गदं स्फुरन्महारत्नकिरीटकुण्डलम्।

उन्निद्रहृत्पङ्कजकर्णिकाऽऽलये विकसिहृदयकमलकर्णिकाऽऽलये योगेश्वरास्थापितपादपल्लवं योगेश्वरैः आस्थापितौ निजपादपल्लवौ यस्य तम्। श्रीलक्ष्मणं श्रीचिह्नं कौस्तुभरत्नकन्धरं कौस्तुभरत्नाञ्चितकण्ठं अम्लानलक्ष्म्या अम्लानशोभया वनमालया आचितम् सहितम्।

मेखलया महाधनैः अङ्गुलीयकैः नूपुरकङ्कणादिभिश्च विभूषितं स्निग्धामलाकुञ्चितनीलकुन्तलैः विरोचमानाननहासपेशलम्। अदीनलीलाहसितेक्षणोल्लसद्भ्रूभङ्गसंसूचितभूर्यनुग्रहं चिन्तामयं चिन्तया आविर्भूतम् एनं ईश्वरं यावत् यावत्पर्यन्तं मनः धारणयाऽवतिष्ठते निश्चलं भवति तावत् ईक्षेत पश्येत्।।९-११।।

> **एकैकशोऽङ्गानि धियानुभावयेत्[1] पादादि यावद्धसितं गदाभृतः।**
> **जितं जितं स्थानमपोह्य धारयेत् परं परं शुद्ध्यति[2] धीर्यथा यथा[3]।।१३।।**

> **यावन्न जायेत परावरे[4]ऽस्मिन् विश्वेश्वरे द्रष्टरि भक्तियोगः।**
> **तावत् स्थवीयः पुरुषस्य रूपं क्रियावसाने प्रयतः स्मरेत।।१४।।**

> **स्थिरं सुखं चासन[5]माश्रितो यतिर्यदा जिहासुरिममङ्गलोकम्।**
> **काले च देशे च मनो न सज्जयेत्[6] प्राणान्[7] नियच्छेन्मनसा जितासुः।।१५।।**

> **मनः[8] स्वबुद्ध्याऽमलया नियम्य क्षेत्रज्ञ एतां निनयेत् तमात्मनि।**
> **आत्मानमात्मन्यवरुध्य धीरो लब्धोपशान्तिर्विरमेतकृत्यात्।।१६।।**

**श्रीध०** अस्यैव[9] ध्यानमाह - **एकैकश** इति। पादादि[10] यावद्धसितं, हसितपर्यन्तम्। अनुभावयेत् [11]ध्यायेत्। यद्यज्जितमयत्नतः स्फुरितं पादगुल्फादिस्थानमवयवः तत्तदपोह्य त्यक्त्वा परं परं[12] जङ्घाजान्वादि धारयेत् [13]ध्यायेत्। शुद्ध्यति तस्मिन्निश्चला भवति।।१३।।

---

1. AF.GF. °यन् 2. AF.GF. चाऽऽत्मनि 3. H.V. त° 4. H.V. °प° 5. B.I.M.Ma.W. °स्थि° 6. H.V.M.Ma.W. °ज्जेत् 7.C.N. °णं 8. M.Ma. °नश्च बु° 9. B.H.V. त° 10. A.B. Omit पादादि...पर्यन्तम् 11. H.V. चिन्त° 12. H.V. Omit परं 13. V. चिन्त°

पूर्वोक्तवैराजधारणायाः एतद्धारणाङ्गत्वमाह - **यावदिति**। परे ब्रह्मादयो[1]ऽवरे [2]कनिष्ठाः यस्मात्। कुतः? विश्वेश्वरे [3]तन्नियन्तरि द्रष्टरि, न तु दृश्ये चैतन्यघनत्वात्। [4]भक्तियोगः प्रेमलक्षणः। क्रियावसाने [5]आवश्यककर्मानुष्ठानानन्तरम्, अनेन कर्मापि [6]भक्तियोगपर्यन्तमेवेत्युक्तम्। [7]प्रयतो नियमतत्परः।।१४।।

[8]एवं तावदासन्नमृत्योः पुंसः कृत्यम् उक्तम्। इदानीं तस्यैव स्वयं देहं त्यक्तुमिच्छतः, कृत्यमाह- **स्थिरमिति** सार्धैश्चतुर्भिः। अङ्ग! हे राजन्! एवम्भूतो यतिः यदा इमं लोकं देहं जिहासुः हातुमिच्छति, तदा देशे पुण्यक्षेत्रे काले च उत्तरायणादौ मनो न स[9]ज्जयेत् सङ्गं न प्रापयेत्। न देशकालौ योगिनः सिद्धहेतू किन्तु योग एव इति दृढनिश्चयो भूत्वा स्थिरं सुखकरं च आसनमास्थितः [10]सन् प्राणान् [11]इन्द्रियाणि नियच्छेत् [12]इत्यर्थः।।१५।।

**मन** इति। [13]तत्तत् गृहीतविषयं मनः बुद्ध्या निश्चयरूपया नियम्य तन्मात्रं कृत्वा [14]एतां [15]मनोनिग्रह-साधनीभूतां बुद्धिं क्षेत्रज्ञे बुद्ध्यादि द्रष्टरि निनयेत् प्रविलापयेत्। तं च क्षेत्रज्ञमात्मनि शुद्धे [16]तत्त्वे, तं च शुद्धमात्मानम् [17]आत्मैव अहमिति आत्मनि [18]शुद्धे ब्रह्मण्यवरुध्य एकीकृत्य लब्धोपशान्तिः प्राप्तनिर्वृत्ति-तिस्सन् कृत्यात् विरमेत्। ततः परं प्राप्याभावात्।।१६।।

**वीर०** युगपत् कृत्स्नशुभाश्रयगोचरध्याना[19][20]शक्तस्य तदुपायभूतम् उक्तरूपस्यैव ध्यानक्रमविशेषमाह- **एकैकश** इति। गदाभृतः परमात्मनः पादादि पादात्प्रभृति यावद्धसितं मन्दस्मितावधि। अङ्गानि एकैकशः प्रत्येकं धिया अनुभावयेत् चिन्तयेत्। जितं जितं भावनया स्फुरितं प्रतिष्ठितमिति यावत्, स्थानं पादगुल्फाद्यवयवमपोह्य त्यक्त्वा विशेषाकारेणेति भावः। सामान्याकारेण कृत्स्नशुभाश्रयगो-चरज्ञानस्यपेक्षितत्वात् परम्परं जङ्घाजान्वादिस्थानं धीः यथा शुद्ध्यति प्रसीदति, अनाकुलीभवति तथा धारयेत् ।।१३।।

कृत्स्नशुभाश्रयगोचरभक्तियोगोत्पत्तेः पूर्वमिदम् अवयवशो विभावनं यत्नेन कर्तव्यम् उत्पन्नायां तु भक्तौ हानायोगात्। अतः त[21]त्सर्वं यत्नेन ध्येयम् अवयवशः इत्याह - **यावदिति**। [22]परे ब्रह्मादयोऽवरे यस्मात् स परावरः तस्मिन् [23]विश्वेषामीश्वरे नियन्तरि [24]द्रष्टरि सर्वज्ञेऽस्मिन्नुक्तविग्रहविशि[25]ष्टे पुरुषे भक्तियोगः विशेषाकारेण कृत्स्नशुभाश्रयगोचरः प्रीतिपूर्वकोऽविच्छिन्नो ध्यानयोगः। यावन्न जायेत नोत्पद्येत तावत् क्रियावसाने आवश्यकानुष्ठानान्ते पुरुषस्य "प्रादेशमात्रं पुरुषं" (भाग:2-2-8) इत्युक्तस्य

1. H.V. °यस्तेऽपरे 2. A.H.V. Omit कनिष्ठाः 3. A.B. Omit तन्नियन्तरि 4. B. Omits भक्ति.....अनन्तरम् 5. H.V. अवश्यकर्मा° 6. H.V. add नियच्छेत् 7. B.H.V. Omit प्रयतो नियमतत्परः 8. V. एतावताऽऽस° 9. H.V. °ज्जेत् 10. A.B. Omit सन् 11. A.B. Omit इन्द्रियाणि 12. H.V. Omit इत्यर्थः 13. B. Omit तत्.....कृत्वा 14. V. Omits एतां 15. A.B. Omit मनो.....भूतां 16. A.B Omit तत्त्वे 17. B.H.V. Omit आत्मैव अहमिति 18. B.H.V. Omit शुद्धे 19. W. °स° 20. A.B. °क्त्या 21. °पू°, °त्स्वरूपमिति साधीयान् पाठः क्वचिल्लक्ष्यते 22. W. परावरे 23. W. विश्वनियन्तरि 24. W. Omits द्रष्टरि 25. W. °ष्ट°

पुरुषस्य स्थविष्ठं रूपं दिव्यात्मस्वरूपापेक्षया स्थविष्ठं विग्रहं प्रयतः समाहितः अवयवशः स्मरेत् इत्यर्थः। स्थविष्ठं रूपं वैराजस्य पूर्वोक्त[1]रूपम् इति तु मन्दं; रूपान्तरोपासनायाः एतद्रूपोपासनानुपयुक्तत्वात्।।१४।।

एवमेकैकमवयवं शिक्षयित्वा पश्चादेकैकाङ्गध्यानपूर्वकं कृत्स्नध्यानाभ्यास उक्तः। अथ ईदृशोपासनानिष्ठस्य देहत्यागप्रकारं वक्ष्यन् स्वात्मनः परमात्मनि समर्पणप्रकारमाह - **स्थिरमिति**। यतिः योगी यदा परिपूर्णभक्तियोग सम्पादकशरीरावस्थितिहेतुभूतप्रारब्धावसानकाले अङ्ग! हे राजन्! इमं लोकं प्राकृतं लोकं जिहासुः हातुमिच्छुः भवति। तदा गङ्गातीरोत्तरायणादिदेशकालादिषु मनो न सज्जयेत्[2] सक्तं न कुर्यात्। किन्तु, जितप्राणः जितासुः स्थिरं निर्भयदेशस्थं सुखं[3] मृद्वासनमास्थितः मनसा प्राणानिन्द्रियाणि नियच्छेत् अनन्यपराणि कुर्यात्।।१५।।

स्वबुद्ध्या निश्चयात्मिकया बुद्ध्याऽमलया भगवदुपासनेन निर्धूतमलया मनः नियम्य बुद्धिव्यापार-मात्ररतं कृत्वा एतां बुद्धिं क्षेत्रज्ञे जीवे निनयेत् नियच्छेत्। तं क्षेत्रज्ञम् आत्मनि नियच्छे[4]दित्यर्थः। एवम् आत्मानं जीवम् आत्मनि परमात्मनि अवरुध्य समर्प्य लब्धोपशान्तिः प्राप्तनिर्वृतिस्सन् कृत्याद्विरमेत् अन्तकाले परमात्मनि स्वात्मसमर्पणावधि कर्म न त्याज्यमिति कृत्याद्विरमेत इत्यनेनावगम्यते। "आप्रयाणात् तत्रापि हि दृष्टम्" (ब्र.सू.4-1-12) इति न्यायेन उपासनायाः आप्रयाणादनुवर्तनीयत्वेन तन्निष्पादककृत्यस्यापि आप्रयाणादनुवर्तनीयत्वात्। न हि मुमूर्षोः कृत्यविरतिः विधेया स्वत एव विरतेः। अत्र यद्यपि "यदा जिहासुरिममङ्ग! लोकम्" (भाग.2-2-15) इत्यनेन योगिनां स्वच्छन्दमरणानां कृत्यमेव प्रतीयते, तथाऽपि "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" (छान्दो.उ. 6-14-2) इति कृत्स्नयोगशरीरारम्भकप्रारब्धावसान एव परमात्मसम्पत्तिश्रवणात् न तेषामिदं कृत्यं न च मुमूर्षोः अनवहितकरणत्वेनाशक्यत्वात् "न सज्जेत् नियच्छेत् विरमेत" इत्यादि विधिविषयत्वानुपपत्या स्वच्छन्दमरणानां[5] कृत्यमेव इदमिति वक्तुं युक्तं योगप्रभावातिशयेन करणानां स्वायत्तत्वात्। ये च योगमाहात्म्यादविनष्टे एव प्रारब्धे म्रियन्ते तेषां पुनः संसार एव। अत एव भीष्मादीनाम् उत्तरायणादिकालप्रतीक्षा, प्रारब्धस्याविनष्टत्वात् । अतो यदा इत्यस्य प्रारब्धावसाने इत्युक्त एवार्थः साधुः।।१६।।

**विज०** सर्वाङ्गस्मरणाशक्तस्य स्मरणप्रकारमाह - **एकैकश** इति। ध्यानेन जितमनायासेन ध्यानविषयं स्थानमवयवमपोह्य वशीकृत्य परम्परम् अजितम्[6]जितमनभ्यस्तमवयवं पादम् आरभ्य यावद्धसितं पुष्पितं वनमितिवत् हासेन विकसितं मुखं हसितमिति लक्ष्यते। मुखपर्यन्तं साङ्गोपाङ्ग प्रतिधिया मनो धारयेत्। यथा यथा धीः शुद्ध्यति सर्वाङ्गध्यानक्षमा भवति, तथा तथा अभ्यस्तं कुर्यात्।

1. W. °क्त° 2. W. °ज्जेत 3. A. °सदं मृ° B. °ख मृद्वा° 4. W. Omits नियच्छेत्.....जीवमात्मनि 5. W. °णकृ° 6. A.B. Omit °मजित°

अतः सर्वाङ्गध्यानासामर्थ्ये तावत्पर्यन्तमेकैकावयव मनुभावयेत् इत्यर्थः।।१३।।

इममेवार्थमुपसंहरति - **यावदिति**। पराः ब्रह्मादयोऽप्यवरा यस्मात् स परावरः तस्मिन्। द्रष्टरि सर्वसाक्षिणि। विश्वेश्वरे हरौ। यावत्सर्वोत्तमो मम महोपकारकः अत एव सर्वतः प्रियतम इति ज्ञानपूर्वकप्रेमलक्षणभक्तियोगः अखण्डध्यानप्रापको न जायेत, तावत्पर्यन्तं पातालमूलं इत्यादिना उक्तं सर्वलोकदेवाद्याधारम्। पुरुषस्य। स्थवीयोऽतिस्थूलं रूपम्। स्मरेत। तत्राऽपि निरन्तरध्यानासक्तस्सन् नित्यक्रियावसाने प्रयतः प्रयत्नवान् स्मरेत इत्यन्वयः।।१४।।

इदानीमुक्तविधोपासनाजनितज्ञानेनापरोक्षीकृत परमात्मतत्त्वस्य तत्प्रसादाद्विज्ञातब्रह्मादितत्त्वस्य ज्ञानिनो यदा देहत्यागेच्छा तदा स्वदेहगतेन्द्रियाद्यभिमानिदेवतालयस्मरणपूर्वकं मोक्षप्रकारमाह - **स्थिरमिति**। यतिः निर्जितेन्द्रियग्रामः अपरोक्षज्ञानी इमं लोकं देहं यदा जिहासुः त्यक्तुमिच्छति, तदा यथा सुखं भवति तथा स्थिरम् अचलम् आसनमास्थितः काले देशे च कालस्थेषु देशस्थेषु च विषयेषु च यावन्मनो न सज्जेत् सक्तं न कुर्यात्। अथ मनसा स्ववशेन प्राणान् विषयाननुधावन्तीन्द्रियाणि च नियच्छेत् तत आहरेत्। आहृत्य च प्राणान्नियच्छेत् प्राणायामान् कुर्यात्। अथ जितासुः भक्त्या प्राप्तप्राणप्रसादः इन्द्रियप्रेरकान् दिशादिदेवान् मनोऽभिमानिनि इन्द्रे नियच्छेत् इन्द्राधीनांश्चिन्तयेत् ।।१५।।

मनश्च मनोऽभिमानिनम् इन्द्रं च अमलया बुद्ध्या बुद्धिदेवतया उमया नियम्य तदधीनं स्मृत्वा एतां बुद्धिदेवताम् उमां क्षेत्रज्ञे जीवान्तर्यामिणि हरौ निनयेत् नितरां तदधीनां चिन्तयेत् तं क्षेत्रज्ञम् आत्मनि देहमध्यस्थे हरौ निनयेत् तदैक्येन चिन्तयेत् तं देहगतम् आत्मानं हरिम् आत्मनि सर्वगते हरौ अवरुध्य तदेकीभावेन सञ्चिन्त्य देहादुत्क्रम्य लब्धोपशान्तिः प्राप्तसर्वाधिकमङ्गलाख्यविष्णुरूपो धीरः कृत्यात् विधिनिषेधलक्षणात् कार्याद्विरमेदित्यन्वयः। "भक्त्या प्राणं वशे नीत्वा जितप्राणो भवत्युत। जीवस्थो भगवान् विष्णुः क्षेत्रज्ञ इति गीयते। हृद्गतस्तु स एवाऽऽत्मा व्याप्तोऽप्यात्मेति भण्यते। हरौ हरेर्भवेन्नीतिः तदेकत्वस्य चिन्तनम्। अन्यत्र तन्नियम्यादिचिन्तनं नीतिरुच्यते"। (षाड्गुण्ये) इति प्रमाणेभ्यः उक्तः एवार्थोऽन्यो न स्वकपोलकल्पित इति भावः। मनस्तत्त्वं बुद्धितत्त्वे बुद्धितत्त्वं क्षेत्रज्ञे अधिष्ठानभूते तं क्षेत्रद्रष्टारम् आत्मनि शोधितत्वम्पदार्थे चिन्मात्रे तम् आत्मानं शोधितत्वम्पदार्थभूतम् आत्मनि शोधिततत्पदार्थभूते परमात्मन्यवरुध्य एकीकृत्य भेदहेतुम् अविद्याधिष्ठानं यथार्थज्ञानेन निरस्य कृत्यात् विरमेतेति मायावादिनः। एतां व्यष्टिरूपां बुद्धिं क्षेत्रज्ञे समिष्टिरूपहिरण्यगर्भात्मनि तं क्षेत्रज्ञं आत्मनि कारणात्मके कारणात्मानम् आत्मनि शुद्धे ब्रह्मण्यवष्टभ्य कृत्याद्विरतः स्यादिति पौराणिकं-मन्याः इति द्वयमपि प्रमाणविरुद्धत्वात् उपेक्षणीयम्। मनश्चेति चशब्देन मनश्शब्दवाच्यं रुद्रं

1. A.B. 'त्तं'

बुद्धिशब्दवाच्यां वाणीं विरिञ्चलक्ष्मीद्वारा क्षेत्रज्ञे लयं तत्त्वानां स्वस्वकारणेषु कल्पत इति ज्ञातव्यम् * "उपोधिके समीपेच इति", "शान्तिः प्रशममङ्गले" (वैज.को.6-2-39) इति च "मङ्गलं भगवान् विष्णुः" (भार. 3-462 1per 12 App. 6-54) इति च ।।१६।।

**रा०कृ०** गदाभृतः श्रीहरेः पादादि पादप्रभृति यावद्धसितं मन्दस्मितावधि एकैकशः प्रत्येकमङ्गानि धिया अनुभवेत् चिन्तयेत्। यथा यथा धीः शुद्ध्यति ध्यानेन निश्चला भवति तथा तथा जितं जितमनायासेन स्फुरितं स्थानं चरणाद्यङ्गमपोह्य त्यक्त्वा परं परमन्यं जङ्घाद्यङ्गं धारयेत् हृदये ध्यायेत्।।१३।।

परावरे सर्वोत्तमे विश्वेश्वरे विश्वस्य नियन्तरि द्रष्टरि सर्वसाक्षिणि अस्मिन् भगवति यावत् भक्तियोगः न जायेत तावत् क्रियावसाने अग्निहोत्राद्यावश्यकक्रियाणामन्ते प्रयतः प्रयत्नवान् पुरुषस्य भगवतः स्थवीयः स्थूलतरं पूर्वोक्तं रूपं स्मरेत्।

एवमत्र श्रीशुकयोगिना ध्येये द्वे भगवतो रूपे पृथक् समुपदिष्टे। तयोः प्रथमं तावत् विराड्रूपं द्वितीयं तु दिव्यरूपम्। प्रथमरूपध्यानेन विश्वस्मिन् जगति भगवद्भावना निश्चला भवति। इदं च विश्वरूपम् अथवा विष्णुरूपमिति च कथ्यते। किञ्च विष्णुसहस्रनामादौ "विश्वं विष्णुः" (भार.13-135-14) इति नामभ्यां इदमेव रूपं ज्ञापितम्। महाभारतयुद्धादौ च भगवता श्रीकृष्णेन दर्शितम् एतदेव विश्वरूपम्।

अपि च एतद्विराड्रूपध्यानेन अन्येषु तत्प्रवर्तनादिषु च ईश्वरस्य अन्तर्यामिता स्थिरा भवति। तदेतत् वासुदेवतत्त्वम् इत्यभिधीयते।

अनन्तरं द्वितीयं दिव्यरूपं ध्येयम्। एतद्रूपध्यानेन साधके त्रिगुणात्मकवासनाक्षयः तेन च दिव्यत्वसिद्धिः। तदिदं निर्मलं नित्यं गुणातीतं परमरमणीयमानन्दमयं नारायणतत्त्वमिति कथ्यते, यदनुप्रवेशेन साधकः सर्वात्मना दिव्यताविलसितो भवति। तथा च तस्य प्राकृतं शरीरं करुणमयम् अप्राकृतशरीरं सम्पद्यते, यदेव हि भागवतमयशरीरमिति व्यवह्रियते। एतादृशौः नारायणमूर्तिभिः अधिष्ठितो लोक एव वैकुण्ठः।

निरन्तरमात्मनः एतद्दिव्यरूपेण अवस्थानपर्यन्तं तद्रूपधारणा कार्या। केचित्तु एतद्धारणासाधनं मध्ये त्यजन्ति। स्वानुभवविषयमेव रूपं इश्वरीयं मन्यमानाः ते न ततः परां सिद्धिमधिगच्छन्ति। वस्तुतस्तु अस्मत्कर्तृकाः भगवद्विषयकाः अभिप्रायाः न भगवत्तत्त्वं गमयन्ति। साधनदशायामनुभूयमानाः स्वप्रदर्शनादयस्तु अस्मद्वाञ्छाप्रतिरूपा एवेति ज्ञेयम्। ईश्वरस्य सर्वान्तर्यामित्वात् सर्वातीतत्वाच्च तस्य हि साक्षात्कारः जगज्जीवसाक्षात्काररूपेणैव भवति। तथा च तज्जीवसेवैव तद्देवसेवेति तद्भिन्नं सर्वमपि प्रज्ञाप्रदर्शनमात्रपरमिति विभावनीयम्। अतः एतद्दिव्यरूपतत्त्वनुसन्धाननिश्चलात्मान एव नारायणाज्ञायां वर्तन्ते। अन्ये तु तत्तल्लोकावस्थायिनः कल्पान्तपर्यन्तं दिव्यत्वं प्रतीक्षमाणाः तिष्ठन्ति।

---

* "उपाधिकेऽन्तिहीने" (वैज.को. 8-7-18) .

एतेन भौतिकशरीरमेव साधनायाः सर्वोत्तममुपकरणमिति पर्यवस्यति।।१४।।

अङ्ग! हे राजन्! यतिः योगाभ्यासी यदा इमं लोकं देहं जिहासुः हातुं त्यक्तुमिच्छुः भवति तदा देशे काले च मनो न सञ्जयेत् सङ्गं न प्रापयेत्। किञ्च, स्थिरं सुखं च आसनमाश्रितः, जितेन्द्रियस्सन् मनसा प्राणान् इन्द्रियाणि नियच्छेत्।।१५।।

धीरः अमलया स्वबुद्ध्या मनः नियम्य एतां बुद्धिं क्षेत्रज्ञे जीवे निनयेत् नियच्छेत्। तं क्षेत्रज्ञ मात्मनि शुद्धजीवे निनयेत्। आत्मानं तं शुद्धजीवं आत्मनि सर्वात्मनि भगवति अवरुध्य समर्प्य लब्धोपशान्तिः लब्धा प्राप्ता उपशान्तिः कामादिसर्वदोषनिवृत्तिः येन तथाभूतस्सन् कृत्यात् प्रयत्नात् विरमेत।

ननु "स्थिरं सुखं चासनमाश्रितो यतिर्यथा जिहासुरिममङ्ग! लोकम्" (भाग.2-2-15) इत्यत्र योगिनो देहजिहासोक्ता । सा च आत्महत्यासदृशी योगिनः समचित्तस्य कथमुपपद्यते? अत्रोच्यते-- संसारबद्धजीवस्य देहवियोगो मरणं, धारणया मनः इन्द्रियाणि च प्राणे योजयतो योगिनस्तु विना मरणस्फुरणां देहत्यागः सुकरः। तदा देहसम्बन्धस्फुरणां विनैव साधको योगी जीवयात्रां कर्तुं प्रभवति। तथा च सः देहाश्रिताऽऽत्मावस्थितिभावनाम् अपहाय आत्माश्रितदेहस्थितिभावनामुपैति। तेन यदृच्छया कालवशात् देहपातेऽपि स आत्माकृतिः अवतिष्ठते। अपि चायं देहपातनिमित्त- देशकालादिभिः न व्यथते। एवञ्चात्र योगिनो देहजिहासा नाम देहसम्बन्धस्फुरणाजिहासेति सा च मुमुक्षोः आवश्यकीति न काऽप्यनुपपत्तिः।।१६।।

**न यत्र कालोऽनिमिषां परः प्रभुः कुतो[1] न देवा जगतां य ईशिरे।**
**न यत्र सत्त्वं न रजस्तमश्च न वै विकारो न महान् प्रधानम्।।१७।।**

**परं पदं वैष्णवमामनन्ति तद् यन्नेति नेतीत्यतदुत्सिसृक्षवः।**
**विसृज्य दौरात्म्यमनन्यसौहृदा हृदोपगु[2]ह्यार्हपदं पदे पदे।।१८।।**

**इत्थं मुनिस्तूपरमेद् व्यवस्थितो विज्ञानदृग्वीर्य सुरन्धिताशयः।**
**स्वपार्ष्णिनाऽऽपीड्य गुदं ततोऽनिलं स्थानेषु षड्सून्नमयेज्जितक्लमः।।१९।।**

**नाभ्यां स्थितं हृद्यधिरोप्य तस्मादुदानगत्योरसि तं नयेन्मुनिः।**
**ततोऽनुसन्धाय धिया मनस्वी स्वतालुमूलं शनकैर्नयेत।।२०।।**

---

1. AF.GF. °रा: 2. H.W. °गूह्यार्हपदं : M.Ma. °गुह्यापुरम्

**श्रीध०** तदेवाऽऽह - **न यत्र** इति। यत्र आत्मस्वरूपे कालो न प्रभुः किमपि कर्तुं न समर्थः। अत एव देवा न प्रभव इत्याह। अनिमिषां देवानां परः प्रभुः कालोऽपि यत्र न प्रभुः तत्र कुतो नु[1] देवाः प्रभवेयुः[2]। देवनियम्यानां तु[3] जगतां प्राणिनां[4] का वार्ता इत्याह जगतामिति। कुतो न प्रभवन्तीति अपेक्षायां निरुपाधिकत्वात्[5] इत्याह।[6] यद्वा जगत्कारणान्यपि न यस्य[7] सृष्ट्यादौ[8] प्रभवन्तीत्याह - **न यत्रेति**। विकारोऽहङ्कारः।।१७।।

निरुपाधिकत्वं[9] कुत इत्यत आह - **परम्** इति। यत् यस्मात् एतत् आत्मव्यतिरिक्तं "नेति नेती" त्येवमुत्स्रष्टुमिच्छवो दौरात्म्यं देहाद्यात्मत्वं विसृज्य अर्हस्य पूज्यस्य श्रीविष्णोः पदं[10] पदे पदे क्षणे क्षणे हृदा उपगुह्य[11] आश्लिष्य न अन्यस्मिन् सौहृदं येषां तथाभूताः सन्तः तद्वैष्णवं पदम् अत एव परं सर्वतः श्रेष्ठमामनन्तीत्यन्वयः।।१८।।

**इत्थम्** इति। तस्मादित्थं[12] ब्रह्मत्वेन व्यवस्थितो मुनिः उपरमेत्। तुशब्देन "यदि प्रयास्यन्" (भाग. 2-2-22) इति वक्ष्यमाणात् सकामात्[13] विशेषः उक्तः तमाह। विज्ञायते अनेनेति विज्ञानं शास्त्रं तेन जाता दृक् ज्ञानं तस्याः वीर्यं बलं तेन सुरन्धिताः निर्दग्धाः[14] विहिंसिता[15] आशायाः विषयवासनाः यस्य सः। इदानीं तस्य देहत्यागप्रकारमाह। स्वपार्ष्णिना पादमूलेन गुदं मूलाधारम् आपीड्य निरुध्यानिलं प्राणम् उन्नमयेत् ऊर्ध्वं नयेत्। जितः क्लमो येन। षट्सु स्थानेषु नाभ्यादिषु।।१९।।

**नाभ्याम्** इति। नाभ्यां मणिपूरके स्थितं हृद्यनाहतचक्रेऽधिरोप्य उरसि कण्ठादधोदेशे स्थिते विशुद्धिचक्रे[16] मनस्वी जितचित्तः[17] स्वतालुमूलं तस्यैव चक्रस्याग्रदेशम्। ततो बहुधागमनसम्भवात् शनकैः इत्युक्तम् ।।२०।।

**वीर०** अथ प्राप्यं परमात्मस्वरूपं वक्ष्यन् तस्मिन् स्वात्मसमर्पणावधि कर्म न त्याज्यमित्याह- **न यत्र** इति। यत्र वैष्णवे पदे कालो न प्रभुः किमपि कर्तुं न समर्थः अत एव देवा न प्रभव इत्याह। अनिमिषां ब्रह्मादीनां[18] परः प्रभुः कालो यत्र न प्रभुः तत्र कुतो नु[19] देवाः प्रभवः स्युः देवनियाम्यानां जगतां प्राणिनां का वार्ता इत्याह। जगतां प्राणिनां ये ईशिरे जगन्ति ये न्ययमयन् देवाः ते कुतो नु प्रभवः तन्नियाम्यानां जगतां तु अप्रभुत्वं कैमुत्यन्यायसिद्धमित्यर्थः। सर्वैः अनियाम्यं सर्वैः[20] अनियन्त्रितमित्यर्थः किञ्च, यत्र पदे प्रधानं तद्गुणाः सत्त्वादयः प्रधानकार्यभूता[21] महदहङ्कारादयश्च स्वकीयकार्यजननक्षमा न भवन्ति।।१७।।

---

1. H.V. Omit नु 2. B.H.V. °वस्युः 3. B. Omits तु 4. H.V. add तत्र 5. A. Omits °क° 6. A. adds न यत्रेति 7. H.V. add जगत् 8. V. adds °ते 9. A.B. Omit °क° 10. A.B. Omit पदं 11. H.V. °गू 12. H.V. य° 13. H.V. °शा° 14. A.B. Omit निर्दग्धाः 15. A. add वा 16. H.V. °द्ध° 17. H.V. य° 18. W. °दिदेवा 19. A.B. Omit नु 20. W. सर्वानियन्त्रित्यर्थः 21. A.B. °त°

यत् विष्णोः सम्बन्धि परं सर्वोत्कृष्टं पदं प्राप्यं स्वरूपं पद्यते गम्यत इति हि व्युत्पत्तिः आमनन्ति वेदान्ताः[1] इति शेषः। किं कर्तुमिच्छवः आमनन्ति यद्यस्मिन्न तन्नेति नेतीति उत्सिसृक्षवः तद्व्यतिरिक्त-मुत्स्रष्टुमिच्छवः व्यावर्तयितुमिच्छवः अब्रह्मात्मकं स्वतन्त्रं वस्तु "नेति नेति" (भाग. 7-7-23) इति बोधयन्तः कालादिभिः अनियाम्यं कालादीनां च नियन्तृ यत् सत्त्वादिकार्यास्पृष्टं च वैष्णवं प्राप्यं स्वरूपं वेदान्ता आमनन्ति दौरात्म्यं रागाद्युपहतचित्तत्वं विसृज्य त्यक्त्वा तदर्हपदमर्हस्य आराधनीयस्य भगवतः पदं अनन्यसौहृदा अनन्यसौहृदेन[3] हृदयस्य हृदादेशः यद्वा अनन्यसौहृदा वेदान्ताः आमनन्ति इति पूर्वेणान्वयः। अनन्यतात्पर्यका इत्यर्थः। हृदा हृदयेन उपगुह्य पदे पदे क्षणे क्षणे आश्लिष्य कृत्याद्विरमेत। तदा कृतकृत्यो भवेदिति पूर्वेणान्वयः।।१८।।

अथ देहादुत्क्रान्तिप्रकारमाह[4] - **इत्थम्** इति। मुनिः इत्थं तु उपरमेत्, देहादिति शेषः। तुशब्दः कृत्याद्विरतेः देहादुपरामस्य वैषम्यद्योतकः। इत्थं वक्ष्यमाणप्रकारेण[5] एतदेव उपपादयति विज्ञानेति। सर्वं ब्रह्मात्मकमिति व्यवस्थितमतिः विज्ञानं भगवदुपासनात्मकं ज्ञानं तदेव दृक् दर्शनात्मकं साक्षात्कारताऽऽपन्नं[6] प्रत्यक्षतापन्नमित्यर्थः। तादृशस्य ज्ञानस्य यद्वीर्यं सामर्थ्यं तेन सुरन्धितः विहिंसितः[7] निश्शेषनिवृत्तः आशयो वासना यस्य स तथोक्तः योगी स्वपार्ष्णिना स्वपादमूलेन गुदं मूलाधारम् आपीड्य निरुद्ध्य ततः आपीडनानन्तरम् अनिलं प्राणं षट्सु नाभ्यादिषु वक्ष्यमाणेषु स्थानेषु उन्नमयेत्। जितः क्लमो येन निवृत्तश्रम इत्यर्थः।।१९।।

नाभ्यां मणिपूरके स्थितं प्राणं हृद्यनाहताख्ये[8] हृदयकमले अधिरोप्य तस्मात् हृदः उदानगत्या उदानस्योदानवायोर्गत्या सञ्चारप्रकारेण उरसि कण्ठात् अधोदेशस्थिते विशुद्धचक्रे तं प्राणं नयेत। तत उरसः धिया अनुसन्धाय स्वगन्तव्यमनुसन्धाय[9] मनस्वी यतचित्तः स्वतालुमूलं स्वजिह्वाग्रपूर्वचक्रस्यै-वाग्रभागं शनकैः ततो बहुधा गमनसम्भवात् शनकैः इत्युक्तम्। नयेत प्रापयेत्।।२०।।

**विज०** एवमुत्क्रान्तो ज्ञानी यं लोकमाप्नोति तमितरलोकेभ्यो व्यावर्तयति - **न यत्र** इति। यत्र यस्मिन् लोके अनिमिषाणां रुद्रादिदेवानां प्रभुः कालो वायुः न प्रभुः स्वशक्तेः उद्बोधकः "हरिश्च प्रकृतिश्चैव ब्रह्मवायू तथैव च" (उदारसंहितायां) इत्यादेः ये रुद्रादयो देवा जगताम् ईशिरे जगन्ति स्वस्वकार्ये प्रवर्तयामासुः ते देवा न प्रभवन्ति कुतोऽन्यावकाशो न कुतोऽपि इत्यर्थः। यत्र यस्मिन् स्थाने सत्त्वादिगुणत्रयं च स्वशक्तिप्रकाशकं न। विकारे वै[10] भूतेन्द्रियात्मकोऽहङ्कारश्च न। महान् महतत्त्वं च प्रधानं प्रकृतिश्च न। जरादिस्वधर्मापादिकाः न भवन्तीयर्थः।।१७।।

---

1. A.B. वेदा 2. W. Omits इति 3. W. °दये° 4. A.B. Omit °प्रकार° 5. A.B. °रत्वेन 6. A.B. Omit साक्षात्कारताऽऽपन्नं 7. W. Omits वि° 8. A.B. °ख्ये° 9. A.B. Omit स्व° 10. A. Omits वै

ननु कालादिसंसर्गाभावात् शशविषाणवत् नास्तीति तत्राऽऽह - **परम्पदम्** इति। तत् वैष्णवं विष्णोर्विद्यमानं परम्पदं प्राप्तव्योत्तमं लोकम् आमनन्ति पठन्ति इत्यन्वयः। अनेन यथा कलादिकृतोपद्रवो हरेः नास्ति, तथा लोकस्यापि इत्युक्तं भवति। यत्सम्बन्धात् लोकोऽपि तादृङ्महिमा स विष्णुः। किं महिमा? इति तत्राऽऽह यन्नेतीति। वैष्णवम् इत्यनेन प्रस्तुतो विष्णुः अयम् उच्यते। अतत् तस्मात् ब्रह्मण इतरत् संसारलक्षणं दुःखम् उत्सिसृक्षवः त्यक्तुकामाः विशिष्टाधिकारिणो यं विष्णुं "नेति नेति" (भाग. 7-7-23) पृथिव्यादिवत् न आकाशादिवच्च न तत्कारणमहदादिवच्च न तदभिमानिवच्च नेत्युपास्यत तद्दौरात्म्यं दुरात्मनाम् असुरप्रकृतीनां विद्यमानं संसारदुःखं विसृज्य अनन्यसौहृदाः अनन्यभक्ताः हृदा निरतिशयस्नेहलक्षणभक्त्या उपगुह्य पदे पदे मनसा निरन्तरं परिरभ्य अमुमापुः। एवंविधस्य हरेः विद्यमानमिति पूर्वेणान्वयः। यद्वा यत् सर्वोत्तमं परममङ्गलं विष्णुरूपम् आप्तवान्। तद्रूपम् इतरेभ्यो व्यावर्तयति न यन्नेति। अतत् तस्मात् ब्रह्मणः अन्यत् जगत् उत्सिसृक्षवः त्याजयितुकामाः स वा एष आत्मा नेति नेतीति आमनन्ति तदित्यन्वयः। वेदानामचेतनत्वेन बुद्धिपूर्वकप्रवृत्त्यसम्भवात् कथं तदुक्तं निर्णेतुं शक्यत इत्यात्राऽऽह विसृज्येति। वेदोक्तं निर्णीय, दौरात्म्यं दुष्टोपास्तिमैक्यविषयं विसृज्य पदे पदे अन्वहं हृदा उपगुह्य, अपरोक्षीकृत्य, अनन्यसौहृदा भूतभवद्भविष्यन्तोऽमुमापुः आप्नुवन्ति आप्स्यन्ति वा। अतो युक्तमुक्तमिति।।१८।।

सम्प्रति ज्ञानिनो देहादुत्क्रमणप्रकारमाह - **इत्थम्** इति। तुशब्दः प्रकरणभेदार्थः। इत्थं "स्थिरं सुखं च आसनम्" (भाग. 2-2-16) इत्युक्तप्रकारेण मुनिः उपरमेत् उत्क्रान्तो भवेत्। कथमत्राऽऽह - व्यवस्थित इति। देहादुत्क्रमणे व्यवस्थितो निश्चितबुद्धिः! विज्ञानमात्मयोग्यज्ञानं स्वबिम्बविषयं तदेव दृक् तस्याः वीर्येण सुष्ठु रन्धितो दग्धः आशयः बाह्यान्तःकरणं यस्य स तथोक्तः। "विज्ञानं ब्रह्म" (तैत्ति.उ. 3-5) इति श्रुतेः "विज्ञानस्य ब्रह्मणः दृशो वीर्येण" इति वा जितक्लमः शरीरग्लानिरहितः प्रथमं स्वपार्ष्णिना गुल्फाधोभागेन गुदम् अपानद्वारमापीड्य ततेऽपानद्वारनिरोधानन्तरम्। ततो मूलाधारात् चतुर्दलपद्मात् अनिलम् उदानवायुम् उत्थाप्य नाभिहृदयोरस्तालुमूलभ्रूमध्यमूर्धसु षट्स्थानेषु क्रमात् उन्नमयेत् ऊर्ध्वं गमयेदित्यन्वयः।।१९।।

संक्षिप्य उक्तं विशिनष्टि - **नाभ्याम्** इत्यादिना। मुनिः मूलाधारात् चतुर्दलपद्मात् उन्नीय नाभ्यां स्थितं षड्दलपद्मे नीतमुदानगत्या ब्रह्मनाड्या हृदि दशदलपद्मेऽवरोप्य सन्निधाय ततो दशदलपद्मात् तम् उरसि द्वादशदलपद्मं[2] नयेत् मनस्वी मनस्समाधाननिरतः ततो द्वादशदलपद्मात् यथा नाड्यन्तरं न गच्छेत् तथा धिया अनुसन्धाय शनकैः असम्भ्रमेण स्वतालुमूलं षोडशदलकमलं नयेत्।।२०।।

---

1 A.B. °त्क्रमितो 2. M.Ma °द्मे

**रा०कृ०** यत्र ईश्वरप्राप्तौ सत्यां ,अनिमिषां ब्रह्मादिदेवानामपि परो नियामकः कालो न प्रभुः किमपि विधातुं न समर्थः तत्र ये देवाः जगतां प्राकृतजगत्सु ईशिरे ईशा बभूवुः ते देवाः कुतो नु? कुतो वा प्रभवः स्युः? किञ्च यत्र सत्त्वं, रजः, तमः, विकारः, अहङ्कारः, महान् महत्तत्वं, प्रधानं प्रकृतिश्च न प्रबभूवुरिति शेषः।

यत् यस्मात् अतत् तद्भिन्नं ब्रह्मभिन्नमित्यर्थः। "नेति नेति" (भाग. 7-7-23) इति उत्सिसृक्षवः उत्स्रष्टुं त्यक्तुमिच्छवः विवेकिनः दौरात्म्यं कलत्रपुत्रशरीरादिषु आत्मीयभावं विसृज्य त्यक्त्वा अनन्यसौहृदाः विष्णुसम्बन्धहीनवस्तुनि स्नेहरहिताः अर्हपदं अर्हस्य पूज्यस्य भगवतः पदं पादारविन्दं पदे पदे अनुक्षणं हृदा उपगूह्य आश्लिष्य तत् पूर्वोक्तं वैष्णवं विष्णुसम्बन्धि पदं स्थानं परं सर्वोत्कृष्टं आमनन्ति निरूपयन्ति।

करादेः अवयवस्य तदाधारभूतशरीरेश्वरे जीवे इव अधिकारो प्राकृतजगदीश्वरदेवनियामकस्य कालस्यापि स्वहेतुभूते परमात्मनि नैव अधिकारः। एवं सत्त्वादीनामपि घटादीनां मृदादिष्विव न परमात्मनि प्रभुता।

परमात्मभिन्नं न किमपि वस्तु विद्यते। सर्वं हि जगत् नामरूपात्मकमेव यदन्तर्यामितया आत्मा वर्तते। अन्तर्यामिताभावविरहेण ज्ञातं सर्वमपि वस्त्वात्मभिन्नमेव। तथा च दौरात्म्यविसर्जनं नाम प्रागुक्तान्तर्यामितानैरपेक्ष्येण ज्ञाते कलत्रपुत्रादिमये जगति आत्मीयभावविसर्जनमेव। तस्मात् सर्वव्यापकात्माऽपरपर्यायस्य विष्णोः सम्बन्धेन सर्वमपि पदं सर्वोत्कृष्टं वैष्णवं पदं भवतीति आमनन्ति विवेकिनः।।१७,१८।।

इत्थं प्रागुक्तप्रकारेण आत्मानं परमात्मनि समर्प्य व्यवस्थितः ब्रह्मत्वेन स्थितो मुनिस्तु मननशीलो योगी तु विज्ञानदृग्वीर्यसुरन्धिताशयः विज्ञानदृशः अनुभवज्ञानदृशः वीर्येण बलेन सुरन्धिताः विनाशिताः आशयाः विषयवासनाः यस्य तथाभूतस्सन् विरमेत् कृत्यादुपरमेत्।

अथ स्वपार्ष्णिना स्वपादमूलेन गुदं मूलाधारम् आपीड्य ततः जितक्लमः प्रागभ्यस्त-प्राणायामबलेन श्रमरहितः अनिलं प्राणवायुं षट्सु नाभ्यादिषु वक्ष्यमाणेषु स्थानेषु उन्नमयेत् ऊर्ध्वं नयेत्।।१९।।

अनन्तरं स मुनिः नाभ्यां मणिपूरकचक्रे स्थितं, प्राणमिति शेषः। हृदि अनाहतचक्रे अधिरोप्य तस्मात् अनाहतचक्रात् उदानगत्या उदानवायोः सञ्चारक्रमेण उरसि कण्ठाधोदेशस्थिते विशुद्धिचक्रे तं प्राणं नयेत् प्रापयेत्। ततः अनन्तरं तत्स्थानात् धिया स्वबुद्ध्या अनुसन्धाय विचार्य मनस्वी सः शनकैः शनैः स्वतालुमूलं पूर्वचक्रस्याग्रप्रदेशं नयेत प्राणं प्रापयेत्।।२०।।

तस्माद्भ्रुवोरन्तरमुन्नयेत निरुद्धसप्तायतनो[1]ऽनपेक्षः।
स्थित्वा मुहूर्तार्धमकुण्ठदृष्टिर्निर्भिद्य मूर्धन् विसृजेत् परं गतः।।२१।।

यदि प्रयास्यन्[2] नृप पारमेष्ठ्यं वैहायसानामुत यद् विहारम्[3]।
अष्टाधिपत्यं गुणसन्निवाये[4] सहैव गच्छेन्मनसेन्द्रियैश्च।।२२।।

योगेश्वराणां[5] गतिमाहुरन्तर्बहिस्त्रिलोक्याः[6] पवनान्तरात्मनाम्[7]।
न[8] कर्मभिस्तां गतिमाप्नुवन्ति विद्यातपोयोगसमाधिभाजाम्।।२३।।

वैश्वानरं याति विहायसा गतः सुषुम्नया ब्रह्मपथेन[9] शोचिषा[10]।
विधूतकल्कोऽथ हरेरुदस्तात् प्रयाति चक्रं नृप शैशुमारम्[11]।।२४।।

* योऽन्तः पचति भूतानां यस्तपत्यण्डमध्यगः।
सोऽग्निर्वैश्वानरो मार्गो देवानां पितृणां मुनेः।।
देवयानं पिङ्गलाभिरहन्येति शतायुषा।
रात्रीरिडाभिः पितृणां विषुवत्तां सुषुम्नया।।

**श्रीध० तस्मात्** इति। तस्मात् भ्रुवोरन्तरमाज्ञाचक्रम्। निरुद्धानि इन्द्रियाणि[12] श्रोत्रे नेत्रे नासिके मुखं चेत्येवं सप्तायतनानि[13][14]प्राणमार्गा येन सः। अनपेक्षः[15][16]चेत् परं ब्रह्मगतः सन्[17] मूर्धन् मूर्धनि। अत्र सप्तमीलोपः आर्षः। ब्रह्मरन्ध्रं[18] निर्भिद्य देहमिन्द्रियाणि[19] च विसृजेत्।।२१।।

सद्योमुक्तिमुक्त्वा[20] क्रममुक्तिप्रकारम्[21] आह - **यदि** इति दशभिः[22]। यदि तु पारमेष्ठ्यं पदं ब्रह्मणः[23] स्थानं प्रयास्यन् भवति उत वैहायसानां खेचराणां सिद्धानां यत् विहारं क्रीडास्थानम्[24]। कीदृशम्? अष्टौ[25] आधिपत्यानि अणिमाद्यैश्वर्याणि यस्मिन् तदपि प्रयास्यन्। क्व[26]? गुणसन्निवाये[27] गुणसमुदायरूपे ब्रह्माण्डे सर्वत्र इत्यर्थः। तर्हि देहत्यागावसरे मनश्च इन्द्रियाणि च न त्यजेत्। किन्तु तैः सहैव[28] तत्तल्लोकभोगार्थं गच्छेत्।।२२।।

---

1. H.N.V. °स्वयनोऽ° ; M.Ma. °श्रपथोऽ° 2. AF.GF. °स्यत्रय; M.Ma. °स्यत्यय 3. AF.GF. °रान् 4. H.V. °पाते 5. W. °गी° 6. M.Ma. °मनन्तिब° 7. M.Ma. °त्मा; W. °त्मना। 8. AF.GF. तत् 9. AF.GF. °दे° 10. AF.GF. योऽर्चि° 11. A.B.C.G.I.M.Ma.N. शौ°
* Two additional verses are found in M.Ma. between vv 24&25. The commentary of Sri Vijayadhwajatirtha on these verses is to be found in its proper place. 12. A.B. Omit इन्द्रियाणी 13. H.V. °स्वय° 14. B. adds सप्त° 15. B. adds क्रममुक्तवत् पारमेष्ठ्यादि भोगकौतुकानपेक्षः 16. B. Omits चेत्.....सन् 17. H.V. Omit सन् 18. A.B. °न्ध्रे 19. H.V. °हेन्द्रि° 20. H.V. Omit सद्यो......आह 21. B. Omits °प्रकार° 22. H.V. Omit दशभिः 23. A.B. Omit ब्रह्मणः स्थानं 24. H.V. add स्वर्गादिकं 25. B.H.V. °ष्ट 26. H.V. Omit क्व? 27. H.V. °पाते 28. H.V. °ह

यतः कर्मगतिवत् न योगगतिः परिच्छिन्नेत्याह - **योगेश्वराणाम्** इति। योगेश्वराणां त्रिलोक्या अन्तर्बहिश्च महर्लोकादिषु ब्रह्माण्डात् बहिश्च गतिमाहुः। अत्र हेतुः। पवनस्य अन्तः, आत्मा लिङ्गशरीरं येषाम् इति। विद्या उपासना तपो भगवद्धर्मः योगोऽष्टाङ्गः समाधिः ज्ञानं तान् ये भजन्ति तेषां या गतिः ताम्।।२३।।

तामाह - **वैश्वानरम्** इत्यष्टभिः। विहायसा आकाशेन। तत्र च[1] ब्रह्मलोकपथेन गतस्सन् प्रथमं वैश्वानरं अग्न्यभिमानिनीं देवतां याति। केनोपायेन? सुषुम्नया नाड्या। सा च देहात् बहिरपि वितताऽस्तीत्याह। शोचिषा ज्योतिर्मय्या विधूतकल्कः विधूतः त्यक्तः कल्को मलो येन सः। क्वाऽप्यसज्जमान इत्यर्थः। उदस्तात् उपरिष्ठात् वर्तमानं हरेः सम्बन्धि तारारूपं[2], नारायणाधिष्ठितमित्यर्थः। [3]शैशुमारं चक्रं पञ्चमस्कन्धे वक्ष्यमाणं [4]शिंशुमाराकारं[5] ज्योतिश्चक्रम्। चक्रस्थानि[6] आदित्यादिध्रुवान्तानि पदानि प्रयातीत्यर्थः।।२४।।

**वीर०** तस्मात् स्वतालुमूलात्। भ्रुवोः अन्तरं भ्रूमध्यस्थाज्ञाचक्रम्। प्रत्युन्नयेत ऊर्ध्वं नयेत। कथम्भूतः? निरुद्धसप्तायतनः निरुद्धानि सप्तायतनानि श्रोत्रद्वयाक्षिद्वयनासारन्ध्रद्वयास्यरूपाणि स्थानानि येन सः, विषयान्तरनिरपेक्षः। भ्रूमध्ये मुहूर्तार्धं स्थित्वा, अकुण्ठदृष्टिः स्वगन्तव्यविषयाप्रतिहतज्ञानसम्पन्नः परं परमात्मानं प्राप्तः अनुसन्दधत् मूर्द्धन् मूर्द्धानं "सुपां सु लुक्" (अष्टा.7-1-39) इति सुब्लुक्। निर्भिद्य "शीर्षकपालं भिनत्ति (सुबा.उ.11) इति श्रुतिः स्मारिता। विसृजेत्, स्थूलदेहमिति शेषः ।।२१।।

अथ मुमुक्षोः गन्तव्यम् अर्चिरादिमार्गं वक्ष्यन् तस्य मुमुक्षोः धूमादिमर्गस्य हेयत्वज्ञापनाय धूमादिमार्गेण गतानां गन्तव्यलोकानाह - **यदि** इति। "एते सृती ते नृपवेदगीते" (भाग.2-2-32) इति मार्गद्वयस्य वक्ष्यमाणत्वात् अस्मिन् अध्याये धूमादिमार्गविषयग्रन्थान्तराभावाच्च। "तासां मूर्द्धानमभिनिःसृतैका तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" (कठ.उ.6-16) इति श्रुतेः। मूर्ध्नो[7] निष्क्रान्तस्य अर्वाचीनलोकगत्यनुपपत्तेश्च। यदि इत्यादि श्लोकद्वयं धूमादिमार्गगतानां गन्तव्यलोक प्रदर्शनपरमेव। ननु "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" (कठ.उ.6-14) इति सद्योमुक्तिरेका प्रतीयते "तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरन्ह" (छान्दो.उ. 5-10-1) इत्यादिना क्रममुक्तिः अन्या प्रतीयते। अत्रापि "विसृजेत्परङ्गतः" इति सद्योमुक्तिः, "वैश्वानरं याति" (भाग.2-2-24) इति क्रममुक्तिश्च प्रतीयते अतः क्रममुक्तिसद्योमुक्तिरूपमार्गद्वयस्यैव एते सृती ते इति वक्ष्यमाणत्वात् न धूमादिमार्गगतगन्तव्यप्रदर्शनपरमिदं श्लोकद्वयम् इति चेत् उच्यते।

1. H.V. Omit च 2. B. °पनारायणाधिष्ठानमित्यर्थः 3. A.B. शै° 4. A.B. शि° 5. A.B. °श्रयं; H.V. °रव्यं 6. H.V. °स्थानान्या° 7. A.B. °र्ध°

सद्योमुक्तिः तावत् अप्रामाणिकैव। "ये चेमेऽरण्ये श्रध्दातप इत्युपासते तेऽर्चिषमभिसम्भवन्ति" (छान्दो.उ. 5-10-1) इत्यादिना "स एतान् ब्रह्म गमयति" (छान्दो.उ. 5-10-2) इत्यन्तेन ब्रह्मोपासीनानां अर्चिरादिना[1] गतानामेव ब्रह्म प्राप्त्यवगमात् "विकल्पोऽविशिष्टफलत्वात्" (ब्र.सू.3-3-59) इति न्यायेन सर्वब्रह्मविद्यानां एकफलत्वेन अर्चिरादिगतेः सर्वब्रह्मविद्यानिष्ठानां समत्वात् शास्त्रप्रतिपाद्यायाः सद्योमुक्तेः अभावात्। अथ ब्रह्मणः सर्वगतत्वात् न तत्प्राप्तये देशान्तरगमनापेक्ष इति चेत् तर्हि ब्रह्मणो नित्यत्वात् सर्वदा तत्प्राप्तिः किं न स्यात्। अथ कालविशेष एव निश्शेषाविद्यानिवृत्तिः इति मन्यसे, एवं देशविशेष एव निश्शेषाविद्यानिवृत्तिः इति विभाव्यताम्। "अत्र ब्रह्म समश्नुते" (कठ.उ.6-14) "न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति" (बृह.उ. 4-4-6) इत्यादिः कोऽर्थ इति चेदुच्यते। अत्र अस्मिन् लोके उपासन[2]दशायां यो ब्रह्मानुभवति तस्य ब्रह्मप्रेप्सोः प्राणा नोत्क्रामन्ति तं विहाय न गच्छन्ति किन्तु उपासन[3]फलभूतब्रह्मप्राप्तये तदधिष्ठतलोकान्तरगमनाय सहैव तिष्ठन्तीत्यर्थः। इति अतो धूमादिना[4] गतानां गन्तव्यप्रदर्शनपरमिदं श्लोकद्वयमित्याह। यदि इति। हे नृप! पारमेष्ठ्यं चतुर्मुखलोकं वैहायसानां खेचराणां सिद्धानां यत् विहारस्थानं कीदृशम्? अष्टाधिपत्यमणिमाद्यष्टै-श्वर्यसम्पन्नं यदि प्रयास्यन् गमिष्यन् भवति तदा गुणसन्निवाये मरणे मनसा इन्द्रियैश्च सहैव गच्छेत् स्थूलदेहस्यैव भस्मीभावात् सक्ष्मदेहेनैव गच्छतीत्यर्थः। अर्वाचीनलोकान् गच्छतां भूतसूक्ष्मेन्द्रियात्मक-लिङ्गशरीरेणैव सह गमनं ब्रह्मप्रेप्सोस्तु किञ्चिद्दूरं गच्छतो मध्ये विश्लेष इति विशेषः।।२२।।

योगेश्वराणां[5] भगवद्भक्तिव्यतिरिक्तयोगनिष्ठानां अब्रह्मात्मकस्वतन्त्रजीवोपसकानां त्रिलोक्याः अन्तः[6] बहिः जनलोकादिषु पवनान्तरात्मना पवनस्यान्तरात्मा पवनान्तरात्मा तेन वायुभूतसूक्ष्मदेहेन गतिमाहुरित्यर्थः। यद्वा वायुमनुप्रविश्य गच्छतीति वायुतुल्यवेगो[7] गच्छतीति आहुः इत्यर्थः। भगवद्भक्ति-[8]व्यतिरिक्तयोगनिष्ठानां गतिः इतरैः न लभ्यत इत्याह नेति। विद्या शास्त्रजन्यं ज्ञानं, तपः कर्मयोगः, योगो यमनियमादिः, समाधिः अब्रह्मात्मकस्वात्म[9]रूपानुसन्धानम् एतान् भजन्ति ये तेषां योगीश्वराणां तां गतिं ब्रह्माण्डान्तर्गतापेक्षितलोकगतिं कर्मभिः अभिसंहितफलैः कर्मभिः न प्राप्नुवन्ति केवल-कर्मिभ्योऽधिको योगी केवलयोगिभ्यः अधिको भगवदुपासक इत्यभिप्रायः। यद्वा भवद्भक्तानां गतिः कर्मभिः नावाप्यत इत्याह **योगीश्वराणाम्** इति। भगवद्भक्तियोगनिष्ठानाम् इत्यर्थः। त्रिलोक्याः त्रिलोकान्तर्भूतचतुर्दशभुवनात्मकाण्डकोशाद्बहिः समाधिः परमात्मोपासनमिति भेदः, एवं हेयत्वेन धूमादिमार्गगतिरुक्ता।।२३।।

अथ मुमुक्षोः अर्चिरादिमार्गमाह- **वैश्वानरम्** इति। छान्दोग्ये "यथा पुष्करपलाश आपो न

---

1. W. ˚दिग˚ 2. W. ˚ना˚ 3. W. ˚ना˚ 4. W. ˚दिग˚ 5. W. ˚गी˚ 6. A.B. Omit अन्तः 7. W. adds वा 8. W. ˚क्तियोगनिष्ठव्यतिरिक्तानां 9. W. ˚त्मस्व˚

श्लिष्यन्ते एवं एवंविदि पापं कर्म न श्लिष्यते" (छान्दो.उ.4-14-3) इत्युपक्रम्य ब्रह्मविद्यामुपदिश्य आम्नातः। "अथ यदुचास्मिञ्छव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसम्भवन्ति। अर्चिषोऽहः अह्न आपूर्यमाणपक्षम् आपूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान्" "मासेभ्यः संवत्सरम्। संवत्सरादादित्यम्। आदित्यात् चन्द्रमसम्। चन्द्रमसो विद्युतम्। तत्पुरुषोऽमानवः। स एनान् ब्रह्म गमयति। एष देवपथो ब्रह्मपथः। एतेन प्रतिपद्यमाना इमं मानवमावर्तं नाऽऽवर्तते नावर्तन्ते" (छान्दो.उ.4-15-5) इत्याम्नाता श्रुतिः "स वै पुनर्नेह विषज्जतेऽङ्गम्" (भाग.2-2-31) इत्यन्तेनाभिमता। अत्रानुक्तो हरादिप्रवेशस्त्वर्थसिद्धो वेदितव्यः। शीर्षकपालभेदनानन्तरमेव वैश्वानरप्राप्त्यसम्भवात् श्रुतावपि वरुणेन्द्रप्रजापत्यादयोऽन्यत्र श्रुताः अर्थसिद्धाः इति वेदितव्यम्। ब्रह्मपथेनेति सुषुम्नाविशेषणम्। ब्रह्मप्रेप्सोर्मार्गभूतया शोचिषा प्रकाशमानया सुषुम्नया सुषुम्नाख्यया नाड्या देहान्निर्गतः। शोचिषेत्यनेन "तेन प्रद्योतेनैष आत्मा निष्क्रामति" (बृह.उ.4-4-2) इति श्रुत्युक्तसुषुम्नासम्बन्धिहृदयकमलाग्रस्य प्रकाशनं स्मारितं "तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृति योगाच्च हार्दानुगृहीताः शताधिकया" (ब्र.सू.4-2-17) इति सूत्रकारः तदोकः तस्य ब्रह्मप्रेप्सोः जीवस्य स्थानभूतं यत् हृदयकमलं तस्याग्रं सुषुम्नाख्यनाडीद्वारं तस्य ज्वलनं प्रकाशनं भवति। अयं जीवः हार्दानुगृहीतः हृदयकमलस्थपरमात्मानुगृहीतः तेन परमात्मना प्रकाशितसुषुम्नाद्वारो विद्यायाः ब्रह्मविद्यायाः सामर्थ्यात् ब्रह्मविद्याङ्गभूतार्चिरादिगतिस्मृतियोगाच्च शताधिकया सुषुम्नया गच्छतीति सूत्रार्थः। एवम्भूतसुषुम्नया गतः विहायसा शीर्षकपालबहिष्ठाकाशेन वैश्वानरमर्चिश्शब्दवाच्यं अग्निं आतिवाहिकं दैवतं याति "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्" (भ.गी.8-24), "अर्चिषमभिसम्भवन्ति" (छान्दो.उ.5-10-1) इत्यनेन ऐकार्थ्यात् अस्यैव मोक्षमार्गत्वं सूचयति विधूतकल्क इति। "पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" (मुण्ड.उ.3-1-3) "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य धूत्वा शरीरम्" (छान्दो.उ.8-13-1) इति हि श्रूयते, न हि धूमादिमार्गगतानां पुण्यपापप्रहाणं श्रूयते विधूतकल्कः निवृत्तपुण्यपापः अत्राहरादिप्रवेश उक्तः[1] हरेरादित्यस्य उदस्तात् उपरिष्टात् स्थितं शैंशुमारं[2] चक्रं प्रयाति। हे नृप! शैंशुमारचक्रस्वरूपं[3] तु पञ्चमे स्कन्धे[4] वक्ष्यते।।२४।।

**विज०** तस्मात् भ्रुवोरन्तरं भ्रूमध्यस्थितं द्विदलं कमलमुन्नयेत तत्रापि इतिकर्तव्यतया भाव्यम् इत्याह निरुद्धयेति। निरुद्धाः सप्तानामश्वानां कर्णाक्षिनासिकादिसंज्ञानां पन्थानो येन स तथोक्तः। अनपेक्षो बाह्यसुखानिच्छुः अत्रापि इत्थम्भावमाह स्थित्वेति। मनसा परं गतो भ्रूमध्ये तु मुहूर्तार्धं स्थित्वा मार्गगम्यविशेषेषु अकुण्ठदृष्टिः मूर्धन् मूर्धनि शिरोमध्ये निर्भिद्य विसृजेत्, शरीरमिति शेषः। गत इत्यनेन चिन्तनमुच्यते। "अथैकयोर्ध्वमुदानः" (प्रश्न.उ.3-7) "प्राणापानाविडायां च पिङ्गलायां च वर्ततः। व्यानः सन्धिषु सर्वत्र उदानो ब्रह्मनाडिगः" (भरते) इति श्रुतिस्मृतिभ्याम् उदानगतिः

1. W. वेदितव्यः 2. A.B. शैं° 3. A.B. शैं° 4. W. Omits स्कन्धे

ब्रह्मनाड्यामिति सिद्धम्। इत्थं मुनिः इत्यनेन निर्गुणविद्याफलमुक्त्वा स्वपार्ष्णिनेत्यनेन सगुणविद्याविदो दोहोत्क्रमणप्रकार उच्यत इत्येतत् अनुपपन्नम्, एकवाक्यतया मुख्यार्थे सम्भवति वाक्यभेदायोगादिति।।२१।।

एवं देहादुत्क्रान्तानां योगिनां प्राप्यस्थानं गम्यं चाऽऽह - **यदि** इत्यादिना श्लोकद्वयेन। अत्र यदि अथ उतेति शब्दाः पुनरावृत्त्या अन्वेतव्याः। तथा हि - यदि सम्यक् पक्वभक्त्यादिसाधनवान् तर्हि अथ उत्क्रमणानन्तरमेव पारमेष्ठ्यं परमेष्ठिनो ब्रह्मणो लोकं प्रयास्यति। तत्रायं किं करोतीति तत्राऽऽह- अथेति। अथ तल्लोकप्राप्त्यनन्तरं पुनरूत्पत्तिहीनो ब्रह्मसालोक्यमात्रं प्राप्य अथ भक्त्यादिलक्षण परीपाकाय योगी वसति। अनन्तरं ब्रह्मप्रलये ब्रह्मणा सह स्वयोग्यां मुक्तिं प्राप्नोतिति शेषः। उतशब्दः अप्यर्थे। यद्यदि तत उत पूर्वोक्तयोगिनोऽपि अपरिपक्व भक्त्यादिकल्याणवान् तर्हि वैहायसानां वैमानिकानां सिद्धनां विहारं क्रीडास्थानं महर्लोकादि प्रयास्यति। तत्रास्य योगफलमाह अष्टाधिपत्यम् इति। अथ महर्लोकादिस्थाने अष्टानामणिमादियोगानां आधिपत्यमवाप्य वसति।।२२।।

अथ यदि सम्यक्पक्वभक्त्यादिमान् अप्रतीकालम्बनः, तर्हि यत्र पवनस्यान्तरात्मा विकुण्ठनाथः तत्र विकुण्ठनाथलोकेऽमुक्तस्थाने अमुक्तैः देवैः उपास्यमानं हरिं प्रयास्यति; यदि प्रतीकालम्बनः, तर्हि यत्र पवनश्चासौ अन्तरात्मा चेति, वायुर्ब्रह्मा च तत्र सत्यलोके वायुं ब्रह्माणं च प्रयास्यति। किमुक्तं भवति तत्राऽऽह - **योगेश्वराणाम्** इति। त्रिलोक्याः भूम्यन्तरिक्षस्वर्गसंज्ञायाः बहिर्महर्लोकादौ योगोश्वराणां गतिम् आमनन्ति न तु अर्वाक्। तल्लोकप्राप्तौ साधनविशेषमाह विद्येति। विद्या अपरोक्षज्ञानं तदादिपुरुषार्थसाधनसामग्रीमतां पुंसां तां महर्लोकादिगतिं केवलकर्मभिः न आप्नुवन्ति, किन्तु अपरोक्षज्ञानेनैव। अत्रायं कश्चन विशेषः। गुणानां सत्त्वादीनां सन्निवायः सन्निवासो यत्र स गुणसन्निवायः तस्मिन् महर्लोकादि वैकुण्ठान्ता मुक्तस्थानात् अधिके प्रदेशे प्रयास्यन् बाह्येन्द्रियमनोभिः सहैव गच्छेत्। आविष्कृतनिजरूपस्यापि तस्य आरब्धकर्ममोक्षपर्यन्तं दग्धपटवत् तेषां स्थित्युक्तेः। पश्चात् अज्ञानादिगुणसन्निवाये मुक्तस्थाने चिन्मात्रेन्द्रियमनोभिः सहैव वसति। तदुक्तं - "चिन्मात्राणीन्द्रियाण्याहुर्मुक्तानामन्यदैव तु" (ब्रह्मे) इति, "ईयुस्त्रीन् कर्मणा लोकान् ज्ञानेनैव तदुत्तरान्। तत्र मुख्या हरिं यान्ति तदन्ये वायुमेव तु। अपक्वा येन ते यान्ति वायुं वा हरिमेव वा। स्थानमात्राश्रितास्ते तु पुनर्जनिविवर्जिता"(ब्रह्मतर्के) इति समाख्यावचनबलादध्याहारेण व्याख्यातं; न तु स्वमनीषोत्प्रेक्षाबलादिति। यदि पारमेष्ठ्यादिलोकं प्रयास्यति तर्हि मनसेन्द्रियैः सहैव गच्छेदिति वाऽन्वयः। यत्र योगेश्वराणां गतिं त्रिलोक्या बहिरामनन्ति यत्र पवनान्तरात्मा तत्र विद्यादिभाजं तां गतिं कर्मभिः न आप्नुवन्ति इति वा।।२३।।

तस्य योगिनो मार्गमाह **वैश्वानरम्** इति। सुषुम्नया नाड्या उत्क्रम्य विहायसा हृदयाकाशेन ब्रह्मपथेन सुषुम्नाख्यया शोचिषा। "रोचिः शोचिरुभे" (अम.को.1-106) इत्याद्यभिधानम्। गतो निर्गतोऽर्चिरादिदेवान् गत्वाऽथ वैश्वानरं याति। अथ वैश्वानरप्राप्त्या विधूतकल्को दग्धपापतृणः ततो वैश्वानरलोकादुदस्तादुपरि हरेः शैंशमारं[1] चक्रं शिंशुमारस्वरूपं[2] प्रयातीत्यन्वयः। "वैश्वानरे द्युनद्यां वा सूर्ये वा देह एव वा। विधूय सर्वपापानि यान्ति किंस्तुघ्नकेशवम्" (ब्रह्माण्डे) इत्येतत् अथेति सूचितम्।।२४।।

वैश्वानरो नाम क इति तत्राऽऽह - **य** इति। यो भूतानामन्तः कोष्ठगाग्नौ स्थित्वा तद्भुक्तं चतुर्विधमन्नं पचति, यश्च ब्रह्माण्डमध्यगः स्वपुरमध्यगः तपति प्रकाशते स प्रधानवह्निः गम्यत्वात् मार्ग इतीरित इत्यन्वयः। "पितृयानं देवयानं ब्रह्मयानमिति त्रिधा। गच्छन् वैश्वानरं याति तस्मान्मार्गः स ईरितः" (भाग. 4-29-13) देवयानेन गन्तॄणां वैश्वानरात् अर्वाक् अर्चिरादयो गम्याः सन्ति। ब्रह्मदेवपितृलोकगन्तृभिः सर्वैरपि वैश्वानरः प्राप्यत इति द्योतनाय वैश्वानरं यातीति प्रथमत एव वैश्वनरप्राप्तिकथनमिति ज्ञातव्यम्।।

के तर्हि ते, इति तत्राऽऽह - **देवयानम्** इति। शरीरदक्षिणपार्श्वस्थपिङ्गलाख्यनाडीभिः शतायुषा मरणाख्योत्क्रमणादहान्यहः संज्ञदेवयानमेति। इडाभिः देहवामपार्श्वस्थेडाख्यनाडीभिः शतायुषा मरणेन रात्रीः रात्रिसंज्ञं पितॄणां यानं पितृयानमेति। देवयानपितृयानमार्गस्थानां अहरादिकालाभिमानिनीनां देवतानां प्राचुर्यात् अहानि रात्रीरिति बहुवचनम् "दक्षिणाः पिङ्गलाः सर्वाः इडा वामाः प्रकीर्तिताः। नाड्योऽथ मध्यमा प्रोक्ता सुषुम्ना वेदपारगैः" (भागवततन्त्रे) इति। "देवयानस्य मार्गस्था अहश्शब्दाभिसंज्ञिताः। पितृयानस्य मार्गस्था रात्रिशब्दाह्वया मता" (बृहत्तन्त्रे) इति वा पिङ्गलेडामध्यस्थया सुषुम्नया नाड्या शतायुषा। विशिष्टसुखवत्वात् तद्विषुवत्ताख्यं ब्रह्मयानमेति। विशिष्टं सुखं विषु, तदस्यास्तीती विषुवत्। तस्य भावो विषुवत्ता ताम्। स षयोः अभेदात् 'वि' इत्युपसर्गयोगाद्वा सकरस्य षकारः। "विषुवत्ता ब्रह्मयानं विशेषेण सुखं यतः" (ब्रह्मतर्के) इति रागोपरक्तसुखादिदातृत्वात् पिङ्गलादेः देवयानादिशब्दवाच्यत्वम् तदुक्तम् -"पिङ्गला देवयानं स्यात् पिङ्गाख्यसुखदा यतः। इडाऽन्नदानात् पितॄणामेवं मार्गाः प्रकीर्तिताः" (ब्रह्मतर्के) इति अत्र देवयानब्रह्मयानभेदोऽवान्तरोऽवगन्तव्यः।।

**रा०कृ०** तस्मात् स्वतालुमूलात् निरुद्धसप्तायतनः निरुद्धानि श्रोत्राक्षिनासिकामुखरूपाणि सप्त आयतनानि प्राणमार्गाः येन सः तथाभूतस्सन् भ्रुवोरन्तरं भ्रूमध्यस्थितमाज्ञाचक्रं प्रति उन्नयेत प्राणं प्रापयेत्। अथ अनपेक्ष्यः वक्ष्यमाणपारमेष्ठ्यादिपदभोगनिरपेक्षश्च मुहूर्तार्धं तथैव स्थित्वा अकुण्ठदृष्टिः। अखण्डदृष्टिः अखण्डसत्यासत्यविवेकवान् इत्यर्थः। परं परमात्मानं गतः अनुसन्दधानः मूर्धन् मूर्धानं निर्भिद्य विसृजेत्, देहेन्द्रियाणि त्यजेत्।

---

1. A.B.M.Ma शैं 2. A.B.M.Ma शिं

अत्र प्राणवायोः नाभ्यादि षट्स्थानेषु प्रापणं नाम तत्स्थानगतप्रज्ञाजागरणमेव। निरुद्धसप्तायतन पदेन बाह्यनासिकाश्रोत्रादीन्द्रियनिरोधो न विवक्षितः किन्तु प्राणगत्या तदिन्द्रियप्रज्ञाप्रवृत्त्यभावो ध्वन्यते। अन्यथा श्वासस्तम्भत्रासादिभिः शरीरत्यगे जीवस्य तामसलोकसञ्चारः तेन पिशाचभीरून्मत्तादि-जन्मप्राप्तिश्च प्रसज्येत। मूर्धनिर्भेदेन जीवप्रज्ञायाः अखण्डब्रह्मत्वप्राप्तिप्रयुक्तदेहेन्द्रियपरिमितबन्धविमुक्तिः गम्यते। तदा जीवप्रज्ञा परब्रह्मप्रज्ञारूपेण अवतिष्ठते।।२१।।

हे नृप! परीक्षित्! यदि साधकः पारमेष्ठ्यं ब्रह्मपदं प्रयास्यन् भवति उत अथवा अष्टाधिपत्यं अणिमाद्यष्टैश्वर्योपेतं वैहायसानां विमानैः आकाशे सञ्चरतां सिद्धानां विहारं क्रीडास्थानं यद्वर्तते तद्वा यदि प्रयास्यन् भवति अथवा गुणसन्निपाते गुणसमुदायरूपे ब्रह्माण्डे यत्र कुत्र वाऽपि यदि प्रयास्यन् भवति तदा देहत्यागसमये मनसा इन्द्रियैश्च सहैव गच्छेत्।।२२।।

पवनान्तरात्मनां पवनस्य वायोः अन्तः आत्मा लिङ्गदेहो येषां तेषां विद्यातपोयोगसमाधिभाजां योगेश्वराणां त्रिलोक्याः अन्तः स्वर्गादिमध्ये बहिश्च महर्लोकादिषु च गतिं गमनसामर्थ्यमाहुः तां गतिं कर्मभिः कर्मिणो न आप्नुवन्ति।।२३।।

हे नृप शोचिषा ज्योतिर्मय्या सुषुम्नया सुषुम्नानाड्या तद्द्वारेत्यर्थः ब्रह्मपथेन ब्रह्मलोकमार्गेण विहायसा आकाशेन गतः वैश्वानरं वह्निदेवतां याति, अथ विधूतकल्कः निरस्तमलः कुत्राप्यसक्त इत्यर्थः उदस्तात् उपरि विद्यमानं हरेः सम्बन्धि शैंशुमारं चक्रं शिंशुमाराख्यं ज्योतिश्चक्रं प्रयाति प्राप्नोति।।२४।।

**तद्विश्वनाभिं त्[1]वतिवर्त्य विष्णोरणीयसा विरजेनात्मनैकः[2]।**
**नमस्कृतं ब्रह्मविदामुपैति कल्पायुषो यद्विबुधा रमन्ते।।२५।।**

**अथो[3] अनन्तस्य मुखानलेन दन्दह्यमानं स निरीक्ष्य विश्वम्।**
**निर्याति सिद्धे[4]श्वरजु[5]ष्टधिष्ण्यं यद् द्वैपरार्ध्यं तदु पारमेष्ठ्यम्।।२६।।**

**न यत्र शोको न जरा न मृत्युर्नाऽऽर्[6]तिर्न चोद्वेग ऋ[7]ते कुतश्चित्।**
**य[8]च्चित्ततोऽदः कृ[9]पयाऽनिदं विदां दुरन्तदुःखप्रभावानुदर्शनात्।।२७।।**

---

1. M.Ma. प्रतिपद्य 2. M.Ma. °कम् 3. W. °थो 4.AF.GF. विश्वे° 5. I. °यु° 6. M.Ma. °र्धि° 7. W. भयं 8. M.Ma. °च्चित्ततोद:
9. M.Ma.W. क्रिय°

**ततो विशेषं प्रतिपद्य निर्भयस्तेनात्मनापोऽनलमूर्ति[1]र[2]त्वरन्।**
**ज्योतिर्मयो वायुमुपेत्य काले वाय्वात्मना खं बृहदात्मलिङ्गम्॥२८॥**

**घ्राणेन गन्धं रसनेन वै रसं रूपं तु[3] दृष्ट्या[4]श्वसनं त्वचैव।**
**श्रोत्रेण चोपेत्य नभोगु[5]णत्वं प्रा[6]णेन चाकूतिमुपैति योगी॥२९॥**

**श्रीध०** **तत्** इति। तद्विष्णोः चक्रं विश्वस्य नाभिं सूर्याद्याश्रयभूतम्। आविष्टलिङ्गत्वात् नाभिशब्दस्य न [7]क्लीबत्वम्। अतिवर्त्य अतिक्रम्य परतः स्वर्गिणां गत्यभावात्। एक एव निर्मलेन लिङ्गशरीरेण ब्रह्मविदां स्थानमन्यैर्नमस्कृतं महर्लोकम् उपैति। [8]यत् यस्मिन् विबुधाः[9] कल्पायुषो भृग्वादयः॥२५॥

**अथो** इति। अथो अनन्तरं कल्पान्ते[10] स विश्वं त्रैलोक्यमतिशयेन दन्दह्यमानं निरीक्ष्य [11]तत्राप्यूष्मप्राप्तेः यत् द्विपरार्धस्थायि तत्पारमेष्ठ्यं पदं प्रति निर्याति। सिद्धेश्वरैः जुष्टानि धिष्ण्यानि विमानानि यस्मिन् तत्। उ इति श्रैष्ठ्यं सूचितम्॥२६॥

तदेवाऽऽह- **न यत्र** इति। आर्तिः दुःखम् "उद्वेगो भयम्"। किन्तु चित्ततो हेतोः यद्दुःखमदः ऋते तदेकं विना तत्कुतो भवति? अनिदंविदाम् इदं भगवतो ध्यानम् अजानतां प्राणिनां दुरन्तदुःखो[12] यः प्रभवः जन्म तस्यानुदर्शनात् तेषां कृपया। यद्वा चित्ततो दो मनःपीडेति यत्तद्विना कुतश्चिदपि यत्र शोकादयो न सन्तीति॥२७॥

तत्र[13] ब्रह्मलो[14]कं गतानां त्रिविधा गतिः। ये पुण्योत्कर्षेण गताः ते कल्पान्तरे पुण्यतारतम्येनाधिकारि[15]का भवन्ति। ये तु हिरण्यगर्भाद्युपासनाबलेन गताः ते ब्रह्मणा सह मुच्यन्ते। ये तु[16] भगवदुपासकाः ते[17] स्वेच्छया ब्रह्माण्डं भित्त्वा[18] वैष्णवं पदम् आरोहन्ति। तत्र प्रस्तुतस्य[19] भगवद्भक्तस्य ब्रह्माण्डभेदनप्रकारमाह - **तत** इत्यादिना। [20]तत्रेयं प्रक्रिया। ईश्वराधिष्ठितायाः प्रकृतेः केनचिदंशेन महत्तत्वं भवति, तस्यांशेन अहङ्कारः, तस्यांशेन शब्दतन्मात्रद्वारा नभः, तस्यांशेन स्पर्शतन्मात्रद्वारा वायुः, तस्यांशेन रूपतन्मात्रद्वारा तेजः, तस्यांशेन रसतन्मात्रद्वारा आपः, [21]तासाम् अंशेन गन्धतन्मात्रद्वारा पृथ्वी तैश्च मिलितैः चतुर्दशभुवनात्मकं विराट्शरीरं, तस्य [22]पञ्चाशत्कोटियोजनविशालस्य पृथिव्येवाण्डकटाह[23]शब्दवाच्या कोटियोजनविशालम् प्रथमावरणम्। पञ्चाशत्कोटियोजनविशालमित्येके। ततश्च अबादीनां ये परिणता अंशाः तान्येव उत्तरोत्तरं दशगुणान्यावरणानि। अष्टमं तु प्रकृत्यावरणं व्यापकमेव। तदेवं

1. M.Ma. °र्ध्रि च 2. W. °र्म° 3. H.V.W. च 4. M.Ma स्पर्शं 5. M.Ma. °णं तत् 6. M.Ma. °येण नाऽऽवृत्ति° 7. A. षण्ढ°; B. षण्ड° 8. A. Omits यत् 9. B. adds महान्तः 10. B. adds सति 11. B. °प्युष्ण° 12. H.V. °खानां 13. B. adds च 14. B. °क° 15. B. °णो 16. H.V. Omit तु 17. B. adds तु 18. H.V. °त्वैव 19. B. adds तस्य 20. H.V. अ° 21. A.B. तदंशे° 22. B. adds च 23. A.B. °हविशेषशब्द°

स्थिते पृथिव्याद्यावरणभेदनप्रकारः कथ्यते। ततो विशेषं प्रतिपद्य लिङ्गदेहेन पृथिव्यात्मतां प्राप्य इत्यर्थः। एवमुत्तरत्रापि द्रष्टव्यम्। निर्भयः कथं यास्यामीति शङ्काशून्यः तेनाऽऽत्मना पृथिवीरूपेण तन्निरन्तरा अपः, प्रतिपद्य अत्वरन् त्वराम् अकुर्वन् तत्तदात्मकत्वेन[2] क्लेददाहादिशङ्काभवाद्यथेष्टं भोगान् भुञ्जान इत्यर्थः। एवं ज्योतिर्मयस्सन् काले भोगावसाने बृहदात्मलिङ्गं परमात्ममूर्तित्वेन उपासनेषु उक्तम्। यद्वा। वेदशब्दात्मना[3] तस्य प्रमापकमिति।।२८।।

इन्द्रियार्थानां भूतसूक्ष्माणामतिक्रममाह - **घ्राणेन** इति। घ्राणेन अधिष्ठितेन गन्धमुपेत्य, श्वसनं स्पर्शनं[4] नभोगुणत्वं शब्दात्मतां, प्राणेन तत्तत्कर्मेन्द्रियेण आकूतिं तत्तत्क्रियाम्।।२९।।

**वीर०** विश्वनाभिं विश्वस्य ग्रहतारकानक्षत्रादेः कृत्स्नस्य आश्रयभूतं, विष्णोः स्थानमिति शेषः। विरजेन प्रणष्टपुण्यपापेन अणीयसा सूक्ष्मतरेण आत्मना लिङ्गशरीरेणैकः असहायः नमस्कृतं ब्रह्मविदां ब्रह्मविद्भिः नमस्कृतम् इदं शिंशुमारचक्रविशेषणं[5] तदतिवर्त्येत्यन्वयः। अनेन चन्द्रप्राप्तिरपि सिद्धा तस्याव्यवहितः शिंशुमारः[6] यत् यत्र कल्पायुषः विबुधा आकल्पान्तायुषः[7] देवाः रमन्ते तं जनलोकमुपैति प्रयाति।।२५।।

अथः अधस्तात् स्थितस्यानन्तस्य मुखानलेन अवान्तरप्रलये शेषमुखोद्भूतरुद्रगणफालानलेन दंदह्यमानमिति। मस्तकस्थायी इह मृत्युरिति उक्तरीत्या सत्त्वाभिप्रायो वर्तमाननिर्देशः। निरीक्ष्य त्रिकालज्ञानबलादपरोक्षं[8] दृष्ट्वेत्यर्थः। जनलोके स्थित्वा कल्पान्ते[9] तत उपैतीति अयमर्थोऽनुपपन्नः। पुण्यपापविधूननस्योक्तत्वेन[10] तत्रावस्थितिहेतुभूतकर्माभावात् तेषु लोकेषु स्थित्ययोगात्। अतो दोषं दृष्ट्वा द्वैपरार्ध्यं द्विपरार्धस्थायि सिद्धेश्वरैः जुष्टानि धिष्ण्यानि विमानानि यस्मिन्। तत् उ श्रेष्ठं पारमेष्ठ्यं चतुर्मुखसम्बन्धिस्थानं याति निर्यातीत्यर्थः वरुणेन्द्रादिप्राप्तिस्तु अर्थसिद्धा।।२६।।

चतुर्मुखलोकस्य स्वर्गाद्यपेक्षया चिरकालस्थायित्वम् अभिप्रयन्नाह - **न यत्र** इति। यत्र इत्यस्य तत्र दुरन्तदुःखप्रभवानुदर्शनादित्युपरितनेन अन्वयः। आर्तिः दुःखम्, उद्वेगो मनःक्षोभः, भयम् आगामि-दुःखदर्शनजं ज्ञानम्। कुतश्चिदित्यस्य भयमित्यनेनान्वयः। कुतश्चित् शीतातपवातवर्षादिभ्यः। एवंविधेऽपि चतुर्मुखलोके ब्रह्मविदां निर्वेदमाह यच्चित्तत इति। यत् यस्मात् इत्यर्थः। अनिदंविदाम् इदंशब्दवाच्यपरिदृश्यमानप्रपञ्चविलक्षणपरब्रह्मविदाम्। क्रियया कर्मणा हेतुभूतेन दुरन्तदुःखप्रभवानु-दर्शनात्। दुरन्तम् अपारं यद्दुःखं तस्य प्रभवः प्रभवति अस्मादिति प्रभवः दुखःहेतुभूतस्संसारः[11]। तस्य

1.A.B. Omit °क° 2. B. °ऽपि 3. B.H.V. Omit वेद° 4. A.H.V. स्पर्श 5. A.B. शि° 6. A.B. शि° 7. W. Omits आ° 11. W. °वत्त्वाद° 12. A.B. °न्तरे 10. W. °निर्धू° 11. A.B. °स°

अनुदर्शनम् उत्प्रेक्षणम् तस्मात्। चित्ततः चित्तेन[1]। अदः दुरन्तदुःखमिति यश्चतुर्मुखलोकेऽपि ब्रह्मविद्भिः कर्महेतुकं दुरन्तदुःखं चित्तेन अनुमीयत इति यत्तत एव हेतोर्विशेषं प्रतिपद्येति उत्तरत्रान्वयः। अर्थान्तरपरत्वम् अनुपपन्नम् अध्याहारबाहुल्यात्। यस्य हिरण्यगर्भस्य चित्तत उपासनात् अदः तस्य स्थानम् उपासकैः लभ्यत इति शेष इति यदा योजना तदा उपासकैः लभ्यते इति अध्याहारः[2]। अनिदंविदां हिरण्यगर्भोपासनरहितानां दुरन्तदुःखप्रभवानुदर्शनात् तदुपासकानामेव दुःखनिवृत्तिस्थानं ब्रह्मलोकाख्यं लभ्यते इति नोपपद्यते; हिरण्यगर्भस्थानस्यापि दुःखनिवृत्तिहेतुत्वाभावात्। चतुर्मुखलोकं गतस्य श्वेताख्यस्य[3] राज्ञः पुनर्भवमागत्य प्रतिदिनं स्वीयशवभक्षणं प्रसिद्धम् ; आवृत्तेः दर्शनाच्च। ननु ब्रह्मलोकस्थ योगिनां न पुनरावृत्तिदुःखभयं तत्र मोक्ष्यमाणत्वनिश्चयादिति चेत् न। भूतलस्थयोगिनामपि मोक्ष्यमाणत्वनिश्चयात् न पुनरावृत्तिभयम् इति मुमुक्षूणां महीतलचतुर्मुखलोकयोः को विशेषः, "आब्रह्म भुवनाल्लोकाः पुनरावर्तिनोऽर्जुन!" (भ.गी. 8-16) इति हि स्मर्यते। तच्च द्वैपरार्ध्यमित्यनेन सूचितम् ; अतो यथोक्त एवार्थः ।।२७।।

ततो विशेषं पृथिवीमयमण्डकटाहं प्रतिपद्य व्याप्य इत्यर्थः। अनेन "पृथिवीमण्डं भिनत्ति" इति श्रुतिः व्याख्याता। विशेषशब्दः पृथिवीवाचकः "महदाद्या[4] विशेषान्ताः" इति प्रयोगात्। अत्रापि "विशेषस्तु विकुर्वाणादम्भसो गन्धवानभूत्" (भाग.2-5-29) इति वक्ष्यमाणत्वाच्च। विशेषं प्रतिपद्य निर्यातीति अनुषङ्गः। यद्वा उत्तरत्र उपैतीत्यनेनान्वयः। तेनाऽऽत्मना स्वरूपेणोपलक्षितः आपः आवरणजलम्। प्रतिपद्य इत्यन्वयः। आवरणाग्निव्याप्तिमाह - अनलमूर्तिमिति। मूर्तीभूतावरणाग्निं[5] प्रतिपद्य, अत्वरन् त्वरामकुर्वन्, क्लेददाहादिशङ्काभावात् इत्यभिप्रायः। ज्योतिर्मयः अग्निर्भूत्वा[6], अभ्रं भवतीतिवत् संश्लेषाभिप्रायो ज्योतिर्मयशब्दः। वायुम् आवरणवायुमुपेत्य काले पूर्वपूर्वावरणात्ययानन्तर[7]-काले वाय्वात्मना वायुसंश्लिष्टरूपेण उपलक्षितो बृहत्स्वकार्यभूतवाय्वाद्यपेक्षया बृहत्। आत्मलिङ्ग स्वासाधारणशब्दलिङ्गकं स्वम् आवरणाकाशमुपेत्य आत्मलिङ्गम् इत्यत्र आत्मा स्वासाधारणगुणः शब्दः लिङ्गम् आत्मानात्मनोः प्रमाणं यस्य तत् इत्यर्थः। "लिङ्गं यद्द्रष्टृदृश्ययोः" (भाग.2-5-25) इति वक्ष्यमाणत्वात्। इदमावरणान्तरेष्वपि तत्तद्गन्धादिगुणविशिष्टपृथिव्यादिसंश्लेषप्रदर्शनार्थमुक्तम्। एवम् "आकाशं भिनत्ति" (सुबा.उ.11) इत्यन्तः श्रुत्यर्थ उक्तः।।२८।।

गच्छतो मुक्तस्य सूक्ष्मदेहस्थैः इन्द्रियैः तत्तद्भूतगुणग्रहणमाह - **घ्राणेन** इति। ब्रह्मलोकपर्यन्तेष्वेव शब्दादिषु अनादरोऽभिप्रेतः। आवरणभूतगुणानां तु अनितरभोग्यत्वात् तत्तद्गतगन्धादीन् गृह्णातीत्यभिप्रायः। घ्राणेन स्वकीयघ्राणेन्द्रियेण। गन्धमावरणपृथिवीगुणभूतं गन्धम्। एवं च[8] रसनेन्द्रियेण रसं, दृष्ट्या चक्षुरिन्द्रियेण रूपं तेजोगुणं, त्वचा त्वगिन्द्रियेण। एवकारः साङ्कर्याभावद्योतकः। श्वसनं वायुगुणं

1. A.B. चिन्तनात् 2. W. °र्यम् 3. W. Omits श्वेताख्यस्य 4. A.B. °दयो 5. A.B. °र्ति 6. A.B. वायु° 7. A.B. °र्वका° 8. W. Omits च

स्पर्शं, श्रोत्रेण श्रोत्रेन्द्रियेण, नभोगुणत्वं स्वार्थे त्व[1]प्रत्ययः। प्राणेनान्तःकरणेन। आकूतिम् अभिप्रायं "समानीव आकूतिः" इति श्रुतिः[2]। अत्र प्राणशब्देन इन्द्रियवृत्तिहेतुभूतमुख्यप्राणो न विवक्षितः, तेन आकूतिग्रहणासम्भवात्। अतोऽन्तःकरणं विवक्षितम्। अतः[3] अन्तःकरणप्रसूतो हि अभिप्रायः। एवं घ्राणादिभिः गन्धादीनुपेत्य तत्तद्भूतभेदनदशायां तत्तद्गुणान् गृह्णन्नुपैतीत्यर्थः।।२९।।

**विज०** अधुना शिं[4]शुमारलोकात् उपरितनमार्गप्रकारमाह - **तत्** इति। शैं[5]शुमार इत्यनेन यद्रूपमुक्तं विष्णोः तत् विश्वनाभिं विश्वाधारं रूपं प्रतिपद्य। तुशब्दसूचितां तदनुज्ञामादाय। विरजेन विगतरागादिदोषेण, अणीयसा सूक्ष्मतरेणाऽत्मस्वरूपेण सर्वोऽपि ब्रह्मज्ञानिजनः तल्लोकमुपैति। तं विशिनष्टि कल्पायुष इति। कल्पायुषो विबुधा यत् यत्र रमन्ते क्रीडन्ति, तमिति शेषः। किंविशिष्टं रूपम्? ब्रह्मविदां समुदायेन नमस्कृतम् एकं मुख्यं केवलमिति वा। "मन्वन्तरायुषः स्वर्ग्या महर्लोके तु काल्पिका" (ब्राह्मे) इति पिङ्गलाभिः उत्क्रम्य देवयानेन गतः परान्ते ब्रह्म प्रयास्यन् तत्र महर्लोकेऽष्टाधिपत्यमित्युक्तो अणिमाद्यैश्वर्यशाली वसति कश्चन जनलोके कश्चन तपोलोके ज्ञानादिपरिपाकायाऽऽस्ते कश्चित्सत्यलोके हर्याज्ञया वसति। ब्रह्मयानेन गताः अप्रतीकालम्बनाः प्रतीकालम्बनाश्च शैं[6]शुमारहरिणानुज्ञाताः तदैवानिरुद्धप्रद्युम्नसङ्कर्षणादिदेवान् प्राप्य, दिवस्पतिं वायुं प्राप्य, तेन कार्यब्रह्मप्रापिताः तदुपदेशं प्राप्य, प्रतीकोपासका निवसन्ति। अन्ये तु तेन वायुना परं ब्रह्म प्रापिताः तल्लोके निवसन्ति इत्यादिविशेषः, तुशब्देन सूचित इति ज्ञातव्यम्।।२५।।

महर्लोकादिषु विहरतां तथा ज्ञानादिसाधनपरिपाकाय च निवसतां चतुर्मुखप्राप्तिप्रकारमाह- **अथो** इति। महर्लोकादिषु वसन् स ज्ञानिसङ्घोऽथ द्विपरार्धावसाने ब्रह्मप्रलये ब्रह्मणा सह मुक्तिं यास्यन् सिद्धैः सनकादिभिः जुष्टस्य चतुर्मुखस्य धिष्ण्यं निवासस्थानं यत् द्वैपरार्ध्यं द्वयोः परार्धयोः सम्बन्धि। चतुर्मुखस्याऽऽयुषः परेति नाम। चतुर्मुखायुर्लक्षणशतसंवत्सरभोग्यम् इत्यर्थः। तत्पारमेष्ठ्यं निर्याति महर्लोकादेर्निर्गत्य सत्यलोकमाप्नोतीत्यर्थः। गन्तुं हेतुमाह-अनन्तस्येति। अनन्तस्य भगवतः मुखानलेन मुखनिर्गताग्निना पुनः पुनः दह्यमानं विश्वं निरीक्ष्य। सङ्कर्षणमुखाग्निना प्रपञ्चस्य दाहो हेतुरित्यर्थः। उशब्दो ब्रह्मलोकं प्राप्य तेनैव सह मुक्तिं प्राप्नोतीति अस्मिन्नर्थे वर्तते।।२६।।

सत्यलोकस्य इतरलोकेभ्यो वैशिष्ट्यम् आह - **न यत्र** इति। यत्र ऋते सत्यलोके शोकादयो न सन्ति। 'आधिस्तु व्यसने चित्तदुःखेऽधिष्ठानबन्धयोः' इति। व्यसनमाधिः अत्रोच्यते। यत्र अनिदंविदाम् अब्रह्मविदां क्रियया दुःखस्य प्रभवस्य जननादिलक्षणस्य च अनुदर्शनात् जनस्य यश्चित्ततोदः सोऽपि नास्ति; तं सत्यलोकमाप्नोतीति पूर्वेणान्वयः। जनादिलोकापेक्षया सत्यलोकस्य वैशिष्ट्यं, न तु मुक्ति-

1. W. त्वः आर्षः 2. A.B. °तम् 3. A.B. Omit अतः 4. A.B.M.Ma. शिं° 5. A.B.M.Ma. शैं° 6. A.B.M.Ma. शैं°

विशेषात्; तदुक्तम्-"सर्वदुःखविहीना ये मुक्ताः प्रायस्तु तादृशाः। अमुक्तास्तु जनाद्येषु विशेषेण तु सत्यगाः" (वाराहे) इति। ननु यदि ब्रह्मणा सहैव मुक्तिः सर्वेषां, तर्हि ततः पूर्वमायासेन साधन-सामग्रीसम्पादनं व्यर्थमिति चेत् न, योग्यताबाहुविध्यात् मुक्तिप्राप्तेरपि बाहुविध्यात्। तदुक्तम्-"विष्णोर्लोकं तदैवैके यान्ति कालान्तरे परे। आज्ञयैव हरेः केचिदपूर्तेः केचिदञ्जसा। विहृत्यैवान्यलोकेषु मुच्यन्ते ब्रह्मणा सह" (वामने) इति।।२७।।

एवं देवयानेन गत्वा सत्यलोके, परब्रह्मलोके च स्थितानां ज्ञानिनां मोक्षं वक्तुं देवमुक्तिप्रकारमाह-**तत** इति। प्रतीकालम्बनाप्रतीकालम्बनसंज्ञः सः ज्ञानिसङ्घो ब्रह्मप्रलये स्वबिम्बं प्रविष्टो गरुडशेषलक्षण-मार्गद्वयेन वाणीं प्रविश्य, तया भौतिकशरीरं ब्रह्माणं प्रविश्य ततः तेन ब्रह्मणा सह विशेषं पृथिवीं प्रतिपद्य, तेन पृथिव्यात्मना सह आपः प्रतिपद्य, तेनात्मनाऽनलमूर्ध्नि प्रतिपद्य, तेन ज्योतिर्मयोऽग्निप्रधानो भूत्वा वायुमुपेत्य, मुक्तिकाले तेन वाय्वात्मना हरेः लिङ्गमाकाशवत् व्याप्तं नित्यं च इति बृहत् महत् खं प्रविशतीति अन्वयः। निर्भयः संसारभयात् मुक्तः अत एव त्वरन् त्वरमाणः। अत्रेदं तात्पर्यं चशब्दात् अवगन्तव्यम्। तथाहि-विशेषाख्याण्डे व्यवस्थिते विशेषनाम्नि विरिञ्चे स्थितं वैराजाख्यं हरिं पुनस्तद्द्वि-गुणाण्डकटाहात्मकविशेषाख्यपृथिव्यां स्थिते विरिञ्चे स्थितम् अन्ननामानं हरिं, तेन अन्ननाम्ना हरिणा अप्सु स्थिते चतुर्मुखे स्थितं अन्नाख्यं हरिं, तेन अन्नेन विष्णुना तेजोगतविरिञ्चस्थं प्राणनामानं हरिं तेना-ग्निगतेन हरिणा वायुस्थितचतुराननस्थितं प्राणाख्यं प्राप्यते। न वायुस्थविरिञ्चान्तर्यामिणाऽऽकाशस्थित विरिञ्चस्थं प्राणाख्यं हरिं प्रविशतीति पृथिव्यादिकार्याणां स्वस्वकारणेष्वबादिप्रधानानां तेषु लयः। तदभि-मानिदेवताशरीराणां च। तत्र विरिञ्चकेशवयोः तत्तत्पदार्थस्थितस्वस्वरूपैः एकीभावो, दीपानां दीपान्तरैरिव। अन्येषां द्वारमात्रमिति "ज्ञानिनः प्रलये सर्वे ब्रह्मणा सह पार्थिवम्। भूम्यपामन्ननामानं प्राणमग्न्यादि-संस्थितम्" - इत्यादिवाक्यद्वयेन चशब्दगृहीतेन निष्प्रमाणमिति शङ्का निरस्ता इति ज्ञातव्यम्।।२८।।

इदानीं पञ्चतन्मात्राप्रलयप्रकारमाह - **घ्राणेन** इति। घ्राणेन्द्रियाद्यधिष्ठितविरिञ्चस्थेन हरिणा गन्धतन्मात्राद्यधिष्ठातृविरिञ्चस्थितं हरिम् उपेत्य योगी पुनरावृत्तिं नोपैतीति अन्वयः। तत्र वाय्वादीनां पुनरावृत्तिसद्भावात् प्रायेण इत्युक्तम्। यद्वा एवमुक्तवक्ष्यमाणप्रकारेण मुक्तानां तेषां ज्ञानिनां भोगप्रकारमाह- घ्राणेन इति। एवमुक्तः केवलचिदानन्दैकदेहो योगी सः ज्ञानिसङ्घः तादृशैः इन्द्रियैः घ्राणादिभिः अत्युत्तमान् गन्धादीन् पञ्चविषयानुपेत्य श्वेतद्वीपादिस्थानेषु आश्रितः प्रलयेऽपि न पुनरावृत्तिम् उपैतीत्यन्वयः। वा इत्यनेन "पञ्चेन्द्रियैर्ये विषया द्रष्टव्याःसर्वतो वरा" (षाड्गुण्ये) इत्यादि मानसिद्धिं द्योतयति। इयमेव मुक्तिः न अद्वैतवादिकाथिता इति एवशब्दः तुना "मग्नस्य हि परे ज्ञाने किं न दुःखतरं भवेत्" इति मानं सूचयति।।२९।।

---

1. A.B. 'इन्'

**रा०कृ०** विश्वनाभिं विश्वस्य ब्रह्माण्डात्मकस्य - नाभिस्थानीयं केन्द्रभूतमित्यर्थः विष्णोः तत् शिंशुमारचक्रं तु अतिवर्त्य अतिक्रम्य एक एव, साधक इति शेषः। विरजेन निर्मलेन अणीयसा अतिसूक्ष्मेण आत्मना लिङ्गशरीरेण यत् यस्मिन् लोके कल्पायुषः विबुधाः ज्ञानिनो रमन्ते। नमस्कृतं स्वर्गलोकादि स्थितैः जनैः नमस्कृतं ब्रह्मविदां, स्थानमिति शेषः। तं महर्लोकमुपैति।।२५।।

अथो अनन्तरं कल्पान्ते सः अनन्तस्य शेषस्य मुखानलेन विश्वं दन्दह्यमानं निरीक्ष्य विलोक्य यद् ब्रह्मपदं द्वैपरार्ध्यं द्विपरार्धवत्सरपरिमितकालस्थायि वर्तते। सिद्धेश्वरजुष्टधिष्ण्यं सिद्धेश्वरसेवित-विमानं तत् उ श्रेष्ठं पारमेष्ठ्यं परमेष्ठिनो ब्रह्मणः पदं निर्याति प्राप्नोति।।२६।।

अनिदंविदां इदं भगवतो ध्यानम् अजानतां प्राणिनां दुरन्तदुःखप्रभवानुदर्शनात् दुरन्तदुःख-सहितजन्मनोऽनुदर्शनात् कृपया तेषु दयया चित्ततोदः मनःपीडा भवतीति यत् तदृते तद्विना यत्र सत्यलोके कुतश्चित् कस्मादपि हेतोः न शोकः, न जरा, न मृत्युः, न आर्तिः, न च उद्वेगः भवन्ति तत् पारमेष्ठ्यं निर्यातीति पूर्वेणान्वयः।

देहत्यागसमये हि इन्द्रियानुषङ्गवशात् तदिन्द्रियगुणानुगुणलोकेषु विहरति जीवः। इन्द्रियगुणाश्च अत्र देहसद्भावे अनुभूताः रागद्वेषादिविषयवासना एव याः देहान्ते जले लवणादय इव जीवप्रज्ञायां विद्रुताः विद्यन्ते। तदा स जीवो वासनामयशरीरस्सन् ब्रह्माण्डे विचरति। वासनामयशरीरमेव लिङ्गशरीरमिति कथ्यते। जीवस्य भौतिकशरीरत्यागानन्तरं तत्सत्तास्फोरकमभिज्ञानात्मकं यद्वर्तते तल्लिङ्गशरीरमिति अन्वर्था संज्ञा।

स च लिङ्गशरीरी जीवः प्राकृतशरीरसद्भावसमयसमभ्यस्तविद्यातपोयोगादिसाधनमेव ब्रह्मलोकादिष्वपि समाचरति; अथापि इन्द्रियवासनावशात् चेतुर्मुखब्रह्मप्रज्ञामतीत्य अन्तर्यामिणमीश्वरं प्राप्तुं न पारयति।

एतल्लिङ्गशरीरधारिणां योगीश्वराणां गमनागमनविषयभूताः ब्रह्माण्डबहिरन्तर्भागाः न कर्ममयाः किन्तु प्रज्ञामयाः।

भौतिकदेहधारणसमये योगाभ्यासविधौ सुषुम्नामुखेन ऊर्ध्वगमनकुशलो जीवो तद्देहत्यागानन्तरमपि आत्मप्रज्ञामयीं सुषुम्नामाधाय ब्रह्मलोकं प्रयाति। एतत्प्रयाणकाले ज्ञानाग्निदग्धकर्ममलः सः कुत्रापि असक्तः केवलात्मरूपः नारायणाधिष्ठितं शिंशुमारचक्रं प्राप्नोति। द्वादशानां सौरकुटुम्बानां केन्द्रभूतमेकं ध्रुवनक्षत्रम्। तादृशैः द्वादशभिः ध्रुवनक्षत्रैः ज्योतिर्मण्डलमेकं निष्पद्यते। तादृशैः अनेकैः ज्योतिर्मण्डलैः सम्भूतैः सम्पद्यते शिंशुमारचक्रं, यदेव हरिपादमित्यभिधीयते। ततश्च सर्वान्तर्यामिप्रज्ञामयदेहः सः ब्रह्मविदामालयं महर्लोकमधितिष्ठति। अस्मिन् लोके प्रज्ञामयदेहाः जीवाः सूर्यप्रभाभासमानाः वर्तन्त इत्यस्य महर्लोकः अथवा ज्योतिर्लोक इत्यन्वर्था संज्ञा। अयं कल्पान्तस्थायी महर्लोकवासी

कल्पान्तेऽनन्तमुखाग्निना दन्दह्यमानं भूर्भुवस्सुवर्लोकत्रयं द्रव्यशक्तिप्रज्ञात्मकं पश्यति। तस्मिन् ब्रह्मप्रज्ञामये लोके द्रव्यमनस्साधारणाः जरामरणशोकभयादयो दोषा न विद्यन्ते। ब्रह्मलोकवासिभिः सर्वान्तर्यामीश्वरध्यानविरहितैः अनुभूयमानाः शोकभयादिदशाः वेद्यन्ते। तथा च भूलोकादिवासिनोऽपि यदि सर्वान्तर्यामीश्वरध्यानपराः भवेयुः तेऽपि शोकभयादिभिर्मुच्यन्ते, तदीश्वरप्रज्ञात्वेनावस्थानादिति सिद्ध्यति।।२७।।

ततः सत्यलोकभोगानन्तरं निर्भयः विशेषं प्रतिपद्य लिङ्गदेहेन पृथिवीं प्राप्य तेन आत्मना पृथिवीरूपेणात्मना अपः प्रतिपद्य अब्रूपेणात्मना अनलमूर्तिः अनलात्मना परिणतः अनन्तरं ज्योतिर्मयस्सन् काले भोगान्ते वायुमुपेत्य वाय्वात्मना खम् आकाशमुपेत्य अत्वरन् त्वरामकुर्वन् क्लेददाहादिभयाभावात् यथेच्छं भोगान् भुञ्जानः - घ्राणेन घ्राणेन्द्रियेण गन्धम् उपेत्य रसनेन रसनेन्द्रियेण रसमुपेत्य दृष्ट्या तु नेत्रेन्द्रियेण तु रूपमुपेत्य त्वचैव त्वगिन्द्रियेणैव श्वसनं स्पर्शनमुपेत्य श्रोत्रेण च कर्णेन्द्रियेण नभोगुणत्वं शब्दमुपेत्य प्राणेन च तत्तत्कर्मेन्द्रियेण च आकूतिं तत्तत्क्रियां योगी उपैति प्राप्नोति।।२८,२९।।

*** स भूतसूक्ष्मेन्द्रियसन्निकर्षं[1] मनोमयं देवमयं विकार्यम्।**
**संसाद्य गत्या[2] सह तेन याति विज्ञानतत्त्वं गुणसंनिरोधम्।।३०।।**

**तेनात्मनाऽऽत्मानमुपैति[4] शान्तिमानन्दमानन्दमयोऽवसाने।[3]**
**एतां गतिं भागवतीं गतो यः स वै पुनर्नेह विषज्जतेऽङ्ग![5]।।३१।।**

**एते सृती ते नृप! वेदगीते त्वयाभिपृष्टे ह[6] सनातने च।**
**[7]ये वै पुरा ब्रह्मण आह पृष्ट[8] आराधितो भगवान् वासुदेवः।।३२।।**

**न ह्यतोऽन्यः शिवः पन्था विशतः[9] संसृताविह।**
**वासुदेवे भगवति भक्तियोगो यतो भवेत्।।३३।।**

---

* According to M&Ma editins, the three VV. beginning with सभूत...........are found in the following order:- **सभूतसूक्ष्मेन्द्रियसन्निकर्षात् सनातनोऽसौ भगवाननादिः। मनोमयं देवमयं विकार्यं संसाद्य मत्या सह तेन याति।।३०।।** विज्ञानतत्त्वं गुणसन्निरोधं तेनात्मनाऽऽत्मानमुपैति शान्तिम्। आनन्दमानन्दमयोऽवसाने सर्वात्मके ब्रह्मणि वासुदेवे।।३१।। तां गतिं भागवतो गतो यः स वै पुनर्नेह विषज्जतेऽङ्ग! एते सृती ते नृप! वेदगीते त्वयाऽभिपृष्टेऽथ सनातने च । ये वै पुरा ब्राह्मण आह पृष्ट आराधितो भगवान् वासुदेवः।।३२।।
1. M.Ma. °षात् 2. M.Ma. म° 3. M.Ma. °न्ति° 4. M.Ma. °तो 5. W. °ङ्गम् 6. H.I.V.W. च; M.Ma °ऽथ 7. AF.GF. यद् 8. I.W. तु° 9. M.Ma.W. °शं°

**श्रीध०** तदेवं स्थूलसूक्ष्मभूतातिक्रममुक्त्वा तदावरणभूताहङ्कारप्राप्त्या महदादिप्राप्तिमाह **स** इति। स योगी विकार्यं संसाद्य [1]सम्प्राप्य विज्ञानतत्त्वं याति विविधं कार्यं यस्य इति विकार्योऽहङ्कारः। स त्रिविधः तामसो राजसः सात्त्विक [2]इति। तत्र तामसा[3]ज्जडानि भूतसूक्ष्माणि जायन्ते, राजसात् बहिर्मुखानि दशेन्द्रियाणि, सात्त्विकात् मन इन्द्रियै[4]र्देवताश्च, तेषां लयश्च तत्तदहङ्कारे तत्र भूतसूक्ष्माणामिन्द्रियाणां च सन्निकर्षं लयस्थानम्। तामसं राजसं च मनोमयं, देवमयं च सात्त्विकं[5] प्राप्य गत्या [6]एवं गमनेन तेन अहङ्कारेण सह विज्ञानतत्त्वं [7]महत्तत्त्वं याति। ततः गुणानां सन्निरोधो लयो यस्मिन् तत् प्रधानं याति।।३०।।

**तेन** इति। तेनाऽऽत्मना प्रधानरूपेण आनन्दमयस्सन् उपाधीनामवसाने शान्तमविकृतमानन्दं परमात्मानमुपैति। न विषज्जते नावर्तत इत्यर्थः।।३१।।

**एते** इति। सृती मार्गौ प्रकारौ इत्यर्थः। हे नृप! "अनपेक्षो...निर्भिद्य मूर्धन् विसृजेत्परं गतः" (भाग. 2-2-21) इति या सद्योमुक्तिः सैका सृतिः। "यदि प्रयास्यन्" (भाग. 2-2-22) इत्यादिना क्रममुक्ति[8]श्च द्वितीया सृतिः। एते सृती वेदेन गीते उक्ते न तु स्वोत्प्रेक्षिते। तत्र "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते।" (कठ.उ. 6-14) इति सद्योमुक्तिः। "तेऽर्चिरभिसम्भवन्ति" (बृह.उ. 6-2-15) इत्यादिना क्रममुक्तिश्च वेदेन उक्ता[9]। यद्वा "न कर्मभिस्तां गतिमाप्नुवन्ति" (भाग. 2-2-23) इति दक्षिणमार्गस्यापि सूचितत्वात् एते सृती इति द्विवचनम्। त्वयाऽभिपृष्टे "यच्छ्रोतव्यम्" (भाग. 1-19-38) इत्यादिप्रश्नेन अर्थात् मुक्तिविषये द्वे अपि सृती पृष्टे "ब्रूहि यद्वा विपर्ययम्" (भाग. 1-19-38) इति[10] दक्षिणमार्गोऽप्यर्थात् पृष्टः। एवं त्वया च [11]ये पृष्टे[12] यच्छ्रोतव्यमित्यादि प्रश्ने एते सृती इत्यन्वयः।।३२।।

सन्ति संसरतः पुंसो बहवो मोक्षमार्गाः [13]तपोयोगादयः [14]तत्र समीचीनस्तु अयमेव इत्याह - **न हि** इति। यतोऽनुष्ठितात् भक्तियोगो भवेत् अतोऽन्यः शिवः सुखरूपो निर्विघ्नश्च नास्त्येव।।३३।।

**वीर०** अथ अहङ्कारमहत्[15]प्रकृतीनाम् अतिक्रममाह - **स** इति। स योगी गत्या गमनेन विकार्यं स्वकार्यरूपेण परिणामिनम् अहङ्कारं संसाद्य इत्यन्वयः। विकार्यमेव विशिनष्टि। देवमयं दिग्वातादि-देवाधिष्ठेयेन्द्रियकारणं मनोमयं मनःकारणं भूतसूक्ष्मेन्द्रियसन्निकर्षं भूतान्याकाशादीनि तत्सूक्ष्माणि शब्दादीनि इन्द्रयाणि ज्ञानकर्मोभयेन्द्रियाणि [16]तेषां सन्निकर्षं कारणं भूतसूक्ष्मसन्निकर्षत्वेन्द्रियसन्निकर्षत्वाभ्यां

---

1. A.B. Omit सम्प्राप्य 2. H.V. °श्चे° 3. H.V. °दशातानि 4. H.V. °यं 5. H.V. add सं° 6. H.V. Omit एवं 7. H.V. Omit महत्तत्त्वं 8. B. रिति 9. H.V. °क्ते 10. B.H.V. add च 11. H.V. Omit ये 12. B. adds ते 13. H.V. Omit तपो 14. B.H.V. Omit तत्र 15. A.B. °त्त्रिवृ° 16. A.B. एतेषां

द्विविधाहङ्कारभेदौ तामससात्त्विकाहङ्कारौ उक्तौ। मनोमयं देवमयमिति च सात्त्विकाहङ्कारकार्यप्रदर्शनम्। देवमयमित्येतावतैव सिद्धे तत्कार्यप्रदर्शने इन्द्रियसन्निकर्षत्वमनोमयत्वोक्तिः इन्द्रियसृष्टौ अनुग्राहक-राजसाहङ्कारग्रहणाय। अत एव राजसाहङ्कारस्य न पृथक्कार्यप्रदर्शनं तस्य अनुग्राहकमात्रत्वेन पृथक्कार्याक्षमत्वात् एतच्चाग्रे स्फुटी भविष्यति। तेनातिक्रान्ताहङ्कारेण सह उपलक्षितः विज्ञानतत्त्वं महान्तं याति "विज्ञानसारथिर्यस्तु" (कठ.उ. 3-9) "बुद्धिंतु सारथिं" (कठ.उ. 3-3) "महान् वै बुद्धिलक्षणः" इति वचनानामैकार्थ्यात् गुणसाम्यावस्थप्रकृत्यतिक्रमणमाह- गुणसन्निरोधमिति। गुणानां सत्त्वरजस्तमसां सन्निरोधः साम्यं यस्मिन् तत्, प्रधानं याति इत्यर्थः।।३०।।

अवसाने प्रकृतेरवधौ "गौरनाद्यन्तवती सा जनित्री" (मन्त्रि.उ.4) "नित्या सततविक्रया" (परमसंहिता) इति प्रकृतेः नित्यत्वात् देशावधिः अवसानशब्दोक्तः स्वकीयभूतसूक्ष्मेन्द्रियाणां स्वकारणेषु लयोऽप्यवसानशब्दविवक्षितः। तेन आत्मना विरजसा स्वरूपेण उपलक्षितः शान्त-मूर्मिषट्करहितमानन्दं निरतिशयानन्दस्वरूपम् आत्मानं परमात्मनम्। आनन्दमयः परमात्मसाम्यापत्त्या आनन्दमयः स्वयं निरतिशयानन्दप्रचुरः उपैति। आत्मानन्दशब्दाभ्यां "आत्मन आकाशः सम्भूतः" (तैत्ति.उ. 2-1-1), "आनन्दो ब्रह्मेति व्यजानात्" (तैत्ति.उ. 3-6) इति उपक्रमोपसंहारगतवाक्यद्वयं स्मारितम्। एवं "क्षयन्तमस्य रजसः पराके" "आदित्यवर्णं तमसः परस्तात्" (पु.सू. 2-1) "तदक्षरे परमे व्योमन्" (मना.उ. 1-2) इत्युक्तप्रकृतिपुरुषातीत परमाकाशस्था भगवत्प्राप्तिः अर्चिरादिना गतस्योक्ता। एवं "स एनान् ब्रह्म गमयति" (छान्दो.उ. 4-15-5) इत्यस्यार्थः उक्तः। अथ धूमाद्यर्चिरादिमार्गयोः प्रामाणिकत्वं कथयन् "एतेन प्रतिपद्यमानाः" (छान्दो.उ. 4-15-5) इत्यंशस्य अर्थमाह- एतामिति। भागवतीं भगवदुद्देश्यां गतिम् अर्चिरादिमार्गं यो गतः स पुनः इह [1]प्रकृतिमण्डले अङ्ग कर्माधीनदेहं प्रति न निषज्जते नासक्तो भवति।।३१।।

अथ मार्गद्वयमुक्तं निगमयति **एते** इति। एते सृती इमौ मार्गौ अर्चिरादिधूमादिमार्गौ वेदगीते। "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति" (छान्दो.उ. 5-10-1) "अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति" (छान्दो.उ. 5-10-3) इत्यादि वेदबोधिते। अत एव सनातते स्थिते। त एव सृती हे नृप! त्वयाऽभिपृष्टे च यच्छ्रोतव्यमित्यनेन अर्चिरादिमार्गस्येव धूमादि-मार्गस्यापि पृष्टत्वात् चकारात् मया कथिते [2]चेत्यर्थः सनातनत्वं विशदयति। ये इति। ये वै ये सृती पुरा कल्पादौ ब्रह्मणे चतुर्मुखाय आराधितः सम्यगुपासनया प्रीतः वासुदेवः सर्वभूतान्तरात्मा भगवानाह उवाच तस्मात् सनातने इत्यर्थः।।३२।।

---

1. A.B. तत्र° 2. W. इ°

संसारिणोऽर्चिरादिप्राप्तौ भक्तियोगात् अन्य उपायो नास्ति अर्चिरादिगतिचिन्तापि भक्तियोगोपाय इत्याह **न हि** इति। अत अर्चिरादेः अन्यः अपरः संसृतौ संसारे शिवः पन्थाः कल्याणरूपो मार्गो न विश्रुतः विशेषेण न श्रुतः यतः अर्चिरादिमार्गचिन्तनात् वासुदेवे सर्वान्तरात्मनि भगवति परमात्मनि भक्तिः भवेत् तस्मात् तच्चिन्ता च कार्या। तथा च सूत्रकारः "योगिनः प्रतिस्मर्येते स्मार्ते चैते" (ब्र.सू. 4-2-21) इति। योगिनो योगनिष्ठान्प्रति स्मार्ते स्मृतिविषयभूते स्मर्तव्ये देवयानपितृयाणाख्ये गती स्मर्येते योगाङ्गतया; अनुदिनं "नैते सृती पार्थ जानन् योगी मुह्यति कश्चन। तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन!" (भ.गी. 8-27) इति स्मरणादिति सूत्रार्थः।।३३।।

**विज०** उक्तमुक्तिशेषमाह - **स** इति। भूतसूक्ष्मेन्द्रियसन्निकर्षात्। भूतसूक्ष्मैः पञ्चभूतैः शब्दादि तन्मात्रादिभिः। तथाभूतसूक्ष्मैः जीवराशिभिश्चेन्द्रियैश्च तदभिमानिभिश्च सहितोऽनादिः सनातनः सोऽसौ भगवान् विकार्यं विविधकार्ययुक्तं देवमयं देवप्रधानं मनोमयं मनस्तत्त्वस्थेन्द्रियस्थितविरिञ्चगतमानसनामानं स्वात्मानं यातीति अन्वयः। नातनेन नादेन सहितत्वात्सनातनः "नादेन तेन महता सनातन इति स्मृतः" (भार. 12-202-26) इति। "मनःस्थितो हरिर्नित्यं सर्वदेवेषु संस्थितः। देवप्रधानकान् लोकान् करोत्यनुगतः सदा" (वाराहे) इति च योऽसौ अनादिः मनोमयो विष्णुः तं यातीति चोभयथाऽपि तस्यैव गम्यत्वं गन्तृत्वं च ज्ञातव्यम्। मनःस्थं मानसस्थं मानसनामानं स्वात्मानं संसाद्य स हरिरुमा-स्थितविरिञ्चस्थितस्वात्मद्वारा मतिशब्दवाच्यमहङ्कारगतवाणीस्थविरिञ्चस्थं स्वात्मानं मत्या मतिस्थेन तेन मनःस्थेन च सह विज्ञाननामानं विज्ञानतत्त्वाख्यवाणीगतविरिञ्चस्थं स्वात्मानं याति।।३०।।

तेन विज्ञानतत्त्वगतेन हरिणा गुणसन्निरोधं सत्त्वादिगुणविधुरं सर्वमूलकारणं महत्तत्त्वाख्य-विरिञ्चगतं विज्ञाननामानं याति। एवं सर्वान्तर्यामिरूपैः एकीभूतः स महत्तत्त्वान्तर्यामी। विज्ञाननामा हरिः आत्मना विशिञ्चेन सह शान्तिं चित्तप्रकृतिस्थितमानन्दनामानं हरिं याति। स आनन्दमयः पूर्णानन्दः आनन्दनामा महत्तत्त्वगतो विष्णुः श्रियाऽनुज्ञातं ब्रह्माणमादाय अवसाने द्विपरार्धावसाने सर्वात्मके सर्वान्तर्यामिणि गुणबृंहिते परिपूर्णे ब्रह्मणि वासुदेवाख्ये विहरति। जीवसङ्घः स्वस्वयोग्यतानु-सारेण बृंहितत्वाच्च ब्रह्माख्ये स्वमूलरूपे, विहरतीति शेषः। इत्येषा देवानां मुक्तिरिति भावः। एवं स्वस्वबिम्बद्वारेण हरिं प्रविष्टानां पुनरावृत्तिः नास्तीत्याह वासुदेव इति।।३१।।

यो भागवत आत्यन्तिको भक्तो वासुदेवे एतां सायुज्याख्यां गतिं मुक्तिं गतः स ब्रह्मादिसङ्घः पुनरिह संसारे न विषज्जते, संसारविषयो न इत्यन्वयः। वैशब्देन, आनन्दसंज्ञकेनापि ब्रह्मणा परस्परैक्यं समुद्रे प्रविष्टनदीवत् इत्यादि दर्शयति। ननु इतः आनन्दातिशये नेह विषज्जते इति इदं युक्तम्। तदभावे

1. W. 'णा'

प्रशंसामात्रम् इदं किं न स्यात् इत्येतच्चोद्यं "वासुदेवाश्रिता देवा ब्रह्माद्या मुक्तबन्धनाः" (ब्रह्माण्डे) इत्यादिना परिहर्तव्यम्। उपसंहरति **एते** इति। पुरा चतुर्मुखेन आराधितः पृष्टः भगवान् वासुदेवो द्वे सृती ब्रह्मणे आह। ते एते सृती मया ते कथिते इत्यन्वयः। वक्तव्यत्वे हेतुम् आह त्वया इति। तत्रापि निमित्तमाह वेदेति। अथ इत्यनेन "अथ येऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति" (छान्दो.उ. 5-10-1) इत्यादि वेदं सूचयति वेदगीतत्वेऽपि अश्रद्धेयत्वेन हेयत्वं दृष्टमत्राह सनातने इति नित्यस्थितिहेतुत्वात् इत्यर्थः।।३२।।

अतोऽत्र निःश्रेयसार्थिभिः भागवतमेवाभ्यसनीयमिति भावेनाह - **न हि** इति। इह संसृतौ अतो भागवताख्यात् ग्रन्थात् अविश्रुतःशिवः पन्था नास्ति सज्जनकरुणया, भागवतोक्तत्वादिति शेषः। हेत्वन्तरमाह वासुदेव इति।।३३।।

**रा०कृ०** सः योगी भूतसूक्ष्मेन्द्रियसन्निकर्षतामसराजसाहङ्कारयोः भूतसूक्ष्माणां इन्द्रियाणां च लयेन सहितं मनोमयं देवमयं सात्त्विकाहङ्कारे मनसः इन्द्रियाणां च लयेन सहितं विकार्यं विविधकार्य-सहितमहङ्कारं संसाद्य प्राप्य तेन अहङ्कारेण सह गत्या गमनेन विज्ञानतत्त्वं महत्तत्त्वं याति, अहङ्कारं महत्तत्त्वे प्रविलापयतीति भावः। ततः तेन महत्तत्त्वेन गुणसन्निरोधं गुणलयोपेतं प्रधानं याति। महत्तत्त्वं प्रधाने प्रविलापयतीति भावः।।३०।।

अङ्ग! हे राजन्! तेन प्रधानरूपेण आत्मना वर्तमानो योगी अवसाने तस्याप्युपाधेः अन्ते आनन्दमयस्सन् शान्तं विकृतिरहितं आनन्दं आनन्दस्वरूपं आत्मानं परमात्मानमुपैति प्राप्नोति। एतां भागवतीं भगवत्सम्बन्धिनीं गतिं यो गतः सः पुनरिह संसारे न वै विषज्जते नैवावर्तते। सर्वान्तर्यामीश्वर-प्रज्ञात्वेनावस्थितो निर्भयो हि योगी पञ्चभूतेषु, पञ्चतन्मात्रासु च अन्तर्यामितामुपेत्य गन्धादिना परिणतमात्मानमेव भुनक्ति। अनन्तरमहङ्कारात्मना परिणतः ततो महत्तत्त्वे प्रज्ञारूपेण प्रविश्य तद्गतत्रिगुणान्तर्यामित्वमाप्नोति। तदनन्तरं प्रधानाभिधां मूलप्रकृतिमभिव्याप्य कृत्स्नमपि देहमात्मत्वेना-धिश्रित्य प्रकृत्यतीतः आनन्दमयश्च भूत्वा विश्वव्याप्ते वासुदेव परब्रह्मणि प्रविलीयते। अयं च मुक्तो देहधारी सन्नपि संसारबद्धो नैव भवति। एवम् अत्र सांख्यमनुसृत्य सृष्ट्यभिव्यक्तिप्रक्रिया, योगमनुसृत्य जीवस्य मोक्षसाधनप्रक्रिया च निरूपिते।।३१।।

हे नृप! पुरा आराधितो ब्रह्मणा पूजितः पृष्टश्च भगवान् वासुदेवः ये वै सृती ब्रह्मणे आह उक्तवान् वेदगीते सनातने शिष्टपरम्परागते त्वयाऽभिपृष्टे एते ते सृती सद्योमुक्तिक्रममुक्तिरूपे गती, वर्णिते इति शेषः ।।३२।।

भगवति वासुदेवे यतो यस्मात् साधनात् भक्तियोगो भवेत् अतः अस्मात् साधनात् अन्यो भिन्नः शिवः क्षेमकरः पन्थाः मार्गः इह संसृतौ संसारे विशतो जीवस्य न हि नास्ति खलु। सद्योमुक्तिः तावत् भक्तिसहकृताष्टाङ्गयोगसाधनेन सिद्ध्यति। क्रममुक्तिस्तु प्रथमतः भगवतः विश्वमयस्य विराड्विग्रहं ध्यात्वा विषयवासनाभिः विमुक्तिं च प्राप्य, पश्चात् विष्णोः दिव्यस्वरूपं अनुध्याय तत्सर्वान्तर्यामितारूढभावनया लभ्यते। गुरुशास्त्रसाध्यसाधनादौ वासुदेवं अथवा सर्वान्तर्यामिणमीश्वरम् अनुसन्धाय, तत्समर्पणधिया सत्कर्माचरणमेव भक्तियोगनाम्ना व्यवह्रियते अतः तद्योगसाधको मर्ग एव क्षेमकरः।।३३।।

**भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया।**
**तदध्यवस्यत् कूटस्थो[2] रतिरात्मन् यतो भवेत्।।३४।।**

**भगवान् सर्वभूतेषु लक्षितः स्वात्मना[3] हरिः।**
**दृश्यै बुद्ध्यादिभिर्द्रष्टा लक्षणैरनुमापकैः।।३५।।**

**तस्मात् सर्वात्मना राजन्! हरिः सर्वत्र सर्वदा।**
**श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यो भगवान्नृणाम्।।३६।।**

**पिबन्ति ये भगवत आत्मनः सतां कथामृतं श्रवणपुटेषु[4] सम्भृतम्।**
**पुनन्ति ते विषयविदूषिताशयं व्रजन्ति[5] तच्चरणसरोरुहान्तिकम्।।३७।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
द्वितीयस्कन्धे द्वितीयोऽध्यायः।।२।।

**श्रीध०** कुत एतत्[6] अत आह - **भगवान्** इति। भगवान् ब्रह्मा कूटस्थो निर्विकारः एकाग्रचित्तस्सन् इत्यर्थः। त्रिः त्रीन् वारान् कार्त्स्न्येन साकल्येन ब्रह्म वेदमन्वीक्ष्य विचार्य यतः [7]यस्मात् आत्मनि हरौ रतिः भवेत् तदेव मनीषयाऽध्यवस्यत् निश्चितवान्।।३४।।

ननु अनुभूतेऽर्थे रतिः भवति अननुभूते[8] तु भगवति कथं रतिः स्यात् तत्राह - **भगवान्** इति। भगवान् लक्षितः दृष्टः। कथम्? स्वात्मना क्षेत्रज्ञान्तर्यामितया। कैः? दृश्यैः बुद्ध्यादिभिः। तदेव द्वेधा

1. M.Ma. "पश्यद्धि कूटस्थे 2. W. "स्थे 3. M.Ma. चाऽऽ" 4. AF.GF. "न 5. M.Ma. add ते 6. H.V. इति 7. A.B. Omit यस्मात् 8. H.V. "तेऽर्थे

दर्शयति। दृश्यानां जडानां दर्शनं[1] स्वप्रकाशं द्रष्टारं विना न घटत इत्यनुपपत्तिमुखेन लक्षणैः स्वप्रकाशान्तर्यामिलक्षणैः[2] तथा बुद्ध्यादीनि कर्तृप्रयोज्यानि करणत्वात् वास्यादिवत्[3] इति व्याप्तिमुखेन अनुमापकैः स्वतन्त्रश्च कर्ता इत्येवम् ईश्वरसिद्धिः।।३५।।

यच्छ्रोतव्यमित्यादिप्रश्नस्य[4] उत्तरमुक्तमुपसंहरति[5] - **तस्मात्** इति।।३६।।

श्रवणादिफलमभिनयेनाह[6] - **पिबन्ति** इति। सतामात्मनः आत्मत्वेन प्रकाशमानस्य कथैव अमृतम्। विषयैः विदूषितं मलिनीकृतमाशयं पुनन्ति शोधयन्ति तस्य चरणसरोरुहान्तिकं[7] श्रीविष्णुपदं व्रजन्ति।।३७।।

इति श्रीमद्भागवते द्वितीयस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां द्वितीयोऽध्यायः।।२।।

**वीर०** कथं वासुदेवे भक्तिरेव अर्चिरादिगतौ उपायः इत्यत्राह - **भगवान्** इति। "एवमेष महाशब्दो मैत्रेय भगवानिति" (विष्णु.पू. 6-5-76) इत्यादिप्रकारेण भगवच्छब्द शब्दितो वासुदेव एव ब्रह्म जगत्कारणं तद्भक्तिरेव मोक्षोपायः कथमित्यत्राह कार्त्स्न्येन इति। मनीषया बुद्ध्या कार्त्स्न्येन त्रिः अन्वीक्ष्य कृत्स्नप्रमाणजातं मुहुर्मुहुः आलोच्य "आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः" (भार. 13 App. 13-20) इतिवत् तदध्यवस्यत् निश्चित्य स्थितः। किमध्यवस्यत् इत्यत आह कूटस्थ इति। निर्विकारे परमात्मनि रतिः मुक्तौ आनन्दः निरतिशयानन्दपरमात्मानुभवजनितसर्वावस्थोचिताशेष-शेषतैकरतिर्यतो भक्तियोगाद्भवेत् स एव भक्तियोगो मुक्त्युपायः इति निश्चित्य निपुणतरो लोकः स्थित इत्यर्थः।।३४।।

ननु अतीन्द्रिये भगवति कथं भक्तिः उत्पद्यते कथन्तरां रतिरित्याशङ्क्य परिशुद्धमनोविषयत्वादु-भयमपि सम्भवतीत्याशयेनाह - **भगवान्** इति। स्वात्मना योगपरिशुद्धमनसा सर्वभूतेषु भगवान् लक्षितः साक्षात्कारार्हः "मनसा तु विशुद्धेन" (व्यासस्मृतिः) "मनसाभिक्लृप्तः" (म.ना.उ. 1-11) इति श्रुतेः। तर्हि स किं घटादिवत्[8] दृश्य एव इत्यत आह द्रष्टा सर्वज्ञः न केवलं योगपरिशुद्धमनोविषय एव,[9] प्रमाणान्तरविषयोऽपीत्याह - दृश्यैरिति।[10] दृश्यैः बुद्ध्यादिभिः महदादिभिः "महान्वै बुद्धिलक्षणः" इति वचनात् कार्यभूतैर्महदादिभिः[11] द्रष्टा तत्कारणभूतोऽनुमीयते इत्यर्थः न केवलमनुमानविषय एव किन्तु

1. B. adds बुद्ध्यादीनां 2. B.H.V. °कैः 3. H.V. °स्या° 4. A. °श्रोत° 5. A.B. Omit °मुक्त° 6. B. °णफ° 7. A.B. °पद्मा° 8. A.B. add उपलक्षितः 9. A. °एवं 10. A.B. Omit दृश्यैरिति दृश्यैः 11. W. °तैर्म°

शास्त्रविषयोऽपि इत्याह लक्षणै रनुमापकैरिति पदद्वयेन। लक्षयन्तीति लक्षणानि वेदान्तवाक्यानि "सत्यं ज्ञानमनन्तं ब्रह्म" (तैत्ति.उ. 2-1-1) "यतो वा इमानि भूतानि" (तैत्ति.उ. 3-1) इत्यादीनि। तथा तदुपजीव्यकारणत्वप्रतिपादकानि "सदेव सोम्येदमग्र आसीत्" (छान्दो.उ. 6-2-1) इत्यादीनि तैः अनुमापकैः स्मृतिवचनैः स्मृतीनां श्रुत्यनुमापकत्वात् श्रुतिस्मृतिभ्याम् उपलक्षितः अनेन केवलानुमानगम्यत्ववादिनो वैशेषिका निरस्ताः। तन्निरासप्रकारस्तु[1] "शास्त्रयोनित्वात्" (ब्र.सू. 1-1-3) इत्यधिकरणसाध्यः। बुद्ध्यादिकार्यवर्गैः उपलक्षितः[2] जगत्कारणतया शास्त्रैः प्रतिपन्नः तत्स्वरूपं तु योगपरिशुद्धमनसा साक्षात्कुर्वन्तीत्यागमोत्थविवेकजन्यज्ञानद्वयविषयत्वमुक्तं भवति।।३५।।

यच्छ्रोतव्यमित्यादिप्रश्नोत्तरमुपसंहरति - **तस्मात्** इति। स्पष्टोऽर्थः।।३६।।

अस्तु। योगपरिशुद्धमनोग्राह्यत्वं योगारम्भो वा कथं स्यात् इत्यत[3] आह - **पिबन्ति** इति। भगवत आत्मनः परमात्मनः कथामृतं ये पिबन्ति ते विषयविदूषिताशयं पुनन्तीति अन्वयः। कथामृतं वा कथं लभ्यते इत्यत आह सतामिति। सतामिति कर्तरि षष्ठी। सद्भिः कर्णपुटेषु सम्भृतं पूरितम्। अनेन सत्सेवया प्रथमं भवितव्यमित्युक्तं भवति। सत्सेवया प्राप्तहरिकथाश्रवणेन विषयैः शब्दादिभिः विदूषितं कलुषितम् आशयं अन्तःकरणं पुनन्ति। सत्सेवादि भक्तियोगान्तस्य फलमाह व्रजन्तीति तस्य भगवतश्चरणसरोरुहयोरन्तिकं समीपं व्रजन्ति प्राप्नुवन्ति। प्रथमं सत्सेवा, ततः श्रवणं, ततो योगारम्भः, ततः आगमोत्थविवेकादिसाधनसप्तक[4]जन्यज्ञानाभ्यासाऽनुगृहीता प्रत्यक्षतापन्ना भक्तिः इत्ययं क्रमोऽत्र उक्तः।।३७।।

इति श्रीमद्भागवते द्वितीयस्कन्धे
श्रीवीरराघवविदुषा लिखितायां श्रीभागवतचन्द्रचन्द्रिकायां
व्याख्यायां द्वितीयोऽध्यायः।।२।।

**विज०** "एकस्य प्रतिभाने[5] तु कृतकान्न विशिष्यते" इत्यत आप्तिमूलत्वेन तदुक्तं प्रमाणमेव इत्याह - **भगवान्** इति। ब्रह्म वेदमन्वीक्ष्य आलोच्य। यतो ग्रन्थात् अभ्यस्तात् आत्मन् आत्मकूटस्थे निर्विकारे हरौ भक्तिलक्षणा रतिः भवेत् तद्भागवतं पुराणमपश्यत् इत्यन्वयः। हिशब्देन नित्यज्ञानेन सिद्धश्च पुनः पुनः अवेक्षत इत्यादिकं सूचयति।३४।।

उत्तमाधिकारिणां वेदादिना भगवत्सद्भावे सिद्धेऽपि इतः एषां तदस्तित्वं कथमवगन्तुं

1. A.B. Omit 'प्रकार' 2. W. Omits उप' 3. W. 'त्र 4. A. 'संपज्जन्य' 5. A.B. 'ने

शक्यमित्याशङ्क्याह - **भगवान्** इति। इतोऽपि इदमेव निश्श्रेयस हेतुत्वात् श्रवणादिनाभ्यसनीयमित्यतो वा आह भगवान् इति। द्रष्टा साक्षी भगवान् अनुमापकैः निश्चयज्ञानजनकैः दृश्यैः हरेः सर्वस्वातन्त्र्यादिना ब्रह्मादिजीवराशेः अस्वातन्त्र्यादिना च प्रमाणेन गृहीतव्याप्तिकैर्बुद्ध्यादिलक्षणैर्लिङ्गैः सर्वभूतेषु नियामकत्वेन स्थित इति आत्मना जीवेन अस्मिन्पुराणे लक्षितो ज्ञात इत्यतः तदस्तित्वे सिद्धे तेन प्रोक्तत्वत् वेदमूलत्वेन आप्तिमूलत्वाच्च इदमवश्यम् अभ्यसनीयमित्यायातमिति भावः। इदं बुध्येयं न चेदमित्यत्र बुद्ध्यादीनां परवश्यत्वदर्शनादन्यो नियन्ताऽस्तीत्यस्य स्वानुभवसिद्धत्वात् स च अन्यो हरिरेव इत्यस्य अवधारणाय चशब्दः। तदुक्तं "समाधावसमाधौ च निस्स्वतन्त्रस्य देहिनः" (ब्रह्मतर्के) इत्यादि।।३५।।

उक्तमुपसंहरति **तस्मात्** इति। यस्मात् सर्वज्ञेन व्यासेन एष नारायण एव वेदवेद्येषु सर्वोत्तमत्वेन द्रष्टव्यत्वेनोक्तः तस्मात् स एव श्रोतव्यः।।३६।।

श्रवणादिफलमाह - **पिबन्ति** इति। सतां सकाशात् श्रवणपुटेषु सम्भृतं पूरितं विषयैः विशेषेण दूषितम्।।३७।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
द्वितीयस्कन्धे द्वितीयोऽध्यायः।।२।।

**रा०कृ०** भगवान् ब्रह्मा कूटस्थः निर्विकारस्सन् मनीषया स्वबुद्ध्या त्रिः त्रीन् वारान् कार्त्स्न्येन साकल्येन ब्रह्म वेदं अन्वीक्ष्य विचार्य यतो यस्मात् साधनात् आत्मन् आत्मनि भगवति रतिः भक्तिः भवेत् तत् तदेव साधनं अध्यवस्यत् समीचीनतया निश्चितवान्। अत्र "त्रिरन्वीक्ष्य" इत्यनेन कर्म भक्तिज्ञानयोगाः ध्वन्यन्ते। तेषु च भक्तियोगस्यैव प्राधान्यमभिहितं तत्र सर्वेश्वरे भगवति सर्वसमर्पणस्य सुकरत्वात्। अयं च ब्रह्मणोऽध्यवसायो विष्णुमयजीवनदायी सर्वेषां संसारिणाम् उपादेयः।।३४।।

दृश्यैः ज्ञानविषयैः अनुमापकैः अनुमितिजनकैः जगत्कर्तृज्ञानशक्त्याद्यनुमितिजनकैः इति भावः। बुद्ध्यादिभिर्लक्षणैः द्रष्टा भगवान् हरिः सर्वभूतेषु स्वात्मना जीवान्तर्यामितया लक्षितः अनुभूतः।।३५।।

हे राजन्! तस्मात् भगवद्भक्तेः संसारभयनिवृत्तिनिमित्तत्वात् सर्वात्मना सर्वप्रकारैरपि सर्वत्र सर्वदा भगवान् हरिः नृणां श्रोतव्यः, कीर्तितव्यः, स्मर्तव्यश्च भवतीति शेषः।।३६।।

आत्मनः सर्वात्मनः भगवतः वासुदेवस्य सतां नारदादीनां भक्तानां च कथामृतं श्रवणपुटेषु

सम्भृतं ये पिबन्ति ते विषयविदूषिताशयं विषयवासनाभिः विदूषितं आशयं स्वान्तःकरणं पुनन्ति शोधयन्ति। किञ्च तच्चरणसरोरुहान्तिकं तस्य भगवतः पादपद्मयोः समीपं व्रजन्ति गच्छन्ति। जीवेषु जगत्कर्तृज्ञानशक्त्याद्यनुमितिबलेन तेषां लक्षणेषु बुद्ध्यादिषु निरन्तरविष्णुमयत्वभावना जागर्ति। ततः तैः लक्षणैः द्रष्टा अथवा ज्ञाता भगवान् हरिरेव भवति। तथा च स ईश्वरः सर्वभूतेष्वन्तर्यामितयाऽनुभूयते। सर्वात्मना सर्वत्र सर्वदा भगवतः श्रवणकीर्तनस्मरणानि लौकिकजीवने श्रोतव्येषु कीर्तनीयेषु स्मरणीयेषु च जनेषु विष्णुमयत्वभावनया भवन्ति। तथा च तत्तज्जनसेवननियमादयो भगवत्सेवननियमादिषु पर्यवस्यन्ति। भगवत्कथामृतश्रवणमिव तद्भक्तपावनगाथा श्रवणमपि चित्तशुद्धेः तद्द्वारा भगवत्प्राप्तेरपि च निदानं भवति। सर्वत्र भगवद्भावनया कुटिलप्रवर्तनदोषप्रदर्शनादिदुर्गुणानां साधकप्रयत्नं विनैव निरवकाशत्वात् - परिहारात्।।३७।।

इति श्रीमद्भागवते द्वितीयस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां
व्याख्यायां द्वितीयोऽध्यायः।।२।।

ooo0ooo

# तृतीयोऽध्यायः

श्रीशुक उवाच

**एवमेतन्निगदितं पृष्टवान् यद् भवान् मम।**
**नृणां य[1]न्म्रियमाणानां मनुष्येषु मनीषिणाम्।।१।।**

**ब्रह्मवर्चसकामस्तु यजेत ब्रह्मणस्पतिम्।**
**इन्द्रमिन्द्रियका[2]मस्तु प्रजाकामः प्रजापतीन्।।२।।**

**देवीं मायां तु श्रीकामस्तेजस्कामो[3] विभावसुम्।**
**वसुकामो वसून् रुद्रान् वीर्यकामोऽथ वीर्यदा[4]न्।।३।।**

**अन्नाद्यकामस्त्व[5]दितिं स्वर्गकामोऽदितेः सुतान्[7]।**
**विश्वान्देवान् रा[6]ज्यकामः साध्यान्संसाधको विशाम्।।४।।**

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

तृतीये विष्णुभक्तेस्तु वैशिष्ट्यं शृण्वतो मुनेः। भक्त्युद्रेकेण तत्कर्मश्रवणादर ईर्यते।।

इदानीम् अन्यदेवताभजनस्यापि पुत्रादिभजनवदेव तुच्छफलत्वेन हेयत्वं वक्तुं पूर्वोक्तमनुवदति **एवम्** इति। ममेति माम्। [8]मनुष्येषु कदाचित् दैवयोगेन मनुष्यत्वं प्राप्तेषु जीवेषु ये मनीषिणः तेषां तत्रापि ये म्रियमाणाः तेषां विशेषत एवमेतत् हरिकथाश्रवणादिकं निगदितं विहितम् इत्यर्थः।।१।।

कामफलप्राप्त्यर्थं अन्येषां देवानां भजनमाह - **ब्रह्मवर्चसेति**। ब्रह्मणस्पतिं [9]वेदस्य पतिं ब्रह्माणं [10]यजेत। इन्द्रियपाटवकामस्तु इन्द्रम्। [11]प्रजाकामः प्रजापतीन् दक्षादीन्।।२।।

**देवीम्** इति। मायां दुर्गाम्। विभावसुम् अग्निम्। वसुकामो धनार्थी [12]वसून्। वीर्यं प्रभावः तत्कामो वीर्यदा[13]न् रुद्रान् यजेत।।३।।

**अन्नाद्येति**। अन्नाद्यं भोज्यं भक्ष्यं च[14]। अदितेः सुतान् द्वादशादित्यान् विशां देशस्थप्रजानां स्वाधीनताम् इच्छन् साध्यान् यजेत।।४।।

---

1. H.V. च म्रि 2. AF.GF. °माय 3. H.M.Ma.V.W. °मस्तु 4. A.B.C.G.I.N.W. °वान् 5. AF.GF. °तिथिं 6. M.Ma.W. °इ 7. W. दि 8. A.B. Omit मनुष्येषु 9. B.H.V. वेदपतिं 10. H.V.Omit यजेत 11.B.H.V.Omit प्रजाकामः 12.A.B.Omit वसून् 13.A.B. °वान् सन् 14. H.V. Omit च

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं मुमुक्षोः भगवच्छ्रवणादिकं कर्तव्यमित्युक्तम्। अथ तदेव व्यतिरेकमुखेन द्रढयितुम् अन्यदेवतानां क्षुद्रफलप्रदत्वं वक्ष्यन् पूर्वोक्तमनुवदति - **एवम्** इति। मनुष्येषु कदाचित् दैववशात् मनुष्यत्वं प्राप्तेषु जीवेषु ये मनीषिणः तेषां तत्रापि ये म्रियमाणाः तेषां विशेषतो यत्कर्तव्यं पुरा मां प्रति पृष्टवान् तद्भगवच्छ्रवणादिकमेव इत्येवं निगदितमुक्तमित्यर्थः।।१।।

कामफलप्राप्त्यर्थम् अन्येषां दैवतानां भजनमाह - **ब्रह्मवर्चसे**त्यादिना। ब्रह्मवर्चसं कामयमानः ब्रह्मणस्पतिं वेदपतिं यजेत भजेत[1]। इन्द्रियकामः इन्द्रियसामर्थ्यकामः इन्द्रं यजेत[2] इत्यनुषङ्गः। एवमग्रेऽपि। प्रजापतीन् दक्षादीन्।।२।।

देवीं देवस्य विष्णोः सम्बन्धिनीं मायां विस्मापनीयशक्तिम्[3]। विभावसुम् अग्निं वसुकामः अर्थकामः वसून् यजेत वीर्यकामस्तु रुद्रान् यजेत। यजनफलमाह वीर्यवानिति। भवेदिति शेषः। इदं सर्वत्र तत्तत्फलावाप्तेः उपलक्षणम्।।३।।

अन्नं भोज्यम्। आद्यं भक्ष्यं खरं विशदम् अभ्यवहार्यं भोज्यं खरं कठिनं विशदं विविक्तावयवं, भक्ष्यमिति शेषः। तदुभयकामोऽदितिं यजेत। अदितेः सुतान् देवान् आदित्यान् वा। दिशां संसाधकः दिक्पतित्वकामः।।४।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

हरेः श्रवणादिजनितभगवद्भक्तिरेवापेक्षिताशेषपुरुषार्थसाधनं नान्यदन्यदेवतायागादिकं प्रातिस्विकफलदं तदपि हर्येकायत्तम् इत्येतत् अस्मिन् अध्याये निरूप्यते। तत्र प्रथमतः वृत्तमनुवदति - **एवम्** इति। भवान् मनुष्येषु मध्ये म्रियमाणानां मनीषिणां नृणां यत्कर्तव्यत्वेन मम[4] सकाशे पृष्टवान् तदेवं निगदितं यद्वा मनुष्येषु म्रियमाणानां नृणां यत्कर्तव्यत्वेन मनीषिणां मतं पृष्टवान् एतदिति।।१।।

इदानीं प्रातिस्विकफलप्रदं यागप्रकारमाह - **ब्रह्मेति**। ब्रह्मवर्चसकामो वृत्ताध्ययनसम्पत्कामः। शिष्यप्रशिष्यादिषु वेदप्रणेतृत्वेन ब्रह्मणस्पतिं वेदस्य पतिं बृहस्पतिं 'बृहजातिजीवकमलासनशब्दराशिषु' इति धातोश्च यजेत। तत्तत्तन्त्रोक्ततत्तद्द्रव्यैः इति शेषः। तुना ब्रह्मणि बुद्धिं सूचयति। इन्द्रियकामः चक्षुरादीन्द्रियपाटवकामः शुक्रस्तम्भनकामो वा प्रजाकामः "प्रजा तु जनपुत्रयोः" (वैज.को.6-2-23) इति यादवः। प्रजापतीन् कश्यपादीन्।।२।।

---

. A.B. Omit भजेत 2. W. भ 3. W. 'स्मय' 4. A.B. मत्सकाशे

मायां देवीं लक्ष्मीं विभावसुम् अग्निं "तेजो बले प्रभावेऽन्ने ज्योतिष्यर्चिषि रेतसि" (वैज.को. 6-3-14) इति च। वसुकामो हिरण्यकामः वीर्यकामः "वीर्यं पराक्रमे तेजस्यन्नमाहात्म्ययोरपि" (वैज.को.6-3-32) इति च।।३।।

विशां वैश्यानाम् ।।४।।

## श्रीराधाकृष्णप्रणीता सुधीसुधा

मनुष्येषु मनीषिणां विवेकिनां म्रियमाणानां आसन्नमरणानां नृणां यत् कर्तव्यं भवान् मम मां पृष्टवान् तदेतत् हरिकथाश्रवणादिकं एवमुक्तप्रकारेण निगदितम् अभिहितम्।।१।।

अथ सकामसाधना उच्यते - ब्रह्मवर्चसकामः वेदाध्ययनजनिततेजःकामः ब्रह्मणस्पतिं वेदप्रवर्तकं ब्रह्माणं यजेत भजेत। इन्द्रियकामस्तु इन्द्रियसामर्थ्याभिलाषी इन्द्रं यजेत। प्रजाकामः सन्तानकामः प्रजापतीन् यजेत।।२।।

श्रीकामः करितुरगादिसम्पत्तिकामः देवीं मायां भगवतः शक्तिरूपां यजेत। तेजस्कामः दुर्धर्षत्वाभिलाषी विभावसुम् अग्निं यजेत। वसुकामः केवलधनार्थी वसून् यजेत। अथ वीर्यकामः वीर्यदान् रुद्रान् यजेत।।३।।

अन्नाद्यकामः अदितिं यजेत। स्वर्गकामः अदितेः सुतान् द्वादशादित्यान् यजेत। राज्यकामः विश्वान् देवान् यजेत। विशां प्रजानां साधकः स्ववशतामिच्छन् साध्यान् यजेत।।४।।

**आयुष्कामोऽश्विनौ देवौ पुष्टिकाम इलां यजेत्।**
**प्रतिष्ठाकामः पुरुषो रोदसीलोकमातरौ।।५।।**

**रूपाभिकामो गन्धर्वान् स्त्रीकामोऽप्सर उर्वशीम्[1]।**
**आधिपत्यकामः सर्वेषां यजेत परमेष्ठिनम्।।६।।**

**यज्ञं यजेत् यशस्कामः कोशकामः प्रचेतसम्।**
**विद्याकामस्तु गिरिशं दाम्पत्यार्थ[2] उमां सतीम्।।७।।**

1. H.V.W. ऊ 2. W. मु

**धर्मार्थ उत्तमश्लोकं[1] तन्तुं[2] तन्वन् पितॄन् यजेत्।**
**रक्षाकामः पुण्यजनान् ओजस्कामो मरुद्गणान्।।८।।**

**श्रीध० आयुष्काम** इति। इलां पृथ्वीम्। प्रतिष्ठास्थानात् अप्रच्युतिः। रोदसी द्यावाभूमी।।५।।

**रूपेति**। अप्सराश्चासौ उर्[3]वशी च ताम् 'आ[4]धिपत्यकामः' इत्यत्र वर्णाधिक्यम् आर्षम्।।६।।

**यज्ञम्** इति। यज्ञं यज्ञोपाधिकम्[5] विष्णुं कोशो[6] वसुसञ्चयः वसुकाम इत्यत्र धनमात्रमिति भेदः। दाम्पत्यम् अन्योन्यप्रीतिः तदेवार्थो यस्य सः।।७।।

**धर्मार्थ** इति। धर्मार्थो धर्मकामः। उत्तम[7]श्लोकोपाधिं विष्णुम्। तन्तुं तन्वन् सन्तानवृत्तिम[8]न्विच्छन्। रक्षा बाधानिवृत्तिः तत्कामः पुण्यजनान् यक्षान्। ओजो बलं तत्कामो म[9]रुद्गणान् देवान्।।८।।

**वीर०** पुष्टिः देहबलं तत्कामः इलां पृथ्वीं यजेत। प्रतिष्ठाकामः स्थानात् अप्रच्युतिकामः रोदसी द्यावापृथिव्यौ तयोः सर्वलोकाधारत्वात् लोकमातृत्वम्।।५।।

रूपमभिकामयमानः अप्सराश्चासा[10]वुर्वशी च ताम्। सर्वेषामाधिपत्यकामः [11]प्रभुत्वकामः परमेष्ठिनं ब्रह्माणम्।।६।।

यज्ञं विष्णुं कोशो वसुसञ्चयः, वसुकाम इत्यत्र धनमात्रमिति भेदः। प्रचेतसं वरुणं विद्याकामः ज्ञानकामः। दाम्पत्यार्थं दम्पत्योः अन्योन्यप्रीत्यर्थं सतीम् इति उमाविशेषणं पतिव्रताम् उमां [12]देवीमित्यर्थः।।७।।

उत्तमश्लोकं विष्णुं तन्तुं सन्तानं तन्वन् विस्तारयन् सन्तान[13]वृद्धिकाम इत्यर्थः। रक्षाकामः बाधानिवृत्तिकामः पुण्यजनान् यक्षान् ओजस्कामः-बलकामः।।८।।

**विज०** इलां भूमिं प्रतिष्ठाकामः स्वस्थानाभ्रंशेच्छुः लोकमातरौ लोकस्य मातापितरौ माता पृथ्वी द्यौः पिता "मधु द्यौरस्तु नः पिता" (म.ना.उ.12-2) इति श्रु[14]तेः।।५।।

---

1. M.Ma. 'मु' 2. AF.GF. तन्तुकामःपि 3. H.V. 'ऊ' 4. A.B. Omit आधि.....आर्जम् 5. A.B. Omit 'क' 6. H.V. धन' 7. B. 'मः 8. B. 'मिच्छन् 9. H.V. Omit मरु.....वान् 10. W. 'वु' 11. W. Omits प्रभुत्व......ब्रह्माणम्। 12. W. Omits देवीम् 13. A.B. 'सृष्टि' 14. M.Ma 'तिः

अप्सराश्चासौ उर्वशी च इति अप्सरउर्वशी ताम्। परमेष्ठिनं चतुर्मुखम्।।६।।

यज्ञम् इन्द्रं फलभेदात् न पुनरुक्तिः कोशकामो निधिकामः प्रचेतसं वरुणं गिरिशं दक्षिणामूर्तिधरं दाम्पत्यार्थेऽखण्डितदाम्पत्याय।।७।।

धर्मार्थम् अक्षयपुण्यफलार्थम् उत्तमश्लोकं विष्णुम्। "अकामो धर्मकामो वा मोक्षकामोऽपि यो भवेत्। अथवा सर्वकामो यः स विष्णुं पुरुषं यजेत्" (स्कान्दे) इत्यनेन विष्णुरेव उत्तम इति निश्चीयते। अकामः पुरुषं पुमानित्यत्रापि पुरुषो विष्णुरेव अस्मात् उक्तप्रमाणात्। तन्तुं सन्तत्यविच्छेदं तन्वन् विततं कुर्वन्। पुण्यजनान् यक्षान् मणिभद्रादीन्।।८।।

**रा०कृ०** आयुष्कामः अश्विनौ देवौ देववैद्यौ यजेत्। पुष्टिकामः देहबलाभिलाषी इलां भूमिं यजेत्। प्रतिष्ठाकामः पुरुषः लोकमातरौ जीवाधारभूतौ रोदसी द्यावापृथिव्यौ यजेत्।।५।।

रूपाभिकामः सौन्दर्याभिलाषी गन्धर्वान् विश्वावसुप्रमुखान् यजेत। स्त्रीकामः सुन्दरीप्राप्तिकामः अप्सरउर्वशीं अप्सरोरूपामुर्वशीं यजेत। सर्वेषामाधिपत्यकामः परमेष्ठिनं सर्वेश्वरं ब्रह्माणं यजेत्।।६।।

यशस्कामः यज्ञं यज्ञमयं विष्णुं यजेत। कोशकामः धनागाराभिलाषी प्रचेतसं वरुणं यजेत्। विद्याकामस्तु गिरिशं शम्भुं यजेत्। दाम्पत्यार्थः दम्पत्योः अन्योन्यप्रीतिकामः उमां सतीं सत्युमाजन्मद्वयव्यापिनीं महादेवपत्नीं यजेत्।।७।।

धर्मार्थः धर्मकामः उत्तमश्लोकं विष्णुं यजेत्। तन्तुं सन्ततिविस्तारं तन्वन् इच्छन् पुरुषः पितॄन् अग्निष्वात्तादीन् पितॄन् यजेत्। रक्षाकामः पुण्यजनान् यक्षान् यजेत्। ओजस्कामः बलकामः मरुद्गणान् देवगणान् यजेत्।।८।।

**राज्यकामो मनून् देवान् निर्ऋतिं त्वभिचरन्[1] यजेत्।**
**कामकामो यजेत् सोममकामः पुरुषं[2] परम्।।९।।**

**अकामः सर्वकामो वा मोक्षकाम उदारधीः।**
**तीव्रेण भक्तियोगेन यजेत पुरुषं परम्।।१०।।**

---

1. AF.GF. नरः 2. M.Ma. पुमान्

**एतावानेव यजतामिह निःश्रेयसोदयः।**
**भगवत्यचलो भावो यद्भागवतसङ्गतः।।११।।**

**ज्ञानं यदा[1] प्रतिनिवृत्तगुणोर्मिचक्रमात्मप्रसाद उत[2] यत्र गुणेष्वसङ्गः।**
**कैवल्यसम्[3]मतपथस्त्वथ भक्तियोगः को निर्वृतो हरिकथासु रतिं न कुर्यात्।।१२।।**

**श्रीध० राज्येति**। राज्यं राजत्वं तत्कामो, मनून्[4] देवान् मन्वन्तर[5]पालकान्[6]। राज्ञः कर्म वा[7] राज्यं तत्कामो विश्वान् देवान् इति विशेषः। अभिचरन् शत्रुमरण[8]मिच्छन् निऋतिं राक्षसम्। कामकामः भोगेच्छुः, अकामो वैराग्यकामः पुरुषं परं प्रकृतिव्यतिरेकोपाधिम् ईश्वरम्। 'निऋतिं[9] त्वभिचरन् यजेत्' इत्यत्रापि पूर्ववदेव वर्णाधिक्यम् आर्षम्।।९।।

**अकाम** इति। अकामः एकान्तभक्तः उक्तानुक्तसर्वकामो वा। पुरुषं पूर्णं परं[10] निरुपाधिम्।।१०।।

पूर्वोक्तनानादेवतायजनस्यापि संयोगपृथक्त्वेन भक्तियोगफलत्वमाह - **एतावान्** इति। इन्द्रादीनपि यजतामिह तत्तद्देवतायजने[11] भागवतानां सङ्गतो 'भगवत्यचलो भावो भक्तिर्भवति' इति यदेतावानेव निःश्रेयसस्य परमपुरुषार्थस्य उदयो लाभः। अन्यत्तु स्वर्गादि[12] सर्वं तुच्छमित्यर्थः।।११।।

भागवतसङ्गतः इत्यनेन सूचितां हरिकथारतिं स्तौति - **ज्ञानम्** इति। यत्[13] यासु कथासु ज्ञानं भवति[14]। कीदृशम्? आ[15] सर्वतः प्रतिनिवृत्तम् उपरतं गुणोर्मीणां रागद्वेषादीनां[16] चक्रं समूहो यस्मात् तत्। उत[17] अनन्तरं तद्धेतुः आत्मप्रसादश्च यत्र यासु मनःप्रसादहेतुः गुणेषु विषयेष्वसङ्गो वैराग्यं च। उभयत्रेति पाठे इहामुत्र च गुणेष्वसङ्गः। अथ[18] कैवल्यमित्येव सम्मतः पन्थाः एतादृशो[19] यो भक्तियोगः। निर्वृतः श्रवणसुखेन अन्यत्रानिर्वृत इति वा। तासु हरिकथासु को रतिं न कुर्यात्।।१२।।

**वीर०** राज्यकामः मनुरूपान् देवान् अभिचरन् शत्रुमरणमिच्छन् निऋतिं राक्षसं कामकामः भोगेच्छुः अकामः वैराग्यकामः, परं पुरुषं परमपुरुषं "यो यो यां यां तनुं भक्तः" (भ.गी.7-21) इति रीत्या[20] इन्द्रादिरूपेणापि[21] परमपुरुषस्यैवान्तवत्फलदत्वात्[22] तत्तत्फलेप्सुभिः इज्यमानः परमपुरुष एवान्तवत्फलानि प्रयच्छति "अनन्याश्चिन्तयन्तो माम्" (भ.गी.9-22) इति रीत्या तु भजमानस्य स एव मुक्तिं प्रयच्छति इत्यभिप्रायः।।९।।

---

1. H.V. 'तः; W. 'था 2. H.M.Ma.V.W. 'म' 3. M.Ma. 'म्पृ 4. H.V. मनुरूपान् 5. H.V. Omit मन्वन्तरपालकान् 6. B. 'राधिपान् 7. A.B. Omit वा 8. H.V. 'मन्वि' 9. A.B. Omit निऋतिं.....आर्षम्। 10. A.H.V. Omit परं 11. A.B. 'द्यजनेन 12. B.H.V. Omit स्वर्गादि 13. H.V. 'तः 14. H.V. add तासु रतिं को न कुर्यादित्यन्वयः। 15. H.V. Omit आ सर्वतः 16. H.V. रागादीनां 17. H.V. Omit उत अनन्तरं 18. H.V. Omit अथ 19. B.H.V. Omit एतादृशो 20. A. Omits रीत्या 21. A.B. 'रूपिणोऽपि 22. W. 'प्रद'

उदारधीः इति मोक्षकामविशेषणं तीव्रेण अविच्छिन्नेन भक्तियोगेन।।१०।।

एवं यजद्भिः कदा मोक्षोऽवाप्येत इत्यत आह - **एतावान्** इति। इह अस्मिन् लोके यजतां निःश्रेयसस्य मोक्षस्य उदयो लाभः एतावान् एतदवधिकः भागवतसङ्गाद्भगवत्यचलो भाव इति यत् भागवतस्ङ्गात् भगवत्यचले भावे सति निःश्रेयसोदयः सिद्ध एव। तस्मात् भागवतसङ्गादचलो भाव एव सम्पाद्य इति भावः।।११।।

यद्भागवतसङ्गतः इत्यनेन सूचितां हरिकथां प्रस्तौति - **ज्ञानम्** इति। यासु हरिकथासु ज्ञानादीनि सम्पत्स्यन्ते तासु हरिकथासु रतिं को न कुर्यात् इत्यन्वयः। यदा हरिकथारतिदशायां प्रतिनिवृत्ताः गुणाः सत्त्वादिकार्याणि ऊर्मयः अशनाया पिपासा शोकमोहजरामृत्यवो यस्मात् तथाभूतं ज्ञानम् आत्मप्रसादः चित्तनैर्मल्यम् उभयत्र लोकद्वये गुणेषु शब्दादिषु विषयेष्वसङ्गो वैराग्यं कैवल्ये मुक्तौ सम्मतः पन्था उपायः कैवल्यसम्मतपथः तथाभूतो भक्तियोगश्च इत्येते सम्पत्स्यन्ते तथाभूतासु हरिकथासु निर्वृतः सुखितः रतिमासक्तिं को न कुर्यात् सर्वोऽपि कुर्यादेव इत्यर्थः।।१२।।

**विज०** अभिचरन् परोपद्रवकर्म कुर्वन् निऋतिं कोणदिक्पतिं सोमं चन्द्रम् अकामो निषिद्धकामरहितः पुरुषं पूर्णषड्गुणम्।।९।।

अकामो भगवत्प्रसादमन्तरेणान्यत्राकामः सर्वकामः उक्तसर्वकामोऽन्यदेवतायजनमिच्छन् परं पुरुषं यजेत विष्णुयजने साधनमाह तीव्रेणेति।।१०।।

काम्यानुष्ठानस्य यथा मुक्तिसाधनता स्यात् तं प्रकारमाह - **एतावान्** इति। इह कर्मभूमौ यजतां काम्यानुष्ठानं कुर्वतां निःश्रेयसोदयः एतावान् भागवतानां सङ्गतः सेवालक्षणात् भगवति हरौ अचलो भावो भक्तिलक्षण इति यत् स इति।।११।।

भागवतसङ्गादचलो भावः कथं स्यात् इत्याशङ्क्य तेषां सदसि प्रसक्तानां हरिकथाऽमृतानां श्रवणलक्षणपानादिना प्रसन्नान्तःकरणस्य पुंसो हरेः इतरत्र विरक्तस्य ज्ञानसाधनं भगवति अचला-भक्तिः तया ज्ञानं भविष्यति इत्याह - **ज्ञानम्** इति। यदा सत्सभासु प्रसक्ताभिः श्रुताभिः याभिः हरिकथाभिः पुंस आत्मप्रसादो मनसः प्रसन्नता नैर्मल्यलक्षणा तदा उभयत्र इह परत्र च स्वर्गादौ गुणेषु विषयेष्वसङ्गः फलस्नेहराहित्यलक्षणवैराग्यं भवति। अथ भक्तिसाधनवैराग्यजन्मानन्तरं कैवल्यसम्भृतपथः सम्यक्सम्पादितमोक्षमार्गो भक्तियोगो जायते। तुशब्दात् तद्भक्तेष्वपि अथात्मनो हरेः प्रसादःस्यात् अनन्तरं

1. W. घ 2. W. 'प्स्य 3. W. भ 4. W. Omits 'रतिं' 5. A.B. अशना

हरेः अपरोक्षज्ञानं भवति, कीदृशम्? प्रतिनिवृत्तमपक्रान्तं सत्त्वादिगुणनिमित्तानाम् 'अस्ति जायते' इत्यादिषडूर्मीणां चक्रं पुनः पुनः आवर्तनं येन तत् तथोक्तं यद्वा अपसारितसत्त्वादि गुणा एव ऊर्मयः तरङ्गाः तेषां चक्रं येन तत्तथेति। यद्वा यासां हरिकथानां श्रवणात् भगवदपरोक्षज्ञानं तदा प्रतिनिवृत्तगुणोर्मिचक्रं सत्त्वादिगुणनिमित्ताशनापिपासाशोकमोहरागद्वेषलक्षणा ऊर्मयः तेषां चक्रं निरस्तं भवति तस्मात् आत्मप्रसादः तस्मादुभयत्र गुणेष्वसङ्गः तस्माद्वैराग्यात् कैवल्यं सम्भ्रियतेऽनेनेति कैवल्यसम्भृतम् अपरोक्षज्ञानं तदेव पन्था मार्गो यस्य स तथोक्तः। एवंविधो भक्तियोगो जायते अथ कस्मात् को निर्वृतो रसज्ञः पुरुषः तासु हरिकथासु रतिं न कुर्यात् इत्यर्थः।।१२।।

**रा०कृ०** राज्यकामः राजत्वाभिलाषी मनून् देवान् आदिराजभूतान् मनुरूपान् देवान् यजेत्। अभिचरन् शत्रुमरणाभिलाषी निर्ऋतिं निर्ऋतिनामानं राक्षसं यजेत्। कामकामः मन्मथवृद्धिमिच्छन् सोमं ओषधिपोषकं चन्द्रं यजेत्। अकामः कामरहितः वैराग्यकामी इत्यर्थः परं पुरुषं भगवन्तं पुरुषोत्तमं यजेत्।

अत्र निर्दिष्टाः अष्टाविंशतिदेवताः तत्तन्मन्त्रतन्त्रविधानैः कृत्तिकादिषु नक्षत्रेषु समुपासिताः अभिलषितान् अर्थान् प्रयच्छन्ति। नक्षत्राणि च एवम् अभिजित्सहितन्याष्टाविंशतिसंख्याकानि इति ज्ञेयम्।।९।।

अकामः सर्वथा वाञ्छारहितः अथवा सर्वकामः उक्तानुक्तसर्वाभिलाषसहितः मोक्षकामः वा उदारधीः उदारबुद्धिः पुरुषं तीव्रेणाविच्छिन्नेन भक्तियोगेन परं पुरुषं पुरुषोत्तमं यजेत।

एतेन उपर्युक्तनानादेवताराधनात् परमपुरुषाराधनमेव प्रशस्ततरमिति ज्ञायते। उक्तं च भगवता श्रीकृष्णेन - "येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः। तेऽपि मामेव कौन्तेय! यजन्त्यविधिपूर्वकम्" (भ.गी.9-23) इति। तर्हि किमिति तत्तद्देवताराधनम् उपदिष्टम्? उच्यते - आदौ अज्ञानवशात् तत्तत्कामावाप्त्यर्थं कृतमपि तत्तद्देवताराधनमन्ते सर्वान्तर्यामीश्वररतिप्रवर्तकत्वात् वरमेव। एतदग्रे स्फुटीभविष्यति।।१०।।

इहलोके यजतां इन्द्रादीन् भजतां यद्यपि कामानुसारेण तत्तत्फललाभः तथाऽपि तद्देवतानुसेवनबलेन निमित्तेन भागवतसङ्गतः भागवतानां भगवद्भक्तानां सङ्गतः सङ्गात् भगवति सर्वान्तर्यामिणि ईश्वरे अचलो भावः निश्चलरतिः भवतीति यत् सः एतावानेव निश्श्रेयसोदयः परमपुरुषार्थलाभः। ननु इन्द्रादीन् भजतां कथं भागवतसङ्गः? उच्यते - इन्द्रादिसेवनलब्धेनान्तवत्फलजातेन व्यथितहृदयः साधकः कदाचित् इहजन्मनि वा जन्मान्तरे वा आत्यन्तिकदुःखविमुक्तिम् अत्यन्तम् अभिलषति। तदा तदार्तिरेव तस्मै सम्पादयति भागवतसङ्गम्।।११।।

यतो याभिः हरिकथाभिः प्रतिनिवृत्तगुणोर्मिचक्रं प्रतिनिवृत्तं उपरतं गुणोर्मीणां गुणकार्यरागादीनां

तरङ्गाणां चक्रं चक्रवत्परिवर्तनं येन तत् ज्ञानं भवति। ततः आत्मप्रसादः ज्ञाननिमित्तकः मनःप्रसादः भवति। ततः उभयत्र इहलोके परलोके च गुणेषु विषयेषु असङ्गः मनःप्रसादप्रयुक्तं वैराग्यं भवति। अथ वैराग्योदयानन्तरं कैवल्यसम्मतपथः कैवल्यस्य मोक्षस्य सम्मतः साधनत्वेन सम्मतः पन्थाः मार्गः भक्तियोगश्च भवति। तासु हरिकथासु निर्वृतः भक्तिसुखनिमग्नः अथवा निर्वाणप्राप्तिकामः को वा जनो रतिम् अनुरागं न कुर्यात्? सर्वोऽपि कुर्यादेवेति भावः।।१२।।

**शौनक उवाच**

**इत्यभिव्याहृतं राजा निशम्य भरतर्षभः।**
**किमन्यत्पृष्टवान् भूयो वैयासकिमृषिं कविम्।।१३।।**

**एतच्छुश्रूषतां विद्वन्! सूत नोऽर्हसि भाषितुम्।**
**कथा हरिकथोदर्काः[1] सतां स्युः संदसि[2] ध्रुवम्।।१४।।**

**स वै भागवतो राजा पाण्डवेयो महारथः।**
**बालक्रीडनकैः[3] क्रीडन् कृष्णक्रीडां य आददे।।१५।।**

**वैयासकिश्च भगवान् वासुदेवपरायणः।**
**उरुगायगुणोदाराः सतां[4] स्युर्हि[5] समागमे[6]।।१६।।**

**श्रीध० इतीति**। अभिव्याहृतम् उक्तम्। ऋषिं परब्रह्मदर्शिनं कविं शब्दब्रह्मनिष्णातम्।।१३।।

**एतत्** इति। श्रवणेच्छायां हेतुः। हरिकथा एव उदर्कः उत्तरफलं यासु ताः कथाः। सतां भागवतानां संदसि[7] सभायां स्युः। अतः[8] एतच्छुश्रूषतां श्रोतुकामानां नः।।१४।।

एतत्प्रपञ्चयति **स वा** इति द्वाभ्याम्। कृष्णपूजादिरूपां क्रीडां यः स्वीकृतवान्।।१५।।

**वैयासकिः** इति। उरुगायस्य भगवतः[9] गुणैः उदारा महत्यः कथाः स्युः।।१६।।

**वीर०** एवं हरिकथाप्रभावे उक्ते पुनः जगद्व्यापारि[10]रूपहरिकथाबुभुत्सया मुनिनृपयोः संवादमवतारयितुं

---

1. M.Ma. 'गुणो' 2. H.V.W. संसदि 3. B. 'ल' 4. H.V.W. कथाः 5. H.V. स्युस्सत्स 6. W. 'दा' 7. H.V. संसदि 8. B.H.V. Omit अतः ......नः 9. A.B. Omit भगवतः 10. W. 'रादि'

शौनकः पृच्छति - **इति** इत्यादिना। इति पूर्वोक्तप्रकारेणाभिव्याहृतं भाषितं[1] निशम्य श्रुत्वा भरतर्षभः भरतवंशश्रेष्ठो राजा परीक्षित् ऋषिं परब्रह्मदर्शिनं कविं शब्दब्रह्मणि[2] निष्णातं वैयासकिं व्यासपुत्रं श्रीशुकं किं प्रति अन्यत् किं पृष्टवान्?।।१३।।

' एतच्छुश्रूषतां[3] श्रोतुमिच्छतां[4] नःअस्मकं हे सूत! हे विद्वन्! भाषितुं वक्तुमर्हसि तत्प्रश्नप्रश्ने[5] तव को लाभ इति चेत् तत्राऽऽह कथा इति। हरिकथैव उदर्कः उत्तरफलं यासां ताः हरिकथोदर्काः हरिकथाप्रधाना इत्यर्थः। तथाभूताः कथाः सतां भगवद्भक्तानां संसदि सभायां राजशुकयोः[6] स्युः ध्रुवं निश्चयः। अतः[7] भगवत्कथाश्रवणमेव लाभ इति भावः।।१४।।

राजशुकयोः[8] भगवद्भक्तत्वमेव आह - **स** इति सार्द्धेन। पाण्डवेयो महारथः राजा महाभगवतः यो राजा बालक्रीडनकैः बाल्यक्रीडाभिः[9] क्रीडन् कृष्णक्रीडां श्रीकृष्णसेवारूपां[10] क्रीडाम् आददे। तस्य क्रीडाऽपि श्रीकृष्णपूजारूपा एव। अतः आबाल्यं[11] भागवत इत्यभिप्रायः।।१५।।

एवं भगवान् "उत्पत्तिं प्रलयं चैव भूतानाम्" (विष्णु.पु.6-5-78) इत्यादिगुणविशिष्टो वैयासकिः वासुदेवपरायणः[12] वासुदेवः परमप्राप्यं परमोपायश्च यस्य स तथोक्तः। एवमुभयोरपि भागवतत्वात् तत्संवाद एव प्रष्टव्य इत्याह। हि यस्मात् सतां भागवतानां आगमे[13] सङ्गतौ उरुगायस्य भगवतः गुणैः उदारा महत्यः कथाः स्युः प्रवृत्ता भवेयुः।।१६।।

विज० परीक्षित्पृष्टशुकोक्तभगवत्कथा तदिद्वगुणीभूतरसैव स्यात् इत्याशयवान् शौनकः सूतं पृच्छति - **इति** इति। ऋषिमात्रस्य त्रिकालदर्शित्वमस्तीत्यतः कविमिति भगवन्तमपरोक्षतो जानातीति।।१३।।

शुश्रूषतां श्रोतुकामानां सत्सभायां कदाचित् प्रसङ्गात् इतरकथाऽपि सम्भाव्यत इति नेत्याह कथा इति। ध्रुवमित्यनेन नियमो दर्शितः।।१४।।

अनयोः एकस्यापि असत्वे नियमभङ्गः स्यादिति नेत्याह **स वा** इति। तत्र हेतुमाह बाल इति।।१५।।

---

1. A.B. Omit भाषितं 2. W. Omits 'णि 3. W. Omits एतत् 4. A.B. Omit श्रोतुमिच्छतां 5. A.B. तत्प्रश्ने 6. W. Omits राजशुकयोः 7. W. 'थ 8. A.B. Omit राजशुकयोः 9. W. बालक्रीडादिभिः 10. W. 'पूजा 11. W. 'ल्यात् 12. A.B. Omit वसुदेवपरायणः 13.A.B. समा'

अस्तु उभयोः सत्त्वं ततः किं तत्राऽऽह उरुगायेति। उरुगाय इत्यनेन हरिकथायाः अवश्यसद्भावं दर्शयति उरुभिः वेदविद्याविशारदैः महद्भिः गीयत इति उरुगायः। सतां समितौ प्राचुर्येण हरिकथासत्त्वेऽपि प्रसङ्गात् अन्यकथा स्यात् न तथा श्रीशुकपरीक्षितोः इत्येतस्मिन्नर्थे हिशब्दः। कथा इति शेषः।।१६।।

**रा०कृ०** इति उक्तरीत्या अभिव्याहृतं श्रीशुकेन कथितं वचनं निशम्य भरतर्षभः भरतकुलश्रेष्ठः राजा परीक्षित् ऋषिं ब्रह्मनिष्ठं कविं शब्दब्रह्मनिष्णातं वैयासकिं व्यासपुत्रं शुकं प्रति भूयः पुनः अन्यत् किं पृष्टवान्?।।१३।।

हे विद्वन्! सूत! एतत् शुकपरीक्षित्सम्भाषणं शुश्रूषतां श्रोतुमिच्छतां नः अस्माकं भाषितुं कथयितुं अर्हसि। हरिकथोदर्काः कथाः सतां भागवतानां सदसि सभायां स्युः भवेयुः ध्रुवं नात्र सन्देहः।।१४।।

यो राजा बालक्रीडनकैः बाल्ये क्रीडावस्तुभिः क्रीडन् कृष्णक्रीडां श्रीकृष्णपूजारूपां क्रीडां आददे। स्वीचकार सः पाण्डवेयः महारथः राजा परीक्षित् भागवतो वै भगवद्भक्त एव।।१५।।

भगवान् वैयासकिश्च श्रीशुकश्च वासुदेवपरायणः। सत्समागमे सतां समाजे उरुगायगुणोदाराः उरुगायस्य भगवतः गुणैः उदाराः कथाः स्युः भवेयुः।।१६।।

**आयुर्हरति वै पुंसामुद्यन्नस्तं[1] च यन्नसौ।**
**तस्यर्ते यत्क्षणो[2] नीत उत्तम[3]श्लोकवार्तया।।१७।।**

**तरवः किं न जीवन्ति भस्त्राः किं न श्वसन्त्युत।**
**न खादन्ति न मेहन्ति किं ग्राम[4]पशवोऽपरे।।१८।।**

**श्वविड्वराहोष्ट्रखरैः सं[5]स्तुतः पुरुषः पशुः।**
**न यत्कर्णपथोपेतो[6] जातु नाम गदाग्र[7]जः।।१९।।**

**बिले बतोरुक्रमविक्रमान् ये न शृण्वतः कर्णपुटे नरस्य।**
**जिह्वासती दार्दुरिकेव सूत! न चो[8]पगायत्युरुगायगाथाः।।२०।।**

1. H.V. °स्तम° 2. M.Ma. यःक्ष° 3. B. °मः 4. B.I. °मे; H.V.W. °म्याः 5. M.Ma. स तुल्यः 6. H.V.W. °तं 7. H.V.W. °भृतः 8. M.Ma. चेतः......थाम्

**श्रीध०** किञ्च। वृथैव क्षीयमाणम् आयुः हरिकथया[1] सफलं कुरु इत्याशयेनाह त्रिभिः **आयुः** इति। असौ सूर्यः उद्यन् उद्गच्छन् [2]अस्तमदर्शनं च यन् गच्छन् यत् येन[3] क्षणो नीतः तस्य आयुः ऋते वर्जयित्वा [4]अन्येषां वृथैव हरति।।१७।।

ननु जीवनमेव तेषामायुषः फलमस्तु[5]! तत्राऽऽह - **तरवः** इति। ननु तेषां श्वासो नास्ति? [6]तत्राऽऽह - तर्हि भस्त्राः चर्ममय[7]कोशाः। ननु तासाम् आहारादिकं नास्ति? तत्राऽऽह - न खादन्ति। नाश्नन्ति। न मेहन्ति। रेतस्सेकं मैथुनं न कुर्वन्ति किम्? [8]उत अपि [9]तमपि नराकारं पशुं मत्वाऽऽह अपरे इति।।१८।।

तदेवाऽऽह **श्वेति**। श्वादिभिः संस्तुतः सदृशः[10] [11]पुरुषः निरूपितः यस्य कर्णपथं कदाचिदपि न[12] [13]गतः सः अवज्ञास्पदत्वात् श्वभिः कश्मलविषयासक्तत्वाद्विड्वराहैः ग्राम[14]सूकरैः कण्टकवत् दुःख[15]दविषया[16]सक्तत्वादुष्ट्रैर्भारवाहित्वात् [17]कामुकत्वात् पदा घ्नन्तीमपि प्रियां त्यक्तुमसमर्थत्वाच्च खरैः तुल्य इत्यर्थः।।१९।।

तस्याङ्गानि च[18] निष्फलानीत्याह **बिले** इति पञ्चभिः। बतेति खेदे। न शृण्वतो अशृण्वतो नरस्य ये कर्णपुटे ते[19] बिले वृथारन्ध्रे, [20]सर्पादिप्रवेशार्हरन्ध्रे वा। न चोपगायति तस्य जिह्वा असती दुष्टा दर्दुरो भेकः तदीया जिह्वेव [21]व्यर्थशब्दैव।।२०।।

**वीर०** किञ्च वृथैव क्षीयमाणमायुः हरिकथायामेव सफलं कुरु इत्याशयेनह **आयुः** इति त्रिभिः। असौ सूर्यः उद्यन् उदयं प्राप्नुवन् अस्तं च यन् तिरोधानं प्राप्नुवन् [22]तिरोभवन् इत्यर्थः। उत्तमश्लोकस्य भगवतः वार्तया कथया यत्क्षणो नीतः यः क्षणो नीतः तस्य ऋते तं क्षणं विना आयुर्हृतं स तु क्षणो न हृतः सफलं इत्यर्थः।।१७।।

ननु जीवनमेव तदायुषः फलमस्तु। तत्राऽऽह - **तरव** इति। उत्पत्तिनाशमध्यस्थितिः जीवनम्। ननु तेषां श्वासो नास्ति? तत्राऽऽह - भस्त्रा इति। चर्मकोशा न श्वसन्ति किम्? वायुमूर्ध्वं न निस्सारयन्ति किम्? ननु तासाम् आहारादिकं नास्ति? तत्राऽऽह - ग्राम्याः[23] पशवः अपरे आयुर्व्ययं कुर्वतश्च न खादन्ति [24]नादन्ति न मेहन्ति न रेतस्सिञ्चन्ति मैथुनं न कुर्वन्ति किम्? इत्यर्थः।।१८।।

[25]तमपि नराकारं पशुं मत्वाऽऽह - **श्वेति**। विड्वराहः ग्रामसूकरः। [26]श्वादिभिः सदृशत्वेन संस्तुतो

1. H.V. 'थायामेव 2. H.V. Omit अस्त......गच्छन् 3. B. adds पुंसां उत्तमः श्लोकस्य वार्तया 4. H.V. Omit अन्येषां 5. A.H.V. 'स्ति 6. A.B. Omit तत्राऽऽह 7. A.H.V. Omit 'मय' 8. H.V. Omit उत अपि 9. A. Omits तमपि 10. B. 'शत्वेन 11. A.B. Omit पुरुषः 12. A. नागतः 13. H.V. 'तं 14. B. 'म्य' 15. B.H.V. Omit 'द' 16. H.V. 'यत्वाद्' 17. A.B. Omit कामुक......त्वाच्च 18. H.V. Omit च 19. V. Omits ते 20. A.B. Omit सर्पा......वा 21. A.B. Omit व्यर्थ.......वा 22. W. निम्रोच' 23. A.B. 'म' 24. W. 'श' 25. A.B. Omit तमपि.....श्वेति 26. A.B. Omit श्वादिभिः......इत्यर्थः

निरूपितः सः क इत्यत आह - नेति। जातु कदाचिदपि गदाभृतो भगवतो नाम न[1] यत्कर्णपथोपेतं न[2] यस्य कर्णपथमुपेतं यस्य कर्णमार्गं न प्राप्नोति स इत्यर्थः।।१९।।

त[3]मेव निन्दति **बिले** इति। उरुक्रमस्य भगवतो विक्रमान् व्यापारान् न शृण्वतो अशृण्वतो नरस्य ये कर्णपुटे ते बिले वृथारन्ध्रे। हे सूत! उरुगायगाथाः भगवत्कथाः न चोपगायति तस्य जिह्वाऽसती दुष्टा दार्दुरिकीव[4] मण्डूकजिह्वेव।।२०।।

**विज०** वासुदेवकथामन्तरेण जीवनं व्यर्थमित्याह - **आयुः** इति। उद्यन् अस्तं च यन् गच्छन् असौ आदित्यः पुंसां यदायुर्हरति वै। "आदित्यस्य गतागतैरहरहः संक्षीयते जीवनम्" (सुभाषिरत्नावल्याम्) इति वचनात् तस्य आयुषो य उत्तमश्लोकवार्त्तया ऋते विना क्षणः कालविशेषः स नीत एव वृथा इत्यन्वयः।।१७।।

हन्त! लोके दीर्घकालं जीवन् पुमान् स्तूयत इति तत्राऽऽह - **तरव** इति। तरूणां श्वासाद्यभावत् इत्यत उक्तं भस्त्रा इति। भस्त्राः दृतयः। अयस्सन्तापनार्थाः चर्मविशेषाः। भस्त्राणां निश्चैतन्यात् न तत्साम्यमत्राऽऽह - नेति। ग्रामपशवः सारमेयादयो मेहन्ति रेतो मूत्रादिकमुत्सृजन्ति अपरे तिर्यग्जाति-व्यतिरिक्ताः स्त्रीपुरुषाः। अनेन हरिचरितश्रवणाभावे चेतनत्वमप्रयोजकमित्युक्तं भवति।।१८।।

एतदेव विशिनष्टि - **श्वविड्इति**। विड्वराहोऽमेध्यशू[5]करः पशुः विवेकशून्यः। 'गदाभृत' इति पाठे गदांभृत इति पदार्थः, ग्रामंश्रित इतिवत्।।१९।।

हतोऽपि हरिकथां श्रावं श्रावं वर्तमानस्य पुंसः श्रोत्रादि इन्द्रियसाफल्येनायुषः साफल्यम् अन्यथा व्यर्थमित्याशयेनाऽऽह - **बिले** इति। शृण्वतः शृणुतः बिले पर्वतस्येति शेषः। उरुगायगाथां न प्रगायति चेत्तर्हि दार्दुरिका दर्दुरस्य विद्यमाना जिह्वाऽसतीव।।२०।।

**रा०कृ०** उत्तमश्लोकवार्तया उत्तमश्लोकस्य भगवतो वार्तया कथया क्षणो नीत इति यत् तस्य ऋते तं क्षणं विना उद्यन् उदयं प्राप्नुवन् अस्तं च अदर्शनं च यन् गच्छन् असौ सूर्य इत्यर्थः पुंसां आयुः हरति वृथैव नयतीति भावः। सर्वान्तर्यामिभगवत्कथया नीतस्य क्षणस्यापि परमसुखपर्यव-सायित्वात् सार्थक्यं तत्कथां विना नानाविधकष्टसुखसमस्याकलुषितया लोकवार्तया नीतं जनस्य सर्वमपि आयुः निरर्थकमेव।।१७।।

---

1. W. Omits न 2. W. Omits न 3. A.B. Omit तमेव......बिले इति। 4. A.B. Omit 'व 5. M.Ma 'सू

तरवो वृक्षाः न जीवन्ति किम्? उत अपि च भस्त्राः चर्मकोशाः न श्वसन्ति किम्? अपरे ग्रामपशवः न खादन्ति किम्? न मेहन्ति किम्? मैथुनं न कुर्वन्ति किम्? केवलजीवनार्थं जनेन न महान् प्रयत्नः कार्य इति भावः।।१८।।

गदाभृतः श्रीकृष्णस्य नाम जातु कदाचिदपि यत्कर्णपथोपेतं यस्य जनस्य कर्णमार्गं न गतं सः पुरुषः पुरुषरूपः पशुः श्वविड्वराहोष्ट्रखरैः संस्तुतः शुनकग्रामसूकरोष्ट्रगार्दभैः तुल्यत्वेन निरूपितः।।१९।।

उरुक्रमविक्रमान् उरुक्रमस्य अत्याश्चर्यचरित्रस्य भगवतो विक्रमान् न शृण्वतः अशृण्वतो नरस्य ये कर्णपुटे वर्तेते ते बिले व्यर्थे रन्ध्रे। हे सूत! उरुगायगाथाः उरुगायस्य भगवतः गाथाः जनो यदि नोपगायति तस्य जिह्वा च दार्दुरिकेव मण्डूकजिह्वेव असती व्यर्थनिनदैः दुष्टैव।।२०।।

**भारः परं[1] पट्टकिरीटजुष्टमप्युत्तमाङ्गं न नमेन्मुकुन्दम्।**
**शावौ करौ नो कुरुतः सपर्यां हरेर्लसत्काञ्चनकङ्कणौ वा।।२१।।**

**बर्हायिते ते नयने नराणां लिङ्गानि विष्णोर्न निरीक्षतो ये।**
**पादौ नृणां तौ द्रुमजन्मभाजौ क्षेत्राणि नानुव्रजतो[2] हरेर्यौ।।२२।।**

**जीवन् शवो भागवताङ्घ्रिरेणुं[3] न जातुमर्त्योऽभिलभेत[4] यस्तु।**
**[5]श्रीविष्णुपद्या मनुजस्तुलस्याः श्वसन् शवो यस्तु न वेद गन्धम्।।२३।।**

**तदश्मसारं हृदयं बतेदं यद्गृह्यमाणैर्हरिनामधेयैः।**
**न विक्रियेताथ यदा[6] विकारो[7] नेत्रे जलं गात्ररुहेषु हर्षः।।२४।।**

**अथाभिधेह्यङ्ग मनोऽनुकूलं प्रभाषसे भागवत[8]प्रधानः।**
**यदाह वैयासकिरात्मविद्याविशारदो नृपतिं साधु पृष्टः।।२५।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
द्वितीयस्कन्धे तृतीयोऽध्यायः।।३।।

1. M.Ma. ेर: 2. AF.GF. ेतां 3. B. ेणून् 4. M.Ma. ेषे 5. AF.GF. यो 6. H.M.Ma.V.W. मुखे 7. W. ेसो 8. AF.GF. ेतः

**श्रीध० भार** इति। पट्टवस्त्रो[1]ष्णीषेण प[2]ट्टेन अभिषेककाले शिरसि निक्षिप्तेन राज्याधिकारसूचकेन वस्त्रेण किरीटेन च[3] जुष्टमपि शिरो यदि न नमेत् तर्हि केवलं भार एव। शवो मृतकस्तत्क[4]रतुल्यौ लसतौ[5] काञ्चनकङ्कणे[6] ययोः तौ। अप्यर्थे वाशब्दः।।२१।।

**बर्हायित** इति। ये नयने विष्णोः मू[7]र्तीः न निरीक्षेते ते बर्हायिते मयूरपिच्छ[8]नेत्रतुल्ये शिखिपिञ्छवर्तिनेत्रस्य नेत्राकारसद्भावेऽपि यथा दर्शनायोगात् आनर्थक्यमिति भावः। द्रुमवज्जन्म भजे[9]त इति तथा वृक्षमूलतुल्यौ इत्यर्थः।।२२।।

**जीवन्** इति। नाभिलभेत अभितो न स्पृशेत् न धारयेत्। श्रीविष्णुपद्याः [10]श्रीविष्णुपदलग्रायाः तु[11]लस्याः गन्धं न वे[12]द अभिघ्राय नाभिनन्दतीत्यर्थः।।२३।।

**तत्** इति। अश्मवत् सारो बलं काठिन्यं यस्य। विक्रिया लक्षणमा[13]ह। अथेति। गात्ररुहेषु रोमसु हर्षः उद्गमः यस्मादभक्तस्य सर्वमेतत् व्यर्थम्।।२४।।

**अथ** इति। मनसोऽनुकूलं प्रियं च प्र[14]भाषसे। अथ अतः का[15]रणात् नृपतिना साधु पृष्टस्सन् वैयासकिः नृपतिं प्रति यदा[16]ह तदभिधेहीति।।२५।।

इति श्रीमद्भागवते द्वितीयस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां तृतीयोऽध्यायः।।३।।

**वीर०** यदि मुकुन्दं न नमेत् न नमस्कुर्यात् तदुत्तमाङ्गं शिरः पट्टकिरीटजुष्टं पट्टेन [17]नवोष्णीषेण किरीटेन वा जुष्टमपि परं केवलं भारः। हरेः सपर्यां पू[18]जां नो कुरुतः न कु[19]र्वन्तौ चेत् तौ करौ हस्तौ च[20] लसन्तौ काञ्चनकङ्कणौ ययोः तथाभूतौ अपि शावौ शवसम्बन्धिनौ इव अ[21]मङ्गलौ इत्यर्थः।।२१।

विष्णोः लिङ्गानि मूर्तिः न निरीक्षतश्चेत् ते नयने बर्हायिते मयूरपिच्छ[22]नेत्रतुल्ये। ह[23]रेः क्षेत्राणि श्रीरङ्गादीनि नानुव्रजतश्चेत् तौ नृणां पादौ द्रुमजन्मभाजौ द्रुमजन्म भजतः इति तथा वृक्षमूलतुल्यौ इत्यर्थः।।२२।।

---

1. H.V. 'स्त्रेणो' 2. A.B. Omit पट्टेन......वस्त्रेण 3. H.V. वा 4. H.V. Omit 'कर 5. H.V. 'न्ति 6. H.V. 'णानि 7. H.V. श्रीमूर्ति असाधारणानि शङ्खचक्रादिचिह्नितानि वा 8. H.V. 'ञ्छ'; B. 'च्छेन तुल्ये 9. B. 'जेते 10. B.H.V. Omit श्री' 11. A.B. Omit तुलस्याः गन्धं 12. A.B. वेदेति अवघ्राय नाभिनन्देदित्यर्थः 13. H.V. Omit आह 14. A.B. ब्रूषे 15. B.H.V. Omit कारणा.....तिना 16. A. 'त्रा' 17. A.B. शस्त्रोल्लेखेन (शास्त्रोल्लेखेन?) 18. W. Omits पूजां 19. W. कुरुतः 20. W. Omits च 21. W. Omits अमङ्गलौ इत्यर्थः। 22. W. 'ञ्छ' 23. A.B. Omit हरेः

भागवताङ्घ्रिरेणुं जातु कदाचिदपि यस्तु [1]मर्त्यो मनुष्यः नाभिलषेत अभितो न स्पृशेत् न धारयेत् स जीवन् शवः जीवन्नपि शवतुल्यः। श्रीविष्णुपद्याः श्रीविष्णुपदलग्नायाः तुलस्याः गन्धं [2]सुगन्धं यस्तु मनुजो न वेद अभिघ्राय नाभिनन्देदित्यर्थः। सः श्वसन् [3]शवः प्राणयुक्त शवतुल्यः।।२३।।

गृह्यमाणैः [4]स्मरणकीर्तनादिभिः गृह्यमाणैः भगवन्नामभिः [5]यदिदं हृदयं न विक्रियेत विकारं न प्राप्नुयात्। अथ मुखे [6]विकारः नेत्रे जलमानन्दाश्रुबिन्दवः गात्ररुहेषु हर्षः रोमाञ्चश्च न स्यात्, तद्धृदयमश्मसारं [7]कार्ष्णायसम्। बतेति खेदे। यदा मनोविकारो भवति तदा आनन्दाश्रु, रोमाञ्चश्च स्यादित्यर्थः।।२४।।

भागवतप्रधानः त्वं मनसोऽनुकूलं प्रियं भाषसे अथ अतः आत्मविद्यायां विशारदः निपुणः वैयासकिः श्रीशुकः [8]साधु पृष्टस्सन् नृपतिं प्रति यदाह तदभिधेहीत्यन्वयः।।२५।।

इति श्रीमद्भागवते द्वितीयस्कन्धे
श्रीवीरराघवविदुषा लिखितायां श्रीभागवतचन्द्रचन्द्रिकायां
व्याख्यायां तृतीयोऽध्यायः।।३।।

**विज०** वा यदि। शावौ शवस्य विद्यमानौ।।२१।।

बर्हायिते पिच्छनेत्रवदाचरिते निष्फले इत्यर्थः। लिङ्गानि प्रतिमाः द्रुमवज्जन्म भजत इति। क्षेत्राणि पुण्यस्थानानि "क्षेत्रं पुरे गृहे देहे केदारे योनिभार्ययोः। पुण्यस्थाने समूहे च घृतमाज्येऽम्बुसर्पिषोः" (वैज.को.6-3-6) इति यादवः।।२२।।

भागवतस्य भगवद्भक्तजनस्याङ्घ्रयो रेणुं यद्वा भागवतयोः भगवतो विद्यमानयोः अङ्घ्र्यो रेणुं नाभिलषेत न काङ्क्षेत जीवन् शवो जीवन् मृतः। श्रीविष्णुपद्याः श्रीविष्णुपदप्रियायाः। श्वसन् शवः श्वासकृत्कुणपतुल्यः।।२३।।

पुरुषस्य यद्धृदयं कथारूपेण गृह्यमाणैः हरिनामधेयैः न विक्रियेत। द्रवीभावात्मकं विकारं नाप्नोति। तदिदमश्मसारवदतिकठिनं, अयोघनं वा। अथ दैवात् यदि विकारः तस्येदं लक्षणम्। मुखे विकासलक्षणो विकारः। नेत्रे जलं स्रवति। गात्ररुहेषु रोमसु हर्षो रोमाञ्चलक्षणः स्यादिति शेषः।।२४।।

[9]यतः एवं हरिकथाश्रवणाभावे जन्मादेः नैष्फल्यम् अथ तस्मात् नृपतिना साधु पृष्टः आत्मविद्याविशारदः परमात्मविद्यायां पटुतरो वैयासकिः नृपतिं यदाह तन्मामभिधेहि। हरिकथाभिधाने

1. W. Omits मर्त्यो मनुष्यः 2. W. Omits सुगन्धं 3. A.B. जीवः प्राणयुक्तोऽपि शवः शवतुल्यः 4. W. श्रवण 5. W. 'दीयं 6. W. 'सः 7. W. 'ला 8. A.B. Omit साधु 9. A. Omits यतः

मदन्यः किं न स्यात् अत्राह मन इति। मनोऽनुकूलं यथा भवति तथा प्रभाषसे हेत्वन्तरमाह भागवतेति। अतः त्वत्त एव श्रोतुमिच्छा प्रवर्तत इति।।२५।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
द्वितीयस्कन्धे तृतीयोऽध्यायः।।३।।

**रा०कृ०** पट्टकिरीटजुष्टमपि पट्टेन पट्टवस्त्रेण किरीटेन च जुष्टमपि अलङ्कृतमपि उत्तमाङ्गं शिरः मुकुन्दं श्रीहरिं यदि न नमेत् नमस्कारं न कुर्यात् तदा परं केवलं भार एव भारभूतमेव। लसत्काञ्चन-कङ्कणौ करौ वा हस्तावपि यदि हरेः सपर्यां नो कुरुतः तदा तौ शावौ शवसम्बन्धिनौ एव ।।२१।।

नराणां ये नयने विष्णोः लिङ्गानि शङ्खचक्रादिचिह्नानि न निरीक्षितः न पश्यतः ते नेत्रे बर्हायिते मयुरपिच्छनेत्रतुल्ये। नृणां यौ पादौ हरेः क्षेत्राणि नानुव्रजतः नानुगच्छतः तौ पादौ द्रुमजन्मभाजौ वृक्षमूलसदृशौ।।२२।।

यस्तु मर्त्यः भागवताङ्घ्रिरेणुं भगवद्भक्तपादधूलिं जातु कदाचिदपि नाभिलभेत न धारयेत् सः जीवन्नपि शवो मृततुल्यः। किञ्च यस्तु जनो श्रीविष्णुपद्याः श्रीहरिपादगतायाः तुलस्याः गन्धं सुगन्धं न वेद सानन्दं न जिघ्रति सोऽपि श्वसन् श्वासक्रियां कुर्वन्नपि शव एव।।२३।।

गृह्यमाणैः स्वमन्येन वा कीर्त्यमानैः हरिनामधेयैः हरिनामभिः यत् हृदयं न विक्रियेत सन्तोषादिविकारं न प्राप्नुयात् , अथ मुखे विकारः न दृश्यते नेत्रे जलं आनन्दाश्रु न प्रभवति। गात्ररुहेषु हर्षः रोमञ्चता च न भवति तदिदं हृदयं अश्मसारं पाषाणकाठिन्यसहितं पाषाणतुल्यमिति भावः। बतेति आश्चर्ये।।२४।।

अङ्ग! हे राजन् ! भागवतप्रधानः त्वं मनोऽनुकूलं मनसो हितं प्रभाषसे। अतः अथ आत्मविद्याविशारदः ब्रह्मविद्यानिपुणो वैयासकिः शुकः साधु परीक्षिता पृष्टस्सन् नृपतिं तं परीक्षितं प्रति यदाह तदभिधेहि कथय ।।२५।।

इति श्रीमद्भागवते द्वितीयस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां
व्याख्यायां तृतीयोऽध्यायः।।३।।

**oooOooo**

# चतुर्थोऽध्यायः

**सूत उवाच**

**वैयासकेरिति वचस्तत्त्वनिश्चयमात्मनः।**
**उपधार्य मतिं कृष्णे औत्तरेयः सतीं व्यधात्।।१।।**

**आत्मजायासुतागारपशुद्रविणबन्धुषु।**
**राज्ये चाविकले नित्यं विरूढां[1] ममतां जहौ।।२।।**

**पप्रच्छ चेममेवार्थं यन्मां पृच्छथ[2] सत्तमाः।**
**कृष्णानुभावश्रवणे श्रद्दधानो महामनाः[3]।।३।।**

**संस्थां विज्ञाय संन्यस्य[4] कर्म त्रैवर्गिकं च यत्।**
**वासुदेवे भगवति आत्मभावं[5] दृढं[6] गतः।।४।।**

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

तुर्ये परीक्षिता पृष्टं सृष्ट्यादि हरिचेष्टितम्। शुकेन ब्रह्मतत्पुत्रसंवादेनोपवर्ण्यते।।

राज्ञः प्रश्नं कथयितुं तस्य प्राक्तनीं स्थितिमाह - **वैयासकेः** इति चतुर्भिः[7]। वैयासकेः शुकस्य इति एवंभूतमात्मनः[8] तत्त्वस्य निश्चयो यस्मात् तद्वचः उपधार्य आकलय्य सतीं श्रेष्ठां[9] मतिं[10] कृष्ण एव सेव्यो नान्य इत्येवम्भूताम्।।१।।

**आत्मेति**। आत्मा देहः। पशवो गजादयः। अविकले[11] वैरिभिः अनुपद्रुते राज्ये च।।२।।

**पप्रच्छ** इति। इममेवार्थं हरिलीलालक्षणम्।।३।।

**संस्थाम्** इति। संस्थां मृत्युं विज्ञाय[12]। त्रैवर्गिकं धर्मार्थकामप्रधानम्। संन्यस्य त्यक्त्वा आत्मभावं परं[13] पर[14]प्रेम्णा भगवदात्मत्वं[15] गतः प्राप्तस्सन् पप्रच्छ।।४।।

---

1. B.C.H.M.Ma.V.W. नि° 2. H.V. °त 3. M.Ma.W. °यशाः 4. AF.GF. विन्य° 5. H.V. ह्या°; M.Ma.W. स्वा° 6. H.V.W. परं 7. H.V. Omit चतुर्भिः वैयासकेः शुकस्य 8. B. Omits भूतं 9. A. Omits श्रेष्ठां; B. शुद्धां 10. A.B. Omit मतिं 11. A.B. Omit अविकले......च 12. B.H.V. Omit विज्ञाय 13. A.B. Omit परं 14. B.H.V. परम° 15. H.V. °त्मकत्वं

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवमापृष्टः सूतो राज्ञः प्रश्नं कथयितुं तस्य प्राक्तनीं स्थितिमाह- **वैयासके:** इति। वैयासकेः श्रीशुकस्य आत्मनः तत्त्वनिश्चयं यथावस्थितस्वरूपनिश्चायकं वचः इत्युक्तप्रकारेण उपधार्य श्रुत्वा औत्तरेयः उत्तरापुत्रः राजा श्रीकृष्णे सतीं मतिं व्यधात् अकरोत्।।१।।

किञ्च आत्मा देहः अंगारं[1], द्रविणं धनम्, आत्मादिषु अविकले निरुपद्रवे राज्ये च निरूढां नित्यरूढां ममतां स्वत्वाभिमतिं[2] तत्याज।।२।।

हे सत्तमाः! शौनकादयः! इममेव हरिकथालक्षणमेवार्थं पप्रच्छ मां प्रति यत्पृच्छथ यूयं कथम्भूतः पप्रच्छ श्रीकृष्णानुभावश्रवणे श्रीकृष्णलीलाश्रवणे[3] श्रद्दधानः अत एव महायशाः।।३।।

संस्थां मृत्युं विज्ञाय ज्ञात्वा त्रैवर्गिकं धर्मार्थकामसाधनं कर्म सन्न्यस्य त्यक्त्वा भगवति वासुदेवे स्वात्मभावं स्वस्यात्मत्वं मम आत्मा वासुदेव इति बुद्धिविशेषं परं दृढं गतः प्राप्तः[4] इत्यर्थः। एवंविधः परीक्षित्[5] पप्रच्छ इति पूर्वेणान्वयः।।४।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

सङ्क्षेपतः श्रुतहरिचरितत्वात् तस्मिन्नेव अवहितान्तःकरणस्य परीक्षितो भक्त्यतिशयात् पुनर्विशेषतः श्रोतुकामस्य हरिसज्जनलीलाविलासविषयप्रश्नप्रकारः श्रीशुकाचार्यस्य गुरुदेवतानमस्कार-पुरस्सरं तत्प्रश्न - प्रतिवचनप्रतिज्ञाप्रकारश्च अस्मिन्नध्याये प्रतिपाद्यते। तत्र प्रथमतः शुकोपदेशात् तस्य प्रवृत्तविज्ञानविरक्ती अनुवदति **वैयासके:** इति। आत्मनः सर्वगुणपूर्णस्य हरेः तत्त्वस्य निश्चयो येन तत् तथा उपधार्य हृदि निधाय सतीं मतिं भक्तिपरिप्लुताम्।।१।।

आत्मजायाराज्यादिचिन्तामलकलिलान्तःकरणस्य तस्य कृष्णे सन्मतिविधानं कथमत्राऽह- **आत्मेति**। स औत्तरेयः आत्मजायादौ अन्येषां नित्यं निरूढां ममतां जहौ इत्यन्वयः। हरेः सर्वस्वातन्त्र्यादिज्ञानविधुराणामहंममेति नित्यनिरूढामनेन नित्यं तद्विदुषा पुरैव त्यक्तामपि तदा विशेषतः त्यक्तवान् इत्यस्मिन्नर्थे चशब्दः। आत्मा देहः "स्वाम्यमात्यौ पुरं राष्ट्रं कोशदण्डौ तथा सुहृत्। सप्तैतानि समस्तानि लोकेऽस्मिन् राज्यमुच्यते" * इति मनुवचनात् अविकले सप्तप्रकृतिपूर्णे।।२।।

---

1. A.B. Omit अगारं 2. A. B. अहं ममत्वां 3. W. Omits श्रीकृष्णलीलाश्रवणे 4. W. Omit प्राप्तः 5. W. Omits परीक्षित्

* मुद्रितमनुस्मृतिपाठस्तु - स्वाम्यमात्यौ पुरं राष्ट्रं कोशदण्डौ सुहृत्तथा। सप्त प्रकृतयोह्येताः सप्ताङ्गं राज्यमुच्यते।। (मनु.स्मृ.9-294)

किमन्यत् पृष्टवान् इति प्रश्नं परिहरति **पप्रच्छेति**।।३।।

संस्थां मरणं यत् त्रैवर्गिकं धर्मार्थकामसाधनं यत्कर्म तच्च स्वस्यात्मा स्वामीति भावं भक्तिं गतः एवमधिकारसामग्रीमान् राजा यमर्थं यूयं मां पृच्छथ इममेवार्थं परिपप्रच्छ, शुकमिति शेषः।।४।।

## श्रीराधाकृष्णप्रणीता सुधीसुधा

इत्येवम्भूतं आत्मनः तत्त्वनिश्चयं तत्त्वनिश्चयदायकं वैयासकेः शुकस्य वचः उपधार्य श्रुत्वा औत्तरेयः उत्तरापुत्रः परीक्षित् कृष्णे सतीं निर्मलां मतिं व्यधात् विशेषेणाकरोत्।।१।।

किञ्च आत्मजायासुतागारपशुद्रविणबन्धुषु आत्माऽत्र देहार्थकः तथा च देहादिषु अविकले निरुपद्रवे राज्ये नित्यं निरूढां दृढं लग्नां ममतां स्वीयत्वबुद्धिं जहौ त्यक्तवान्।।२।।

हे सत्तमाः! शौनकादिमुनयः! कृष्णानुभावश्रवणे कृष्णमहिमाकर्णने श्रद्दधानः श्रद्धावान् महामनाः परीक्षित् संस्थां मृत्युं विज्ञाय त्रैवर्गिकं धर्मार्थकामसम्बन्धि यत् कर्म वर्तते तत् सन्न्यस्य भगवति वासुदेवे परं दृढं आत्मभावमात्मत्वं वासुदेवात्मत्वं गतस्सन् यत् मां यूयं पृच्छथ पृष्टवन्तः तमिममेवार्थं पप्रच्छ शुकं पृष्टवान्।।३,४।।

**राजोवाच**

**समीचीनं वचो ब्रह्मन्। सर्वज्ञस्य तवानघ!**
**तमो विशीर्यते मह्यं हरेः कथयतः कथाम्।।५।।**

**भूय एव विवित्सामि भगवानात्ममायया *।**
**यथेदं सृजते विश्वं दुर्विभाव्यमधीश्वरैः।।६।।**

**यथा गोपयति विभुर्यथा संयच्छते पुनः।**
**यां यां शक्तिमुपाश्रित्य पुरुशक्तिः परः पुमान्।**
**आत्मानं क्रीडयन् क्रीडन्-करोति विकरोति च।।७।।**

---

. H.M.Ma.V.W. °धाः * H.V. add (यथाऽवतीर्णो भगवान् परिरक्षति सत्पथम्।) 2. W. °दि° 3. B. °व्यं मुनी° 4. C. विश्वं य°

**नूनं भगवतो ब्रह्मन्! हरेरद्भुतकर्मणः।**
**दुर्विभाव्यमिवाभाति कविभिश्[1]चापि चेष्टितम्।।८।।**

**श्रीध० समीचीनम्** इति। मह्यं मम तमः अज्ञानं [2]विशीर्यते नश्यति तव कथयतः सतः अतः समीचीनम्।।५।।

**भूय** इति। पुनश्च [3]विवित्सामि वेदितुमिच्छामि। इदं दुर्विभाव्यम् अवितर्क्यं विश्वं यथा सृजते[4]।।६।।

**यथा** इति। गोपयति पालयति। संयच्छते संहरते[5]। पुरुशक्तिर्[6]बहुशक्तिमान्। क्रीडन् यथा करोति आत्मानं ब्रह्मादिरूपिणं क्रीडयन् विकरोति विविधं करोति।।७,८।।

**वीर०** स्वबुभुत्सितम[7]वतारयितुं मुनिवचो[8]ऽभिनन्दति [9]राजा **समीचीनमिति**। हे ब्रह्मन्! अनघ! मह्यं हरेः कथाः कथयतः सर्वज्ञस्य तव वचः समीचीनं यतः तमः अज्ञानं विशीर्यते नश्यति।।५।।

बुभुत्[10]सितं पृच्छति - **भूय** इति। भूयः पुनः विवित्सामि वेदितुमिच्छामि। अधीश्वरैः ब्रह्मादिभिः दुर्विभाव्यम् अप्रतर्क्यं इदं विश्वं यथा सृजति।।६।।

यथा गोपायति रक्षति यथा पुनः संयच्छते[11] संहरति पुरुशक्तिः अनन्तशक्तिः परः पुमान् परमपुरुषः यां यां ब्रह्मादिररूपां शक्तिं शरीरं उपाश्रित्य अधिष्ठाय आत्मानं ब्रह्मरुद्रादिरूपिणं[12] स्वात्मानं क्रीडयन् सृष्ट्यादिव्यापारविशेषाभिनिविष्टं कुर्वन् स्वयं क्रीडन् स्थित्यादिव्यापारं कुर्वन् करोति स्वयमेव तत्तदन्तरात्मतया सृष्ट्यादिव्यापारं करोति। विकरोति [13]तत्तदन्तरतया विरुद्धं करोति। इयं जगद्व्यापाररूपा क्रिडा स्वातन्त्र्यमूला न तु बालादीनामिव कर्ममूला इत्यभिप्रायः।।७।।

उपसंहरति हे भगवन्! अद्भुतकर्मणः विस्मयनीयव्यापारस्य हरेः। विचेष्टितं कविभिः ज्ञानाधिकैः अपि दुर्विभाव्यम् अप्रतर्क्यमिव आभाति प्रतीयते।।८।।

**विज०** स्वाभीष्टं प्रष्टुं शुकवचनं स्तौति **समीचीनम्** इति। यदिष्टसाधनावबोधकं तत्प्रतिबन्धनिवर्तकं च तदेव वचनं समीचीनं दृष्टम् एतत्कथम्? अत्राऽह - तम इति। मह्यं मम तमः आन्तरमज्ञानं

1. W. 'श्च वि' 2. H.V. Omit विशीर्यते 3. A.B. Omit विवित्सामि 4. A.B. 'ति 5. H.V. 'ति 6. H.V. 'रनन्त' 7. W. 'मुपपाद' 8. W. 'चनमभि' 9. W. Omits राजा 10. W. 'त्सन् 11. A.B. 'ति 12. A.B. 'पेण 13. A.B. Omit तत्तदन्तरतया

विशीर्यते इत्यनेन समूलभूतमुच्छिद्यते इत्युक्तं भवति। मह्यं इत्यनेन स्वेष्टसाधनं ज्ञानं च येन दीयते इति सूचितं भवति। हेतुर्वाऽनेनोच्यते मह्यं तमः विशीर्यते इति येन तस्मात् समीचीनमिति।।५।।

आत्ममायया स्वेच्छया स्वनियतया प्रकृत्या च अन्यैः दुर्विभाव्यं दुरुत्पाद्यमिदं विश्वं यथा येन प्रकारेण सृजते।।६।।

येन प्रकारेण गोपायति रक्षति पुनः येन प्रकारेण संयच्छते संहरति तं प्रकारं भूयः पुनरपि विवित्सामि ज्ञातुमिच्छामि। पुरुशक्तिः अनन्तशक्तिः परः पुमान्।।७।।

आत्मानं जीवं संसारे क्रीडयन् अवतारैश्च क्रीडन् यां यां शक्तिमुपाश्रित्य विश्वस्य यदपेक्षितं तत्सर्वं सामान्यतः विशेषतश्च करोति तदपि विवित्सामीति चशब्देन "निर्विकारः सदा शुद्धः" इति वाक्यं प्रमाणयति। भगवच्चेष्टाविषयस्य ज्ञानस्य वक्ता ज्ञानिष्वपि दुर्लभ इति भावेनाह नूनमिति। अज्ञैः दुर्विज्ञेयमिति किं वक्तव्यं इत्यस्मिन्नर्थे चशब्दः।।८।।

**रा०कृ०** हे! अनघ! ब्रह्मन्! सर्वज्ञस्य मह्यं हरेः कथाः कथयतः तव वचः समीचीनं युक्तं, कुत इति चेत् भवद्वचनश्रवणेन मम तमः अज्ञानं विशीर्यते विनश्यति।

परीक्षित् परमात्मतत्त्वनिश्चयकं शुकवचनमाकर्ण्य सर्वान्तर्यामिणि श्रीकृष्णे रागद्वेषादिमलविरहितां बुद्धिं कृत्वा देहादिषु ममतां परित्यक्तवान्। तथा च सर्वान्तर्यामिस्मृतिव्यवधापिकायाः देहादिममताया एव मृत्युरूपत्वात् तन्ममतापरित्यागेन मृत्युतत्त्वमपि विज्ञाय एतद्विज्ञाननिदानभूतकृष्णानुसन्धाननैरन्तर्यं सिषाधयिषुः स राजा देहादिममताभिवर्धकं त्रैवर्गिकं कर्म वासुदेवे भगवति सन्न्यस्य भगवदात्मनाऽवस्थितो जीवन्मुक्तोऽभवत्। तथाहि - आत्मनः सर्वान्तर्यामितयाऽवस्थितिरेव मुक्तिः।।५।।

अधीश्वरैः ब्रह्मादिभिरपि दुर्विभाव्यं साकल्येन ज्ञातुमशक्यं इदं विश्वं भगवान् विभुः आत्ममायया यथा सृजते यथा गोपायति रक्षति पुनः यथा संयच्छते संहरति। किञ्च पुरुशक्तिः अनन्तशक्तिः परः पुमान् सः परमपुरुषः यां यां शक्तिमुपाश्रित्य क्रीडन् आत्मानं करोति ब्रह्मादिरुपिणं विदधाति ब्रह्मादिरूपिणं चात्मानं क्रीडयन् विकरोति विविधं रामकृष्णादिरूपिणं करोति तत्सर्वं भूय एव विवित्सामि वेदितुमिच्छामि।।६,७।।

हे ब्रह्मन्! नूनं निश्चयेन अद्भुतकर्मणः आश्चर्यकरव्यापारस्य भगवतो हरेः चेष्टितं कविभिश्चापि विद्वद्भिरपि दुर्विभाव्यमिव दुर्ज्ञेयमिव आभाति प्रतीयते।।८।।

**यथा[1] गुणांस्तु प्रकृतेर्युगपत्क्रमशोऽपि वा।**
**बिभर्ति भूरिशस्त्वेकः कुर्वन् कर्माणि जन्मभिः।।९।।**

**विचिकित्सितमेतन्मे ब्रवीतु भगवान् यथा।**
**शाब्दे[2] ब्रह्मणि निष्णातः परस्मिंश्च भवान् खलु।।१०।।**

**सूत उवाच**

**इत्युपामन्त्रितो राज्ञा गुणानुकथने हरेः।**
**हृषीकेशमनुस्मृत्य प्रतिवक्तुं[4] प्रचक्रमे।।११।।**

**श्रीशुक उवाच**

**नमः परस्मै पुरुषाय भूयसे सदुद्भवस्थाननिरोधलीलया।**
**गृहीतशक्तित्रितयाय देहिनामन्तर्भवायानुपलक्ष्यवर्त्मने।।१२।।**

**श्रीध०** **यथा** इति। एकः पुरुषरूपेण युगपत् जन्मभिः ब्रह्माद्यवतारैः क्रमशो वा यथा प्रकृतेः गुणान् गृह्णाति।।९।।

**विचिकित्सितम्** इति। विचिकित्सितं सन्दिग्धम्। शाब्दे ब्रह्मणि विचारेण निष्णातः नितरां[7] स्नातः परस्मिन्ननुभवेन।।१०।।

**इति** इति। राज्ञा[8] उपामन्त्रितः प्रार्थितः। प्रचक्रमे देवतागुरु[9]नमस्कारादिरूपं उपक्रमं कृतवान् इत्यर्थः।।११।।

तदेवाह त्रयोदशभिः **नम** इति। परस्मै सर्वोत्तमाय। तत्र हेतुः भूयसे अपरिमितमहिम्ने तद्दर्शयति।[10]सतः प्रपञ्चस्य उद्भवादिषु निमित्तभूता[11] या लीला तया गृहितं[12] ब्रह्मादिरूपेण रजआदिशक्ति-त्रितयं येन तस्मै। अन्तर्भवाय अन्तर्यामिणे अत एव सर्वान्तर्गतत्वा[13]दनुपलक्ष्यं[14] वर्त्म यस्य तस्मै[15]।।१२।।

**वीर०** अन्यदपि पृच्छति - **यथा** इति। स्वयमेकः जन्मभिः अवतारैः भूरिशः कर्माणि चेष्टितानि

1. B. त° 2. M.Ma. शब्द°; W. शाब्द° 3. M.Ma. विभो: 4. W. प्रवक्तुमुप° 5. M.Ma. °धुँ° 6. H.M.Ma.V.W. °ध्य° 7. A.B. Omit नितरां स्नातः 8. A.B. Omit राज्ञा 9. H.V. Omit °गुरु° 10. H.V. add अ° 11. B. °त्तौ° 12. H.V. °तया लीलया गृ° 13. A.B. °रत्वा° 14. H.V. °ध्यवर्त्मने अनुपलभ्यं ज्ञातुमशक्यं वर्त्म स्वरूपं यस्य तस्मै।।१२।। 15. A. Omits तस्मै

कुर्वन् प्रकृतेः गुणान् सत्त्वादीन् युगपत् अपि वा क्रमशः यथा बिभर्ति अत्र यथा सृजतीति निमित्तो-पादानाधिकरणानां प्रश्नः। यथा गोपायति इत्यनेन रक्षितुः स्वस्य किं सृष्ट्यादाविव रक्षणेऽपि जीवान्तर्यामित्वेन, उत स्वावतारेणैव रक्षणमिति प्रश्नः। यथा संयच्छते इत्यनेन संयमाधिकरणप्रश्नः। नारदीयानां प्रश्नानां तथैव[1] अवतरिष्यमाणत्वात्। यथा गुणांस्तु इत्यनेन भगवदवतारस्य गुणत्रयात्मकत्वं अथवा त्रयाणामेव अन्यतमगुणात्मकत्वं अथवा अप्राकृतत्वमेवेति प्रश्नः। अत्र यद्यपि न तृतीयपक्षः प्रश्नारूढः तथाऽपि प्रष्टुः अभिप्रेतः तस्यैव सिद्धान्तकोटित्वात्।।९।।

एतत्पूर्वोक्तं मे मम विचिकित्सितं विचारयितुमिष्टं भगवान् भवान् यथा[2] यथावत् ब्रवीतु कथयतु[3]। त्वमेव कथयितुं समर्थ इत्याह शाब्देति[4]। शब्दे ब्रह्मणि शब्दात्मके ब्रह्मणि निष्णातः परिनिष्ठितः कृत्स्नशास्त्रार्थवित्। परस्मिंश्च ब्रह्मणि निष्णातः खलु इत्यन्वयः। अनेन पर[5]ब्रह्मविषययोग-जन्यज्ञानसम्पत्तिरुक्ता।।१०।।

हरेः गुणानुकथने इत्युक्तप्रकारेण राज्ञा[6] उपामन्त्रितः प्रार्थितः हृषीकेशं भगवन्तं सर्वेन्द्रिय-नियन्तारं अनुस्मृत्य प्रवक्तुं देवतागुरुनमस्कारादिरूपं उपक्रमं कृतवान्।।११।।

तदेवाऽह त्रयोदशभिः[7] नम इति। परस्मै प्रकृतिपुरुषविलक्षणाय पुरुषाय[8]। तत्र हेतुः भूयसे स्वरूपतो गुणतश्च अन्तर्बहिश्च व्याप्य वर्तमानाय। तदेव दर्शयति - सतः प्रपञ्चस्य उद्भवः उत्पत्तिः, स्थानं पालनं, निरोधः संहारः, त एव लीला तया गृहीतशक्तित्रितयाय गृहीतहिरण्यगर्भस्वावतारशङ्कररूप-शक्तित्रितयं येन तस्मै। अनेन वैलक्षण्यमुक्तं भूयस्त्वमाह अन्तर्भवाय अन्तरात्मने अनेन सर्वस्य स्व[9]व्याप्यत्वात् तदपेक्षया स्वस्य व्यापकत्वमुक्तम्। अनुपलभ्यं वर्त्म यस्य तस्मै, वर्त्मशब्दः गन्तव्यमार्गपरोऽपि अत्र उपासनारूपज्ञानविषयीभूतभगवत्स्वरूप[10]परूपादिपरः उपचारात्। अनेन प्राकृतकरणागोचरत्वमुक्तं इदमपि वैलक्षण्या[11]पादकम्।।१२।।

**विज०** अथाप्येकः प्रश्नोऽस्तीत्याह - **यथा** इति। एको हरिः जन्मभिः वासुदेवाद्यवतारैः भूरिशः सृष्ट्यादिकर्माणि कुर्वन् प्रकृतेः सत्वादिगुणान् बिभ्रत् यथाकथं बिभर्ति युगपत् क्रमशः क्रमेण वा इति। तुशब्देन गुणानां विरुद्धस्वभावत्वेन युगपद्ग्रहणे अनुपपत्तिं सूचयति। अपिपदेन क्रमशो ग्रहणं सम्भावितमिति।।९।।

---

1. A.B. Omit 'थै' 2. A.B. Omit यथा 3. A.B. Omit कथयतु 4. A.B. Omit शाब्देति 5. W. Omits पर 6. A.B. Omit राज्ञा 7. W. Omits त्रयोदशभिः 8. W. Omits पुरुषाय 9. W. Omits स्व 10. W. Omits रूप 11. W. 'ण्य सम्पा'

न केवलं विवित्सामि किन्तु वक्तव्यमिति प्रार्थये इत्याह - **विचिकित्सितम्** इति। यथा यथावत् एतद्वक्तुं तव पाण्डित्यं च अस्ति इत्याशयेनाऽह शब्देति। अनेन अलौकिकमपि वस्तु यथा बोद्धुं शक्यं तथा वक्ता बोधयितुं त्वं समर्थ इत्युक्तं भवति।।१०।।

परिक्षित्पृष्टः किं चकार इति सूतः शौनकस्य हार्दशङ्कां परिहरति - **इति** इति। इतिशब्दः प्रकारवचनः। हृषीकेशमित्यनेन मुख्यतो वागादीन्द्रियशक्त्युद्बोधकत्वं हरेः इत्यभिप्रैति। प्रतिवक्तुं प्रचक्रमे, प्रारब्धवान्, भागवतसंहितामिति शेषः।।११।।

परिक्षित्प्रश्नोत्तररूपत्वेन भातगवतपुराणं वक्तुकामः शुकः शिष्टाचारं परिपालयन् स्वेष्टदेवतां प्रणमति, **नमः** परस्मै, इत्यारभ्य, '**नमस्तस्मै**', इत्यन्तैः श्लोकैः। भूयस्त्वमुपपादयति सदित्यादिना। सतः सत्यस्य जगत उद्भवः उत्पत्तिः, स्थानं पालनरूपस्थितिः, निरोधो लयः एतन्निमित्तं लीलया गृहीतं शक्तीनां इच्छाज्ञानक्रियाख्यानां त्रितयं येन स तथोक्तः तस्मै, "इच्छा ज्ञानं क्रिया चेति नित्या शक्तय ईशितुः" (प्रकाशसंहितायाम्) इति वचनात् नित्येति पदमध्याहार्यं, नित्यं गृहीतशक्तित्रितयाय इत्यर्थः। वेदादिरेवात्र प्रमाणं न प्रत्यक्षमिति भावेनाऽह - देहिनामिति। देहिनां जीवानां चक्षुरादिना अनुपलभ्य-वर्त्मने दुर्ज्ञेयमार्गाय दूरस्थत्वादिति नेत्याह - अन्तर्भुवायेति। अन्तर्यामित्वेन सततमन्तःस्थिताय "यो वै भूमा तत्सुखम्" (छान्दो.उ.7-23-1) "द्वाविमौ पुरुषौ लोके" (भ.गी.15-16) इत्यादिवाक्यमत्र प्रमाणम्।।१२।।

**रा०कृ०** स्वयं तु एको भगवान् जन्मभिः अवतारैः भूरिशः बहुशः कर्माणि लीलाः कुर्वन् प्रकृतेः गुणान् युगपद्वा क्रमशोऽपि वा यथा बिभर्ति तदेतत् प्रागुक्तं विचिकित्सितं सन्दिग्धं सर्वमपि मे मह्यं भगवान् यथा यथावत् ब्रवीतु। तथाहि भवान् शाब्दे वेदात्मके ब्रह्मणि परस्मिन् ब्रह्मणि च निष्णातः विचारणया शाब्दब्रह्मणि अनुभवेन परब्रह्मणि च भवान् कोविद इति भावः।।९,१०।।

इति उक्तरीत्या राज्ञा परीक्षिता हरेः गुणानुकथने उपामन्त्रितः प्रार्थितः, शुक इति शेषः। हृषीकेशं हृषीकाणां इन्द्रियाणां ईशं नियन्तारं अनुस्मृत्य मनसि ध्यात्वा प्रतिवक्तुं समाधातुं प्रचक्रमे प्रारेभे। अत्र 'हृषीकेशमनुस्मृत्य' इति कथनात् सर्वेन्द्रियनियन्ता भगवानेव स्वयं स्ववचसि स्थितः समाधानं दास्यतीति शुकाभिप्रायो व्यज्यते।।११।।

भूयसे अनन्तमहिमोपेताय सदुद्भवस्थाननिरोधलीलया सतः प्रपञ्चस्य सृष्टिस्थितिलयरूपया लीलया निमित्तभूतया गृहीतशक्तित्रितयाय गृहीतब्रह्मविष्णुरुद्ररूपेण रजस्सत्त्वतमोरूपं शक्तित्रितयं येन

तथाभूताय देहिनां प्राणिनां अन्तर्भवाय अन्तर्यामिणे अनुपलभ्यवर्त्मने अज्ञेयमार्गाय परस्मै पुरुषाय परमपुरुषाय नमः।।१२।।

भूयो नमः सद्वृजिनच्छिदेऽसतामसम्भवायाखिलसत्त्वमूर्तये।
पुंसां पुनः पारमहंस्य आश्रमे व्यवस्थितानामनुमृग्यदाशुषे।।१३।।

नमो नमस्तेऽस्त्वृषभाय सात्वतां विदूरकाष्ठाय मुहुः कुयोगिनाम्।
निरस्तसाम्यातिशयेन राधसा स्वधामनि ब्रह्मणि रंस्यते नमः।।१४।।

यत्कीर्तनं यत्स्मरणं यदीक्षणं यद्वन्दनं यच्छ्रवणं यदर्हणम्।
लोकस्य सद्यो विधुनोति कल्मषं तस्मै सुभद्रश्रवसे नमो नमः।।१५।।

विचक्षणा यच्चरणोपसादनात् सङ्गं व्युदस्योभयतोऽन्तरात्मनः।
विन्[1]दन्ति हि ब्रह्मगतिं गतक्लमास्तस्मै सुभद्रश्रवसे नमो नमः।।१६।।

**श्रीध०** विचित्रफलदातृत्वं अनुस्मरन् प्रणमति - **भूय** इति। भूयः पुनश्च नमः सतां धर्मवर्तिनां वृजिनच्छिदे दुःखहन्त्रे। असतां अधर्मशीलनां असम्भवाय [2]अनुद्भवहेतवे। अखिलसत्त्वमूर्तये तत्तद्[3]देवतादिरूपेण तत्तत्फलदात्रे[4] इत्यर्थः। समग्रसत्त्वमूर्तये इति वा। पुनरिति पूर्वोक्तोभयवैलक्षण्यमाह[5]। पारमहंस्ये प्रत्यङ्निष्ठारूपे आश्रमे व्यवस्थितानां पुंसां अनुमृग्यमतन्निरसनेन पुनः पुनः मृग्यं यदात्मतत्त्वं तस्य दाशुषे दात्रे। [6]दाश्रु दाने इति धातुः।।१३।।

**नम** इति। सात्वतां भक्तानां ऋषभाय पालकाय। कुयोगिनां भक्तिहीनानां विदूरा काष्ठा दिगपि यस्य [7]दुर्ज्ञेयायेत्यर्थः। तदेवं वैषम्यप्रतीतावपि निर्दोषत्वाद[8]चिन्त्यैश्वर्यमाह। निरस्तं साम्यमतिशयश्च यस्य, यदपेक्षया अन्यस्य साम्यमतिशयश्च नास्ति तेन राधसा ऐश्वर्येण स्वधामनि स्वस्वरूपे ब्रह्मणि रममाणाय।।१४।।

सर्वसाधनेभ्यो भक्तेः श्रैष्ठ्यमनुस्मरन् प्रणमति - **यत्कीर्तनम्** इति द्वाभ्याम्। अर्हणं पूजनम्। [9]श्रूयते सर्वैः इति श्रवः। सुभद्रं [10]सुमङ्गलं श्रवो यशो यस्य तस्मै।।१५।।

1. G.H. °द° 2. H.V. उत्पत्तिविनाशकाय 3. B. °वादिरू°; H.V. °वतारू° 4. B. °त्र; H.V. °यिने 5. B. °मेवाऽह 6. B.H.V. Omit दाश्रु.....धातुः 7. B. दुर्विज्ञे° 8. A.B. °याचिन्त्यमै° 9. A.B. Omit श्रूयते.....श्रवः 10. A. Omits सु

**विचक्षणा** इति। विचक्षणा विवेकिनो यस्य चरणयोः उपसादनात् उपसत्तेर्भजनात्। अन्तरात्मनो मनसः उभयतः इह च[2] परत्र च सङ्गं व्युदस्य निरस्य गतक्लमाः प्रयासरहिताः।।१६।।

**वीर०** अनुपलभ्यवर्त्मत्वे अनुपास्यत्वं स्यादित्यत आह - **भूयो नम** इति। सद्वृजिनच्छिदे सतां पापच्छिदे असतां दुष्कृतां असम्भवाय विनाशाय। अखिलसत्त्वमूर्तये अखिलं पूर्णं सत्त्वमेव मूर्तिः यस्य तस्मै उपात्तपूर्णसत्वदेहाय इत्यर्थः। स्वतोऽनिन्द्रियत्वेऽपि सौलभ्यातिशयेन साधुपरित्राणाय दुष्कृद्विनाशादि कुर्वन् अखिलमनुजनयनविषयतां रामकृष्णादिरूपेण गताय[3] इत्यर्थः प्रकृतिपुरुषविलक्षणत्वात् सर्वजगत्कारणत्वाद्वा[4] सत्त्वादिगुणवत्त्वाच्च मुमुक्षूपास्यत्वं[5] मोक्षप्रदत्वं चाऽह पारमहंस्ये परमहंसानां सम्बन्धिनि आश्रमे[6] चतुर्थाश्रम इत्यर्थः। तस्मिन् व्यवस्थितानां इदं मुमुक्षुमात्रोपलक्षणं परमहंसानां प्रायेण[7] मुमुक्षुत्वात् तदाश्रमनिर्देशः। ब्रह्मविद्याङ्गत्वेन तत्तत्स्वाश्रमप्रयुक्तधर्मानुष्ठानपराणां[8] अनुमृग्यदाशुषे अनुमृग्यो लब्धुमिष्टोऽर्थः। तस्य दाशुषे दानशीलाय एवम्भूताय[9] भूयो नम इति।।।१३।।

सौलभ्यविशिष्टमेव नमस्करोति **नम** इति। सात्वतां यदूनामृषभाय श्रेष्ठायाऽश्रितवात्सल्यातिरेकात् सात्वतश्रेष्ठत्वेन अवतीर्णाय इत्यर्थः। एवम्भूतोऽपि दुर्योगिनां दुर्लभ एवेत्याह विदूरकाष्ठायेति। कुयोगिनां कुत्सितयोगिनां भगवद्भक्तिरहित[10]योगनिष्ठानां विदूरकाष्ठाय विदूरा[11] दूरतरा काष्ठा दिक् यस्य तस्मै दुर्योगिभिः यस्य दिगपि दुर्ज्ञेया तथाविधायेत्यर्थः। तदेवं वैषम्यप्रतीतावपि निर्दोषत्वाय अचिन्त्यैश्वर्यमाह निरस्य इति। स्वराधसा स्वतेजसा निरस्तं साम्यमतिशयश्च यस्य तेन तेजसा उपलक्षिते स्वधामनि "स्वे महिम्नि प्रतिष्ठितः" (छान्दो.उ.7-24-1) इति श्रुत्युक्तरीत्या स्वप्रतिष्ठिते[12] स्वयंज्योतिषि ब्रह्मणि[13] स्वस्मिन् रंस्यते रममाणाय ते तुभ्यं नमो नमोऽस्तु तत्तद्गुणविशिष्टाकारोद्देशेन[14] नमस्कृतेः पौनः पुन्यं निस्समाभ्यधिकस्वकीयतेजसा उपलक्षिते स्वस्मिन्नेव रममाणस्य न किञ्चिदपि वैषम्येण प्रयोजनमिति। न हि कल्पद्रुमस्य भजतां अभीष्टान् ददतो वैषम्यमस्तीति[15] वक्तुं युक्तम्।।१४।।

यत एव विचित्रैश्वर्यवत्त्वेन वैषम्यत एव तत्कीर्तनस्मरणादेः समस्तदुरितनिवर्तकत्वमित्याह - **यत्कीर्तनम्** इति। ईक्षणं अर्चाविग्रहादिनिरीक्षणं अर्हणं पूजनं यत्कीर्तनादिकं[16] कीर्तनादिनिष्ठस्य[17] लोकस्य[18] कल्मषं[19] दुरितं विधुनोति सद्यो विनाशयति तस्मै सुभद्रश्रवसे सुभद्रं सुमङ्गलं श्रवः कीर्तिः यस्य तस्मै नमः।।१५।।

न केवलं श्रवणादिभिः दुरितनिवृत्तिरेव, कीर्तनादिभिः विशुध्देनाऽत्मना परिपूर्णभक्तियोगं

---

1. A.H.V. °त्र 2. B. Omits च 3. W. गतः 4. A.B. °द्वात्सल्या° 5. W. °क्षोरुपा° 6. W. Omits आश्रमे 7. W. °यशो 8. W. °क° 9. W. Omits एवं......इति। 10. W. °योगविधुर° 11. A.B. °रै दूरत एव 12. W. °ष्ठे 13. W. वा रंस्य° 14. W. तद्गु° 15. A.B. Omit अस्ति 16. W. Omits यत्कीर्तनादिकं 17. W. adds यत् 18. A.B. Omit लोकस्य 19. A.B. कल्मलं

ततो ब्रह्म प्राप्नुवन्ति इत्याह - **विचक्षणा** इति। यच्चरणोपसादनात् यच्चरणयोः [1]उपसादनात् उपासत्तेः भजनादित्यर्थः। तस्मात् अन्तरात्मनो मनसः उभयतः[2] इह अमुत्र च सङ्गं व्युदस्य गतक्लमाः निवृत्तसांसारिकतापत्रयाः ब्रह्मगतिं ब्रह्माख्यां गतिं परमप्राप्यां विन्दन्ति प्राप्नुवन्ति। हीति प्रसिद्धं द्योतयति "ब्रह्मविदाप्नोति परम्" (तैत्ति.उ.2-1-1) इति श्रुतिप्रसिद्धेः। तस्मै सुभद्रश्रवसे नमो नम इत्यर्थः।।१६।।

**विज०** सर्वस्मात् नारायणप्रसादसाधनात् भक्तिपूर्वकं पुनः पुनः नमनमेव तत्प्रीतिजनकमिति भावेनाऽह - **भूय** इति। भूयोऽपि परस्मै पुरुषाय नम इत्यन्वयः। यत इष्टावाप्तितत्प्रतिबन्धकनिवृत्ती स्यातां स एव वन्द्यो[3] दृष्टोऽस्य कथमिति तत्राऽह सदिति। सतां नमनादिप्रशस्तकर्मणां पुंसां वृजिनं दुःखकारणं[4] पापं छिनत्ति निर्मूलयतीति सद्वृजिनच्छित् तस्मै। असतां अप्रशस्तकर्मणां असुरादीनां असम्भवाय असत्तापादकाय सुखप्रतिबन्धकजननिर्मूलकाय इत्यर्थः। एतत्करणसामर्थ्यं अस्यास्तीति भावेनाऽह अखिलेति। अखिलसत्त्वमूर्तये पूर्णसाधुभावस्वरूपाय "निश्शेषगुणपूर्णत्वात्सत्त्व इत्येव तं विदुः" (महासंहितायाम्) इति वचनात्, साधुभावो गुण इति ज्ञायते। अनेन समस्तचराचरलक्षणप्राणिमूर्तये इत्येतन्निरस्तम्। अथापि अस्मादिष्टावाप्तिः कथमवगतेत्यत्राऽह पुंसामिति। परमहंससम्बन्धिन्याश्रमे व्यवस्थितानां संन्यासधर्मवतां पुंसाम् अनुमृग्यदाशुषे निजानन्दानुभवलक्षणमोक्षदात्रे। दशृ दान इति धातुः। अवधारणवाचिना पुनश्शब्देन अन्ययोगं निवारयति एतेभ्य एवानुमृग्यं ददाति नान्येभ्य इत्यर्थः।।१३।।

ननु अन्यशब्देन सन्न्यासीतरज्ञानिविवक्षायां "तमेव विद्वानमृत" (पु.सू.1-7) इति इदमप्रमाणं स्यात् अज्ञविवक्षायाम् "अज्ञानां ज्ञानदो विष्णुः" इति च। अतः केऽत्र विवक्षिता इति मन्दाशङ्कां परिहरिष्यन् भागवतशास्त्रोक्तविरुद्धयोगापेत इति वक्ति **नमो नम** इति। सात्वतसंहितोक्तविधिना विष्णुमर्चयन्तः सात्वन्तः तेषां सात्वतां ऋषं ज्ञानं भासयति ऋषभः ज्ञानमुद्दीप्य मुक्तिं ददाति इत्यर्थः। तस्मै, "सत्त्वं तु शोभनत्वं स्यात्तद्युक्ताः सात्त्वता मता" इति वचनात् सात्त्वताः शोभनत्ववन्तः। तेषाम् अनुत्पन्नज्ञानानां तद्योगपुण्यवतां ज्ञानं ददातीति ऋषभः तस्मा इति वा। अनेनोक्तं वाक्यद्वयमपि प्रमाणमित्यायातमिति। यः परस्मै पुरुषाय इति प्रक्रान्तः ते तस्मै यद्वा स्वचित्तस्थं सम्बोध्यते तुभ्यं नम इति। एवंविधफलदातृत्वेन तत्स्वामीति वाक्यार्थः। भस भर्त्सनदीप्त्योरिति धातोः टिलोपेन सलोपः शास्त्रकृत्सितो योग ऐक्यध्यानलक्षणः स एषामस्तीति कुयोगिनः तेषां विदूरे काष्ठापरिपूर्तिः अपरिच्छिन्नलक्षणा यस्य स तथा तस्मै भगवदधिष्ठित दिङ्मात्रमपि न जानन्तीत्यतो वा विदूरकाष्ठायेति। "*आशास्तु[5] ककुभः काष्ठा" इत्यमरः। स्वतः तृप्तत्वेन स्वप्रयोजनमपेक्ष्य ज्ञानादिदातृत्वमिति भावेनाऽह निरस्तेति। निरस्तौ साम्यातिशयौ येन तथोक्तं तेन राधसा संसिद्ध्या स्वधामनि स्वयंप्रकाशे ब्रह्मणि

1. A.B. Omit उपसादनात् 2. W. °त्र 3. A. वेद्यो 4. A. °णपाशं * मुद्रितामरकोशपाठः - "दिशस्तु ककुभः काष्ठाः आशाश्च हरितश्चताः" 5. Ma दिशस्तु

अनवच्छिन्नचिदानन्दैकरसे रंस्यते रममाणाय सदातनोऽनुभवोऽयमिति शतृप्रत्ययः। लोकविलक्षणेयं रतिरिति द्योतयितुं परस्मैपदप्रयोगः। प्रतिपदं अनुसन्धेयं इति नमसां बहुत्वम्।।१४।।

कीर्तनादिना विधूतकल्मषस्य नमस्क्रिया सम्पद्यत इति भावेनाऽह **यत्कीर्तनम्** इति। सुभद्र-श्रवसे सुमङ्गलकीर्तये सद्य इत्यनेन भक्तिपूर्वकमिति सूचयति "भद्रोऽप्यस्त्री तु मङ्गल" इति यादवः।।१५।।

वैराग्येण दृढीभूतया भक्त्या भगवच्चरणनिषेवणं ब्रह्मज्ञानसाधनं भवतीति भावेनाऽह - **विचक्षणा** इति। यच्चरणोपसादनात् यच्चरणैकशरणप्राप्तिलक्षणनिषेवणात् अन्तरात्मनोऽन्तःकरणस्य। उभयतः इह अमुत्र विषयेषु सङ्गं स्नेहं व्युदस्य निरस्य ब्रह्मगतिं ब्रह्मज्ञानं तेन मोक्षं च विन्दन्ति। यस्य गुरुरूपस्य हरेश्चरणोपसत्तेः अन्तरात्मनः क्षेत्रज्ञस्य उभयतः सङ्गं स्थूलसूक्ष्मशरीरसङ्गं व्युदस्य अपोह्य ब्रह्मगतिं ब्रह्मस्वरूपं विन्दन्ति अवगच्छन्तीति यन्मतं तद्धेतुवाचिना हिशब्देन निरस्तं यतो भेदः प्रत्यक्षादिप्रमाणसिद्धः। अतः अनुपपन्नः ऐक्यवादः।।१६।।

**रा०कृ०** सद्वृजिनच्छिदे सतां दुःखनाशकाय असतां दुष्टानां असम्भवाय न विद्यते यस्मात् सम्भावः तस्मै भवहरायेति भावः। अखिलसत्त्वमूर्तये समस्तप्राणिस्वरूपाय पारमहंस्ये सत्यासत्यात्मा-नात्मविवेकशालिनो योगिनः परमहंसाः तत्सम्बन्धिन्याश्रमे सन्न्यासाश्रमे व्यवस्थितानां पुंसां अनुमृग्य-दाशुषे अनुमृग्यस्य अन्वेषणीयस्वरूपस्य दात्रे परमपुरुषाय भूयो नमः।

सतां हृदयेषु सत्सङ्कल्पात्मना वर्तमानो हरिः तेषां लोपान् दूरीकृत्य पापानि अपाकरोति।।१३।।

सात्वतां यादवानां ऋषभाय श्रेष्ठाय कुयोगिनां भगवद्भक्तिविरहेण विषयाकृष्टचेतसां दुष्टयोगिनां विदूरकाष्ठाय दूरदिग्वर्तिने अनधिगतस्वरूपाय इति यावत् निरस्तसाम्यातिशयेन यदपेक्षया निरस्तौ साम्यातिशयौ तौल्याधिक्ये येन तथाभूतेन रोधसा तेजसा ऐश्वर्येण वा स्वधामनि निजस्वरूपे ब्रह्मणि रंस्यते रममाणाय परमपुरुषाय ते मुहुः पुनः पुनः नमो नमोऽस्तु।।१४।।

यत्कीर्तने यस्य भगवतः कीर्तनं, यत्स्मरणं यस्य स्मरणं, यदीक्षणं यस्येक्षणं, यद्वन्दनं यस्य नमस्कारः, यच्छ्रवणं यस्य श्रवणं, यदर्हणं यस्य पूजनं, लोकस्य कीर्तनादिकर्तुः कल्मषं सद्यो विधुनोति विनाशयति सुभद्रश्रवसे सुमङ्गल्यशसे तस्मै परमपुरुषाय नमो नमः।।१५।।

विचक्षणाः विवेकिनः यच्चरणोपसादनात् यस्य भगवतः चरणयोः शरणागतेः उभयत्र इहामुत्र च अन्तरात्मनः अन्तःकरणस्य सङ्गं भोगाभिलाषं व्युदस्य त्यक्त्वा ततः गतक्लमाः निवृत्तभवतापाः सन्तः ब्रह्मगतिं भगवन्तं विन्दन्ति प्राप्नुवन्ति तस्मै सुभद्रश्रवसे नमो नमः।

इन्द्रियगोचरो नाम रूपादिमयः स्थूलप्रपञ्चः इहलोकः। प्राप्ताप्राप्तवस्तुविषयकभोगवासनामयः सूक्ष्मप्रपञ्चः परलोकः। सर्वकारणकारणभूते सर्वान्तर्यामिणि सर्वेश्वरे सर्वसमर्पणरूपशरणागत्या अन्तरात्मनः उभयलोकभोगाभिलाषश्च तदीश्वरसमर्पित एव। तथा च दुःखनिमित्तसङ्गराहित्यात् संसारनिवृत्तिः। तया च निरन्तरब्रह्मानन्दानुभवसिद्धिः। ईदृशशरणागत्या संसारिणः प्राणिनोऽपि जीवन्मुक्ता भवन्तु इति सारः।।१६।।

**तपस्विनो दानपरा यशस्विनोमनस्विनो मन्त्रविदः समङ्गलाः।**
**क्षेमं न विन्दन्ति विना यदर्पणं तस्मै सुभद्रश्रवसे नमो नमः।।१७।।**

**किरातहूणान्ध्रपुलिन्दपुल्कसा आभीरकङ्का[1] यवनाः खसादयः[2]।**
**येऽन्ये च पापा यदपाश्रयाश्रयाः[3] शुध्यन्ति तस्मै प्रभविष्णवे नमः।।१८।।**

**स एष आत्माऽऽत्मवतामधीश्वरस्त्रयीमयो धर्ममयस्तपोमयः।**
**गतव्यलीकैरजशङ्करादिभिर्वितर्क्य[4]लिङ्गो भगवान् प्रसीदताम्[5]।।१९।।**

**श्रियःपतिर्यज्ञपतिः प्रजापतिः धियां पतिर्लोकपतिर्धरापतिः।**
**पतिर्गतिश्चान्धकवृष्णिसात्त्वतां प्रसीदतां मे भगवान् सतां पतिः[6]।।२०।।**

**श्रीध०** भक्तिशून्यानां सर्वसाधनवैफल्यं दर्शयन् नमति[7] - **तपस्विन** इति। मनस्विनो योगिनः। सुमङ्गलाः सदाचाराः यस्मिन् तपआद्यर्पणं विना सुभद्रश्रवस इत्यस्यावृत्तिः यशःश्रवणादेः प्राधान्यज्ञापनाय ।।१७।।

भक्तेः परमशुद्धिहेतुत्वं दर्शयन्नाह - **किरातेति**। किरातादयो ये पापजातयः अन्ये च ये कर्मतः[8] पापरूपास्ते[9] यदुपाश्रया[10] भागवताः तदाश्रयास्सन्तः शुद्ध्यन्ति। असम्भावनाशङ्कां परिहरति। प्रभविष्णवे प्रभवनशीलाय[11] इति।।१८।।

सर्वोपास्यत्वं अनुस्मरन् प्रार्थयते - **स** इति। स एष अत्मवतां धीराणाम् आत्मा आत्मत्वेन उपास्यः इत्यर्थः। त्रयीमयत्वादिविशेषणैः तत्तन्मार्गेण उपास्यत्वं विवक्षितम्। गतव्यलीकैः निष्कपटैः भक्तैः वितर्क्यं अत्याश्चर्येण विवक्षणीयं[12] लिङ्गं मूर्तिः यस्य सः प्रसीदतु।।१९।।

1. I. "शुम्भाः 2. H.V.W. कषा"; B.M.Ma. शका" 3. C.H.N.V.W. "दु" 4. AF.GF. "र्व्यं" 5. H.V. "तु 6. H.V. ग" 7. H.V. "स्यति 8. H.V. "भिः 9. B.H.V. Omit ते 10. B. "द" 11. H.V. प्रभवितुं शीलं यस्येति 12. A.B. वीक्ष"

सर्वपालकत्वं अनुस्मरन् आह - **श्रिय** इति। [1]गतिश्च सर्वापत्सु रक्षकः।।२०।।

**वीर०** भक्तिशून्यानां सर्वाण्यपि साधनानि निष्फलानि इत्याह - **तपस्विन** इति। तपस्विनः कृच्छ्रचान्द्रायणादितपोनिष्ठाः मनस्विनः मन आदि इन्द्रियनिग्रहपराः मन्त्रविदः मन्त्रजापपराः सुमङ्गलाः सदाचारपराः एते सर्वे तपआदेः यदर्पणं यस्मिन् भगवति समर्पणं यदुपासनाङ्गत्वेन अनुष्ठानं विना इति यावत् क्षेमं तत्तत्तपआदेः परमं फलं न विन्दन्ति न लभन्ते यद्यपि यत्किञ्चित् दुरितनिवृत्त्यादिरूपं फलमाप्नुवन्ति तथापि नाक्षय्यं फलमाप्नुवन्ति भक्तियोगाङ्गत्वेन तपआदि कुर्वाणास्तु निरतिशयं फलं प्राप्नुवन्ति इत्यभिप्रायः। [2]तस्मै नम इत्यन्वयः।।१७।।

किं वक्तव्यं भागवता आत्मानं विशोध्य ब्रह्म प्राप्नुवन्तीति भागवताश्रिता हीनजतीया अपि प्राप्नुवन्तीत्याह - **किरातेति**। किरातादयो हीनजातयः अन्ये च ये पापाः पापजातयः यदुपाश्रयाश्रयाः यं परमपुरुषमुपाश्रिता यदुपाश्रया भागवतास्तदाश्रया भागवताश्रिताः शुद्ध्यन्ति। असम्भावनाशङ्कां परिहरति प्रभविष्णवे प्रभवनशीलाय पूर्वोक्त तपआदीनां फलप्रदाय इत्यर्थः। "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" (भ.गी.9-24) इति भगवद्वचनात् सर्वकर्मफलप्रदत्वेन सर्वसाधनानां तत्समर्पणमेव युक्तमिति भावः।।१८।।

एतदेव उपपादयति - **स** इति। स प्रसिद्धः एषः आत्मा परमात्मा आत्मवतां केवल[3]भक्तियोग-निष्ठानां [4]यः अधीश्वरः योगफलप्रदः त्रयीमयः पूर्वभागोक्तकर्माराध्यः तत्फलद इत्यर्थः। धर्ममयः स्मार्तदानादि धर्माराध्यः तत्फलद इत्यर्थः। तपोमयः उपनिषद्भागोक्तोपासनात्मकज्ञानमयः तज्ज्ञान-प्राचुर्यवेद्यः तत्फल[5]प्रद इत्यर्थः। तत्तद्दे[6]वतानां तत्तत्फलदातृत्वश्रवणात् कथं तस्यैव सर्वकर्माराध्यत्वं इत्यत आह। गतव्यलीकैः गतदोषैः अजशङ्करादिभिः ब्रह्मरुद्रादिभिः वितर्क्यलिङ्गः निश्चेतुमशक्यं लिङ्गं लक्षणं चिह्नं यस्य सः। ब्रह्मादयोऽपि यदी[7]यलक्षणानि वितर्कयन्ति तथाभूतः तेषामपि अन्तरात्मत्वेन उपास्य एव। तत्तद्ब्रह्मादिरूपेण फलद इति हृदयम्। एवंविधभगवत्प्रसादं स्वस्य प्रार्थयते भगवानिति। अनेन देवताविशेषश्च विवक्षितः।।१९।।

सर्वपालकत्वं [8]अनुस्मरन् आह - **श्रिय** इति। श्रियः [9]पतिः लक्ष्म्याः पतिः भर्ता इत्यर्थः। यज्ञपतिः वैदिक[10]धर्ममर्यादापालकः प्रजापतिः आब्रह्मस्तम्बपर्यन्तप्रजापालकः। धियां ध्यानानां उपासनानां पतिः तन्मर्यादापालकः यज्ञपतिः धियां पतिरिति भागद्वयाभिप्रायेण उक्तम्। लोकपतिः समस्तभुवनानां

1. B. पतिः 2. A.B. Omit तस्मै......न्वयः 3. A.B. Omit "भक्ति" 4. A.B. Omit यः 5. A.B. Omit प्र" 6. W. "वानां 7. B."यं लक्षणं वि"
8. A.B. प्रभोः 9. A.B. Omit पतिः 10. A.B. "क"

पालकः। भुवनानां तदन्तर्गतानां च पालनाभिप्रायेण लोकपतिः प्रजापतिः इति च उक्तम्। **धरापतिः** भूपालकः धरायाः लोकान्तर्गतत्वेऽपि अधर्मबाहुल्यात् पृथगुक्तिः। रामकृष्णादिरूपेण भूलोके अवतीर्य दुष्कृद्विनाशं कुर्वन् विशेषेण मर्यादापालक इत्यर्थः। अवतारप्रयोजनमाह - **पतिर्गतिरिति**। अन्धकादयो यादवप्रभेदाः तेषां अक्रूरोद्धवादीनां साधूनां च पतिः गतिश्च पालकः प्राप्यश्च। पतिः गतिश्च इति उभयो पादानेन साधुपरित्राणमेव अवतारकृत्यं दुष्कृद्विनाशनं तु आनुषङ्गिकमिति व्यञ्जितम्। न केवलं स्वकुलीनानामेव सतां पतिः, किन्तु अन्येषामपि सताम् इत्याह **सतां पतिः**। गतिश्च इत्यनुषज्यते एवंविधो भगवान् मे मह्यं प्रसीदतु।।२०।।

**विज०** सुभद्रं श्रवः श्रवणं यस्य स तथा तस्मै।।१७।।

सज्जनसेवाया अपि एतादृशमाहात्म्यं, किमुत भगवत्सेवाया इति भावेन तन्महिमविशिष्टं नमति **किरातेति**। किरातादयो ये अन्ये पापाः ते सर्वे यदपाश्रयाश्रयात् शुध्यन्तीति अन्वयः। यस्मात् अन्यः आश्रयो नास्ति येषां ते यदपाश्रयाः विप्रादयः, तेषामाश्रयात् सेवालक्षणात् शुध्यन्ति विपापा भवन्तीत्यर्थः। शबरात् पर्णशबरीजाताः किराताः? आटविकाः, वैदेहात् पुल्कसीजाताः हूणाः। वैश्यात् ब्राह्मणीजातो वैदेहकः, वैदेहकपुत्रा आन्ध्रा, पुतिम्बा अज्ञातविप्रादिभाषा मधुपायिनः। निष्ठ्यात् किरातीजाताः पुलिन्दाः, व्यभिचाराज्जातः चौरः, तस्मात् जाता वा। शूद्रात् ब्राह्मणीजातः चाण्डालः, तस्माज्जाताः पुल्कसाः। ब्राह्मणाद्वैश्यायां जातः अम्बष्ठः ब्राह्मणात् तस्याम्बष्ठस्य कन्यायां जाता आभीराः, कङ्काः, कर्पराः, नृपाद्वैश्यायां जाता यवनाः, श्मश्रुलाः, शकास्तुरुष्कविशेषाः ढौम्बुकुरुविन्दपूतिम्बपूर्वाः आदिशब्दगृहिताः तथा च अनुक्तैस्सह चतुष्षष्टिजातयः। तथाचोक्तम् "ब्राह्मणस्य त्रयः पुत्रा वर्णास्त्रिष्वनुलोमजाः शूद्रस्य च त्रयः पुत्राः तेष्वेव प्रतिलोमजाः। त्रय स्त्रयः क्षत्तविशोः प्रतिलोमानुलोमजाः। एते द्वादशवर्णानां पुत्रा एकैकशस्तु ते। चातुर्वर्ण्ये प्रसूयन्ते चतुरश्चतुरः सुतान्। ते चत्वारिंशदष्टौ च पूर्वैर्द्वादशभिस्सह। ब्राह्मणाद्यैश्चतुर्भिश्च चतुष्षष्टिर्हि जातयः। ते सर्वे दस्यवो दोषैः चौर्याद्यैः सद्बहिष्कृताः"। इति जातिविवेकाभिधाने अन्ये पापा ब्रह्महत्यादिकर्तारः। तस्मै **प्रभविष्णवे** प्रभवनशीलाय नम इत्यन्वयः।।१८।।

य एवंविधमहिमत्वेन प्रसिद्धः स एष आत्मा परमात्मा भगवान् प्रसीदतामित्यन्वयः। किं विशिष्टः? आत्मवतां भक्त्या अपरोक्षीकृतपरमात्मतत्वानां मुक्तानाम्। 'प्रशंसायां मतुप्' इति प्रशस्तमनसां ज्ञानिनां वा अधीश्वरः वेदधर्मतपोऽनुसारिणां पुंसां वशगत्वात्। त्रयीमयो धर्ममयः तपोमय इत्यनेन भक्तवात्सल्यं दर्शितं तदुक्तम् - "वेदानुसारिवशगः स्वेच्छया"(अध्यात्मे) इति। तत्र प्रमाणमाह **गतेति**। * 'व्यलीकं त्वप्रियेऽनृते' इत्यभिधानात्। गतव्यलीकैः अजशङ्करादिभिः ब्रह्मशिवादिभिः वितर्क्यं विशेषेणानुमेयं लिङ्गं जगज्जन्मादिलक्षणं यस्य स तथोक्तः।।१९।।

---

1. W. Omits राम 2. M.Ma. हो * मुद्रितामरकोशपाठः - "पीडार्थेऽपि व्यलीकं स्यात् अलीकं त्वप्रियेऽनृते ' - 3-168

चित्तीकृततत्तदभीष्टसिद्धये तत्तद्गुणविशिष्टस्य हरेः प्रसादं प्रार्थयते **श्रियःपतिः** इति। श्रीधरयोः पतित्वकथनेन सर्वाधिपत्ये सिद्धेऽपि तदवान्तरदेवतानाम् आधिपत्यं निवारयति। वेदादिवाङ्मात्राभिमानित्वेन श्रीप्रसादोऽपि प्रार्थनीय इति अभिप्रायेण श्रियः पतिरिति। इतरविशेषणानि एवम् अनुसन्धेयानि इति बहुजनाश्रयत्वेन क्षमागुणनिधित्वेन स्थिरायाः धरायाः पतिः। मनआदीन्द्रियव्यापारसाध्यस्य देहान्तरभोग्यफलस्य यज्ञकर्मणः फलदातृत्वेन तत्फलपालकः। फलपालनं किमर्थमित्यत आह प्रजापतिरिति। कर्मण्यधिकृतस्य जनस्य जीवनहेतुत्वेन पतिः "प्रजा तु जनपुत्रयोः"(वैज.को.6-2-23) इति प्रजापतिशब्दवाच्यत्वं मुख्यम् अस्येति वा प्रवृत्तेः ज्ञानपूर्वकत्वेन सम्भवात् तदर्थं धियां पतिरिति लोकपतिः इत्यनेन पुरन्दरादीनां तत्पतित्वं निवारयति पतिर्गतिश्च इत्यादिना भक्तवात्सल्यातिशयत्वं दर्शयति निरपेक्षत्वेन सतां स्वामित्वापेक्षा नास्तीति शङ्कां निवारयति सतां पतिः।।२०।।

**रा०कृ०** प्रागुक्तसमर्पणप्राशस्त्यमेव विशदयति - तपस्विनः शरीरश्रमपूर्वकतपोऽनुष्ठानपराः दानपराः तत्तत्फलापेक्षया पात्रेषु धनादिकं निक्षिपन्तः, यशस्विनः वापीतटाकारामादिनिर्माणैः कीर्तिं सम्पादितवन्तः मनस्विनः सर्वभूतदयापराः मन्त्रविदः मन्त्रार्थज्ञानपूर्वककर्मानुष्ठायिनः, सुमङ्गलाः सदाचारपरायणाः - एते सर्वेऽपि जनाः यदर्पणं यस्मिन् भगवति पूर्वोक्ततपःप्रभृतीनां समर्पणं विना क्षेमं आत्यन्तिकदुःखनिवृत्तिरूपं श्रेयो न विन्दन्ति न प्राप्नुवन्ति तस्मै सुभद्रश्रवसे नमो नमः। विना भगवत्समर्पणबुद्धिं यावदपि सत्कर्मकृतमहङ्कारमभिमानं च जनयत् पतनकारणं भवतीति भावः।।१७।।

किरातहूणान्ध्रपुलिन्दपुल्कसाः किराताः मृगादिहिंसकाः वनचराः, हूणाः द्वीपविशेषवासिनः श्वेतवर्णाः, आन्ध्राः आन्ध्रदेशवासिनः केचन दुराचारपराः, पुलिन्दाः अत्यन्तहिंसाविहाराः, व्याधादिष्वन्तर्भूताः जनाः, पुल्कसाः गवादिहिंसकाः, आभीराः कैवर्ताः, कङ्काः कङ्कनामकपक्षिवधाजीवाः, यवनाः यवनजातीयाः, कषादयः शाणोल्लेखनादिकषणप्रधानजातीयाः, तत्प्रभृतयश्च, अन्ये एतद्भिन्नाश्च ये पापाः पापाचारास्सन्ति तेऽपि यदुपाश्रयाश्रयाः यो भगवान् उपाश्रयो येषां ते यदुपाश्रयाः भगवद्भक्ताः ते भागवताः आश्रयो येषां तथाभूताः भागवताश्रयास्सन्तः शुद्ध्यन्ति मोक्षप्रतिबन्धकदोषविरहिताः भवन्ति तस्मै प्रभविष्णवे कर्तुमकर्तुमन्यथाकर्तुं च समर्थाय परमपुरुषाय नमः। अत्रोक्ताः सर्वेऽपि वेदविहितधर्माचारविमुखत्वात् पापा इति शुकयोगिना निरूपिताः। एते च वेदोक्तधर्ममाचरन्तु अथवा तिरस्कुर्वन्तु तथाऽपि ते भगवदेकशरणानां भागवतानामेवाश्रयात् पूतचित्ताः मोक्षं प्राप्नुवन्तीत्यहो भागवतधर्मस्य वेदधर्मार्थविस्तारकस्य विश्वजनीनता।।१८।।

आत्मवतां धीराणां सर्वत्र ब्रह्मभेददर्शिनामिति भावः आत्मा आत्मत्वेनोपास्यः अधीश्वरः सर्वेश्वरः अथवा योगिनां परमेश्वरत्वेनोपास्यः त्रयीमयः वेदाध्येतॄणां ऋगादित्रयीरूपेणोपास्यः धर्ममयः

धार्मिकानां धर्मरूपेणोपास्यः तपोमयः तपस्विनां तपोमयत्वेनोपास्यः गतव्यलीकैः निष्कपटैः अजशङ्करादिभिः वितर्क्यलिङ्गः केवलं विचारणीयलक्षणः न तु निश्चयेन ज्ञेयलक्षण इति यावत् स एष भगवान् प्रसीदतां मम प्रसन्नो भवतु।

ब्रह्मरुद्रादयो देवाः सृष्टिलयादिकार्यनिर्वाहाय सर्वेश्वरांशसञ्जाता एव। तथा चांशभूताः तेंऽशिनो भगवतः स्वरूपं वितर्कयितुमेव प्रभवन्ति न तु तत्त्वतो जानन्ति।।१९।।

श्रियः सर्वसम्पदधिष्ठात्र्याः लक्ष्म्याः पतिः नियामकः यज्ञपतिः निष्कामकर्मरूपिणां सर्वश्रेयस्साधनानां यज्ञानां पतिः प्रवर्तकः प्रजापतिः आब्रह्मस्तम्बपर्यन्तप्राणिरक्षकः धियां पतिः बुद्धीनां प्रेरकत्वेनेश्वरः लोकपतिः पातालादिचतुर्दशभुवनपालकः, धरापतिः रामाद्यवतारान् स्वीकृत्य भुवो रक्षकः अन्धकवृष्टिसात्वतां अन्धकादियादवानां प्रभुः गतिः परमप्राप्यः तथाऽपि सतां सदाचारपराणां स्वभक्तानां पतिः विशिष्यपालकः भगवान् मे मम प्रसीदताम्। अत्र श्रीपति, यज्ञपति, प्रजापत्यादि विविधविशेषणसहितो भगवान् मे प्रसीदतामित्यनेन संसारिणां प्राणिनां स्वपरिसरवर्तिषु गेहादिवस्तुषु कलत्रपुत्रादिषु च जनेषु तत्तत्सम्बन्धात्मनाऽवस्थितस्य सर्वान्तर्यामिणः अनुसन्धानेन रागद्वेषादि बन्धविमुक्तिः भवतीति सूच्यते। तथाहि - गृहस्थेन गेहे जीवरूपा देवालयभावना साध्व्या च स्वभर्तरि ईश्वरभावना कर्तव्येति यथायोगमवसेयम्।।२०।।

**यदङ्घ्र्यभिध्यानसमाधिधौतया[1] धियाऽनुपश्यन्ति हि तत्त्वमात्मनः।**
**वदन्ति चैतत् कवयो यथारुचं स मे मुकुन्दो भगवान् प्रसीदताम्।।२१।।**

**प्रचोदिता येन पुरा सरस्वती वितन्वता[2]ऽजस्य सतीं स्मृ[3]तिं हृदि।**
**स्व[4]लक्षणा प्रादुरभूत् किलास्यतः स मे ऋषीणामृषभः प्रसीदताम्।।२२।।**

**भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पूरुषः।**
**भुङ्क्ते गुणान् षोडश षोडशात्मकः सोऽलङ्कृषीष्ट[5] भगवान् वचांसि मे ।।२३।।**

**नमस्तस्मै भगवते वासुदेवाय वेधसे[6]।**
**पपुर्ज्ञानमयं सौम्या यन्मुखाम्बु[7]रुहासवम्।।२४।।**

1. C.N. 'ङ्घ्र्यनु' 2. AF.GF. 'तोऽ' 3. M.Ma. स्थि' 4. AF.GF. वि' 5. B. 'ष्टाखिलवित् 6. H.V. वेदव्यासाय वेधसे; N. व्यासायामिततेजसे 7. M.Ma. 'म्भो'

**एतदेवात्मभू राजन्! नारदाय[1] विपृच्छते।**
**वेदगर्भोऽभ्यधात्[2] साक्षाद् यदाह हरिरात्मनः[3]।।२५।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
द्वितियस्कन्धे चतुर्थोऽध्यायः।।४।।

**श्रीध०** ज्ञानप्रदत्वम् अनुस्मरन् आह - **यदङ्घ्रीति** द्वाभ्याम्। यस्य अङ्घ्रयोः अभि[4]ध्यानमेव समाधिः तेन धौतया शोधितया धिया[5] यथारुचं रुच्यनुसारेण सगुणनिर्गुणा[6]दिभेदैः। यद्वा रुक् वक्तृ[7] प्रतिभा यथामति इत्यर्थः।।२१।।

**प्रचोदिता** इति। किञ्च पुरा कल्पादौ अजस्य हृदि सतीं[8] सृष्टिविषयां स्मृतिं वितन्वता येन प्रचोदिता सती[9] सरस्वती वेद[10]रूपा वाक् तस्य मुखतः किल प्रादुर्भूता। स्वानि लक्षणानि शिक्षाद्युक्तानि यस्याः सा। ऋषीणां ज्ञानप्रदानाम् ऋषभः श्रेष्ठः।।२२।।

इदानीं स्ववचां[11] श्रोतृजनाह्लादिनीं शृङ्गारकरुणादिशोभां प्रार्थयते - **भूतैः** इति। स मे वचांसि अलङ्कृषीष्ट अलङ्करोतु। अन्यस्य वचसामन्येन अलङ्कारासम्भवं आशङ्क्य तस्यान्तर्यामितां आविष्करोति। यो महद्भिः भूतैः इमाः पुरः शरीरणि सृष्ट्वा अमूषु पूर्षु अन्तर्यामितया शेते वसति। अत्र पुरुषसमाख्यां प्रमाणयति यद्यस्मात् पूरुष इति। अत एव य एकादशेन्द्रियपञ्चभूत[12]तरूपा[13]न् षोडशगुणान् कलाः भुङ्क्ते प्रकाशयति, पालयति इति वा। तदा[14] तु आत्मनेपदमार्षम्। अत्र[15] हेतुः। यतः षोडशानां आत्मा चेतयिता। स्वार्थे कः न तु अत्र जीवत्वं उच्यते प्रार्थनाविरोधात्।।२३।।

श्रीव्यासं नमस्करोति - **नम** इति। सौम्याः वैशम्पायनादयो[16] भक्ताः यस्य मुखाम्बुरुहे[17] आसवो मकरन्दम्।।२४।।

इदानीं प्रश्नोत्तरतया ब्रह्मनारदसंवादं प्रस्तौति[18] - **एतदिति**। उत्पत्तिसमय एव वेदा गर्भे यस्य सः[19]। साक्षात् हरिः यदाह।।२५।।

---

1. M.Ma. °येति पृ°; V. °यान् 2. AF.GF. सर्वं; W. पूर्वं 3. AF.GF. °रीश्वरः 4. A. °नु° 5. B.H.V. Omit धिया 6. H.V. °णभे° 7. A.H. V. Omit वक्तृ 8. H.V. Omit सतीं 9. H.V. Omit सती 10. B. Omits वेद......वाक्; H.V. Omit वेद......तस्य 11. B. °वचसः 12. B. °महाभूत°; H.V. °तन्मात्र° 13. B. °पाणि 14. H.V. भुङ्क्ते इति आ° 15. B.H.V. त° 16. B.H.V. Omit वैशम्पायनादयः 17. H.V. °जे 18. H.V. Omit प्र 19. A.B. Omit सः

इति श्रीमद्भागवते द्वितीयस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां चतुर्थोऽध्यायः।।४।।

**वीर०** ज्ञानप्रदत्वेन सतां पतित्वमेव व्यक्तीकुर्वन् तत्प्रसादं प्रार्थयते[1] - **यदित्यादि** द्वाभ्याम्। यस्याङ्घ्रयोः[2] अभिध्यानमेव समाधिः तेन धौतया शोधितया धिया आत्मनः तत्त्वं याथात्म्यं कवयः स्वयं पश्यन्ति जानन्ति अन्येभ्यश्च यथारुचं यथामति रुक् प्रतिभा वदन्ति च उपदिशन्ति च इत्यर्थः। स भगवान् मुकुन्दो[3] मे मह्यं प्रसीदताम्।।२१।।

किञ्च **प्रचोदिता** इति। पुरा कल्पादौ अजस्य ब्रह्मणः हृदि स्मृतिं सृष्टिविषयां स्मृतिं वितन्वता विस्तारयता येन परमात्मना प्रचोदिता सञ्चोदिता सरस्वती त्रयीरूपा स्वलक्षणा स्वरविशेषादिस्वासाधारणचिह्नवती आस्यतः मुखतः प्रादुरभूत् प्रादुर्भूतवती स प्रचोदयिता ऋषीणां ज्ञानप्रदानाम् ऋषभः श्रेष्ठः मे प्रसीदताम्।।२२।।

इदानीं भगवानेव स्व वाचां प्रतिपाद्यः स्यादिति प्रार्थयते - **भूतैः** इति। स भगवान् मे वचांसि **अलङ्कृषीष्ट** अलङ्करोतु प्रतिपाद्यः स्यात् इत्यर्थः। वाचां भगवत्प्रतिपादनमेव हि अलङ्कारः यथोक्तं "तद्वाग्विसर्गो जनताघविप्लवः"(भा.ग.1-5-11) इत्यादि। ननु भवता उच्चार्यमाणानां नानाविधशब्दानां कथं स एव प्रतिपाद्यः स्यात् इत्यत आह महद्भिः भूतैः महदादिपृथिव्यन्तैः भूतैः इमाः पुरः पुराणि शरीराणि निर्माय विभुः स्वयं तत्तज्जीवान्तर्व्यापनस्वभावः अमूषु आसु पुरीषु शेते। अत एव पूरुषः पुरि शयनात् पुरुषशब्दवाच्यः। अवतिष्ठते न केवलं शेते, किन्तु लीलारसमपि अनुभवति इत्याह। षोडशगुणान् शब्दादिविषयान् पञ्च, पञ्चवागादिव्यापारान्, प्राणादिवायुवृत्तीः पञ्च एकं मनोगुणं[4] सङ्कल्पादिं एतान् षोडश गुणान् स्वयं षोडशात्मकः एकादशेन्द्रियपञ्चभूतात्मभूतः भुङ्क्ते लीलारसं अनुभवति इत्यर्थः। जीवान्तर्यामित्वेन गुणान् गृह्णतो भगवतः गुणग्रहणं लीलारसः, जीवस्य तु कर्मायत्तो भोग इति भावः। एवञ्च देवादि नामरूपाणां परमात्मपर्यन्तत्वात् "नतास्म सर्ववचसां प्रतिष्ठा यत्र शाश्वतीति" न्यायेन मद्वचसां स एव विषयः स्यादिति युक्ता प्रार्थना।।२३।।

एवं भगवन्तं नमस्कृत्य अथ स्वगुरुं पितरं च व्यासं नस्करोति - **नम** इति। व्यासस्यापि वासुदेवावतारत्वात् वासुदेवाय इत्युक्तिः। वेधसे सर्वज्ञाय सौम्याः तच्छिष्याः ज्ञानमयं यन्मुखाम्बुरुहासवं यन्मुखाम्भोजे यो मकरन्दः तं पपुः तस्मै नम इत्यन्वयः।।२४।।

---

1. A.B. ति 2. A.b. घ्रेः 3. W. Omits मुकुन्दो 4. A.B. मनसो गु

एवं गुरुदेवते नमस्कृत्य प्रकृतप्रश्नस्य उत्तरम् अवतारयितुं तस्य साम्प्रदायिकत्वसूचनाय नारदहिरण्यगर्भयोः प्रश्नोत्तरे संवादयति **एतदिति**। त्वया यत्पृष्टं एतदेव विपृच्छते पृष्टवते नारदाय वेदगर्भः वेदो यस्य गर्भः अन्तःस्थः स वेदगर्भः चतुर्मुखः अभ्यधात्। किमित्यत आह हरिः भगवान् आत्मनः स्वस्मै यदाह, भगवान् चतुर्मुखाय यदाह, स च नारदाय, तदेवाहं भवते अभिधास्यामि इत्यभिप्रायः।।२५।।

इति श्रीमद्भागवते द्वितीयस्कन्धे
श्रीवीरराघवविदुषा लिखितायां श्रीभागवतचन्द्रचन्द्रिकायां
व्याख्यायां चतुर्थोऽध्यायः।।४।।

**विज०** उक्तार्थजातमिदं किंप्रमाणकं कथं वा ज्ञातुं शक्यमिति तत्राऽह - **यदङ्घ्रीति**। कार्त्स्न्येन अनिवृत्तविषयसंस्कारस्मरणम् अभिध्यानं, निवृत्तविषयसंस्कारः असंप्रज्ञाताख्यः समाधिः। यदङ्घ्रिविषयाभ्यां ताभ्यां धौतया निर्णिक्ताविद्याकाममलया धिया आत्मनः परमात्मनः तत्त्वम् अनुपश्यन्ति। हि यस्मात् तस्मात् तद्दर्शनं प्रमाणम्। दृष्टा च यथारुचं यथारुचि शिष्यादिभ्यः तत्तत्त्वं वदन्ति च इत्यतः तदुपदेशशास्त्रेण ज्ञातुं च शक्यमित्यर्थः।।२१।।

ग्रन्थारम्भे सरस्वतीचतुर्मुखादिप्रसादश्च अभीष्टसाधनं भवतीति अभिप्रायेण आह - **प्रचोदिता** इति। पुरा सर्गादौ *अजस्य आत् परब्रह्मणः जातस्य चतुर्मुखस्य हृदि सतीं सर्वचेतनेभ्यः उत्तमां स्थितिं स नियमलक्षणां वितन्वता संस्कारोद्बोधद्वारेण विस्तारयता येन भगवता प्रचोदिता प्रेरिता स्वलक्षणा स्वरूपभूतनित्यत्वाख्यलक्षणा स्वरूपनिर्णायकषडङ्गाख्यलक्षणा वा सरस्वती वाक् ऋगादि-वेदरूपा तस्य आस्यतः आस्यचतुष्टयात् प्रादुरभूत् अभिव्यक्ताऽभूत् "चत्वारो निर्गता वेदाः तव वक्त्रचतुष्टयात्" इत्यादेश्च ऋषीणां ब्रह्मज्ञानिनाम् ऋषभो ज्ञानप्रदः परमवागीश्वरीपतिः नारायणो मे प्रसीदतां प्रसन्नो भवतु इत्यन्वयः। किल इत्यनेन सर्वश्रुत्यादिसंवादं दर्शयति "वार्तासंवादयोः (सम्भाव्ययोः) किल" (वैज.को.8-7-19) यादवः। यद्वा पुरा शास्त्रप्रबन्धे अधिकृतेन अजस्य मम पितामहस्य पराशरस्य हृदि सतीं ज्ञानोपदेशलक्षणां स्थितिं वितन्वता येन व्यासेन प्रचोदिता सङ्क्षिप्ता स्वलक्षणा स्वयोग्यसर्गादिदशलक्षणा सरस्वती भागवतसंहितारूपा यस्य आस्यतः प्रादुरभूत् स ऋषीणाम् ऋषभो व्यासो मे प्रसीदतां इत्यन्वय इति "अजः पितामहेऽनादौ"(वैज.को.6-5-4) इति "प्रबन्धे निकटेऽतीते पुराणेनागते पुरा"(वैज.को.8-7-23) इति च "छागे विष्णौ हरे ह्यज" (वैज. को. 6-5-4) इत्यतः अजस्य विष्णोः सतीं स्थितिं वितन्वता हृदि लोकस्येति शेष इति वा।।२२।।

---

1. W. 'तितारयिषुः 2. B. अनु' 3. A.B. Omit पृष्टवते 4. W. Omits नारदाय 5. A.B. Omit वेदगर्भः * अत्र 'अः' परब्रह्मवाचकः। आत् जायत इत्यजः तस्य अजस्य - इति विजयध्वजतीर्थाभिमतव्याख्यानमिति विभाव्यते। प्रायशः मुद्रितपुस्तकेषु 'अजस्याऽऽपरब्रह्मणः' इत्यत्र अकारप्रश्लेषद्वया-नन्तरं तकारः (त्) लुप्तःस्यादिति मन्यते।

इदानीं देहेन्द्रियादिप्रवर्तकं हरिं प्रसादयति - **भूतैः** इति। यो विष्णुः महद्भिः व्याप्तैः भूतैः पृथिव्यादिभिः पुरः शरीराणि निर्माय अमूषु पूर्षु आत्मादिरूपैः शेते इति यत्ततः एव यः पुरुषः पुरिशयनयोगेन पुरुषनामा "तस्येदमेव शिर" इति श्रुतेः गोलकात्मकदेहव्याप्तत्वात् वा, षोडशात्मकः एकादशेन्द्रियपञ्चभूतव्यापी, षोडशगुणान् शब्दादिविषयसारान् भुङ्क्ते न दुःखानि। स भगवान् स्वविषय-पुराणं व्याकर्तुकामस्य मे वचांसि अलङ्कृषीष्ट स्वप्रीतिजनकानि कुर्यात् इत्यन्वयः।।२३।।

इदानीं भक्त्यतिशयेन देवकीनन्दनं कटाक्षीकृत्य नमति - **नम** इति। सौम्याः ज्ञानसोमार्हाः ब्रह्मादयो ज्ञानात्मकं यस्य हरेः मुखांम्बुरुहात् उत्पन्नं आसवं मधु पपुः तस्मै वेधसे कर्त्रे वासुदेवाय भगवते नमः। सौम्याः उद्धवादयो ज्ञानमयं यन्मुखाम्भोरुहासवं पपुः तस्मै वेधसे कंसाद्यसुरहन्त्रे वासुदेवाय शौरये नम इति वा। सौम्याः नारदादयो ज्ञानमयं ज्ञानप्रतिपादकं भागवतपुराणं नाम यन्मुखाम्भोरुहासवं पपुः तस्मै वेधसे चतुर्मुखाय नमः। कीदृशाय वासुदेवाय? नारायणपुत्राय शौरेः पुत्रः शौरिरितिवत्। सौम्याः व्यासादयः तस्मै वेधसे विधिपुत्राय नारदाय वासुदेवाय वासुदेवभक्ताय। सौम्याः वैशम्पायनादयः तस्मै वासुदेवाय वासुदेवावताराय व्यासाय नमः वेधसे भारतादिशास्त्रकर्त्रे।।२४।।

स्वाभीष्टदेवताप्रसादं प्रार्थयित्वा साम्प्रतं परीक्षित्प्रश्नं प्रतिवक्तुम् उपक्रमते - **एतदेव** इति। हरिः आत्मनः स्वस्य यत्पुरणमाह आत्मभूः परमात्मपुत्रो वेदगर्भो ब्रह्मा तदेतत् सर्वमिति त्वत्प्रश्नप्रकारेण पृच्छते नारदाय अभ्यधात् इत्यन्वयः। अर्थव्यत्यासो नास्तीति एवशब्दः। एतदुक्तं भवति - आदौ नारायणेन ब्रह्मणे प्रोक्तं, ब्रह्मणा नारदाय, नारदेन व्यासाय, व्यासेन मह्यं, तदहं त्वत्प्रश्नपरिहारत्वेन वक्ष्यामीति।।२५।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
द्वितीयस्कन्धे चतुर्थोऽध्यायः।।४।।

**रा०कृ०** यदङ्घ्र्यभिध्यानसमाधिधौतया यस्य भगवतः अङ्घ्र्योः पादयोः अभिध्यानं निरन्तरध्यानमेव समाधिः तेन धौतया परिशोधितया धिया आत्मनः परमात्मनः तत्त्वं याथार्थ्यं पश्यन्ति योगिनः साक्षात्कुर्वन्ति। कवयश्च पण्डितास्तु एतदात्मतत्त्वं यथारुचं स्वरुच्यनुसारेण साकारनिराकारा-ण्वादिभेदैः वदन्ति तद्याथार्थ्यं नैव जानन्ति स भगवान् मुकुन्दो मे प्रसीदताम्।
"तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः। कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन!" (भ.गी.6-46) इति स्वयं भगवता प्रस्तुतो योगी जानाति आत्मतत्त्वम्, अन्ये तु पण्डिताः स्वस्वमतानुसारेण निराकारसाकारादिभेदं प्रतिपादयन्तः परस्परं विवदन्ति न तु भगवतः तत्त्वं वेत्तुं प्रभवन्ति। एतद्विवादा एव कालक्रमेण द्वैताद्वैतादिनानामतत्वेन प्रसिद्धिं प्रापन्।

वस्तुतस्तु भगवतः सर्वशक्तिमत्वात्, सर्वमयत्वात् सर्वान्तर्यामित्वाञ्च एकोऽपि युगपत् साकार निराकार सगुणनिर्गुणादिभेदवान् भवत्येव। तथा च पूर्वोक्तनानामतभेदोऽपि खण्डशः वास्तविकः तन्मतभेदवादिनामनुभवश्च पाक्षिकः। अथापि भगवतस्तत्त्वं तु -

"यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति। तस्याहं न प्रणश्यामि स च मे न प्रणश्यति"
(भ.गी.6-30) इत्यदिना भगवदभिवर्णितेन योगीन्द्रेणैवाभिज्ञायते अथवा अनुभूयत इति परमार्थः।।२१।।

अपि च पुरा कल्पादौ अजस्य ब्रह्मणः हृदि सतीं पूर्वकल्पसम्बन्धिनीं सृष्ट्यनुकूलाम् इत्यर्थः स्मृतिं वितन्वता विस्तारयता येन अन्तर्यामिणा भगवता प्रचोदिता प्रेरिता स्वलक्षणा शिक्षाद्युक्त लक्षणोपेता। सरस्वती आस्यतः ब्रह्मणः मुखतः प्रादुरभूत् सः ऋषीणां ज्ञानदायिनाम् ऋषभः श्रेष्ठः मे प्रसीदताम्।

अनाद्यन्तप्रवर्तमानसृष्टिहेतोरनभिव्यक्तत्वादजसंज्ञा। अजस्य हृदि सृष्टिविषया स्मृतिर्मुकुले विकसनशक्तिरिव स्वाभाविकी वर्तते। विकसनशक्तिं निमित्तीकृत्य कालो यथा मुकुलं पुष्पाकृतिं नयति तथा सर्वान्तर्यामी ईश्वरोऽपि ब्रह्महृद्गतसृष्टिविषयां स्मृतिं सृष्ट्याकारेण विस्तारयति। तथा च तदीश्वर-प्रेरिता सृष्टिविज्ञानशक्तिरेव ब्रह्ममुखतः प्रसरन्ती सरस्वतीत्यन्वर्थसंज्ञा भवति। अस्याः सरस्वत्याः सहायेन वैखरीवागिव ब्रह्मणोऽभिव्यक्ता सृष्टिः प्रवर्धते। एवमत्र परमेश्वरः सर्वकारणकारणत्वेन ज्ञानदायिनामपि ज्ञानदायित्वेन निरूपितः।।२२।।

विभुः सर्वव्यापको यो भगवान् महद्भिः भूतैः पृथिव्यादिमहाभूतैः इमाः पुरः शरीराणि निर्माय अमूषु पूर्षु शेते अन्तर्यामितया जीवरूपेण च निवसतीति यत् तस्मात् कारणात् पूरुष इत्यन्वर्थनामकस्सन् षोडशात्मकः मनःप्रभृतीन्येकादशेन्द्रियाणि शब्दादिपञ्चविषयाश्चेत्येवं षोडशात्मकः, षोडश षोडशगुणान् मनःप्रभृतीन्येकादशेन्द्रियपञ्चतन्मात्ररूपान् षोडशगुणान् भुङ्क्ते अनुभवतीति स भगवान् मे मम वचांसि अलङ्कृषीष्ट श्रोतृजनाह्लादकमाधुर्ययाथार्थ्यादिगुणरूपालङ्कार विशिष्टानि कुर्यात्।

स्ववचनविन्यासः परीक्षिदुपयोगिपरमोपदेशतया पर्यवस्यतु इति श्रीशुकाभिप्रायो गम्यते।।२३।।

ज्ञानमयं यन्मुखाम्बुरुहासवं यस्य वेदव्यासस्य मुखमेवारविन्दं तदुद्गतमासवं मकरन्दं सौम्याः शान्तिप्रभृतिगुणविशिष्टाः तच्छिष्याः पपुः पीतवन्तः तस्मै वेधसे वेदादिसृष्टिप्रवर्तकाय वासुदेवाय वासुदेवावताराय भगवते वेदव्यासाय नमः।।२४।।

हे राजन्! हरिः साक्षादात्मनः स्वस्य ब्रह्मणः यदाह कथितवान् तदेतदेव वेदगर्भः वेदाः गर्भे यस्य तथाभूतः आत्मभूः ब्रह्मा अनुपृच्छते नारदाय अभ्यधात् अकथयत्।

अत्र गुरुपरम्परास्मरणरूपो ब्रह्मविद्यासम्प्रदायो निरूपितः।।२५।।

इति श्रीमद्भागवते द्वितीयस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां
व्याख्यायां चतुर्थोऽध्यायः।।४।।

oooOooo

# पञ्चमोऽध्यायः

**नारद उवाच**

**देवदेव नमस्तेऽस्तु भूतभावन पूर्वज।**
**तद् विजानीहि [1]यज्ज्ञानमात्मतत्त्वनिदर्शनम्।।१।।**

**यद्रूपं यदधिष्ठानं यतः सृष्टमिदं [2]प्रभो।**
**यत्संस्थं यत्परं यच्च तत् तत्त्वं वद तत्त्वतः।।२।।**

**सर्वं ह्येतद् भवान् वेद भूतभव्यभवत्प्रभुः।**
**करामलकवद् विश्वं विज्ञानावसितं तव।।३।।**

**यद्विज्ञानो [3]यदाधारो यत्परस्त्वं यदात्मकः।**
**एकः सृजसि भूतानि भूतैरेवात्ममायया।।४।।**

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

पञ्चमे नारदेनाथ पृष्टः सृष्ट्यादि वक्तव्यजः। हरेर्लीलां विराट्सृष्टिं कालकर्मादिशक्तिभिः।।

"नारदाय विपृच्छते। वेदगर्भोऽभ्यधात्" (भाग.2-4-25) इत्युक्तं, तत्र नारदप्रश्नमाह - **देवदेव** इति। हे भूतभावन! अत एव सर्वेषां पूर्वज! अनादे! ज्ञायतेऽनेनेति ज्ञानं तत्साधनं यत्तत् विजानीहि विशेषेण ज्ञापय इत्यर्थः। कथम्भूतम्? आत्मतत्त्वं नितरां दृश्यते येन तत्।।२।।

उपलक्षणभू[4]तंप्रपञ्चज्ञानमेव आत्मज्ञानसाधनम् अतः तद्विशेषं पृच्छति - **यद्रूपम्** इति। यद्रूपं, येन रूप्यते प्रकाश्यते। यदधिष्ठानं यदाश्रयम्। यतो येन सृष्टं यत्संस्थं यस्मिन् लीयते यत्परं यदधीनं, यच्च [5]इति यदात्मकं, स्वतः [6]कारणतो वा इत्यर्थः। तस्य तत्त्वं [7]याथार्थ्यं तत्त्वतो वद।।२।।

[8]न जानामीति न [9]च वक्तव्यम् इत्याह - **सर्वम्** इति। भूतं जातं, भव्यं जनिष्यमाणं, भवत् जायमानं, तेषां प्रभुः यतः अतः विशिष्टेन ज्ञानेन अवसितं [10]निश्चितम्।।३।।

आस्तामिदम्। आदौ तावत् त्वामेव कथय इत्याह - **यद्विज्ञान** इति। यतो यस्य विज्ञानम्।

---

1. W. विज्ञा॰ 2. M.Ma. वि॰ 3. W. ॰ति 4. A.B. ॰तं विश्वं 5. H.V. Omit इति 6. A.B. सत्का॰ 7. H.V. यथार्थं 8. H.V. add परं 9. H.V. Omit च 10. V. Omit निश्चितम्

कः तव विज्ञानद इत्यर्थः। यदाधारः कः तव आश्रयः? यत्परो यदधीनः। यदात्मको यत्स्वरूपः। मम तु त्वमेव स्वतन्त्रः परमेश्वर इति बुद्धिः। तव तपश्चरणेन तु परशङ्कया पृच्छामीत्याह सार्धैश्चतुर्भिः। एकोऽसहायः।।४।।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

"नारदाय विपृच्छते। वेदगर्भः अभ्यदात्" इत्युक्तं तत्र नारदप्रश्नमाह - **देवदेव** इति। हे देवदेव! हे भूतभावन! भूतस्रष्टः! अत एव हे पूर्वज! आत्मतत्त्वस्य निदर्शनं नितरां प्रकाशकं यत् ज्ञानं तद्विजानीहि अन्तर्भावितणिजर्थः। विशेषेण ज्ञापय इत्यर्थः।।१।।

इदं कार्यं जगद्रूपं[1] यस्य रूपं यदात्मकमित्यर्थः[2]। अयं निमित्तप्रश्नः। यतः सृष्टं यतः उपादानभूतात्सृष्टं, यदुपादानकमिति यावत्। यदधिष्ठानं यत्संस्थं यत्परमिति च बहुव्रीहिः। यः आधारो यस्य तद्यदधिष्ठानं यदाधारकम् इति आधारप्रश्नः। यस्मिन् संस्था लयो यस्य तत् यत्संस्थम् अयं लयाधारप्रश्नः। यत्परं य अस्मात्परो विलक्षणः तद्यत्परं यदधीनमित्यर्थः। यच्च यदपि अन्यत् यदुपकरणत्वादिकमस्ति, तत्तत्त्वं तस्य[3] याथात्म्यं तत्त्वतो वद इत्यर्थः।।२।।

न जानामीति न वक्तव्यम् इत्याह - **सर्वम्** इति। यत्पृष्टं तदेतत्सर्वं भवान् वेद[4] जानाति। कुत इत्यत आह - भूतभव्यभवत्प्रभुः भूतभविष्यद्वर्तमानकाल[5]गोचरकृत्स्नवस्तुजातस्य प्रभुः उत्पादकः। किञ्च तव त्वया विश्वं जगत् विज्ञानेन भगवत्प्रसादलब्ध[6]ज्ञानेन अवसितं निश्चितं करस्थामलकवत्। एवं जगद्विषयः प्रश्नः कृतः।।३।।

आस्तां तावदिदम्। त्वामेव त्वं कथय इत्याह - **यद्विज्ञान** इति। यस्मिन् विषये तव विज्ञानमस्तीति सप्तमीपूर्वपद[7]बहुव्रीहिः। यतो विज्ञानं यस्य, यद्विज्ञानः तव विज्ञानदः क इति वा। यदाधारः य आधारो यस्य सः[8] कः तवाश्रयः। यत्परः यः परो यस्य सः कः तव[9] स्वामी[10]। यदात्मकः यः आत्मा यस्य सः[11] कः त्वदात्मा इत्यर्थः। मम तु त्वमेव स्वतन्त्रः परमेश्वर इति प्रतिभाति[12] तपश्चरणेन तु परशङ्कया पृच्छामीत्याह सार्धैः चतुर्भिः। एकः असहायः आत्ममायया आत्मनः सङ्कल्पेन भूतैः पृथिव्यादिभूतैः भूतानि देवादीनि[13] भूतानि सृजसि[14], त्वमिति[15] शेषः।।४।।

---

1. W. जगत् यद्रूपं 2. W. Omits यदात्मकं 3. A.B. Omit तस्य 4. A.B. एव 5. A.B. 'लीन' 6. A.B. 'ध्य' 7. A.B. Omit 'पूर्वपद' 8. W. यदाधारः 9. W. त्वत्तः 10. W. कः ,इत्यर्थः 11. W. adds यदात्मकः 12. A.B. भासि 13. W. 'दिमू' 14. W. 'ति 15. W. Omits त्वमिति शेषः

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अस्मिन् अध्याये वेदगर्भनारदाख्यायिकाकथनव्याजेन ग्रन्थादौ प्रतिज्ञातं जगज्जन्मादिकारणत्वलक्षणं तदेकनिष्ठमिति सप्रपञ्चं प्रतिपाद्यते। तत्राऽऽदौ नारदप्रश्नप्रकारमाह - **देवदेव** इति। यत् अज्ञानम् आत्मनः परमात्मनः तत्त्वं निदर्शयति इति आत्मतत्त्वनिदर्शनं तज्ज्ञानं मह्यं विजानीहि विज्ञापय आत्मब्रह्मणोः तत्त्वज्ञाने महान् विशेषः अस्तीति भेदस्य परमेश्वरप्रसादम् अन्तरेण वागादीन्द्रियप्रवृत्तिरपि विपरीता भवतीति तत्स्वातन्त्र्यस्य ब्रह्मा कर्ता अहंकरणमिति, कारणस्य विवक्षया व्यत्यस्योक्तं जीवब्रह्मभेदो हरेः स्वातन्त्र्यं नारदस्य करणत्वमिति त्रयं व्यत्ययार्थः तदुक्तं 'व्यत्ययो भेदस्वातन्त्र्यकरणेषु' इति।।१।।

ज्ञेयं पृच्छति - **यद्रूपम्** इति। इदं विश्वं यस्य रूपमिव रूपं न तु साक्षाद्रूपं चित्त्वेन सत्त्वेन च सादृश्यात् तद्वशत्वाच्च, तदुक्तं - "तद्वशत्वादिदं रूपं हरेर्नैव स्वरूपतः" (मानसंहितायाम्) इति यः अधिष्ठानं मूलाधारो यस्य तद्यदधिष्ठानं न तु आरोप्यमाणसर्पस्य रज्जुवदधिष्ठानम्। "अधिष्ठानमिति प्रोक्तं मूलाधारं विचक्षणैः"(वामने) इति। इदं यतः सृष्टं सम्भूतं "यतो वा इमनि भूतानि जायन्ते" (तैत्ति.उ.3-1) इति श्रुतेः। पीठवद्यस्मिन्संस्था संस्थानं यस्य तद्यत्संस्थम्। "यत्स्थितं दृश्यते वस्तु संस्थानं तदुदीरितम्"(वामने) इति च पूर्वं पृथिवीवत् अत्र तु पीठवदिति विशेषात् न पुनरुक्तिः। यः परो यस्माज्जगतः तद्यत्परम्। "हरिः परोऽस्य जगतो ह्यव्यक्तादेश्च कृत्स्नशः"(सात्वतसंहितायाम्) इति। यस्मात् संस्था मृत्युः संहारो यस्य तद्यत्संस्थं येन परं पालनं यस्य तद्यत्परं "येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविंशन्ति"(तैत्ति.उ.3-1) इति वा। यच्च यदधीनं च "यदधीना यस्य सत्ता तत्तदित्येव भण्यत" (भविष्यत्पर्वणि) इति "विभेदे विद्यमानेऽपि मिथो नित्यस्वरूपतः"(भविष्यत्पर्वणि) इति च तस्य हरेः तत्त्वं तत्त्वतो यथावत् वद इत्यन्वयः।।२।।

मम वक्तव्यांशे भवतो ज्ञानसामग्री विद्यत इत्याह - **सर्वम्** इति। हिशब्देन "प्रजापते न त्वदेतान्यन्यः"(तैत्ति.सं.1-8-14-2) इत्यादि श्रुतिप्रसिद्धिं द्योतयति। सर्वमेतदिति प्रतिज्ञा, भूतादिप्रभुरिति हेतुः। हीतिव्याप्तिदर्शनं, करतलामलकवदिति निदर्शनं, विज्ञानेति निगमनम्।।३।।

नैतत्सामान्यज्ञानं किन्तु विशिष्टमेव हरिप्रसादायत्तत्वादिति भावेनाऽह - **यद्विज्ञान** इति। यस्य प्रसादात् विज्ञानं यस्य तव सत्त्वं यद्विज्ञानः, य आधारो यस्य स तथा, यः परो यस्मात् स तथा, य आत्मा स्वामी यस्य स यदात्मकः, त्वं तं वेदेति शेषः। उक्तादधिकं ज्ञातुं पूर्वपक्षं दर्शयति एकः सृजसीत्यादिना एकः त्वमेव आत्ममायया स्वेच्छया भूतानि चराचराणि पृथिव्यादिपञ्चभूतैः सृजसि।।४।।

---

1. A. यं

## श्रीराधाकृष्णप्रणीता सुधीसुधा

हे पूर्वज! देवादिभ्यः सर्वेभ्योऽपि पूर्वमेव जात! हे भूतभावन! भूतानामुत्पादक! हे देवदेव! ब्रह्मन्! ते नमोऽस्तु आत्मतत्त्वनिदर्शनं परमात्मतत्त्वस्य निदर्शनं नितरां प्रकाशकं यत् ज्ञानं वर्तते तत् ज्ञानं विजानीहि विशेषेण ज्ञापय!।।१।।

हे प्रभो! ब्रह्मन्! इदं विश्वं यद्रूपं येन रूप्यते लक्ष्यते यल्लक्ष्यमिति भावः। यदधिष्ठानं यदाधारकं यतो येन सृष्टं, यत्संस्थं यस्मिन् संस्था लयो यस्य तथाभूतं, यत्परं यत्स्वामिकं यञ्च यदात्मकं भवति तत्तत्वं तस्य विश्वस्य तत्त्वं तत्त्वतो यथार्थतः वद!।।२।।

भूतभव्यभवत्प्रभुः भूतभविष्यद्वर्तमानकालिकानां सर्वेषां वस्तूनां उत्पत्तिहेतुः भवान् एतत् मया पृष्टं सर्वं वेद हि जानाति हि। विश्वं सर्वं जगत् करामलकवत् करतलस्थापितमामलकफलमिव तव विज्ञानावसितं विलक्षणेन ज्ञानेन निश्चितम्।।३।।

त्वं यद्विज्ञानः यस्मात् विज्ञानं प्राप्तोऽसि? यदाधारः यदाश्रयोऽसि यत्परः यत्स्वामिकोऽसि? यदात्मकः यत्स्वरूपोऽसि? एकः त्वम् असहायस्सन् आत्ममायया स्वसङ्कल्पेन भूतैरेव पृथिव्यादि-पञ्चभूतैरेव भूतानि देवतिर्यङ्मनुष्यादीनि सृजसि।।४।।

**आत्मन् भावयसे तानि न पराभावयन्[1] स्वयम्।**
**आत्मशक्तिमवष्टभ्य ऊर्णनाभिरिवाक्लमः[2]।।५।।**

**नाहं वेद परं ह्यस्मिन्[3]नापरं[4] न समं विभो।**
**नामरूपगुणैर्भाव्यं सदसत् किञ्चिदन्यतः।।६।।**

**स[5] भवानचरद्[6] घोरं यत् तपः सुसमाहितः।**
**तेन खेदयसे नस्त्वं पराशङ्कां[7] प्रयच्छसि[8]।।७।।**

**एतन्मे पृच्छतः सर्वं सर्वज्ञ सकलेश्वर! ।**
**विजानीहि यथैवेदमहं[9] बुद्ध्येऽनुशासितः।।८।।**

---

1. M.Ma. 'ग्भावये: 2. M.Ma. सूत्र' 3. AF.GF. तस्मिन्; B.H.V. त्वस्मिन्; M.Ma. त्वस्मात् 4.M.Ma. 'ध' 5.WF. भगवानच' 6. H.V. नाच' 7. H.M.Ma.V. 'रा;W. 'र' 8. I.M.Ma. च य' 9. H. यथैवाहं त्वया; V. तथैवाहं त्वया

**श्रीध० आत्मन्** इति। आत्मन्[1] आत्मनि भावयसे पालयसि स्वयमेव पराभवं अप्रापयन् अक्लमः श्रमरहितः यथोर्णनाभिः आत्मनः एव शक्तिमवष्टभ्य सृजति यद्वत्।।५।।

**न** इति तस्मात् अहं तु अस्मिन् विश्वस्मिन् परम् उत्तमं, अपरम् अधमं, समं मध्यमं च, तत्रापि नाम मनुष्यादि[2]रूपं द्विपदत्वादिसगुणः शुक्लादि[3]ः। तैः भाव्यं साध्यं च तत्रापि सत् असत् स्थूलं सूक्ष्मं च किञ्चिदपि अन्यतो न वेद किन्तु त्वत्त एव सर्वं भवतीति मन्ये।।६।।

**स** इति। स[4] तथाविधोऽपि भवान् तपः अचरदिति यत् तेन नः अस्मान् खेदयसे मोहयसि यतः पराशङ्काम् ईश्वरान्तराशङ्कां प्रयच्छसि। त्वत्तपो[5] दृष्ट्वा त्वदपेक्षया अन्यः महान् अस्तीति शङ्का भवतीत्यर्थः।।७।।

**एतत्** इति। यथैव अहं त्वया अनुशासितः शिक्षित[6]स्सन् बुद्ध्ये बुद्ध्येयं तथा विजानीहि विशेषेण ज्ञापय।।८।।

**वीर०** तानि सृष्टानि भूतानि आत्मन् आत्मनि स्वस्मिन् इत्यर्थः। स्वयं न पराभावयन् स्वात्मानं परिभवम् अप्रापयन् अमोघवाञ्छ इत्यर्थः। भावयसे पालयसि। ऊर्णनाभिः सूत्रनाभिः कीट[7]विशेषः तद्वत् आत्मनः शक्तिं प्रकृतिं अवष्टभ्य अक्लमः अस्पृष्टश्रमः सृजसि पासि संहरसीत्यर्थः।।५।।

एतदेव उपपादयति - **नाहम्** इति। अहं तु अस्मिन् कारणविषये परम् उत्कृष्टं, अपरं[8] निकृष्टं, समं मध्यमं देवादि[9]नाम, द्विपदादिरूप, शुक्लादिगुणैः भाव्यं सदसदात्मकं चेतनाचेतनात्मकं किञ्चिदपि वस्तु, अन्यतो न वेद, किन्तु त्वत्त एव जानामीत्यर्थः। यद्वा अस्मिन् कार्यावस्थं[10] नामरूपाभ्यां सत्वादिगुणैश्च उपलक्षितत्वेन निष्पाद्यं[11] चेतनाचेतनात्मकं किञ्चिदपि वस्तु इदमनेन सममिदं निकृष्टम् इदम् उत्कृष्टमिति न जानामीत्यर्थः।।६।।

यत्परः त्वम् इत्यादिप्रश्नः कुतः प्रसक्त इत्यत्र[12]ऽह - **स** इति। घोरम् इतरैः चरितुमशक्यं महत्तपः स भवान् जगत्स्रष्टा[13]। भगवानिति पाठान्तरम्। तदा पूज्यस्त्वं[14]मित्यर्थः। अचरत्[15] कृतवान्। तेन तपश्चरणेन किं अस्मादपि परमस्तीति शङ्कां प्रयच्छसि ततः त्वं नः खेदयसे परशङ्काप्रदानेन चित्तविक्षेपं जनयसि इत्यर्थः।।७।।

---

1. A.B. Omit आत्मन् 2. H.V. °ष्यत्वादि 3. A.B. °त्वादिः 4. H.V. Omit स तथाविधोऽपि.......भवतीत्यर्थः। 5. B. Omits त्वत्तपो......भवतीत्यर्थः। 6. H.V. Omit शिक्षितः 7. W. °टक° 8. A.B. °वं° 9. W. °द्युपत्यादिरू° 10. GF.W. °स्थे 11. A.B. अनि° 12. W. °त 13. B. adds भवान् 14. W. स्त्वं गुरुसम इ° 15. A.B. add अचरति

प्रश्नम् उपसंहरति - **एतत्** इति। हे **सर्वज्ञ**! सकलेश्वर! त्वया अनुशासितः शिक्षितः अहम् इदं भवता उपदेक्ष्यमाणं यथैव बुध्ये जाने तथैव तत्सर्वं पृच्छतो मे मह्यं विजानीहि विशेषेण ज्ञापय।।८।।

**विज०** कुलालादेः कालाद्यधिष्ठानं दृष्टं किमस्य अधिष्ठानमत्राऽह - **अस्मिन्** इति। अक्लमः त्वं तानि भूतानि सूत्रनाभिः ऊर्णनाभिरिव आत्मशक्तिं निजसामर्थ्यमवष्टभ्य आत्मन् आत्मनि भावयसे उत्पादयसि पालयसि च पराक् त्वत्तः बहिः न भावयेः।।५।।

भावयसे वर्धयसे च इति यत् तस्मात् अस्मात् भवतो विश्वस्य परम् उत्तमं कारणम् अहं न वेद अवरं हीनं समं कारणं च न वेद। तुशब्देन उक्तार्थम् अवधारयति। निगमयति नामेति। नाम्ना वाचकेन, रूपेण शुक्लादिना, गुणैः सत्वादिभिः, सत् स्थूलं, असत् सूक्ष्मं च किञ्चित् वस्तु यद्भाव्यं उत्पाद्यं तत्त्वदन्यत इत्यपि गर्हितं निन्दितं अतः त्वमेव सर्वकारणमित्यर्थः।।६।।

ज्ञाततत्त्वेन त्वया प्रश्नः किमिति कृत इति तत्कारणमाह - **स भवान्** इति। तपोऽचरदिति यत् तेन हेतुना त्वं नः अस्मान् खेदयसे त्वयि अनलम्बुद्धिं प्रापयसि त्वदितरकर्तृसद्भावे परां शङ्कां च यच्छसि[2] इत्यन्वयः। तस्मात् प्रश्नः कृत इति भावः।।७।।

'एतन्मे पृच्छतः सर्वं सर्वज्ञ सकलेश्वर' इति विशेषणद्वयं उक्तार्थस्थिरीकरणायोक्तं यथा बुद्ध्ये जानामि तथा इति शेषः। "त्वदधीना यतः सत्ता ह्यवरस्यापि केशव"(मात्स्ये) इत्यनेन पूर्वपक्षोऽयमिति ज्ञायते।।८।।

**रा०कृ०** ऊर्णनाभिरिव तन्तुवाय इव अक्लमः श्रमरहितस्सन् आत्मशक्तिं स्वशक्तिं अवष्टभ्य अबलम्ब्य स्वयमात्मानं न पराभावयन् पराभावमप्रापयन् आत्मन् आत्मनि तानि स्वसृष्टानि भूतानि भावयसे पालयसि।

अत्र तन्तुवायोदाहरणेन विश्वतत्कर्तृस्वरूपाधारविज्ञानादिविषयकाः प्रश्नाः समाहिता इव भान्ति। तथाहि - विश्वस्य विधाता ब्रह्मा। ब्रह्मणः स्त्रष्टा परमात्मा। अथ किं फलमुद्दिश्य परमात्मा ब्रह्माणं ससर्ज? तं च विश्वसृष्टौ प्रवर्तयामास? स्वस्य अनवाप्तावाप्तव्ययोः अभावात्। सत्यम्। एष परमात्मनः स्वभावो यदयमकारणमेव सृष्टिकर्मणि प्रवर्तते। उक्तं च भगवता "न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन। नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि" (भ.गी.3-22) इति।

ऊर्णनाभिः आत्मनि निष्कारणं स्वशक्तिमवलम्ब्य सृष्टेन तन्तुना जालं रचयति। एवं ब्रह्माऽपि स्वशक्तिमेवावलम्ब्य जगत् सृजति। अत्र च 'स्व' पदेन स्वात्मना परिणतो परमात्मैव व्यज्यते।

1. A.B. 'थैतत्स' 2. A. 'य्रं'

परमात्मशक्तिस्तु ब्रह्मणाऽप्यव्यक्तैव विद्यते बीजे जनिष्यमाणवृक्षादिरिव। न हि कार्येण कारणं ज्ञातुं शक्यते। अत एव हि वेदा अपि परमात्मतत्त्वमनिर्वचनीयमिति कथयन्ति। तथा च तन्तुवाय इव ब्रह्माऽपि आत्मस्थामव्यक्तां स्वशक्तिम् अथवा परमात्मशक्तिमाश्रित्य आत्मन एव विश्वसृष्ट्यादिकं विदधातीति गम्यते।।५।।

हे विभो! ब्रह्मन्! अस्मिन् विश्वस्मिन् परम् उत्तमम् अपरं निकृष्टं समं मध्यमं नामरूपगुणैः नाम देवमनुष्यादि रूपं द्विपदत्वादि गुणः शुक्लादिः एतैः भाव्यं निष्पाद्यं सत् स्थूलं असत् सूक्ष्मं च यत्किमपि अन्यतः त्वदन्यतः अहं न वेद न जानामि किन्तु त्वत्त एव सर्वं भवतीति तर्कयामि।।६।।

सः पूर्वोक्तविश्वरूपो भवान् सुसमाहितः अत्यन्तमवहितस्सन् घोरमितरैः दुश्चरं तपः अचरत् अकरोदिति यत् तेन सावधानतपश्चरणेन त्वं नः अस्मिन् खेदयसे मोहयसि कुत इति चेत् पराशङ्कां परस्य ईश्वरान्तरस्य आशङ्कां वितर्कं प्रयच्छसि।।७।।

हे सर्वज्ञ! सकलेश्वर! ब्रह्मन्! अनुशासितः त्वयाऽनुशिक्षितः अहमिदं भवता उपदेक्ष्यमाणं यथैव बुद्ध्ये जाने तथैव एतत्सर्वं पृच्छतो मम विजानीहि विशेषेण बोधय।।८।।

**ब्रह्मोवाच**

**सम्यक् कारुणिकस्येदं वत्स ते विचिकित्सितम्।**
**यदहं चोदितः[1] सौम्य[2] भगवद्वीर्यदर्शने।।९।।**

**नानृतं[3] तव[4] तच्चापि यथा मां प्रब्रवीषि भोः।**
**अविज्ञाय परं मत्त एतावत्त्वं यतो हि[5] मे।।१०।।**

**येन स्वरोचिषा विश्वं रोचितं रोचयाम्यहम्।।**
**यथाऽर्कोऽग्निर्यथा सोमो यथार्क्षग्रहतारकाः।।११।।**

**तस्मै नमो भगवते वासुदेवाय धीमहि।**
**यन्मायया दुर्जयया[6] मां[7] ब्रुवन्ति[8] जगद्गुरुम्।।१२।।**

1. C.H.V. धर्मं 2. N. परधर्मप्र° 3. H.V. °त्यन्तमनृतं तच्च 4. M.Ma. वत 5. H.V. °ऽस्ति 6. AF.GF. °र° 7. V. (याय) 8. B.H.I.M.Ma.V. वद°

**श्रीध०** प्रश्नम् अभिनन्दति त्रिभिः[1] **सम्यक्** इति। वत्स! हे पुत्र! तव इदं विचिकित्सितं सन्देहः तत्पूर्वक[2]प्रश्नोऽयं सम्यगित्यर्थम्[3]। यतः कारुणिकस्य तवायं प्रश्नः। अत्र[4] हेतुः। यद्यतोऽहं[5] भगवद्वीर्य-प्रकाशने धर्मे[6] प्रवर्तितोऽस्मि, अतस्त्वं जिज्ञासुरपि मयि कृपामेव कृतवानित्यर्थः।।९।।

ननु त्वमेव भगवानित्युक्तं त्वया[7] "एकः सृजसि भूतानि" (भाग.2-5-4) इत्यादिना। सत्यम्। **न** इति। यथा मां ईश्वरत्वेन प्रभाषसे तदपि तव भाषणं न अत्यन्तम् अनृतं, यतःकारणात् एतावतः[8] एतावत्प्रभावस्य भावः एतावत्त्वं, मे अस्ति किन्तु मत्तः परं ईश्वरम् अविज्ञाय ब्रूषे। अतः सादृश्यात् तव इयं भ्रान्तिः न तु बुद्धिपूर्वकं[9] अनृतं इत्यर्थः। यतः ईश्वरात् मम एतावत्त्वं तम् अविज्ञाय इति वा[10] अन्वयः।।१०।।

तर्हि कः असौ ईश्वर इत्यपेक्षायां भक्त्या नमस्कुर्वन्नेव तं[11] कथयति त्रिभिः - **येन** इति। येन स्व प्रकाशेन रोचितं प्रकाशितमेव प्रकाशयामि सृष्ट्याऽभिव्यक्तं करोमि। यथा अर्कादयः चैतन्यप्रकाश्यमेव प्रकाशयन्ति। तथा च श्रुतिः, "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"(कठ.उ.5-15) इति।।११।।

**तस्मा** इति। तस्मै नमो धीमहि चिन्तयेम[12] मनसैव नमस्कुर्महे इत्यर्थः। यस्य मायया विमोहिताः[13] सन्तो युष्मदादयो मां जगद्गुरुं जगत्कारणं वदन्ति तस्मै।।१२।।

**विर०** अथ ब्रह्मा यथाप्रश्नम् उत्तरिष्यन् तावत् प्रश्नम् अभिनन्दति - **सम्यक्** इति। हे वत्स! पुत्र! कारुणिकस्य मयि करुणावतः ते त्वया इदं सम्यक् विचिकित्सितं ज्ञातुमिष्टं कुत इत्यत आह यद्यस्मात् अहं भगवद्वीर्यदर्शने भगवत्प्रभावज्ञापनरूपे धर्मे प्रवर्तितः।।९।।

अभिमतार्थजिघृक्षया प्रश्नं विविनक्ति - **नानृतम्** इति। भो[14] नारद! मां प्रति यथा प्रब्रवीषि[15] "एकः सृजसि[16] भूतानि" (भाग.2-5-4) इत्यादिना यत्पृच्छसि तच्चापि तव त्वदीयं वचः नानृतमतीव नासत्यं किन्तु मत्तः परं भगवन्तम् अज्ञात्वा ब्रवीषि इति[17]। अज्ञानहेतुमाह मम एतावत्त्वं एतावन्महिमवत्त्वं यतः परमकारणात्[18] भवति तं मत्तः परम् अज्ञात्वा ब्रवीषि इत्यर्थः।।१०।।

तर्हि कः असौ ईश्वर इत्यपेक्षायां भक्त्या नमस्करिष्यन्नाह - **येन** इति। 'अर्कादयो भगवत्तेजसा

---

1. A.B. Omit त्रिभिः 2. A.B. °कः 3. A.B. °गित्यर्थः 4. H.V. तं 5. A.B. Omit अहं 6. B. परमथ° 7. H.V. मं° 8. A. Omits एतावतः 9. A.H.V. °वं 10. H.V. च 11. H.V. Omit तं 12. B.H.V. Omit चिन्तयेम......इत्यर्थः। 13. H.V. Omit वि° 14. W. adds हे 15. W. Omits प्र° 16. W. °ति 17. W. Omits इति। 18. W. °रुणिकात्

रोचितं विश्वं तत्तेजोलेशं उपजीव्य स्वयं रोचयन्तीति स्वात्मानं अभिमन्यते एवं अहमपि इत्यर्थः। "न तत्र सूर्यो भाति" (कठ.उ.5-15) इति श्रुतिः अत्र अनुसन्धेया।।११।।

तस्मै वासुदेवाय नमो धीमहि नमः कुर्महे। यद्वा, धीमहि इत्यत्र तमिति शेषः। जेतुमशक्यया यस्य भगवतो मायया मां जगद्गुरुं वदन्ति "ब्रह्माद्याः सकला देवाः मनुष्याः पशवः तथा। विष्णुमाया-महावर्त्त[1]मोहान्धतमसावृताः" (विष्णु.पु.5-30-17) इति न्यायेन मायया मो[2]हिताः मां जगद्गुरुं वदन्ति; न तु तत्त्वविद इत्यर्थः।१२।।

**विज०** नारदप्रश्नं परिहरिष्यन् तज्जिज्ञासितं स्तौति - **सम्यक्** इति। अहं भगवतो हरेः वीर्यस्य सृष्ट्यादिलक्षणस्य दर्शने ख्यापने चोदित इति यत् यस्मात् अतः ते चिकित्सितं सम्यक् समीचीनमित्य-न्वयः। कारुणिकस्य इत्यनेन लोकोपकारकं च इदमिति लक्षयति।।९।।

तत्र प्रथमतः पूर्वपक्षांशम् आक्षिपति - **नानृतम्** इति। त्वं "एकः सृजसि" (भाग.2-5-4) यथा मां प्रब्रवीषि, तथा तदनृतं न किम्? अनृतमेव। बत त्वद्वचनं श्रुत्वा अहं खिन्नः। "खेदानुकम्पासन्तोष-विस्मयामन्त्रणे बत" (अम.को.3-399) इति वचनात्। यच्च, मत्तः परम् अधिकम् ईश्वरम् अविज्ञाय "नाहं वेद परं त्वस्मात्" (भाग.2-5-6) इति मां आत्थ, तच्च अनृतम्। तदप्यनृतमेव। कुत इति तत्राऽह - अपीति। अतिगर्हितत्वात्। "अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु" (अष्टा.1-4-96) इति सूत्रात्, "गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि" (अम.को.3-404) इत्यभिधानाच्च। कस्मात् मदुक्तम् आक्षिपसि इति तत्राऽह एतावत्त्वम् इति। हिशब्दः एवार्थे, मे एतावत्त्वं तद्रोचिषा रोचितरोचकत्वं ह्येव; न अतः अधिकमिति यत् तस्मात् इति।।१०।।

एतदेव स्पष्टयति - **येन** इति। तत्र प्रमाणमाह यथेति। "तमेव भान्तमनुभाति सर्वम्" (कठ.उ.5-15) "यदादित्यगतं तेजो जगद्भासयतेऽखिलम्" (भ.गी.15-12) इत्यादेः।।११।।

बुभू[3]षणादुर्मतश्रवणप्राप्तापराधो भगवन्नमनेन परिहर्त्तव्य इति भावेन भगवन्तं नमति नम इति। तस्मै वासुदेवाय भगवते नमः वयं तं धीमहि इत्यन्वयः। अनेन "ओं नमो भगवते वासुदेवाय" "नारायणाय विद्महे वासुदेवाय धीमहि। तन्नो विष्णुः प्रचोदयात्" (मना.उ.3-8) इति द्वादशाक्षरी चतुर्विंशत्यक्षरी चेति द्वे विद्ये हिरण्यगर्भेण नित्यं सेव्ये इति दर्शितम्। यद्वा मत्तः परम् अविज्ञाय, यथा "एकः सृजसि" (भाग.2-5-4) इत्यादि[4]प्रकारं मां ब्रवीषि तच्च तत्प्रकारविषयवचनमेवानृतं नान्यत्

1. W. °गर्ता° 2. W. Omits मोहिताः 3. Ma. °षु° 4. B.M.Ma. add यं

यद्रूपमित्यादि। तदेवानृतं कुत इत्यत आह नेति प्रमाणविरोधात्। "नाभावान्यविरोधेषु"(वैज.को.8-7-5) इति वचनात्। अयं पक्षः सम्भावित इत्याह अपीति। बत सन्तोषहेतुत्वात्। कुतः अनृतमिति तत्राह एतावत्त्वमिति। यतो यस्मात् विष्णोः मे एतावत्त्वं परिच्छिन्नप्रभावत्त्वं हि प्रसिद्धम्। कथं प्रसिद्धमित्यत उक्तमेव विशिनष्टि येनेति। अनेन हरेः करणत्वं तव कर्तृत्त्वं प्रतीतं न तु हरेः स्वातन्त्र्यकर्तृत्वं इत्याशङ्क्य, दासभावकथनेन तत्स्पष्टयति नम इति। रामेण मुक्तः शरो रावणम् अवधीत् इत्यादाविव करणत्वमपि मुख्यकर्तृत्वं प्रयोजयतीत्यतः करणत्वप्रयोगो न किञ्चित्करः। ननु एवं चेत् तव कर्तृत्वप्रवादः कथम्? अत्र आह - यन्माययेति। त्रिविधा माया, एका हरेरिच्छा मुख्या, द्वितीया अमुख्या प्रकृतिः, तृतीया अमुख्यतमा जीवानां बन्धकशक्तिरिति। तत्र यस्य विष्णोः इच्छाधीनया दुर्जयया हरिभजनवर्जितैः जेतुम् अशक्यया।।१२।।

**रा०कृ०** हे वत्स! नारद! यत् यस्मात् विचिकित्सितादहं भगवद्वीर्यदर्शने भगवत्प्रभावज्ञापन-रूपे धर्मे चोदितः प्रेरितोऽस्मि तदिदं कारुणिकस्य मयि सर्वप्राणिषु च दयावतः ते विचिकित्सितं संशयः सम्यक् समीचीनो वर्तत इति शेषः। मां प्रति कृतोऽयं प्रश्नो जगदुपकारक इति भावः।।९।।

भोः! नारद! यतो हि भगवतः मे एतावत्त्वं विश्वस्रष्टृत्वादिमहिमवत्त्वम् अस्ति तं मत्तः परं परमपुरुषमविज्ञाय यथा मां प्रब्रवीषि "एकः सृजसि भूतानि"(भाग.2-5-4) इत्यादिना यन्ममेश्वरत्वनि-रूपकं वचनं वदसि तच्च तव वचनं नात्यन्तमनृतम् अज्ञात्वा कथिते अनृतव्यवहाराभावात्।।१०।।

यथाऽर्कः, यथाऽग्निः यथा सोमः यथा चन्द्रः, यथा वा ऋक्षग्रहतारकाः यथा वा अश्विन्यादीनि नक्षत्राणि, बुधादयो ग्रहाः तारकाश्च परमात्मतेजसा प्रकाशितमेव विश्वं प्रकाशयन्ति तथाऽहं येन भगवता स्वरोचिषा स्वतेजसा रोचितं प्रकाशितमेव विश्वं रोचयामि प्रकाशयामि दुर्जयया यन्मायया यस्य भगवतो मायया मोहिताः युष्मदादयः मां जगद्गुरुं ब्रुवन्ति वदन्ति तस्मै भगवते वासुदेवाय नमो धीमहि नमः कुर्महे।

यद्यपि सूर्यादयो भौतिकं प्रपञ्चं प्रकाशयन्ति, तथाऽपि तेषां प्रकाशस्य चैतन्यैकग्राह्यत्वात् चैतन्यविरहे तत्प्रकाशग्रहणायोगात् चैतन्यस्य च भगवदभिन्नत्वात् भगवत्प्रकाशितविश्वप्रकाशकत्वमुक्तम्। एवं ब्रह्माऽपि भगवत्सङ्कल्पितमेव विश्वं सृष्ट्याऽभिव्यक्तं करोति।

अपि च सङ्कल्पात्मकस्य सर्वेश्वरस्याज्ञेयत्वात् तत्सङ्कल्पनिर्वाहके ब्रह्मणि जगद्गुरुधियं जनाः कुर्वन्तीति सैषा भगवन्माया दुर्जयेति कथिता। एवं या मा सा मायेति अथवा अतस्मिन् तद्बुद्धिरिति मायापदनिर्वचनम् अपि अत्र सार्थकमेव। भगवत्सङ्कल्पनिर्वाहके स्वस्मिन् ब्रह्मणि भगवद्भावना मायेति ब्रह्मणोऽभिप्रायः।।११,१२।।

**विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया।**
**विमोहिता विकत्थन्ते ममाहमिति दुर्धियः।।१३।।**

**द्रव्यं कर्म च कालश्च स्वभावो जीव एव च।**
**वासुदेवात्परो ब्रह्मन् न[1] चान्योऽर्थोऽस्ति[2] तत्त्वतः।।१४।।**

**नारायणपरा वेदा देवा नारायणाङ्गजाः।**
**नारायणपरा लोका नारायणपरा मखाः।।१५।।**

**नारायणपरो योगो नारायणपरं तपः।**
**नारायणपरं ज्ञानं नारायणपरा गतिः।।१६।।**

**श्रीध०** यन्माययेति मायासम्बन्धोक्तेः तस्याः दुर्जयत्वोक्तेश्च तस्यापि किमस्ति संसारो नैवेत्याह- **विलज्जमानया** इति। मत्कपटम् असौ जानातीति। यस्य दृष्टिपथे स्थातुं विलज्जमानया इव तस्मिन् स्वकार्यं अकुर्वत्या अमुया मायया विमोहिताः अस्मदादयो दुर्धियः अविद्याऽऽवृत्तज्ञाना एव केवलं[5] विकथ्यन्ते श्लाघन्ते। अनेन यद्रूपमित्यस्य प्रश्नस्योत्तरम् उक्तं भवति।।१३।।

तदेवं स्वस्मादन्यं परमेश्वरं निरूप्य इदानीं यदधिष्ठानमित्यादिर्नव[6]प्रश्नानां स एव अधिष्ठानादिकं सर्वमित्युत्तरं वक्तुं तद्व्यतिरेकेण अन्यस्य असत्त्वमाह - **द्रव्यम्** इति। द्रव्यं महाभूतान्युपादानरूपाणि, कर्म जन्मनिमित्तं, कालस्तत्क्षोभकः, स्वभावः तत्परिणामहेतुः, जीवो भोक्ता वासुदेवात् परः अधिकः[7] अन्योऽर्थः नास्ति कारणाव्यतिरेकात्कार्यस्य।।१४।।

तत्प्रपञ्चयति द्वाभ्यां - **नारायणेति**। नारायणः परं कारणं येषां ते। नारायणः[8] परः तात्पर्यविषयो येषामिति वा। अनेनैव शास्त्रयोनित्वप्रतिपादनेन ईश्वरे प्रमाणं सर्वज्ञत्वादिकं च उक्तम्। देवाश्च तदङ्गाज्जाताः। अतो न तद्व्यतिरिक्ताः। लोकाः स्वर्गादयः तदानन्दांशाः मखाः[9] तत्साधनभूताः।।१५।।

**नारायणेति**। योगः प्राणायामादिः तपः तत्साध्यं चित्तैकाग्र्यं ज्ञानं तत्साध्यं गतिः तत्फलम्। अनेनैवं[10] सर्वं तदधीनम् इत्युक्तम्।।१६।।

---

1. M.Ma. नैवा॰ 2. H.V. त्व॰ 3. M.Ma ता॰ 4. A. ॰स्य 5. H.V. Omit केवलं 6. H.V.Omit नव 7. B.H.V. Omit अधिकः 8. B.H.V. Omit नारायण......वा। 9. B. ॰खादयः 10. B. ॰तत्

**वीर०** इतरेषां मायायाः दुर्जयत्वं भगवतः तत् असंस्पर्शं चाह - **विलज्जमानया** इति। यस्य भगवतः ईक्षापथे दृष्टिपथे स्थातुं विलज्जमानया तस्मिन् स्वकार्यमकुर्वत्या अमुया मायया विमोहिताः सन्तो ममाहमिति दुर्द्धियः विकत्थन्ते।।१३।।

विकत्थनमेवाऽह - **द्रव्यम्** इति। द्रव्यं पृथिव्यादिभूतमेव कारणम् इति केचित्।[1] कर्मेत्यपरे। काल इत्यन्ये। स्वभाव इत्यपरे। कर्माधीनत्वात् जीव एव कारणमिसत्यपरे। एवं यन्मायया मोहिताः[2] विकत्थन्ते इत्यर्थः। एवं तैः स्वतन्त्रतया अभिमताः पदार्था भगवदधीना इत्याह वासुदेवादिति। हे ब्रह्मन्! द्रव्यादिष्वर्थेषु वासुदेवात् परः अन्योऽर्थो नास्ति यथा वासुदेवात् परो नास्ति तद्वत् अतदात्मकम् अतत्परतन्त्रं च नास्तीत्युक्तं वक्ष्यमाणेषु सूचितम्।।१४।।

एतदेव उपपादयति - **नारायणपरा** इति। वेदाः [3]नारायणपराः नारायणः परं कारणं येषां ते तथोक्ताः "तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः" (बृह.उ.2-4-10) इत्यादिश्रुतेः। यद्वा नारायणः परः[4] प्रतिपाद्यो[5] येषां ते तथोक्ताः "सर्वे वेदा यत्पदमामनन्ति" (कठ.उ.2-15) इति श्रुतेः। देवाः इन्द्रादयः नारायणः नारायणस्याङ्गाज्जाताः तच्छरीरभूताश्च इत्यपि विवक्षितं "चन्द्रमा मनसो जातः" (पु.सू.1-6) "स आत्मा अङ्गान्यन्या देवता" (तैत्ति.उ.1-5-1) इत्यादिश्रुतेः। लोका नारायणपराः [6]नारायणः परः स्वामी येषां ते तथोक्ता मखाः क्रतवः [7]नारायणपराः नारायणः परः आराध्यो येषां ते तथोक्ताः।।१५।।

योगो विवेकादिजन्यः उपासनात्मको योगः नारायणपरः नारायणः परो [8]गन्तव्यो यस्य स तथोक्तः। तपः विद्याङ्गभूतं कर्म, नारायणपरं नारायणः [9]परः पर्यवसानभूमिः यस्य [10]तत् तथोक्तं ज्ञानं शास्त्रजन्यं[11]ज्ञानं योगस्य पूर्वमुक्तेः तदपि नारायणः परो ध्येयो यस्य तत्तथोक्तं गतिः योगफलं अर्चिरादिका सा अपि नारायणः परो गन्तव्यो यस्याः तथाभूता।।१६।।

**विज०** यस्य हरेः ईक्षापथे दृष्टिमार्गे स्थातुं विलज्जमानया चित्प्रकृत्या अभिमन्यमानया शैवल्याख्यया जीवस्वरूपाच्छादिकया अमुया मायया मोहिता अन्यथाज्ञानमाप्ता अत एव दुर्धियो जना 'मम वशे विश्वमस्ति'। 'सर्वस्याहं कर्त्तेति' विकत्थन्ते। तं धीमहि इत्यन्वयः। "मुख्या माया हरेः शक्तिरमुख्या प्रकृतिर्मता" इत्यादिना त्रैविध्यावगमात् नेन्द्रजाललक्षणा माया अत्रोच्यते।।१३।।

---

1. A.B. कर्मैव कारणमिति केचित् 2. W. adds सन्तो 3. A.B. Omit नारायणपराः 4. A.B. °रं 5. A.B. °द्यं 6. A. Omits नारायणः 7. A.B. Omit नारायणपराः 8. B.W. ध्येयो 9. A.B. Omit परः 10. A.B. Omit तत् 11.W. °न्यं

ननु विष्णोरितरत्कारणं नास्तीति कथमुच्यते। पृथिव्यादीनां प्रातिस्विककारणत्वप्रतीतेः इति तत्राऽऽह - **द्रव्यम्** इति। द्रव्यं पृथिव्यादि, कर्म पुण्यपापलक्षणं, पृथिव्यादीनां परिणामविशेषो वा। कालः परिणामहेतुः, त्रुटिलवात्मकः, स्वभावः सात्त्विकादिः, जीवः सुखदुःखाश्रयः द्रव्यं पुरोडाशादि, कर्म ऋत्विगादिव्यापारः, कालो वसन्तादिः, स्वभावो ब्राह्मणत्वादिः, जीवो यजमानसंज्ञ इति वा द्रव्याद्यन्यतरोऽन्योऽर्थो वासुदेवात् परः अधिकः नास्ति, तर्हि तत्समः कश्चित्स्यादत्राऽऽह तात्त्वत इति। नेत्यनुवर्तते तात्त्वतः तद्वदेव स्थितः समोऽपि नास्तीत्यर्थः। "तद्वदेव स्थितं यत्तु तात्त्वतं तत्प्रचक्षते" (कौर्मे) इति वचनात् अनेन द्रव्यादीनां प्रातिस्विककारणत्वस्य भगवदेकनियतत्त्वेन हरेः अखण्डकर्तृत्वं सुस्थिरमिति सिद्धम्।।१४।।

ननु "हिरण्यगर्भः समवर्तताग्रे-भूतस्य जातः पतिरेक आसीत्" (तैत्ति.उ.4-1-8) "ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता" (मुण्ड.उ.1-1) इत्यादिश्रुतयः त्वद्गुणप्रतिपादनपराः कथमन्यविषयाः स्युः इत्याशङ्क्य मदन्तःस्थस्य मन्त्रास्तो हरेः गुणप्रतिपादका इत्याशयेनाऽऽह - **नारायणपरा** इति। स्वप्रतिपाद्येषु वस्तुषु नारायण एव प्रतिपाद्यत्वेन परः अधिकः येषां ते तथोक्ताः सर्वस्मादुत्कृष्टं नारायणमेव प्रतिपादयन्तीति कुत[1] इति तत्राऽऽह देवा इति। नारायणस्य चक्षुराद्यवयवेभ्यो जाता इत्यनेन देवानामवरत्वं नारायणस्योत्कृष्टत्वं उक्तमिति ज्ञायते। नारायण एव पालकत्वेन परो येभ्यः ते तथोक्तः "अहं हि सर्वयज्ञानाम्" (भ.गी.9-24) इत्यादेः इज्येषु इन्द्रादिषु अयं पर इति कृत्वा नारायणपरा मखा इत्युक्तम्।।१५।।

अष्टाङ्गयोगेन योज्यमानेष्वपि परो हरिरेव कृच्छ्रचान्द्रायणादितपसां विषयोऽपि स एव। अत्रापि तपसा युज्यमानानां पर इत्यर्थः। नारायणपरं ज्ञानं ज्ञानेन परमज्ञेयो हरिः नारायणपरा गतिः आश्रयेषु गम्येषु वा मुख्याश्रयो मुख्यगम्यश्च अयमेव। तदुक्तं "गम्येज्यज्ञेयवाच्येषु योज्येषु च परो हरिः" (वाराहे) इत्यादि। अनेन हिरण्यगर्भादिशब्दानां चतुर्मुखादिविषयत्वमपहस्तितं-"सर्वे वेदा यत्पदमामनन्ति" (कठ.उ.2-15) इति।।१६।।

**रा०कृ०** यस्य सर्वज्ञस्य भगवतः ईक्षापथे दृष्टिपथे स्थातुं विलज्जमानया अमुया मायया विमोहिताः अत एव दुर्धियः दुष्टा विषयाभिनिविष्टा धीः येषां तथाभूताः भगवत्कर्तृके भगवद्रूपे शरीरादौ मम मदीयमहमिति च विकत्थन्ते प्रजल्पन्ति।

अयमाशयः - भगवदपरोक्षज्ञाने सति माया निवर्तते। अन्यथा तन्मायामोहिताः विषयाभिनिविष्टमतयो देहादिषु भगवन्मयत्वभावनाविरहेण अहङ्कारममकारादिभिः बध्यन्ते बाध्यन्ते च ।।१३।।

---

1. A.B. Omit कुत इति 2. A. °कर्ता

हे ब्रह्मन्! नारद! द्रव्यं पञ्चभूतात्मकं कर्म जन्मनिमित्तं सुकृतदुष्कृतरूपं कालः सकलकार्यसमुदायपरिणामसम्पादकः स्वभावः तत्परिणामहेतुः जीवः सर्वचेतनवर्गरूपः किञ्चान्योऽर्थः उक्तपदार्थव्यतिरिक्तो यः कोऽप्यर्थः वासुदेवात् परः भिन्नः तत्त्वतस्तु परमार्थतस्तु नास्ति।।१४।।

वेदाः नारायणपराः नारायणकारणकाः, देवाः नारायणाङ्गजाः नारायणस्य अङ्गात् जाताः लोकाः स्वर्गादयो नारायणपराः नारायणस्य आनन्दांशाः मखाः यज्ञाश्च नारायणपराः नारायणप्रतिपादिता इत्यर्थः। योगः नारायणपरो नारायणप्रवर्तितः तपः नारायणपरं, ज्ञानम् आत्मज्ञानं नारायणपरं, गतिः भगवत्प्राप्तिश्च नारायणपरा नारायणाधीना।।१५,१६।।

*** तस्यापि द्रष्टुरीशस्य कूटस्थस्याखिलात्मनः।**
**सृज्यं सृजामि सृष्टोऽहमीक्षयैवाभिचोदितः।।१७।।**

**सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः[1]।**
**स्थितिसर्गनिरोधेषु गृहीता मायया विभोः।।१८।।**

**कार्यकारणकर्तृत्वे द्रव्यज्ञानक्रियाश्रयाः।**
**बध्नन्ति नित्यदा मुक्तं मायिनं पुरुषं गुणाः।।१९।।**

**स एष भगवाँल्लिङ्गैस्त्रिभिरेभिर[2]धोक्षजः।**
**स्वलक्षितगतिर्ब्रह्मन्! सर्वेषां मम चेश्वरः।।२०।।**

**श्रीध०** तर्हि त्वं किं करोषि? इत्यपेक्षायामाह - **तस्य** इति। तस्य सृज्यमपि तेन सृष्टोऽहं सृजामि ईक्षया कटाक्षेण। तत्र हेतवो द्रष्टुः इत्यादयः।।१७।।

ननु कुतोऽयं जीवेश्वरविभागः? यतः त्वं प्रेर्यः स च प्रेरकः स्यादित्यपेक्षायां जीवेश्वर विभागहेतुमाह त्रिभिः - **सत्त्वमिति**। निर्गुणस्यापि ईश्वरस्य एते[3] त्रयो गुणा बध्नन्तीति उत्तरेणान्वयः। ते[4] कथम्भूताः? तेनैव स्वातन्त्र्येण स्थित्याद्यर्थं मायया गृहीताः।।१८।।

**कार्येति**। वस्तुतः सर्वदा[5] मुक्तमपि मायिनं मायाविषयं पुरुषं जीवं बध्नन्ति। कं[6]? कार्यमधिभूतं

*तस्याभिद्रष्टुः" :- श्रीवीररघवाङ्गीकृतः पाठः। 1. V. 'स्त्रतः 2. I.M.Ma.W. 'तैं' 3. H.V. Omit एते 4. A.B. Omit ते 5. H.V. नित्य' 6. A. Omits कं

कारणमध्यात्मं[1] कर्ताऽधिदैवतं[2] तेषां भावः तत्त्वं तस्मिन्। द्रव्यं महाभूतानि ज्ञानशब्देन देवताः क्रियाः इन्द्रियाणि तदाश्रयाः तेषां कारणभूताः तत्तदभिमानेन बध्नन्ति।।१९।।

**स** इति। अतः स एष वश्यमायः एभिः लिङ्गैः गुणैः जीवानां आवरकैः[3] उपाधिभिः सुष्ठु अलक्षिता गतिः तत्त्वं यस्य सः, स्वैर्मक्तैरेव लक्षितागतिः तत्त्वं[4] यस्येति वा।।२०।।

**वीर०** एवं सर्वं तदधीनमिति कथनेन "नाहं वेद परं त्वस्मिन्"(भाग.2-5-6) इत्यंशस्य उत्तरमुक्तं भवति। तर्हि त्वं किं करोषि? इत्यपेक्षायाम् आह - **तस्य** इति। अखिलात्मनः सर्वान्तर्यामिणः अभिद्रष्टुः सर्वज्ञस्य ईशस्य सर्वं स्ववशीकृत्य नियन्तुः, कूटस्थस्य निर्विकारस्य ईक्षयैव सङ्कल्परूपज्ञानेनैव सृष्टः अहं, तेन चोदितः सृज्यं सृजामीत्यन्वयः। स तु प्रयोजकः अहं तु प्रयोज्य इति भावः।।१७।।

ननु कुतोऽयं[5] नियोज्यनियोजकभावः कुतो वा तस्य सर्वज्ञत्वादयो धर्माः, स्वस्य तु तद्विपरीता इत्यपेक्षयां मायेश्वरत्वमायावश्यत्वाभ्यामित्याह - **सत्त्वमिति**। निर्गुणस्य हेयगुणरहितस्य कल्याणगुणानां समनन्तरमेव उक्तत्वात् विभोः - *व्यापकेन भगवता मायया प्रकृतिद्वारा स्थितिसर्गनिरोधेषु निमित्तेषु स्थित्याद्यर्थम् इत्यर्थः[6]। सत्त्वादयस्त्रयो गुणा गृहीताः स्वनियाम्यत्वेन परिगृहीताः सृष्टिस्थितिसंहाररूपलीलापरिकरत्वेन सत्त्वादय ईश्वरेण परिगृहीता इत्यभिप्रायः।।१८।।

एवं गुणानाम् ईश्वरलीलापरिकरत्वम् उक्त्वा जीवबन्धकत्वमाह[8] - **कार्येति**। कार्यं शरीरं कारणम् इन्द्रियं ताभ्यां कर्तृत्वे निमित्ते पुण्यपापनिष्पादनार्थं गुणाः सत्त्वादयः स्वरूपतः अव्ययं मायिनं मायावश्यं सम्बन्धमात्रे इनिः। पुरुषं जीवं नित्यदा बध्नन्तीत्यन्वयः। गुणान् विशिनष्टि द्रव्येति। मोहनप्रकाशनप्रवर्तनस्वभावाः द्रव्यशब्दस्य मोहनवाचित्वं पारिशेष्यादवगम्यते। अत एव अस्मिन्नध्याये बहुशः प्रयोगाश्च-"सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः, निबध्नन्ति महाबाहो! देहे देहिनमव्ययम्" (भ.गी.14-5) "तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम्, सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ" (भ.गी.14-6) "रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम्, तन्निबध्नाति कौन्तेय! कर्मसङ्गेन देहिनम्" (भ.गी.14-7) "तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम्। प्रमादालस्यनिद्राभिः तन्निबध्नाति भारत" (भ.गी.14-8) इति गीतावचनानि अत्र स्मारितानि।।१९।।

एवं गुणानां जीवबन्धकत्वम् उक्तम्। अथ स्वलीलापरिकरीकृतमायः परमेश्वरः सर्वेषां मम

1. H.V. 'त्मकं 2. B. 'वं तें 3. H.V. 'षां' 4. B.H.V. Omit तत्त्वं 5. W. Omits अयं * "व्यापकस्य भगवतः" इति वा, "व्यापकत्वेन भगवतः" इति वा सुगमतरः पाठः। 6. A.B. Omit इत्यर्थः 7. A.B. 'य' 8. A.B. 'न' 9. W. 'त्पित'

चेश्वर इत्याह - **स** इति। लिङ्गैः सत्त्वादिगुणैः शरीरभूतप्रकृतिस्थैः उपलक्षितः स्वलक्षितगतिः स्वलक्षिता स्वच्छन्दा गतिः यस्य तथोक्तः। न तु तदा दर्शितपन्थानौ इतिवत् अन्यदर्शितमार्गः। स **एष** एवंविधैश्वर्यसम्पन्नो भगवान् हे ब्रह्मन्! नारद! सर्वेषां मम च ईश्वरः नियन्ता।।२०।।

**विज०** ननु भवतः स्रष्टृत्वाभावे कथं त्वन्नाम लोके ख्यातं वर्तत इत्यतः तं प्रकारं दर्शयति - **तस्यापि** इति। तद्दृष्टिं प्रतिष्टब्धुं कोऽपि समर्थो नास्तीति ईशस्येति। ईशित्वं च वरादिप्राप्तं नेति निर्विकारस्येति। एतदपि बलवत्प्रतिबन्धकेन अन्यथा न भवतीति अखिलस्वामिन इति, एवंविधस्य तस्य हरेः अपिशब्दात् श्रियश्च ईक्षयैव कटाक्षवीक्षणेनैव अभिचोदितः तेन सृष्टोऽहं सृज्यं जगत् सृजामीत्यन्वयः। एवशब्देन सृष्टौ प्रयोजकान्तरं निवारयति।।१७।।

एवं हरेः मुख्यकर्तृत्वं प्रदर्श्य अधुना युगपत्क्रमशोऽपि वा इति प्रश्नं परिहरति - **सत्त्वं रजस्तम** इति। तेन हरिणा नित्यं गृहीता अपि सत्त्वं रजस्तम इति त्रयो गुणा निर्गुणस्य सततं सत्त्वादिगुणरहितस्य विभोः मायया इच्छया स्थित्यादिषु निमित्तभूतेषु क्रमशो युगपच्च गृहीता इत्यन्वयः। माययेति विशेषणात् मूलसृष्ट्यादिषु क्रमशो दैनन्दिनसृष्ट्यादिषु युगपत्, गृहीता इति विशेषः। तदुक्तं - "नित्यं गृहीताः सत्त्वाद्याः स्थित्यादिषु विशेषतः, युगपत् क्रमशश्चैव" (ब्रह्मवैवर्ते) इति।।१८।।

रजोगुणं उपादानीकृत्य सृष्टिं वक्ष्यन् हरेः सत्त्वादिगुणैः जीवबन्धकत्वमहिमानमाह - **कार्येति**। पुरुषमिति जातावेकवचनम्। द्रव्यज्ञानक्रियाश्रयाः द्रव्यं तामसाहङ्कारकार्यं शरीरम्, ज्ञानं वैकारिकाहङ्कारकार्यं, मनः श्रोत्रेन्द्रियाणि च, क्रिया तैजसाहङ्कारकार्यं वागादीन्द्रियजातम् आश्रयो येषां ते तथोक्ताः। एवंविधाः प्रकृतेः सत्त्वादयो गुणाः अभिमानमन्तरेण नित्यदा मुक्तं प्रकृतिसम्बन्धविधुरं मायिनं स्वतो ज्ञानिनं पुरुषं जीवसमुदायं कार्यकारणकर्तृत्वे च बध्नन्तीत्यन्वयः। तत्रायं विभागः - तमोगुणः कार्ये शरीरे तद्गतदुःखाद्यनुभवेन बध्नाति। रजोगुणः कर्मकारणैः इन्द्रियैः कारणेषु कर्मसु बध्नाति। सत्त्वगुणस्तु मनसा ज्ञानेन्द्रियैश्चान्तरं यत्सुखम् अनुभवामीति तत्र कर्तृत्वे बध्नाति। इदमुक्तं भवति - शरीरगतदुःखास्सआद्यनुभवे तमोगुणः, कर्मसु रजोगुणः, अहं सुखीति सुखानुभवे सत्त्वगुणः, कारणम्। गुणानाम् अचेतनत्वेन स्वतः प्रवृत्त्यनुपपत्तेः तन्नियमने कारणम् ईश्वरेच्छति। तदुक्तं - "ज्ञानेन्द्रियैश्च मनसा सत्त्वं बध्नाति पूरुषम्। रजः कर्मेन्द्रियैः नित्यं शरीरेण तमः तथा" (पाद्मे) इत्यादि।।१९।।

न केवलमेतानि देहेन्द्रियमनांसि बन्धकानि। हरिप्रसादसामग्रीयोग्यानां मुक्तिसाधकानि च इत्याह - **स एष** इति। "यो येन स्वरोचिषा विश्वम्" (भाग.2-5-11) इत्यारभ्य "कार्यकारणकर्तृत्वे"

1. A.B. 'बर्ती'

(भाग.2-5-19) इत्यन्तेन ग्रन्थेन प्रतिपादितः स एषः अधोक्षजः भगवान् एतैः त्रिभिः देहेन्द्रियमनोभिः लिङ्गैः ज्ञानोपायलक्षणैः यमादिसाधनैः यतमानैः एतैः जीवैः स्वलक्षितगतिः प्रदर्शितस्वरूपो भवति। एतदुक्तं भवति - देहेन्द्रियमनोजयिनस्तैरेव साधनैः भगवद्विषयैः तं पश्यन्तीति "स्वप्रसादादिमं जीवः पश्येत्तेन स्वलक्षितम्" (षाड्गुण्ये) इति च। अधःकृतेन्द्रियजन्यज्ञानत्वेन मुक्तोऽप्यधोक्षजःस्यात् इत्यतः सर्वेषामिति। सर्वेषां मुक्तानां स्वस्य सर्वान्तर्भावेऽपि नारदस्य विशेषशङ्कापरिहाराय मम चेति विशिष्य उक्तम्।।२०।।

**रा०कृ०** सृष्टः सृष्ट्यर्थं तेन भगवता सृष्टोऽहं द्रष्टुः सर्वं साक्षात्कुर्वतः, ईशस्य सर्वनियामकस्य कूटस्थस्य वैषम्यनैर्घृण्यादिविकाररहितस्य, अखिलात्मनः अखिलस्वरूपस्य तस्य भगवतः ईक्षयैव सङ्कल्पात्मकेक्षणेनैव अभिचोदितः प्रेरितस्सन् सृज्यमपि भगवता सृज्यमपि विश्वं सृज्यामि।

अत्र एक एव देवः स्थितिभेदेन वासुदेवनारायणेश्वरनामभिः व्यवह्रियते। तथाहि - द्रव्यकर्मादिरूपो वासुदेव इति, वेददेवादिरूपो नारायण इति कूटस्थत्वसर्वात्मकत्वादिलक्षणोपेतः ईश्वर इति च निरूपितः। किञ्च वासुदेवो लीलामयः नारायणः तत्त्वात्मकः, ईश्वरस्तु सर्वनियामकः। तथा च सृष्टिमयवासुदेवाराधनेन नारायणतत्त्वप्राप्तिः तत्त्वप्राप्त्या च सर्वात्मताधिगम इति रहस्यम्।।१७।।

विभोः सृष्ट्यादिलीलासमर्थस्य निर्गुणस्य गुणपारतन्त्र्यरहितस्य भगवतो मायया इच्छाऽपरपर्यायया मनःशक्त्या स्थितिसर्गनिरोधेषु रक्षणसृष्टिलयेषु कार्येषु सत्त्वं रजस्तम इति त्रयो गुणा गृहीताः। ब्रह्मविष्णुरुद्ररूपशरीरत्रयपरिग्रहार्थं स्वीकृताः। सर्वसमर्थो भगवान् निर्निमित्तया इच्छाशक्त्या स्वीयामेव प्रकृतिं रजस्सत्त्वतमोमयीं निमित्तीकृत्य सृष्टिस्थितिलयनिर्वाहार्थं यथाक्रमं ब्रह्मविष्णुरुद्ररूपाणि स्वीकरोति।।१८।।

नित्यदा सर्वदा मुक्तं बन्धरहितमपि मायिनं मायावशवर्तिनं पुरुषं द्रव्यज्ञानक्रियाश्रयाः द्रव्याणां क्षित्यादिपञ्चभूतानां ज्ञानानां ज्ञानगम्यदेवतानां, क्रियाणां क्रियागम्येन्द्रियाणां च आश्रयाः कारणतया आश्रयभूताः गुणाः। अत्र ज्ञानक्रिययोः व्यत्ययेनान्वयः। कार्यकारणकर्तृत्त्वे कार्यमधिभूतं देहः, कारणम् अध्यात्ममिन्द्रियबृन्दम्। कर्ता अधिदैवतं देवताबृन्दं तेषां भावः तत्त्वं तस्मिन् देहाध्यासेन कार्यत्वे, इन्द्रियाध्यासेन कारणत्वे, देवताऽध्यासेन कर्तृत्त्वे च - निबन्धन्ति। ईश्वरस्वरूपः स्वतो मुक्तोऽपि पुरुषः अथवा जीवः गुणकार्यभूतैः द्रव्यक्रियाज्ञानाश्रयैः ब्रह्मप्रज्ञातः पृथक्कृतस्सन् कार्यकारणकर्तृतादात्म्यभावनया अथवा देहेन्द्रियप्रज्ञात्मकदेवतातादात्म्यभावनया बध्यते। मायाबद्धो देवो जीव इति व्यवह्रियते।।१९।।

हे ब्रह्मन्! नारद! सः पूर्वोक्तः एषः वशीकृतमायः अधोक्षजः अधःकृतेन्द्रियज्ञानः भगवान्

एभिः त्रिभिः सत्त्वादिभिः लिङ्गैः गुणैः साधनभूतैः स्वलक्षितगतिः सु सुष्ठु अलक्षितगतिः अज्ञाततत्त्वस्सन् सर्वेषां स्थावरजङ्गमादीनां मम च ईश्वरः प्रभुः।

अत्र लिङ्गशब्देन त्रिगुणकार्यभूतानि स्थूलसूक्ष्मकारणशरीरणि गम्यन्ते। तथा च एतच्छरीरैरेव जीवः कश्चन अस्तीति स च जीवः एतच्छरीरकारणभूतगुणैः असङ्गो हि ईश्वर एव इति ज्ञायते। ततश्च मायावशगो जीव इति वशीकृतमायो भगवानिति व्यज्यते। एवञ्च प्रागुक्तैः त्रिभिः लिङ्गैः अज्ञेयतत्त्वः इन्द्रियातीतः स भगवान् ब्रह्मणः तन्निर्मितानां स्थावरजङ्गमादीनां च सर्वेषां लोकानाम् ईश्वर इति भावः ।।२०।।

**कालं कर्म स्वभावं च मायेशो मायया स्वया।**
**आत्मन्[1] यदृच्छया प्राप्तं विबुभूषुरुपाददे।।२१।।**

**कालाद् गुणव्यतिकरः[2] परिणामः[3]स्वभावतः।**
**कर्मणो जन्म महतः पुरुषाधिष्ठितादभूत्।।२२।।**

**महतस्तु विकुर्वाणाद्रजः सत्त्वोपबृंहितात्।**
**तमःप्रधान स्त्वभवद् द्रव्यज्ञानक्रियात्मकः।।२३।।**

**सोऽहङ्कार इति प्रोक्तो विकुर्वन् समभूत्त्रिधा।**
**[4]वैकारिकस्तैजसश्च तामसश्चेति यद्भिदा।**
**द्रव्यशक्तिः क्रियाशक्तिर्ज्ञानशक्तिरिति प्रभो।।२४।।**

**श्रीध०** तस्य सृष्टिप्रकारमाह - **कालम्** इति। [5]कालं क्षोभकं सृष्टिकाल इति व्यवहारहेतुम्। कर्म जीवादृष्टम्। [6]स्वभावं तत्परिणामहेतुम्। आत्मन् आत्मनि यदृच्छया स्वैरतया प्राप्तम्। विबुभूषुः विविधं भवितुमिच्छुः[7]।।२१।।

**कालात्** इति। गुणानां व्यतिकरः क्षोभः साम्यत्यागः। [8]स्वभावतः परिणामो रूपान्तरापत्तिः[9]। महतो महत्तत्त्वस्य। पुरुषः ईश्वरः। तेन अधिष्ठितत्वं त्रयाणां विशेषणम्।।२२।।

**महत** इति। [10]महत्तत्त्वात् विकुर्वाणात् विक्रियमाणात्। तस्य च क्रियाज्ञानशक्तित्वात् त्रिगुणत्वेऽपि रजस्सत्त्वाभ्याम् उपबृंहितत्वम्। अहङ्कारस्य तु आवरकत्वात्[11] तमःप्रधानत्वम्। अत एव अहङ्कारकार्येषु

1. H.V. यदृच्छयाऽऽत्मनि 2. M.Ma.W. °रात् 3. M.Ma.W. °मस्व° 4. I. Omits वैका.......यद्भिदा। 5. B.H.V. Omit कालं.......व्यवहारहेतुम्। 6. B.H.V. Omit स्वभावं.......प्राप्तम्। 7. A.° च्छन्; H.V. °च्छुः° सन् 8. B.H.V Omit स्वभावतः 9. H.V. °वृ° 10. adds ततः 11. H.V. °वा°

तामसम् [1]आकाशादिकं बहु। राजसं सात्त्विकं चाल्पम्। एवं तदु[2]पाधिकेषु जीवेष्वपि तथैव ताम[3]सं-योन्याधिक्यम्। [4]द्रव्यज्ञानक्रियात्मको महाभूताधिदैवतेन्द्रियात्मकः।।२३।।

**स** इति। स च विकुर्वन् रूपान्तरं गच्छन्। त्रैविध्यमेवाह वैकारिक इति। वैकारिकः सात्त्विकः, तैजसो राजसः, यद्भिदा यस्य भेदः। द्रव्यशक्तिरित्यादीनि प्रातिलोम्येन त्रयाणां लक्षणानि। द्रव्ये महाभूताख्ये शक्तिः यस्य, क्रियासु इन्द्रियेषु शक्तिः यस्य, ज्ञानेषु देवेषु शक्तिः यस्य, [5]इति विग्रहः। हे प्रभो! बोद्धुं शक्त!।।२४।।

**वीर०** [6]एवम् "एकः सृज[7]सि भूतानि" (भाग.2-5-4) इति प्र[8]श्नस्य उत्तरमुक्त्वा यद्रू[9]पं इत्यादि-प्रश्नस्योत्तरं वदन् तावत्सृष्टिप्रकारमाह - **कालम्** इति। मायेशो मायाधिपतिः [10]स्वया मायया स्वसङ्कल्पेन। यद्वा, द्वारभूतया प्रकृत्या विबुभूषुः प्रकृतिद्वारा नानानामरूपभाक् भवितुमिच्छुः, यदृच्छया अहेतुकम् अपरप्रेर्यो अकर्मपरवशः [11]आत्मन् आत्मनि प्राप्तं सङ्गतं युक्तं कालं, कर्म, स्वभावं च उपाददे। कालो गुणवैषम्यरूपगुणक्षोभहेतुः। कर्म जीवादृष्टम्। स्वभावः प्रकृतेः परिणामस्वभावः। एतेषामुपादानं नाम [12]स्वस्वकार्योन्मुख्यापादनम्।।२१।।

कालकर्मस्वभावोपादानफलं दर्शयन् महतः सृष्टिमाह - **कालात्** इति। कालात् हेतुभूतात् गुणव्यतिकरात् कालकृतगुणवैषम्यात् इत्यर्थः। परिणामस्वभावतः प्रकृतेः परिणामस्वभावात् कर्मणो जीवादृष्टाच्च हेतोः परमपुरुषाधिष्ठितात् अव्यक्तात् महतो महत्तत्त्वस्य जन्म उत्पत्तिः अभूदित्यर्थः। तदधिष्ठितत्वं तदाहितस्वकार्यजननसामर्थ्यवत्त्वम्। अत्र अव्यक्तात् इत्यध्याहारः। पुरुषाधिष्ठितत्वाच्च व्यक्तानुग्रहेण च इति दर्शनात् व्यतिकरः मिश्रणं समा[13]नां [14]गुणानां विषमत्वापत्तिः। यद्वा, गुणानां व्यतिकरो यस्मिन् इति बहुव्रीहिः। अव्यक्तादित्यर्थः।।२२।।

महतोऽहङ्कारोत्पत्तिमाह - **महतस्तु** इति। [15]विकुर्वाणात् विक्रियमाणाद्रजस्सत्त्वोपबृंहितात्[16] महतः द्रव्यज्ञानक्रियात्मकः मोहनप्रकाशनप्रवर्त्तनस्वभावः तमःप्रधानः तमोगुणप्रधानः अभवत्। महतः त्रिगुणात्मकत्वेऽपि क्रियाशक्तिज्ञानशक्तिप्रधानत्वात् रजस्सत्त्वोपबृंहितात् इत्युक्तम्। एवम् अहङ्कारस्य तमः कार्यप्रधानत्वात् तमःप्रधानः इत्युक्तिः। अत एव अहङ्कारकार्येषु तामसं बहु राजसं सात्त्विकं च अल्पम्। एवं महत्कार्येषु तामसं अल्पं, तदितरदुभयं बह्विति मन्तव्यम्।।२३।।

---

1. H.V. कामरागादिकं 2. B.H.V. 'धिषु 3. B.H.V. 'साधि' 4. B.H.V. Omit द्रव्य.......न्द्रियात्मकः। 5. B.H.V. Omit इति विग्रहः 6. W. Omits एवम् 7. W. 'ति 8. W. 'श्नोत्त' 9. A.B. 'दैः 10. W. स्वमा' 11. W. Omits आत्मन् 12. W. स्वका' 13. W. 'नानां 14. A.B. Omit गुणानां 15. A.B. Omit विकुर्वाणात् 16. W. adds इत्युक्तं

तमःप्रधानस्य किं नामधेयं इत्यत आह - **स** इति। तस्य त्रैविध्यमाह विकुर्वन् रूपान्तरं गच्छन्। अहङ्कारःत्रिधा समभूत् सम्यगभूत्[1]। यद्भिदा यस्य अहङ्कारस्य भिदा वैकारिकः, तैजसश्च, तामसश्चेति, सात्त्विकराजसतामसाहङ्काराणां[2] क्रमेण नामानि। तेषां प्रतिनियतस्वभावानाह द्रव्यशक्ति- रिति। प्रातिलोम्येन त्रयाणां स्वभावप्रदर्शनं द्रव्यशक्तिः। विमूढमहाभूताख्यद्रव्योत्पादने शक्तिः सामर्थ्यं यस्य स तथोक्तः। सात्त्विकाहङ्कारानु[3]ग्राहकत्वरूपा या क्रिया तस्यां शक्तिः यस्य स तथोक्तः। प्रवर्तनमेव हि रजःकार्यम्। ज्ञानशक्तिः शब्दादिविषयज्ञानसाधनेन्द्रियोत्पादने शक्तिः यस्य स तथोक्तः। एकादशानाम् इन्द्रियाणां सात्त्विकाहङ्कारकार्यत्वात्, राजसस्य तु तदनुग्राहकत्वात्।।२४।।

**विज०** "सृज्यं सृजामि सृष्टोऽहम्" (भाग.2-5-17) इति इममर्थं स्पष्टयितुं सृष्टिप्रकारमाह - **कालम्** इति। ब्रह्मज्ञाने मुख्यलक्षणं जगज्जन्मादिकारणत्वमेवेति ज्ञापयितुम् इत्यतो वा सृष्टिप्रकारमाह कालमिति। मायेशो लक्ष्मीपतिः परनामस्वनिमेषान्ते सृष्टिकाले प्राप्ते विबुभूषुः बहुधा भवितुकामः अनादित एव आत्मन् आत्मनि यदृच्छया स्वेच्छया प्राप्तमेव कालम्। कर्म जीवानां नानाविधादृष्टम्। स्वभावं सात्त्विकादिलक्षणम्। चशब्दात् सगुणत्रयां प्रकृतिं स्वमायया स्वशक्त्या विशेषत उपाददे इत्यन्वयः। प्रकृतिं प्रविश्य स्वशक्त्या क्षोभयामास इत्युक्तं भवति। "यत्रान्यहेत्वभावस्स्यात् ईश्वरेच्छा- दिना विना। तदिच्छा हि यदृच्छा स्यात् अतः तत्र यदृच्छया" (ब्रह्मतर्के) इति। "कालकर्मस्वभावादि- नित्ययेशेच्छया सदा। प्राप्तमेव विशेषेण सृष्ट्यादावुन्नयत्यजः" (ब्रह्मतर्के) इति च। "ईशो बह्वीः पुरस्सृष्ट्वा तत्रैव बहुरूपताम्। तत्तन्नियामकतया प्राप्तं कालाद्युपपादे" (ब्रह्मतर्के) इति वचनेभ्यो न मायामयी सृष्टिः अत्र उच्यत इति सिद्धम्।।२१।।

गुण्व्यतिकरात्मकमूलप्रकृतेः महत्तत्त्वोत्पत्तिप्रकारम् आह - **कालात्** इति। यदा सिसृक्षुः विष्णुः कालकर्मस्वभावरजोगुणान् आविश्य सृष्टये प्रेरकः तमोगुणो, रजोगुणेन च संयुक्तः अभूत्। सः गुणवैषम्यात्मकः गुणव्यतिकरः। तस्मात् कालादिति पञ्चमी तृतीयार्थे। कालेन सृष्टिहेतुना। कर्मणः कर्मणा। हिरण्यगर्भादृष्टेन तदुपकृतात् परिणामस्स्वभावत इति तसिः; स तृतीयार्थे विकारस्वभावया मूलप्रकृत्या च सहितात् पुरुषाधिष्ठितादिति पुरुषेण विष्णुना अधिष्ठाय क्षोभमाणात् महतो महत्तत्त्वस्य चरुर्मुखदेहस्थानीयस्य जन्म अभूत् इत्यन्वयः। गुणानां व्यतिकरो विषमावस्था यस्मिन् तस्मात् अव्यक्तादिति वा। तदुक्तं - "गुणकालस्वभवेभ्य ईशेनाधिष्ठितत्त्वतः। जगदादिर्महत्तत्त्वं अभूत्तस्येच्छया हरेः (षाड्गुण्ये) इति।।२२।।

तुशब्देन कालादिकमनुकर्षति। कालकर्मस्वभावेभ्यो विकुर्वाणात् रजस्सत्वोपबृंहितात् सत्त्वेन

---

1. W. Omits सम्यगभूत् 2. W. "सानां अह" 3. W. "रग्रा"

अनुस्यूतरजोगुणेन प्रवृद्धात् महत्तत्त्वात् तमःप्रधानः तत्त्वविशेषोऽभवत् इत्यन्वयः। द्वितीयः तुशब्दो महत्तत्त्वम् अपेक्ष्य तमःप्रधानत्त्वं, न इतरापेक्षया। तदपेक्षया सत्त्वप्रधान एव इत्यस्मिन्नर्थे इतोऽपि तमः प्रधानत्वम् औपचारिकमिति भावेनाह द्रव्येति। द्रव्याणि भूतानि, ज्ञानं ज्ञानेन्द्रियाणि, क्रिया कर्मेन्द्रियाणि च आत्मा स्वरूपं यस्य स तथा।।२३।।

किन्नामकः असौ पदार्थ इति तत्र आह - **सःअहङ्कार** इति। तद्विभागमाह विकुर्वन्निति। त्रीणि दर्शयति वैकारिक इति। यस्य अहङ्कारस्य भिदा भेदः।।२४।।

**रा०कृ०** मायेशः मायानियामकः स्वया मायया प्रकृत्यात्मिकया विबुभूषुः विविधरूपधारी भवितुमिच्छुः आत्मनि यदृच्छया अप्रयत्नेन प्राप्तं लीनं कालं गुणानां वैषम्यात्मकक्षोभकारणं, कर्म पुण्यपापरूपं जीवादृष्टं, स्वभावं परिणामहेतुं च उपाददे स्वीकृतवान्।।२१।।

पुरुषधिष्ठितात् परमेश्वरप्रेरितात् कालात् गुणव्यतिकरः सत्त्वादीनां गुणानां व्यत्यासः पुरुषाधिष्ठितात् स्वभावतः स्वभावात् परिणामः गुणानां रूपान्तरप्राप्तिः पुरुषाधिष्ठितादेव कर्मणः जीवादृष्टात् महतः महत्तत्त्वस्य जन्म अभूत्।।२२।।

विकुर्वाणात् विकारं प्राप्नुवतः अत एव रजस्सत्त्वोपबृंहितात् यजस्सत्त्वाभ्यां वर्धितात् महतः द्रव्यज्ञानक्रियात्मकः पृथिव्यादिपञ्चभूतात्मकः ज्ञानेन्द्रियात्मकः कर्मेन्द्रियत्मकः तमःप्रधानस्तु यः पदार्थोऽभूत्, सोऽहङ्कार इति प्रोक्त इति उत्तरेणान्वयः।।२३।।

हे प्रभो! तत्त्वज्ञानसमर्थ! नारद! अत्र द्रव्यशक्त्यादीनां त्रयाणां पदानां प्रातिलोम्येनावयः। तथा च यद्भिदा यस्य अहङ्कारस्य भेदः द्रव्यशक्तिः, क्रियाशक्तिः, ज्ञानशक्तिरिति शक्तित्रयात्मको भवति। सोऽपि अहङ्कारः विकुर्वन् तामसः, तैजसो राजसः, वैकारिकः सात्त्विक इति त्रिधा समभूत्।।२४।।

**तामसादपि भूतादेर्विकुर्वाणादभून्नभः।**
**तस्य मात्रा गुणः शब्दो लिङ्गं यद् द्रष्टृदृश्ययोः।।२५।।**

**नभसोऽथ विकुर्वाणादभूत् स्पर्शगुणोऽनिलः।**
**परान्वयाच्छब्दवांश्च प्राण ओजः सहो बलम्।।२६।।**

**वायोरपि विकुर्वाणात् कालकर्मस्वभावतः।**
**उदपद्यत तेजो वै रूपवत् स्पर्शशब्दवत्।।२७।।**

**तेजसस्तु विकुर्वाणादासीदम्भो रसात्मकम्।**
**रूपवत् स्पर्शवच्चाम्भो घोषवच्च परान्वयात्।।२८।।**

**श्रीध० तामसात्** इति। भूतादेरिति तामसस्य विशेषणम्। ननु तामसात् [1]अहङ्कारात् प्रथमं शब्दो भवतीति प्रसिद्धम्। सत्यम्। स तु यस्य नभसो मात्रा सूक्ष्मं रूपम्। गुणश्च [2]असाधरणो व्यावर्तको धर्मः। शब्दद्वारा नभ उत्पद्यत इत्यर्थः। एवमेव स्पर्शादिष्वपि द्रष्टव्यम्। शब्दस्य लक्षणं लिङ्गमिति। कुड्याद्यन्तरितेन केनचित् उच्चैः [3]गजो गज इत्युक्ते यो गजद्रष्टा यश्च तेन दृश्यो गजः तयोः लिङ्गं बोधकम्। लिङ्गविशेषणत्वात् यच्छब्दस्य [4]क्लीबत्वम्।।२५।।

**नभस** इति। परस्य नभसः कारणत्वेन अन्वयात्। शब्दवांश्च वायुः। तस्यैव लक्षणं प्राणो देहधारणम्। ओजस्सहोबलानि, इन्द्रियमनःशरीराणां पाटवानि। तेषां हेतुः इत्यर्थः।।२६।।

**वायोः** इति। [5]उदपद्यत उत्पन्नम्। स्वभावतो विकुर्वाणात् [6]स्वयं रूपवत् तेजो वायुनभसोः कारणभूतयोः अन्वयात् स्पर्शवत् शब्दवच्च। एवम् अम्भसः [7]पृथिव्याश्च परान्वयाधिक्यात् गुणाधिक्यम्।।२७।।

**तेजस** इति। घोषः शब्दः ।।२८।।

**वीर० एवम्** अहङ्कारस्य त्रैविध्यम् उक्तम्। अथ तामसाहङ्कारात् शब्दादितन्मात्राक्रमेण आकाशादिभू[8]तसृष्टिमाह - **तामसात्** इति। भूतादिः इति तामसाहङ्कारस्यैव नामान्तरम्। विक्रियमाणात् भूतादिनामकात् तामसाहङ्कारात् नभः अभूत्। शब्दद्वारा नभः उदपद्यतेत्यर्थः। एवमेव स्पर्शादिष्वपि द्रष्टव्यम्। एतदेव शब्दस्वभा[9]वत्त्वं कथयन् उपपादयति लिङ्गमिति। [10]द्रष्टृदृश्ययोः आत्मानात्मनोः यल्लिङ्गं प्रमाणं तस्य नभसो मात्रा सूक्ष्मं रूपं गुणः व्यावर्त्तकोऽसाधारणो धर्मश्च यः शब्दः सोऽप्यभूदित्यर्थः। यद्वा, तस्य नभसः मात्रागुणः असाधारणगुणः शब्दस्य लक्षणं द्रष्टृदृश्ययोः आत्मानात्मनोः लिङ्गं प्रमाणं यत् स शब्द इत्यर्थः। शब्दो हि शास्त्रात्मना आत्मानात्मनोः प्रमाणम्। यदाह सूत्रकारः "शास्त्रयोनित्वात्" (ब्र.सू.1-1-3) इति। यदिति नपुंसकत्वं लिङ्गापेक्षया।।२५।।

---

1. A.H.V. Omit अहङ्कारात् 2. H.V. Omit असाधारणो 3. H.V. Omit गजो 4. B. षण्ड॰ 5. B.H.V. Omit उदपद्यत......विकुर्वाणात् 6. H.V. ॰तो 7. B. Omits पृथिव्याश्च 8. A.B. ॰तस्य सृ॰ 9. W. ॰वं 10. A.B. Omit द्रष्टृ.......प्रमाणं

विकुर्वाणात् रूपान्तरं गच्छतः नभसः स्पर्शगुणः अनिलः वायुः अभूत् स्वर्शतन्मात्रद्वारा अभूदित्यर्थः। परान्वयात् कारणनभोगुणानुवृत्तेः, शब्दवांश्च वायुरित्यर्थः। संस्पर्शस्य वायोर्लक्षणमाह प्राणः अवस्थाविशेषोपपन्नो वायुर्हि प्राणः। 'ओजः सहो बलम्' इति धर्मिप्रधानो निर्देशः ओज आदिविशिष्ट इत्यर्थः। ओजः प्रवृत्तिशक्तिः, सहो वेगः, बलं धारणसामर्थ्यं ओजःसहोबलानि इन्द्रियमनश्शरीराणां पाटवानि तेषां हेतुः इति केचित्।।२६।।

कालकर्मस्वभावतो हेतोः विकुर्वाणात् वायोः रूपवत् कारणभूताकाशवायुगुणानुवृत्तेः रूपवत् स्पर्शशब्दवञ्च तेजः उदपद्यत। कालकर्मस्वभावत इति सर्वत्र अनुसन्धेयम्।।२७।।

विक्रियमाणात् तेजसः रसात्मकं परान्वयात् रूपस्पर्शशब्दवञ्चाम्भ आसीत्। घोषवत् शब्दवत्।।२८।।

**विज०** प्रकारान्तरेण तद्भेदमाह - द्रव्यशक्तिरिति। द्रव्यनामकपञ्चभूतोत्पादनशक्तिमत्वात्, क्रियानामककर्मेन्द्रियजननशक्तिमत्वात्, तथा ज्ञाननामकज्ञानेन्द्रियजननशक्तिमत्वात्, तस्य अहङ्कारात्मनः प्रभो रुद्रस्य द्रव्यशक्तिरित्यादिभेदोऽवगन्तव्यः। तथा चोक्तं - "भूतानि द्रव्यनामानि ज्ञानं ज्ञानेन्द्रियाणि च" (गारुडे) इत्यादि। द्रव्याद्युत्पादनशक्तिमत्वात् द्रव्यादिशक्तिः इत्युक्तम्। तं प्रकारमाह तामसादपि इति। अपिशब्दः कालकर्माद्यनुकर्षणार्थः। भूतादेः भूतानां मूलकारणात्।।२५।।

तस्य आकाशस्य मात्रागुणः पञ्चेन्द्रियैः मेयत्वात् मात्रागुणः शब्दः अभूत्, तस्मात् नभोऽपि अभूदिति उत्पत्तिविशेषोऽत्र ज्ञातव्यः। तथा वक्ष्यमाणत्वात् तत्प्रयोजनमाह लिङ्गमिति। यत् शब्दरूपं द्रष्टृदृश्ययोः द्रष्टुः हरेः दृश्यस्य विश्वस्य च लिङ्गं ज्ञापकं प्रमाणम्। तदुक्तं - "पञ्चेन्द्रियाभिमेयत्वान्मात्रागुण इतीरितः। शब्देनैव परो द्रष्टा ज्ञायते जगदेव च" (विष्णुसंहितायम्) इति च। शब्दः क्वचिदाश्रितो गुणत्वादिति च स्पर्शाख्यो गुणः त्वगिन्द्रियैकग्राह्यो यस्य त तथा।।२६।।

परस्य आकाशस्य अन्वयात् संसर्गात् शब्दवान् शब्दगुणोपेतः। वायोः औत्पत्तिकगुणानाह-प्राण इति। सर्वचेष्टयितृत्वात् प्राणः। अभिभवशक्तित्वात् ओजः अवष्टम्भशक्तिर्वा। अनभिभाव्यत्वात् सहः। स्वेच्छाकरणशक्तिस्वरूपात् बलम्। तदुक्तं "सर्वचेष्टयितृत्वात्तु प्राणोऽभिभवशक्तितः ओजस्तु" (भारते) इत्यादि। "ओजोऽवष्टम्भबलयोः" (वैज.को.6-3-4) इति यादवः। कालकर्मस्वभावतः विकुर्वाणात् वायोः तेजः उदपद्यत उत्पन्नमभूत्। तेजः स्वतो रूपवत् कारणमनुस्यूतत्वात् स्पर्शादिगुणवत्। उपाधिवशात् स्पर्शादिगुणवत्वं न स्वत इति वैशेषिककल्पितं स्वकपोलकल्पितमिति दर्शितं वै इत्यनेन ।।२७।।

---

1. W. स्पर्शवांश्च 2. A.B. Omit रूपवत् 3. A.B. घोषः शब्दः 4. A. 'क'

विकुर्वाणात् तेजस इत्यादौ कालकर्मस्वभावतः इत्येतत् अनुवर्तनीयम्। तदन्वयात् कारणपरम्परान्वयात्। रसगुण आत्मा स्वरूपं यस्य तत् तथा। रसगुणोत्पत्तिपूर्वकम् इति भावः। घोषवत् शब्दवत्।।२८।।

**रा०कृ०** भूतादेः आकाशादीनां भूतानां कारणात् विकुर्वाणात् तामसादपि तामसाहङ्कारादपि नभः आकाशमभूत् उदपद्यत। द्रष्टृदृश्ययोः यत् लिङ्गं ज्ञापकं भवति स शब्दः तस्य नभसः मात्रा सूक्ष्मं रूपं गुणो व्यावर्तको, धर्मश्च भवतीति शेषः। शब्दद्वारा नभसोऽनुभुयमानत्वात् शब्दस्य नभःकारणत्वम्।।२५।।

अथ विकुर्वाणात् नभसः स्पर्शगुणोऽनिलः अभूत्। स वायुः परान्वयात् परस्य स्वोपादान-कारणस्य नभसः अन्वयात् अनुवृत्तेः, शब्दवांश्च अभूदिति शेषः। स एव वायुः शरीरान्तःसञ्चारात् प्राणः, इन्द्रियशक्तिरूपत्वात् ओजः, अन्तः करणशक्तिरूपतया सहः देहसामर्थ्यरूपतया बलं च भवति।

स्पर्शद्वारा वायोरनुभूयमानत्वात् स्पर्शस्य वायुकारणत्वम्। स्पर्शेन जातस्य शब्दस्य नभोगुणत्वात् नभः वायोः उपादानकारणं भवति। वायोश्च देहधारणादिकारणत्वात् प्राणादिनामव्यवहारः।।२६।।

कालकर्मस्वभावतः कालकर्मस्वभावैः निमित्तभूतैः विकुर्वाणात् विक्रियमाणात् वायोरपि रूपवत् कारणभूतयोः वाय्वाकाशयोः अनुवृत्त्या स्पर्शशब्दवच्च तेजः उदपद्यत उदभूत्।

रूपद्वारा तेजसोऽनुभूयमानत्वात् रुपस्य तेजःकारणत्वम्। सकलकार्यपरिणामाभिव्यक्त्यात्मकेन कालेन स्पर्शरूपकर्मणा परिणामसम्पादकगुणविशेषात्मना स्वभावेन च वायोः रूपवत्तेजस्सम्भवः। तेजसो वायुजन्यत्वात्, वायोराकाशजन्यत्वाच्च तेजः स्पर्शशब्दवच्च भवति।।२७।।

विकुर्वाणात् तेजसः रसात्मकं रसगुणकं परान्वयात् परेषां कारणभूतानां तेजोवायुनभसाम् अनुवृत्तेः रूपवत्, स्पर्शवत्, घोषवत् शब्दवत् अम्भः आसीत् उदभूत्।

रसद्वारा अम्भसोऽनुभूयमानत्वात् रसस्याम्भःकारणत्वम्। किञ्च रसमुखेनैव परम्परा-कारणभूतानां तेजोवाय्वाकाशानां सम्बन्धात् जलस्य रूपस्पर्शशब्दयोगः।।२८।।

**विशेषस्तु विकुर्वाणादम्भसो गन्धवानभूत्।**
**परान्वयाद्रसस्पर्शशब्दरूपगुणान्वितः।।२९।।**

**वैकारिकान्मनो जज्ञे देवा वैकारिका दश।**
**दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः।।३०**

**तैजसात् तु विकुर्वाणादिन्द्रियाणि दशाभवन्।**
**ज्ञानशक्तिः क्रियाशक्तिः बुद्धिः प्राणश्च[1] तैजसौ[2]।**
**श्रोत्रं[3] त्वग्घ्राणदृग्जिह्वा वाग्दोर्मेढ्राङ्घ्रिपायवः।।३१।।**

**यदै[4]तेऽसङ्ग[5]ता भावा भूतेन्द्रियमनोगुणाः।**
**यदाऽऽयतननिर्माणे न शेकुर्ब्रह्म[6]वित्तम!।।३२।।**

**तदा संहत्य चान्योन्यं भगवच्छक्तिचोदिताः।**
**सदसत्त्वमुपादाय चो[7]भयं ससृजुर्ह्यदः।।३३।।**

**व[8]र्षपूगसहस्रान्ते तदण्डमुदकेशयम्।**
**कालकर्मस्वभावस्थो जीवोऽजीवमजीव[9]यत्।।३४।।**

**स एवं[10] पुरुषस्तस्मादण्डं निर्भिद्य निर्गतः।**
**सहस्रोर्वङ्घ्रिबाह्वक्षः[11] सहस्राननशीर्षवान्।।३५।।**

**यस्येहावयवैर्लोकान् कल्पयन्ति मनीषिणः।**
**[12]कट्यादिभिरधः सप्त सप्तोर्ध्वं जघनादिभिः।।३६।।**

**श्रीध० विशेष** इति। विशेषः पृथ्वी[13]। [14]पृथिव्याश्च परान्वयाधिक्यात् गुणाधिक्यम्।।२९।।

**वैकारिकादिति**। मनःशब्देनैव तदधिष्ठाता चन्द्रोऽपि द्रष्टव्यः। अन्ये च दशदेवाः वैकारिकाः सात्त्विकाहङ्कारकार्याः। तानाह - दिशश्च वातश्च अर्कश्च प्रचेताश्च अश्विनौ च। एते पञ्च श्रोत्रत्वक्-चक्षुर्जिह्वाघ्राणानाम् अधिष्ठातारः। वह्निश्च इन्द्रश्च उपेन्द्रश्च मित्रश्च कश्च प्रजापतिः एते पञ्च वाक्पाणिपादपायूपस्थानाम् [15]अधिष्ठातारः।।३०।।

**तैजसात्** इति। यतो[16] ज्ञानशक्तिः बुद्धिः क्रियाशक्तिः प्राणश्च तैजसाहङ्कारकार्यौ, अतो ज्ञानक्रिया-विशेष[17]रूपाणि इन्द्रियाण्यपि तैजसात् अभवन् इत्यर्थः। तान्याह श्रोत्रमिति। दोः पाणिः। मेढ्रम् उपस्थः। क्रमस्तु अत्र न विवक्षितः।।३१।।

---

1. C.M.Ma.N.W. 'स्तु 2. M.Ma. 'सः;W. 'सात् 3. C.H.N.V. 'त्रं' 4. M.Ma. ए' 5. W. 'संह' 6. V. 'स' 7. M.Ma.W. नों' 8. H.V. 'र्षपूत' 9. M.Ma. 'जनत् 10. M.Ma.W. 'ष 11. M.Ma. 'क्षिः' 12. M.Ma. ऊर्वा' 13. B. 'थिवी 14. H.V. Omit पृथिव्याश्च.......धिक्यम् 15. B.H.V. Omit अधिष्ठातारः 16. V. add वि 17. H.V. 'स्वरू'

एवं कारणसृष्टिम् उक्त्वा कार्यसृष्टिम् आह - **यदा** इति। यदा एते असङ्गताः [1]अमिलिताः आसन् अत एव यदा आयतनस्य [2]ब्रह्माण्डाख्य शरीरस्य निर्माणे न शेकुः।।३२।।

**तदा** इति। [3]तदा सदसत्त्वं प्रधानगुणभावम् उपादाय स्वीकृत्य उभयं समष्टिव्यष्ट्यात्मकं शरीरम्।।३३।।

**वर्षेति**। कालकर्मस्वभावान् अधिष्ठाय स्थितो जीवयतीति जीवः परमात्मा अजीवम् अचेतनम् अजीवयत् चेतयति स्म।।३४।।

**स** इति। निर्भिद्य पृथक्कृत्य स्थित इत्यर्थः।।३५।।

तदवयवैः लोकरचनामाह - **यस्येति**। कटिरि[4]ति ऊरुमूलयोः पश्चाद्भागः, जघनं [5]तु पुरोभागः अधःसप्तलोकान् अतलादीन् ऊर्ध्वं भूरादीन् सप्त।।३६।।

**वीर०** अथ विकुर्वाणात् अम्भसो गन्धवान् परान्वयात् रसस्पर्शशब्दरूपगुणान्वितश्च विशेषः पृथिव्यभूत्।।२९।।

सर्वेषां इन्द्रियाणां सात्त्विकाहङ्कारात् उत्पत्तिमाह - **वैकारिकादिति**। वैकारिकनाम्नः सात्त्विकाहङ्कारात् दिगादयः श्रोत्राद्यधिष्ठान[6]देवताः। ताभिः अधिष्ठितानि इन्द्रियाणि मनश्च जज्ञिरे इत्यर्थः। "अग्निर्वाग्भूत्वा" इत्यादिवत् अधिष्ठात्रधिष्ठेययोः अभेदोपचारात् सामानाधिकरण्यात् देवा वैकारिका इत्युक्तम्। देवताः गणयति [7]दिगिति। दिशश्च वातश्च अर्कश्च प्रचेताश्च अश्विनौ च - एते तस्य श्रोत्र त्वक्चक्षुर्जिह्वाघ्राणानां अधिष्ठातारःवह्निश्चेन्द्रश्च उपेन्द्रश्च मित्रश्च कश्च प्रजापतिः - एते पञ्च वाक्पाणिपादपायूपस्थानां अधिष्ठातारः। मनसस्तु अधिष्ठाता चन्द्रमाः। एभिः दशभिः अधिष्ठितानि श्रोत्रादीनि जातानि इत्यभिप्रायः।।३०।।

तैजसाहङ्कारकार्यमाह - **तैजसादिति**। तैजसात् तेजस्सम्बन्धिनः राजसाहङ्कारानुगृहीतात् सात्त्विकाहङ्कारादित्यर्थः। अन्यथा पूर्वग्रन्थव्याघातात्। पूर्वग्रन्थे अभिमानिदेवतासृष्टिरिति चेत् न। इन्द्रियैर्विना देवतादेहारम्भायोगात्, चतुर्मुखसृष्टत्वेन अत्र वक्ष्यमाणानां आदित्येन्द्रादीनां अण्डसृष्टेः प्राक् सृष्ट्ययोगाच्च। न च असृष्टानामेव अधिष्ठातृत्वमपि अनुपपन्नमिति वाच्यम्। परमाकाशस्थानां

---

1. V. Omits अमिलिताः 2. A.B. Omit ब्रह्माण्डाख्य 3. B. Omits तदा 4. H.V. Omit इति 5. B.H.V. Omit तु 6. W. 'तृ' 7. A.B. Omit दिगिति

भगवत्संकल्पानुगृहीतानां अधिष्ठातृत्वोपपत्तेः। कोऽयं परमाकाश इति चेत् वैकुण्ठाख्यो लोकः अत एव "वृतं चतुःषोडशपञ्चशक्तिभि" रिति वक्ष्यते। न च परमाकाशस्थाभिः एव अधिष्ठानोपपत्तेः चतुर्मुखकर्तृका दिगादिसृष्टिर्व्यर्थेति वाच्यम्। व्यष्टीन्द्रियाधिष्ठानार्थं दिगादिसृष्टेः आवश्यकत्वात्। अतः परमाकाशे सत्येव इत्यवगन्तव्यम्। अत एव एभिः अधिष्ठातृभिः परमात्मानं प्रति क्रियमाणा स्तुतिरपि उपपद्यते। अन्यथा अण्डोत्पत्त्यनन्तरं स्रक्ष्यमाणानां एषां अण्डोत्पत्तेः पूर्वं अभावात् तत्कर्तृका स्तुतिरनुपपन्ना स्यात्। नन्वेषां सर्वेन्द्रियाधिष्ठातृत्वे तदिन्द्रियाणां केऽधिष्ठातारः इति येत्, उच्यते- तदिन्द्रियाणामपि दशानां अधिष्ठातारः सन्त्येव। एकैकमिन्द्रियं त्वधिष्ठातृशून्यं अवतिष्ठते। तत्र स्वपरकार्यनिर्वाहकत्वन्यायेन स्वेनैव वा परमात्मना वा अधिष्ठीयते इति नानवस्थाप्रसङ्ग इति। यद्वा तैजसात्त्विति पक्षान्तरोक्तिः। पक्षद्वयस्य अविरोधमाह **ज्ञानशक्तिरिति**। प्राणशब्दः इन्द्रियापरं, ज्ञानशक्तिः प्राणः, ज्ञानेन्द्रियगणः क्रियाशक्तिश्च प्राणः, कर्मेन्द्रियागणः बुद्धिरन्तः - करणचतुष्टयं च तैजसः। राजसाहङ्कारान्वितसामग्रीप्रसूतः ज्ञानकर्मेन्द्रियाणां अन्तःकरणस्य च स्वकार्ये[1] प्रवृत्तिमत्वात् तत्कारणेनापि रजोगुणान्वितेन भवितव्यं इत्येतत्तात्पर्यकत्वात् तैजसत्त्ववादस्य सर्वेन्द्रियाणां राजसाहङ्कारानुगृहीतसात्त्विकाहङ्कारकार्यत्वमेवेति न पक्षद्वयविरोध इत्यर्थः। एवं भूतादेः अपि इन्द्रियसृष्टौ अनुग्राहकः तैजसः इति वेदितव्यम्। इन्द्रियाणि गणयति **श्रोत्रमिति**। दोः पाणिः मेढ्रं उपस्थः। क्रमस्त्वत्र न विवक्षितः।।३१।।

यदैते भूतानि इन्द्रियाणि मनश्च तेषां गुणाः तन्मात्राणि, विषयाः[2] शब्दादयः, एते सर्वे असंहताः अमिलिताः आसन्। अत एव यदायतनस्य ब्रह्माण्डा[3]ख्यभगवच्छरीरस्य निर्माणे हे ब्रह्मवित्तम! न शेकुः नाशक्नुवन्।।३२।।

तदा भगवच्छक्त्या चोदिताः प्रेरिताः संहत्य पञ्चीकरणोक्तप्रकारेण परस्परं[4] मिलित्वा सदसत्त्वं, सत्त्वं पञ्चीकरणेन स्थूलत्त्वं, असत्त्वं सूक्ष्मत्वं न उभयं अनुभयं पूर्वोक्तकालकर्मस्वभावाँश्च उपादायादः ब्रह्माण्डं ससृजुः। यद्वा अनुभयमिति अदःशब्दनिर्दिष्टब्रह्माण्डविशेषणं अनुभयं कार्यकारणभावानन्वितं [5]अदः ब्रह्माण्डं ससृजुरित्यर्थः। कार्यमप्यण्डं हि आकाशकार्यवायुवत् न तत्त्वान्तरं; न च तत्त्वान्तरारम्भकं, अतस्तत्त्वान्तरतया कार्यं तत्त्वान्तरापेक्षया कारणं च न भवतीत्यनुभयं ब्रह्माण्डमुक्तं चतुर्मुखोत्पत्त्यादिकमन्यत्र विस्तरेण वक्ष्यमाणं अत्रापि अर्थसिद्धं अनुसन्धेयम्।।३३।।

वर्षपूगसहस्रान्ते प्रलयकालावसाने इत्यर्थः। अन्यथा "[6]तत् क्रमेण विवृद्धं तज्जलबुद्बुदवत् समम्" (विष्णु.पु.1-2-54) इति विरोधात्। जीवः देवाद्यपेक्ष्या समष्टिपुरुषब्रह्माख्यजीवशरीरकः

1. A.B. र्यं 2. W. adds च 3. A.B. ण्डस्य 4. W. रेण 5. A.B. अण्डं 6. A.B. न

परमपुरुषः, कालकर्मस्वभावाश्रितः सन् तं अजीवं अचेतनं उदकेशयं अण्डं ब्रह्माण्डं अजीवयत् चेतयति स्म। अत्रोदकेशयं इत्यनेन अण्डसृष्टेः पूर्वं गर्भोदकसंज्ञिका सृष्टिः अर्थसिद्धानुसन्धेया परोक्षनिर्देशश्च चतुर्मुखान्तरसाम्याभिप्रायः।।३४।।

स एव पुरुषः चतुर्मुखरूपेणावस्थितः परमपुरुषः अण्डं निर्भिद्य तस्मात् निर्गतः अण्डभेदनावकाशलाभात् अनुपरुद्धसंचारादिमान् अभूत् इत्यर्थः। चतुर्मुखस्य भगवदात्मकत्त्वं सामानाधिकरण्येन आह **सहस्त्रेति**। यः चतुर्मुखशरीरकत्त्वेन अवस्थितः स एव "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्"। (पु.सू.1-1) "सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्। सर्वतः श्रुतिमल्लोक" (भ.गी.13-13) इत्यादिना उक्तः सर्वतः पाणिपादादिकार्यकर्ता परमपुरुष इत्यर्थः।।३५।।

यस्य सर्वतः पाणिपादादिकार्यकर्तुः वैराजपुरुषस्य अवयवैः पादतलाद्यवयवैः लोकान् अतलादीन् मनीषिणः उपासकाः कल्पयन्ति लोकान्, यदवयवत्त्वेन रचयन्तीत्यर्थः। तत्तदवयवप्रभवानां तत्तदवयवत्त्वेन उपासनं युक्तं तदवयवैः लोकरचनां आह **कट्यादिभिरिति**। कटिरूरुमूलयोः पश्चाद्भागः, जघनं पुरोभागः अधः सप्तलोकान् अतलादीनूर्ध्वं भूरादीन् सप्त कल्पयन्तीत्यन्वयः।।३६।।

**विज०** सर्वे गुणाः पृथिव्यां विशिष्यन्त इति। विशेषः पृथिवी गन्धवानिति। गन्धतन्मात्रागुणोत्पत्तिपूर्वकं इत्यर्थः। परन्वयात् कारणसंसर्गात्।।२९।।

वैकारिकाहङ्कारात् सृष्टिप्रकारमाह **वैकारिकादिति**। वैकारिकाहङ्कारात् सात्त्विकांशात् मनोऽन्तःकरणं शब्दज्ञानादिविशीष्टकार्यशक्तित्वात् वैकारिकनामानो देवाः ते अपि तस्माज्जज्ञिर इति शेषः। तदुक्तं 'विशिष्टकार्यशक्तित्वात् देवा वैकारिकाः स्मृता' इति। न्यूनाधिकसंख्याव्यवच्छेदार्थं दशेति। तेषां नामसंकीर्तनं करोति दिग्वातेति। प्रचेता वरुणः अश्वी इत्यश्विनौ, उपेन्द्रो विष्णुः तस्य न पादाभिमानित्वं किन्तु पादाभिमानिनो यज्ञनाम्नो देवस्य अन्तर्यामित्त्वेन पादांगुष्ठं अधिष्ठाय शरीरधारकत्वात् तन्नामकीर्त्तनं अनाद्यनन्तोऽपि हरिः वैकारिकगुणेष्वजः अवतीर्णः पदांगुष्ठं अध्यास्ते विश्वभुग्विभुः इत्यादेः। को दक्षप्रजापतिः।।३०।।

तैजसाहङ्कारकार्याणि किमिति नोच्यन्त इति पक्वं भक्षयेति भावेनाह - **तैजसादिति**। अत्रापि कालाद्यनुकर्षः कर्त्तव्यः। तेषां शक्तिवैषम्यात् क्रोडीकारेण विभागमाह ज्ञानशक्तिरिति। अचेतनानां इन्द्रियाणां ज्ञानादिजनकत्वं कथं घटत इति तत्राह बुद्धिरिति। ज्ञानेन्द्रियाणां ज्ञाने ज्ञानजनने शक्तिः

---

1. W. Omits ब्रह्माण्डं 2. A.B. स्वरू" 3. A.B. "णीप" 4. A.B. "ऐं" 5. W. पाताल

यस्याः सा ज्ञानशक्तिः, बुद्ध्यभिमानिन्युमा बुद्धिः। कर्मेन्द्रियाणां क्रियायां क्रियाजनने शक्तिः यस्य सः क्रियाशक्तिः प्राणः अहङ्कारिकश्च तैजसः तैजसाहङ्कारत् उत्पन्नौ इत्यर्थः। 'ज्ञानेन्द्रियाणां देवानां ज्ञानशक्तिः उदाहृता' इत्यदौ उदीर्यमाणदेवानां ज्ञानादिशक्तिरपि बुद्धिप्राणयोः प्रसादात् इत्यवगन्तव्यम्। इन्द्रियाणां तैजसाभिधानं अतिजाज्वल्यमानत्वात् भूतानां तामसत्त्वं च ज्ञानक्रियाशक्त्योः अभावात् तदुक्तं "अतिजाज्वल्यमानत्त्वात् तैजसानीन्द्रियाण्यपि" इत्यादि। भूतानां द्रव्यत्वं च द्रवणप्राप्यनिमित्तं अहं पूर्वं अहंपूर्वमिति विवदमानयोः इव स्थितयोः द्वयोः पृथिव्यपोः वायुतेजसोर्वा वेगलक्षणसंस्कारसंपर्कान्मिथो द्रवणं युज्यते आकाशस्य व्याप्तत्त्वेन द्रवणाभावेऽपि प्रदेशात्मना तत्सम्भवात् द्रव्यत्वं युक्तं, तदुक्तं "द्रव्यं तु द्रवणप्राप्यं द्वयोः विवदमानयोः पूर्ववेगादिसम्बन्धादाकाशश्च प्रदेशत" इति।।३१।।

इन्द्रियाणां विशेषनामान्याह - **श्रोत्रमिति**। श्रोत्रं त्वक् त्वगिन्दियं दोषौ हस्तौ। मेढ्रं गुह्येन्द्रियम्। बाह्यसृष्टिं उक्त्वा तेभ्यः तत्त्वेभ्यो ब्रह्माण्डसृष्टिप्रकारं आह **य एते** इति। य एते कथिता भूतेन्द्रियमनोगुणा[1] इत्युपलक्षणम्। पञ्चभूतदशेन्द्रियतैजसबुद्धिप्राणमनःशब्दादिसत्त्वादिगुणं महदहङ्कारादयो भावाः पदार्थाः ते[2] अन्योन्यं असङ्गता असंश्लिष्टाः यदायतननिर्माणे ब्रह्माण्डकरणे न शेकुः शक्तिमन्तो नासन्।।३२।।

तदा भगवन्तं अभिष्टूय शरणं गताः ततः स्तुतिप्रसन्नस्य तस्य चेष्टकरूपेण तं गणं प्रविष्टस्य हरेः शक्त्या चोदिता मिथः संहत्य संश्लिष्य सदसत्त्वं व्यक्ताव्यक्तत्वधर्मवत् पृथिव्यादिभूतत्रयमाकाशवाय्वाख्यभूतद्वयं च उपादाय उपादानीकृत्य नः अस्माकं संसारभयजनकं अदो ब्रह्माण्डं ससृजुः इत्यन्वयः। नोभयं सदसद्विलक्षणं इत्येतदयुक्तं यतः सत्यत्त्वं प्रत्यक्षादिप्रमाणसिद्धं **अत** इति। हेतुवाचिनो हि शब्दाद् ब्रह्माण्डे संसारे नोभयकारणमिति भयहेतुत्त्वं वा प्रतीयते, तदुक्तं "ब्रह्माण्डं हि वदन्तीति जीवानां भयकारणं" तत्राह[3] **संसृतिरिति**। "आकाशवायू त्वव्यक्तौ इतरेऽण्डप्रकाशिता[4]" इत्यादेर्भूतानां सदसत्वं युक्तम्।।३३।।

ब्रह्माण्डान्तस्सृष्टिं वक्तुं हरेस्तत्र व्यक्तिप्रकारमाह **वर्षपूगेति**। कालाद्युद्बोधकत्त्वेन कालकर्मस्वभावस्थो जीवः संसारव्यतिरिक्तः परमेश्वरः सहस्रवत्सरं उदकेशयं आवरणजलमध्ये[5]स्थितं तदण्डं वर्षपूगसहस्रान्ते तैस्तत्त्वैः सह प्रविश्य तदण्डं यदा स्वात्मानं प्रसूते तदा परिवृत्य जीवं स्वात्मानं तत्र अजीजनत् व्यञ्जयामास। "यः प्राणधारणं प्राणाप्रसादात् कुरुते अनिशं स जीव इति संदिष्ट" इत्यादेरजीव इत्येव पदच्छन्दः, "कालकर्मस्वभावस्थो वासुदेवः परः पुमान्"। "अकरोदण्डमुद्भिद्यात्मप्रसवकारणम्" इति वचनात्। अजीवमित्येव यद्वा जीवः प्राणधारकः परमात्मा जीवं तथाविधार्थं स्वात्मानं तत्र

1. M.Ma. 'रव्या 2. M.Ma. Omit ते 3. M.Ma. 'त्रहि 4. M.Ma. 'ण्डे 5. A. 'ध्य'

अजीजनदिति। 'प्राणान् धारयते यस्मात् स जीवः परमेश्वर' इति च। जीवादत्युद्रिक्ततेजस्त्वादजीवो जगज्जीवहेतुत्वात् जीव इति हेतुद्वयादिदं युक्तञ्च; 'अजीवोऽपि महातेजास्त्वथवा जीवयत् जगदिति' वचनात्। यद्वा अजीवः परमेश्वरः जीवं सर्वजीवप्रधानं चतुर्मुखमुत्पाद्य तदन्तर्यामित्वेन प्राणधारकं स्वऽत्मानं अजीजनत्। विरिञ्च्यस्यापि विराडाख्याण्डान्तर्वर्तिरूपजननस्य अत्र अभिप्रेतत्वात् तदुक्तम्। 'अण्डे जातौ पुमांसौ द्वौ हरिर्ब्रह्मा तथैव चेत्यादि'।।३४।।

तामेव अभिव्यक्तिं स्फुटीकरोति **स एष** इति। अयमर्थः यो महदादितत्त्वानि सृष्ट्वा तदन्तर्विष्टः तदुपादानतया अण्डं निर्माय तदन्तः प्राविशत्, स एष पुरुषः करचरणाद्यवयवत्वेन पुरुषनामा हरिरण्डं निर्भिद्य बृंहयित्वा तस्मात् अण्डात् निर्गतः प्रकाशितः अभूत्। पुरुषत्वेऽपि लोकविलक्षणः अयमिति भावेन विशिनष्टि **सहस्रेति**। अत्र सहस्रशब्दस्य यथासम्भवमर्थो वक्तव्यः।।३५।।

पुरुषाख्यविष्णोः अवयवेभ्यः एव चतुर्दशभुवनसृष्टिः, अन्येभ्यस्तु अमुख्येति भावेनाह **यस्येति**। इह पञ्चाशत्कोटिविस्तीर्णब्रह्माण्डे आयामतो विस्तारतः तावद्विपुलानन्दादिदेहत्त्वेन अवतीर्णस्य चतुर्दशभुवनेभ्यः अण्डाच्च भिन्नस्य पुरुषाख्यस्य हरेः अवयवैः निमित्तकारणैः मनीषिणः चतुर्दशलोकान् सृष्टान् कल्पयन्तीति यत् यस्मात्तस्मात् सृष्टेः ज्ञानिप्रत्यक्षसिद्धत्वात् अन्यतः सृष्टिरमुख्येति भावः। "हरेरवयवैः सृष्टा लोका इति विकल्पनम्" इत्यादेश्च तत्सृष्टिकल्पनाप्रकारमाह **ऊर्वादिभिरिति**। ऊर्वादिभिः पादतलान्तैः अवयवैः अतलादिपातालान्ताः सप्त लोकाः निर्मिताः जघनादिभिः मूर्धान्तैः अवयवैः ऊर्ध्वं पृथिव्यादिसत्यान्ताः सप्त लोकास्सृष्टा इति।।३६।।

**रा०कृ०** विकुर्वाणात् अम्भसस्तु गन्धवान् गन्धगुणकः परान्वयात् परेषां कारणभूतानां जलतेजोवायुनभसां अनुवृत्तेः रसस्पर्शशब्दरूपगुणान्वितः रसरूपस्पर्शशब्दगुणान्वितश्च विशेषः पृथिवी अभूत् उदभूत्।

गन्धद्वारा पृथिव्याः अनुभूयमानत्वात् गन्धस्य पृथिवीकारणत्वम्। किञ्च जलतेजोवायुनभसां सम्बन्धात् पृथिव्याः रसरूपस्पर्शशब्दगुणयोगः।।२९।।

वैकारिकात् सात्त्विकाहङ्कारात् मनो जज्ञे जातम्। दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः दिशः वातः वायुः, अर्कः सूर्यः, प्रचेताः वरुणः, अश्विनौ, वह्निः अग्निः, इन्द्रः, उपेन्द्रः, विष्णुः, मित्रः, कः प्रजापतिः, एते दश देवाः वैकारिकाः सात्त्विकाहङ्कारजाताः।

अत्र मनश्शब्देन तदधिष्ठाता चन्द्रो जात इति ज्ञेयः। तथा च दिग्वातार्कप्रचेतोऽश्विनामकाः पञ्च देवताः श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानां अधिष्ठातारः। वह्नीन्द्रोपेन्द्रमित्रप्रजापतयश्च पञ्चदेवताः वाक्पाणिपादपायूपस्थानां अधिष्ठातार इति ज्ञायते।।३०।।

यतो ज्ञानशक्तिः बुद्धिः, क्रियाशक्तिः प्राणश्च तैजसौ राजसाहङ्काराज्जातौ ततः श्रोत्रत्वग्घ्राणदृग्जिह्वावाग्दोर्मेढ्राङ्घ्रिपायवः - अत्र इन्द्रियाणां क्रमो न विवक्षितः। दोःपाणिः। मेढ्रमुपस्थः। एतन्नामकानि दशेन्द्रियाणि, पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणीति यावत्। विकुर्वाणात् तैजसात् राजसाहङ्कारात्तु अभवन् जातानि।।३१।।

हे ब्रह्मवित्तम! नारद! यदा एते भूतेन्द्रियमनोगुणाः भूतानि आकाशादिपञ्चभूतानि, इन्द्रियाणि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च, मनः गुणाः तन्मात्ररूपाः भावाः पदार्थाः असङ्गताः पृथक् विरुद्धस्वभावत्वात् असम्मिलिता आसन् ततश्च यदा आयतननिर्माणे आयतनस्य ब्रह्माण्डाख्यस्य भोगायतनस्य समष्टिव्यष्ट्यात्मकस्य शरीरस्य निर्माणे रचनायां न शेकुः न समर्था बभूवुः। तदा भगवच्छक्तिचोदिताः भगवतः इच्छारूपया शक्त्या चोदिताः प्रेरिताः सदसत्त्वं स्थूलसूक्ष्मभावं उपादाय स्वीकृत्य अन्योऽन्यं संहत्य च पञ्चीकरणप्रकारेण परस्परं मिलित्वा चोभयं समष्टिव्यष्ट्यात्मकं अदः शरीरं ससृजुः।।३२,३३।।

वर्षपूगसहस्रान्ते संवत्सरसमूहसहस्रस्य अन्ते कालकर्मस्वभावस्थः कालकर्मस्वभावानां नियन्ता जीवः जीवयति सर्वमिति जीवो भगवान् उदकेशयं अजीवं चेतनारहितं तत् पूर्वोक्तं अण्डं ब्रह्माण्डं अजीवयत् सजीवमकरोत्।।३४।।

स एव पुरुषः भगवान् परमपुरुषः अण्डं पूर्वोक्तमण्डं निर्भिद्य शस्रोर्वङ्घ्रिबाह्वक्षः सहस्राननशीर्षवांश्च सन् तस्मादण्डात् निर्गतः।।३५।।

इह लोके मनीषिणः बुद्धिमन्तः यस्य भगवतः कट्यादिभिः कट्यूरुजानुजङ्घागुल्फप्रपदपादमूर्तैः सप्तभिरवयवैः अधस्सप्तलोकान् अतलवितलसुतलतलातलमहातलरसातलपातालाह्वयान् जघनादिभिः जघननाभ्युरोग्रीवावदनललाटशिरोनामकैः सप्तभिः ऊर्ध्वावयवैः ऊर्ध्वं सप्तलोकान् भूर्भुवस्स्वर्महर्जनस्तपस्सत्याख्यान् कल्पयन्ति स परमपुरुषः तस्मादण्डान्निर्गत इति पूर्वेणान्वयः।।३६

**पुरुषस्य मुखं ब्रह्म[1] क्षत्रमेतस्य बाहवः।**
**ऊर्वोर्वैश्यो[2] भगवतः पद्भ्यां शूद्रो[3]ऽभ्यजायत।।३७।।**

**भूर्लोकः कल्पितः पद्भ्यां भुवर्लोको[4]ऽस्य नाभितः।**
**हृदा स्वर्लोक उरसा महर्लोको महात्मनः।।३८।।**

1. A.B.C.G.I.M.Ma.N.W. °ह्म 2. H.V.W. °विशो 3.H.I.M.Ma.V.W. °द्रोव्य 4. H.V. °कश्च; W. °कस्तु

ग्रीवायां[1] जनलोकश्च[2] तपोलोकः[3] स्तनद्वयात्।
मूर्धतः[4] सत्यलोकस्तु ब्रह्मलोकः सनातनः।।३९।।

तत्कट्यां[5] चातलं क्लृप्तमूरुभ्यां वितलं विभोः।
जानुभ्यां सुतलं शुद्धं[6] जङ्घाभ्यां तु तलातलम्।।४०।।

महातलं तु गुल्फाभ्यां प्रपदाभ्यां रसातलम्।
पातालं पादतलत इति लोकमयः पुमान्।।४१।।

भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य[7] नाभितः।
स्वर्लोकः कल्पितो मूर्ध्ना[8] इति वा लोककल्पना।।४२।।

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
द्वितीयस्कन्धे पञ्चमोऽध्यायः।।५।।

**श्रीध०** वर्णानां तत[9] उत्पत्तिं दर्शयति **पुरुषस्येति**। ब्रह्मा ब्राह्मणो मुखमिति कार्यकारण्योः अभेदविवक्षयोक्तम्। बाहव इति च[10] क्षत्तं क्षत्रियः।।३७।।

इदानीं उपासनार्थं लोककल्पनाभेदान् दर्शयन् सप्तलोकपक्षमाह द्वाभ्यां **भूर्लोकः** इत्यादि। भूर्लोकः पातलमारभ्य पद्भ्यां कटिपर्यन्ताभ्याम्।।३८।।

**ग्रीवायामिति**। स्तनद्वयात् इत्युपासनार्थत्वात्[11] ऊर्ध्वअधोभाववैपरीत्यं[12] न दोषः। यद्वा। स्तन च्छब्दं कुर्वत् यदोष्ठद्वय्रं तस्मादित्यर्थः। ब्रह्मलोको वैकुण्ठाख्यः स[13] तु सनातनो नित्यः न तु सृज्यप्रपञ्चान्तर्वर्तीत्यर्थः।।३९।।

इदानीं चतुर्दशलोकपक्षं दर्शयति। तत्र जघनादिभिः भूरादयः पूर्वोक्ता एव सप्त। कट्यादिभिरधस्सप्तलोकान् आह तत्कट्यामिति द्वाभ्याम्। शुद्धं हरिभक्तनिवासत्वात्।।४०,४१।।

त्रिलोकपक्षमाह भूर्लोक इत्यादिना। भूर्लोकः पातालादिसहितः।।४२।।

---

1. W. याः 2. B.I. °कोऽस्य; H.V. °कस्तु 3. M.Ma. °कश्च नेत्रयोः 4. A.B.C.G.I.M.Ma.N.W. °र्भिः 5. H.M.Ma.V. °ट्याम°; W. °ट्या अ° 6. W. सृष्टं 7. H.M.Ma.V. °कस्तु 8. M.Ma. °र्ध्नि 9. H.V. Omit तत 10. H.V. Omit च 11. B. adds (लोकयोः) 12. H.V. °भ° 13. H.V. Omit स तु

इति श्रीमद्भागवते द्वितीयस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां पञ्चमोऽध्यायः।।५।।

**वीर०** वर्णानां तद्विभूतित्वाय चतुर्मुखरूपेण अवस्थितात् तत उत्पत्तिं दर्शयति **पुरुषस्येति**। ब्रह्म ब्राह्मणः मुखमिति। कार्यकारणयोः अभेदविवक्षया उक्तं बाहव इति च। क्षत्रं क्षत्रियः।।३६।।

इदानीं उपासनार्थं लोककल्पनाभेदं दर्शयन् चतुर्दशलोकपक्षमाह **भूरित्यादि** चतुष्टयेन। भूर्लोकः पातालं आरभ्य पद्भ्यां कटिपर्यन्ताभ्यां कल्पितः। भुवर्लोकः नाभितः नाभिं आरभ्य आ[1] स्तनद्वयात् हृदयं कमलाकारं तदूर्ध्वभागः उरः। ब्रह्मलोकः **सनातन** इति। सत्यलोकविशेषणम्। सनातनत्वं च भूराद्यपेक्षया। यद्वा ब्रह्मलोको वैकुण्ठाख्यो[2] लोकः सनातनः न तु सृज्यप्रपञ्चान्तवर्तीत्यर्थः ।।३८,३९,४०,४१।।

इदानीं सङ्ग्रहेण लोकत्रयकल्पनामाह **भूर्लोकः कल्पित** इति। पादतलमारभ्य आ[3] नाभितः भूर्लोकः, नाभिमारभ्य आ[4] मूर्धतः भुवर्लोकः, मूर्धा स्वर्लोकः कल्पितः। अतलादीनां भूरादिषु अन्तर्भावात्।।४२।।

इति श्रीमद्भागवते द्वितीयस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां पञ्चमोऽध्यायः।।५।।

**विज०** इदानीं पुरुषस्य मुखाद्यङ्गेभ्यो ब्राह्मणादिजातिजनिं आह **पुरुषस्येति**। 'ब्राह्मणो मुखमित्येव मुखात् जातत्वहेतुत' इत्यादेः मुखं इत्यादि प्रथमा पञ्चम्यर्थे प्रमाणान्तरगवेषणायासो न कर्तव्यः। अत्रैव दर्शनादिति भावेन आह **उर्वोरिति**। अनेन पुरुषनाम्नो हरेः यथा मुखाद्यङ्गेभ्यो ब्राह्मणादिजात्युत्पत्तिः एवं लोकसृष्टिरपि तदङ्गेभ्यः सिद्धा नान्यतः।।३७।।

तामेव सृष्टिं प्रपञ्चयति **भूर्लोक इति**। भूरिति भूमेः अव्ययं नामान्तरं भूर्लोकः पद्भ्यां जात इति। कल्पित इति अन्वेतव्यं भुव इति अन्तरिक्षलोकः इदं अव्ययं जघनपादयोः सामीप्यात् जघनादिभिः इत्यनेन न विरोधः।।३८,३९,।।

कट्योर्जघनान्तर्भावेऽप्यूर्वोस्तत्सामीप्यात् ऊर्वादिभिः इत्यस्य अविरोधः इति।।४०।।

1. A.B. Omit आ 2. A.B. 'ख्य' 3. A.B. Omit आ 4. A.B. Omit आ

उपसंहरति **इतीति**। यत एवं हरेः लोकनिर्मातृत्वं लोकाधारत्वं लोकव्याप्तत्वं लोकोत्तमत्वं च अतो वैराजाख्यो विष्णुः लोकमय इति उपासीतेति शेषः।।४१।।

प्रकारान्तरेण पुरुषावयवेभ्यो लोकसृष्टिप्रकारमाह **भूर्लोक** इति। अत्र अतलादीनां भूम्यन्तर्भावेन महरादीनां स्वर्लोकान्तर्भावेन त्रिलोकविवक्षा ज्ञेया। अतो नोक्तविरोधः। अत्रेदं तात्पर्यमुक्तं भवति - चतुर्दशलोकपक्षस्त्वेकः, सप्तलोकपक्षस्त्वपरः, त्रिलोकपक्षस्त्वन्यः अधिकारिभेदेन ध्यानार्थत्वात् कल्पनायाः, ततो विकल्प उपपन्न इति।।४२।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
द्वितीयस्कन्धे पञ्चमोऽध्यायः।।५।।

**रा०कृ०** एतस्य पुरुषस्य विश्वात्मकस्य भगवतः मुखं ब्रह्म अभूदिति शेषः, कार्यकारणयोर-भेदोपचारादेवमुक्तम्। मुखात् ब्रह्म ब्राह्मणो अभ्यजायत। बाहवः बाहुभ्यः क्षत्रं क्षत्रियः अभ्यजायत। ऊर्वोः ऊरुभ्यां वैश्यः अभ्यजायत। पद्भ्यां शूद्रोऽभ्यजायत। अत्र कारणभूतमुखादेः कार्यभूतब्रह्मादेर्जन-नात् 'पुरुषस्य मुखात् ब्रह्मे' ति वक्तव्ये 'पुरुषस्य मुखं ब्रह्मे' ति कार्यकारणयोरभेदविवक्षया उक्तमिति श्रीधराचार्या अपि व्याख्यतवन्तः। इदमेव व्याख्यानं समीचीनतरमिव भाति। तथाहि - अनेन व्याख्यानेन न केवलमनन्तरवक्ष्यमाणोरुशब्दपञ्चमीविभक्तिवैषम्यदोष एव निरस्तः, किन्तु तत्तत् कार्योपयोगि विराट्पुरुषावयवभूतानां ब्राह्मणादीनामपि तुल्यप्राधान्यं सुव्यवस्थापितं भवति।

पूर्वोक्तां कार्यकारणयोरभेदविवक्षामनङ्गीकुर्वन्त इव श्रीवल्लभाचार्याः "ऊर्वोरिति भेदेन निर्देशो भगवद्भावापत्तिनिषेधार्थः। वैश्यशूद्रयोर्मुक्त्यभावाय" इत्यवोचन्। अत्रोच्यते - ब्राह्मणादीनां तत्तत्कार्यो-पयोगिविराट्पुरुषावयवत्वेन प्रतिपादनावसरे भगवद्भावापत्त्यनापत्त्योरप्रस्तुतत्वात् ऊर्वोरिति भेदेन निर्देशः केवलं कार्यकारणभेदप्रतिपादनार्थ एव न तु भगवद्भावापत्तिनिषेधार्थः। एवञ्च मोक्षस्याप्यप्रकृत-त्वात् वैश्यशूद्रयोर्मुक्त्यभावाय इति कथनमपि चिन्त्यमेव, अपि च वैश्यशूद्रयोर्मुक्त्यभावे "इदं भागवतं नाम पुराणं ब्रह्मसम्मितम्। उत्तमश्लोकचरितं चकार भगवानृषिः" "निःश्रेयसाय लोकस्य धन्यं स्वस्त्ययनं महत्। तदिदं ग्राहयामास सुतमात्मवतां वरम्" इति लोकसामान्यनिःश्रेयसाय भगवता वेदव्यासेन ब्रह्मसम्मितस्य भागवतस्य प्रणयनात् प्रतिज्ञातार्थभङ्गप्रसङ्गः। किञ्च "ऊरू तदस्य यद्वैश्यः" इति श्रुतौ वैश्यस्य ऊर्वभेदनिर्देशात् वैस्यशूद्रयोरित्यादौ वैश्यपदग्रहणस्यापि श्रुतिविरोधापत्तिः। वस्तुतस्तु एते ब्राह्मणक्षत्रियवैश्यशूद्राः यथाक्रमं बोधनरक्षणपोषणभारवहनाख्यधर्माणां सर्वमानवा-भ्युदयहेतुभूतानां सङ्केताः। एतेषां धर्माणां मानवमुखबाहूरुपादप्रवर्तितत्वात् ब्राह्मणादीनामापि भगवतो

1. A.B. ४

वैराजपुरुषस्य मुखाद्यवयवोत्पन्नत्वमुक्तम्। एतद्धर्मावलम्बिनश्च कालान्तरे ब्राह्मणादिनामभिः व्यवह्रियन्ते स्मेति तेषां ब्राह्मणादीनां समेषामेव तुल्यप्राधान्यमव्याहतम्।।३७।।

अस्य भगवतः पद्भ्यां भूर्लोकः कल्पितः, नाभितो भुवर्लोकः कल्पितः अस्य महात्मनः हृदा स्वर्लोकः कल्पितः, उरसा महर्लोकः कल्पितः।।३८।।

अस्य ग्रीवायां च जनलोकः कल्पितः; स्तनद्वयात् तपोलोकः कल्पितः। स्तनद्वयस्य ओष्ठद्वयमित्यपि श्रीधराचार्याः, नासिकाद्वयमिति श्रीवल्लभाचार्याश्च व्याख्यां चक्रुः। मूर्धभिस्तु सत्यलोकः कल्पितः। ब्रह्मलोकः ब्रह्मणो भगवतो लोकः वैकुण्ठनामकः सनातनः शाश्वतः न सृज्यलोकान्तर्वर्ती इति भावः। अत्र श्रीमच्छुकदेवः - "भूरादयोऽल्पकालस्थायिनः सत्यलोकश्चिरकालस्थायीति विवेकः। यद्यपि वैकुण्ठलोकः सनातनस्तथाऽपि प्राकृतलोकगणनायां तदन्वयासम्भवात् स नेह गृह्यते"-इत्याह ।।३९।।

तत्कट्यां च तस्य कट्यां च अतलं क्लृप्तं कल्पितम्। विभोः तस्य ऊरुभ्यां वितलं क्लृप्तम्। जानुभ्यां शुद्धं सुतलं क्लृप्तम्। जङ्घाभ्यां तु तलातलं क्लृप्तम्। गुल्फाभ्यां महातलं क्लृप्तम्, प्रपदाभ्यां रसातलं क्लृप्तम्। पादतलतः पातालं क्लृप्तम् - इति पुमान् परमपुरुषः लोकमयः लोकमयत्त्वेन ध्येय इति भावः।

अत्र "लोकमय इति अवयवैः क्लृप्तानां लोकानां तत्रैव विद्यमानत्वाल्लोकमयत्वम्। पुमानिति। नेदमुपासनार्थमुक्तं किन्तु पुमानेव तादृशः" - इति श्रीवल्लभाचार्या अवोचन्। एतेन "उपासनार्थं लोककल्पनाभेदाः प्रदर्शिता" इति वदतां श्रीधरादीनां व्याख्यातॄणां मतमनुसृत्य सम्भाव्यमाना भगवतो लोकमयत्वाभावशङ्का निरस्ता। श्रीवल्लभाचार्याणां शुद्धाद्वैतव्याख्यानं समीचीनतरं प्रतीयते।।४०,४१।।

अथ लोकात्रय एवेति पक्षमाश्रित्य कथयति - अस्य पुरुषस्य पद्भ्यां भूर्लोकः पातालादिसहितः कल्पितः; नाभितः भुवर्लोकः कल्पितः, मूर्ध्ना तु स्वर्लोकः ब्रह्मलोकपर्यन्तः कल्पितः इति वा लोककल्पना वेद्या इति शेषः।।४२।।

इति श्रीमद्भागवते द्वितीयस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां
व्याख्यायां पञ्चमोऽध्यायः।।५।।

oooOooo

# षष्ठोऽध्यायः

**ब्रह्मोवाच**

**वाचां[1] वह्नेर्मुखं क्षेत्रं[2] छन्दसां सप्तधातवः।**
**हव्यकव्यामृतान्नानां जिह्वा सर्वरसस्य च।।१।।**

**सर्वासूनां च वायोश्च तन्नासे परमायने[3]।**
**अश्विनोरोषधीनां[4] च घ्राणो[5] मोदप्रमोदयोः।।२।।**

**रूपाणां तेजसां चक्षुः दिवः सूर्यस्य चाक्षिणी।**
**कर्णौ दिशां च तीर्थानां श्रोत्रमाकाशशब्दयोः।**
**तद्गात्रं वस्तुसाराणां सौभगस्य[6] च भाजनम्।।३।।**

**त्वगस्य स्पर्शवाय्वोश्च[7] सर्वमेधस्य चैव हि।**
**रोमाण्युद्भिज्ज[8]जातीनां[9] यैर्वा यज्ञस्तु सम्भृतः।।४।।**

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

षष्ठे विराड्विभूतिश्च प्रोक्ताऽध्यात्मादिभेदतः। दृढीकृतं च[10] पूर्वोक्तं सर्वं पुरुषसूक्ततः।।१।।

इदानीं वैराजस्य विभूतिः सप्रपञ्चं अनुवर्ण्यते। **वाचामिति**। वाचां अस्मदादिवागिन्द्रियाणां तदधिष्ठातुः वह्नेश्च, तस्य मुखं क्षेत्रं उत्पत्तिस्थानम्। छन्दसां गायत्र्यादीनां सप्तानां, तस्य स[11]प्तधातवः त्वगादयः क्षेत्रम्, हव्यं देवानामन्नं, कव्यं पितॄणाम् अन्नं अ[12]मृतं तदुभयशेषं मनुष्याणां[13] अन्नं एषां[14] अन्ना[15]नां तथा[16] सर्वरसस्य मधुरादेः षड्विधस्य च[17]। चकारात् अस्मदादिरसनेन्द्रियस्य तदधिष्ठातुः वरुणस्य चैतस्य जिह्वा क्षेत्रं उत्पत्तिस्था[18]नम्। एवं सर्वत्र अनुक्रमुन्नेयम्।।१।।

**सर्वेति**। सर्वासूनां अस्मदादिप्राणानां[19] तस्य नासे नासारन्ध्रे परमायने उत्तमक्षेत्रे मोदप्रमोदयोश्च सामान्यविशेषगन्धयोः घ्राणो[20] घ्राणेन्द्रियं परमायनम्।२।।

**रूपाणामिति**। रू[21]पाणां तेजसां रूपप्रकाशकानां चक्षुरिन्द्रियं अक्षिणी नेत्रगोलके सर्वत्र षष्ठ्यन्तानां प्रथमान्तं क्षेत्रं द्रष्टव्यम्। कर्णौ तस्य श्रोत्राधिष्ठाने श्रोत्रमिन्द्रियम्। तस्य गात्रं शरीरं वस्तूनां ये सारांशाः तेषां भाजनं स्थानम्।।३।।

---

1. B.M.Ma.W. °चो 2. W. स्थानं 3. I. °णं° 4. W. °णं° 5. M.Ma. गन्धस्य चैव दि 6. H.M.Ma.V.W. °भाग्यं° 7. A.B.G.I.M.Ma.N. °यो° 8. M.Ma. °ज° 9. W. °ता° 10. H.V. तु 11. B.H V. Omit सप्त 12. A. Omits अन्नं 13. A. °षो 14. A.B. Omit अन्नं 15. A.B. °ते° 16. B.H.V. Omit तथा 17. A. Omits च 18. B.H.V. Omit उत्पत्तिस्थानम् 19. H.V. °दीनां° 20. B.H.V. Omit घ्राणो 21. H.V. Omit रूपाणां 22. B.H.V. Omit तस्य

**त्वगिति**। अस्य त्वक् स्पर्शस्य च[1] वायोश्चेत्यर्थः। सर्वमेधस्य[2] सर्वस्य[3] मेधस्य यज्ञस्य उद्भिज्ज-जातीनां सर्ववृक्षाणाम्। यैः अश्वत्थोदुम्बरखदिरपालाशादिवृक्षैः[4] यज्ञः सम्यक् साधितः तेषामेव वा।।४।।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं कृत्स्नप्रपञ्चस्य महदादिक्रमेण सृष्टस्य वैराजविभूतित्वं अभिधाय तदेव पुरुषसूक्तसंवादेन दृढीकुर्वन् यद्रूपं इत्यादेः उत्तरमाह **वाच** इति। वाचो वागिन्द्रियस्य तदधिष्ठातृदेवताभूताग्नेश्च भगवन्मुखं स्थानमाश्रयः छन्दसां[5] गायत्र्युष्णिग्बृहतीपंक्तिजगतीत्रिष्टुबनुष्टभां सप्तानां छन्दसां, सप्तधातवः त्वगादि सप्तधातुस्थानीया भगवद्विग्रहावयवाः स्थानं, हव्यं देवानामन्नं कव्यं पितॄणाम्, अमृतं तदुभयशेषं[6] मनुष्याणां एषां अन्नानां, सर्वरसस्य च[7] मधुरादेः षड्विधस्य चकारात् अस्मदादिरसनेन्द्रियस्य तदधिष्ठातुः वरुणस्य च। तस्य जिह्वा क्षेत्रम्। एवं सर्वत्र अनुक्तमुन्नेयम्।।१।।

सर्वासूनां अस्मदादिप्राणानां वायोश्च तस्य नासे नासारन्ध्रे परमायने उत्तमक्षेत्रं[8] ओषधीनां अश्विनोः मोदप्रमोदयोश्च तद्घ्राणेन्द्रियं स्थानम्। मोदः अनुकूलवस्तुदर्शनजसुखविशेषः, प्रमोदस्तु अनुकूलवस्तुनः स्वीयत्वबुद्धिजसुखविशेष[9] इति भेदः।।२।।

रूपाणां शुक्लादीनां, तेजसां रूपप्रकाशकानां च चक्षुः[10] तच्चक्षुरिन्द्रियं स्थानम्। दिवः सूर्यस्य चाक्षिणी तन्नेत्रगोलकौ[11] स्थानम्। सर्वत्र षष्ठ्यन्तनिर्दिष्टानां प्रथमान्तनिर्दिष्टं क्षेत्रं द्रष्टव्यम्। दिशां तीर्थानां च[12] तत्कर्णौ कर्णबिले स्थानम्। आकाशशब्दयोः तच्छ्रोत्रम्। वस्तूनां ये सारांशाः तेषां सौभगस्य स्पृहणीयतायाश्च तद्गात्रं तच्छरीरं भाजनं स्थानम्।।३।।

स्पर्शवाय्वोः सर्वमेधस्य समस्तयज्ञस्य च अस्य त्वक् स्थानम्। उद्भिज्जजातीनां[13] सर्ववृक्षाणां यैर्वृक्षैः यज्ञः सम्भृतः[14] सम्यक्[15] साधितः तेषामेव वा, तद्रोमाणि स्थानम्।।४।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

आध्यात्मिकाधिदैवाधिभौतिकादिरूपस्य जगतो हरेः मुखादिभ्यः उत्पत्तिः तस्य ततो भिन्नत्वं तदुक्त प्रतिमादिस्वरूपत्वं च प्रतिपाद्यते अस्मिन्नध्याये। तत्र प्रथमं अध्यात्मेन्द्रियतदभिमानि-देवतादिसर्वपदार्थानां तदङ्गेभ्यः उत्पत्तिप्रकारमाह **वाच** इत्यादिना। वाचो वागिन्द्रियस्य वक्तव्यस्य च तदभिमानिनो वह्नेः अग्निदेवस्य च पुरुषस्य मुखं क्षेत्रं योनिः कारणं उत्पादकं इत्यर्थः। "क्षेत्रं पुरे गृहे

1. A.B. Omit च 2. A.B. Omit सर्वनेधस्य 3. H.V. Omit सर्वस्य मेधस्य 4. A.B. Omit अश्वत्थोदुम्बरखदिरपालाशादि 5. A.B. Omit छन्दसां 6.A.B. °षो 7. A.B. Omit च 8. A.B. °त्रे 9. W. °द्विसु° 10. W. Omits चक्षुः तत् 11. W. °के 12. A.B. Omit च 13. W. °ता° 14.W, Omits सम्भृतः 15. A.B. Omit सम्यक्

देहे केदारे योनिभार्ययोः" (वैज.को.6-5-6) इति। "योनिः स्त्रीणां भगे स्थाने कारणे ताम्रकेप्यषण्" (वैज.को.6-5-66) इति यादवः। गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्ति त्रिष्टुब्जगतीसंज्ञानां सप्तानां छन्दसामस्य पुरुषस्य त्वङ्मांसरुधिरमेदोमज्जाऽस्थ्याख्याः सप्तधातवः। क्षेत्रं इत्यनुवर्तते। अत्र तदुत्पन्नत्वं तदाश्रितत्वं चेति तात्पर्यं उत्तरत्रापि अनुसन्धेयम्। हव्यादिसर्वान्नानां जिह्वेन्द्रियस्य च कषायमधुरादिसर्वरसस्य च तस्य पुरुषस्य जिह्वा क्षेत्रम्।।१।।

सर्वासूनां सर्वमरुतां मुख्यवायोश्च तन्नासे तस्य हरेः नासापुटे क्षेत्रे परमायने च उत्तमाश्रयणे च अभिमानिनोः अश्विनोः व्रीह्याद्यौषधीनां च घ्राणेन्द्रियस्य गन्धस्य च सुरभ्यसुरभिलक्षणस्य च तस्य घ्राणं क्षेत्रम्। नपुंसकस्य घ्राणस्य पुंशक्तिमत्त्वद्योतनाय घ्राण इत्युक्तम्। "क्लीबे घ्राणं गन्धवहः घोणा नासा च नासिक" (अम.को.2-349) इत्यमरः।।२।।

चक्षुरिन्द्रियस्य तद्विषयाणां च रूपाणां विषयप्रकाशकानां तेजसां ज्योतिषां च हरेश्चक्षुः क्षेत्रं, दिवो द्युलोकस्याभिमानिनः सूर्यस्य च[1] हरेरक्षिणी चक्षुर्गोलके क्षेत्रमिति शेषः। दिशां दिग्देवतानां तीर्थानां शास्त्राणां च[2] हरेः कर्णौ क्षेत्रम्। "तीर्थं मन्त्राद्युपाध्यायशास्त्रेष्वम्भसि पावने" (वैज.को.6-3-13) इत्यभिधनम्। श्रोत्रेन्द्रियस्य तद्विषयस्य शब्दस्य आकाशस्य च हरेः श्रोत्रेन्द्रियं कारणम्। वस्तुसारणां वस्तुश्रेष्ठानां वस्तुबलानां वा। सौभाग्यस्य तस्य हरेः गात्रं उत्पादकं भाजनं निधानं निधानपात्रं च ।।३।।

त्वगिन्द्रियस्य स्पर्शगुणस्य स्पर्शाभिमानिनो वायोः सर्वमेधस्य सर्वज्ञस्य च अस्य हरेः त्वगिन्द्रियं क्षेत्रम्। यैः उद्भिज्जै[3]जातिविशिष्टैः पलाशादिवृक्षैः यज्ञः सम्भृतः, सम्पादितः, यज्ञकारिभिरिति शेषः। तेषां उद्भिज्जै[4]जातीनां वृक्षाणां रोमाणि हरेः रोममूलानि क्षेत्रम्। यैः यज्ञः सम्भृतो यज्ञादन्यः कार्यविशेषः साधितः तेषां हरेः रोमान्तर्भगः। अयं विकल्पो वा शब्दसूचितात् "याज्ञिका रोममूलस्था रोमान्तःस्थास्तु तत्पराः" इति वचनात् ज्ञायते। तु शब्दः उक्तार्थावधृतौ वर्तते।।४।।

## श्रीराधाकृष्णप्रणीता सुधीसुधा

तस्य विराड्रूपस्य भगवतो मुखं वाचां वागिन्द्रियाणां वह्नेः तदधिष्ठातुः अग्नेश्च क्षेत्रं स्थानम्। सप्तधातवः त्वक्चर्ममांसरुधिरमेदोऽस्थिमज्जाः छन्दसां गायत्र्युष्णिग्बृहतीपङ्क्तिजगतीत्रिष्टुबनुष्टुभां सप्तच्छन्दसां क्षेत्रम्। जिह्वा हव्यकव्यामृतान्नानां हव्यं देवानामन्नं पुरोडाशादिरूपं, कव्यं पितॄणामन्नं चर्वोदनादिरूपं अमृतं तदुभयशेषं मनुष्याणामन्नं एतेषामन्नानां सर्वरसस्य च मधुराम्ललवणतिक्तकटुकषायभेदेन षड्विधस्य रसस्य चकारात् रसनेन्द्रियस्य तदधिष्ठातुः वरुणस्य च क्षेत्रम्।।१।।

---

1. A.B. Omit च 2. A.B. Omit च 3. A. 'ज्ज' B. 'ज्जा' 4. A.B. 'ज्ज'

तन्नासे तस्य भगवतो नासिके सर्वासूनां सर्वेषां प्राणादीनां वायोश्च तदधिष्ठातुः, परमायने उत्तमक्षेत्रे, घ्राणः अश्विनोः अश्विनीकुमारयोः ओषधीनां यवव्रीह्यादीनां, मोदप्रमोदयोः सामान्यविशेष-गन्धयोश्च क्षेत्रम्।।२।।

चक्षुः तस्य चक्षुरिन्द्रियं रूपाणां शुक्लकृष्णहरितादीनां तेजसां रूपप्रकाशकानां सोमाग्न्यादीनां च क्षेत्रम्। तस्य अक्षिणी नेत्रगोलके दिवः स्वर्गस्य सूर्यस्य च क्षेत्रम्। कर्णौ कर्णबिले दिशां तीर्थानां गङ्गादीनां च क्षेत्रम्। श्रोत्रं श्रोत्रेन्द्रियं आकाशशब्दयोः क्षेत्रम्, तद्गात्रं तस्य भगवतः शरीरं वस्तुसाराणां वस्तूनां मध्ये ये सारभूताः सुवर्णादयः तेषां सौभाग्यस्य सौन्दर्यस्य च भाजनं स्थानम्।।३।।

अस्य त्वक् चर्म स्पर्शवाय्वोः स्पर्शस्य वायोश्च सर्वमेधस्य चैव सर्वविधस्य यज्ञस्य च भाजनं हि। यै र्वा यज्ञस्तु संभृतः सम्पादितो भवति तेषां उद्भिज्जजातीनां वृक्षाणां अस्य रोमाणि स्थानम्।।४।।

**केशश्मश्रुनखान्यस्य शिलालोहाभ्रविद्युताम्।**
**बाहवो लोकपालानां प्रायशः क्षेमकर्मणाम्।।५।।**

**विक्रमो भूर्भुवःस्वश्च क्षेमस्य शरणस्य च।**
**सर्वकामवरस्यापि हरेश्चरण[1] आस्पदम्।।६।।**

**अपां वीर्यस्य सर्गस्य पर्जन्यस्य प्रजापतेः।**
**पुंसः शिश्न उपस्थस्तु प्रजात्यानन्दनिर्वृतेः।।७।।**

**पायुर्यमस्य मित्रस्य परिमोक्षस्य नारद।**
**हिंसाया निऋतेर्मृत्योः निरयस्य गुदः[2] स्मृतः।।८।।**

**श्रीध० केशेति।** केशाः मेघानां क्षेत्रं पूर्वं तथोक्तेः श्मश्रूणि विद्युतां पादकरनखानि शिलालोहानामिति सादृश्यात् ऊह्यम्। क्षेमकर्मणां पालनकर्तृणाम्।।५।।

**विक्रम** इति। विक्रमः पादन्यासो भूरादिलोकानां आस्पदं आश्रयः। भूर्भूवस्स्वरिति[3] षष्ठीबहु-वचनान्तम्। भूरादिशब्दानां अव्ययत्वात् षष्ठ्याः लुक्। क्षेमो लब्धरक्षणम्, शरणं भयाद्रक्षणम्। सर्वेषां कामानां वरस्य वरणस्यापि हरेः अङ्घ्रिः आस्पदम्।।६।।

1. H.V. 'मा' 2. B.I. 'दं स्मृतम् 3. A.B. Omit भूर्भुवस्स्व......वचनान्तम्

**अपामिति**। वीर्यस्य शुक्लस्य[1] शिश्नः अधिष्ठानं उपस्थ[2]स्त्विन्द्रियं प्रजात्यानन्दः सन्तानार्थः[3] सम्भोगः तेन या[4] निर्वृत्तिः तापहानिः तस्याः।।७।।

**पायुरिति**। परिमोक्षस्य मलत्यागस्य पायुः इन्द्रियं गुदः स्थानम्। निरृतेरलक्ष्म्याः।।८।।

**वीर०** शिलालोहाभ्रविद्युतां अस्य केशश्मश्रुनखानि स्थानम्। नखानि शिलालोहयोः स्थानं, अभ्रविद्युतोः केशश्मश्रूणीति विवेकः। क्षेमकर्मणां रक्षाकारिणां लोकपालानामिन्द्रादीनां तद्बाहवः स्थानम्।।५।।

भूर्भुवःस्वरिति षष्ठीबहुवचनान्तम्। भूरादीनां त्रयाणां लोकानां विक्रमस्तस्य त्रिविधपादविन्यासः स्थानं, क्षेमस्य प्राप्तरक्षणस्य शरणस्य च[5] अनिष्टनिवारणस्य सर्वेषां कामानां वरस्य श्रेष्ठस्यापि हरेश्चरणः[6] पादः आस्पदं आश्रयः।।६।।

अपां वीर्यस्य शुक्लस्य[7], स्वर्गस्य सृष्टेः पर्जन्यस्य प्रजापतेश्च पुंसो भगवतः शिश्नः उपस्थेन्द्रियाधिष्ठानं आस्पदं इत्यर्थः। प्रजात्यानन्दः सन्तानार्थं सम्भोगस्तेन या निर्वृतिः तापहानिः तस्याः तदुपस्थेन्द्रियं आश्रयः।।७।।

यमस्य मित्रस्य परिमोक्षस्य मलत्यागस्य च तस्य पाय्विन्द्रियाश्रयः हिंसादीनां तद्गुदः आश्रयः। पायुरिन्द्रियं गुदं अधिष्ठानम्।।८।।

**विज०** अस्य हरेः केशाः अभ्राणां श्मश्रूणि विद्युताम्। शिलालोहानां नखानि क्षेत्रम्। "पुनर्भवः कररुहो, नखोऽस्त्री नखरोऽस्त्रियाम्" (अम.को.2-343) इत्यमरः। "हरेः श्मश्वाश्रया विद्युच्छिला लोहा नखाश्रया" इति वचनात् ब्राह्मणवैश्यादीन् वर्जयितुं प्रायश इत्युक्तम्।।५।।

**भूर्भुवःस्वरिति**। भुवनत्रयं, अस्य हरेः विक्रमः पादविक्षेपस्थानं क्षेमस्य मङ्गलस्य, प्राप्तरक्षाया वा, शरणस्य मोक्षस्य च सर्वकामवरस्य च सर्वाभिमतलाभस्य च हरेः चरणः[8] आस्पदं, दातृत्वेनेति शेषः। "मोक्षः शान्तिश्च शरणं निर्वाणं चाभिधीयते" इति वचनात् शरणं मोक्षः। "भेजे खगेन्द्रध्वजपादमूलम्" इत्यतो मोक्षोऽपि पादमूलमिति भावः। "स्वोत्पात्यङ्गेषु देवानां अन्येषां पादमूलतः। मुक्तिस्तु विहिता विष्णोः निर्दिष्टेषु यथा वचः" इति वचनात् च शब्दसूचितात् न उक्तविरोधः।।६।।

---

1. A.B. °क्र° 2. B. °स्थ इ° 3. B.H.V. °र्थं 4. H.V.Omit या 5. W. Omits च 6. A.B. °णं 7. A.B. °क्र° 8. A.B. °णं

अपां जलस्य, वीर्यस्य रेतसः, सर्गस्य सृष्टेः; जलाभिमानिनः पर्जन्यस्य, सर्गाभिमानिनो दक्षप्रजापतेः, शिश्नस्य च परस्य[1] पुंसः शिश्नं क्षेत्रम्। प्रजापतिः प्रजननम्, आनन्दः सुखं ताभ्यां सहिता या निर्वृतिः अथवा प्रजापतिः मैथुनक्रिया तन्निमित्ता वानन्दाया निर्वृतिः तस्याः हरेः उपस्थं गुह्येन्द्रियम्। तुशब्दात् गुह्येन्द्रियस्य च क्षेत्रम्।।७।।

मित्रनाम्नो देवस्य पाय्विन्द्रियस्य तद्विषयस्य परिमोक्षस्य गुदक्रियाविषयस्य यमनाम्नो देवस्य च पुंसः पाय्विन्द्रियं क्षेत्रम्, इत्येतत् मन्दमतीनां सुबोधनार्थं अन्वीयते। हिंसादीनां पुंसो गुदः गुदं अपानद्वारं क्षेत्रम्।।८।।

**रा०कृ०** अस्य भगवतः केशश्मश्रुनखानि शिलालोहाभ्रविद्युतां स्थानं केशाः अभ्राणां मेघानां स्थानं श्मश्रूणि विद्युतां स्थानम्। नखानि शिलालोहानां च स्थानमिति यथयोगमुन्नेयम्। अस्य बाहवः प्रायशः क्षेमकर्मणां लोकपालानां स्थानम्।।५।।

तस्य विक्रमः त्रिधा पादविन्यासः भूर्भुवःस्वश्च भूर्भुवस्स्वर्लोकानां आस्पदं स्थानम्। हरेः चरणः क्षेमस्य प्राप्तसंरक्षणस्य शरणस्य अनिष्टनिवारणस्य च सर्वकामवरस्यापि सर्वेषां कामानामभिलषितार्थानां वरस्य वरणस्यापि आस्पदम्।।६।।

पुसो विराट्पुरुषस्य शिश्नः अपां जलानां वीर्यस्य शुक्रस्य सर्गस्य सृष्टेः पर्जन्यस्य वर्षाभिमानिदेवस्य प्रजापतेश्च आस्पदम्। तस्य उपस्थस्तु प्रजात्यानन्दनिर्वृतेः प्रजात्यानन्देन सन्ताननिमित्तकभोगेन या निर्वृतिः तापहानिः तस्याः आस्पदम्।।७।।

हे! नारद! तस्य पायुः यमस्य मित्रस्य परिमोक्षस्य मलत्यागस्य च आस्पदम्। तस्य गुदः हिंसायाः प्राणिपीडायाः निर्ऋतेः निर्ऋतिनामकराक्षसस्य, मृत्योः मारकस्य देवस्य निरयस्य नरकस्य च आश्रयः स्मृतः।।८।।

**पराभूतेरधर्मस्य[1] तमसश्चापि पश्चिमः[2]।**
**नाड्यो नदनदीनां तु[3] गोत्रणामस्थिसंहतिः।।९।।**

**अव्यक्तरससिन्धूनां भूतानां विधनस्य च।**
**उदरं विदितं पुंसो हृदयं मनसः पदम्।।१०।।**

1. A. 'भं' 2. H.V. 'भम् 3. B.I.W. च

**धर्मस्य मम तुभ्यं च कुमाराणां भवस्य च।**
**विज्ञानस्य च [1]सत्त्वस्य परस्याऽऽत्मा परायणम्।११।**

**अहं भवान् भवश्चैव [2]त इमे मुनयोऽग्रजाः।**
**सुरासु[3]रन[4]रा नागाः खगा मृगसरीसृपाः।।१२।।**

**गन्धर्वाप्सरसो यक्षा रक्षोभूतगणोरगाः।**
**पशवः पितरः सिद्धा विद्याध्राश्चारणा द्रुमाः।।१३।।**

**अन्ये च विविधा जीवाः जलस्थलनभौकसः।**
**ग्रहर्क्षकेतवस्ताराः त[5]डितः स्तनयित्नवः।।१४।।**

**सर्वं पुरुष एवेदं भूतं भव्यं भवच्च यत्।**
**तेनेदमावृतं विश्वं वितस्तिमधिति[6]ष्ठति।।१५।।**

**स्वधिष्ण्यं [7]प्रतपन् प्राणो बहिश्च प्रतपत्यसौ।**
**एवं विराजं प्रतपंस्तपत्यन्तर्बहिः पुमान्।।१६।।**

**श्रीध० पराभूतेरिति**। तमसः अज्ञानस्य पश्चि[8]मः पृष्ठभागः। गोत्राणां गिरीणा, मस्थिसंघातः।।९।।

**अव्यक्तेति**। अव्यक्तं प्रधानं रसः अन्नादि[9]सारः, सिन्धवः समुद्राः, तेषां निधनस्य लयस्य उदरं पदं स्थानं विदितं ज्ञानिभिः। मनसः अस्मदादिलिङ्गशरीरस्य।।१०।।

**धर्मस्येति**। तुभ्यं तव कुमाराणां सनकादीनां भवस्य श्रीरुद्रस्य आत्मा चित्तं पर[10]मयनम्।।११।।

**अहं इति**। एवं तावत् परमेश्वराज्जातं विश्वं ततो न भिन्नम्। [11]यथा कुण्डलं सुवर्णात् न पृथक्। स तु सर्वनि[12]यन्ता सर्वप्रका[13]शको नित्यमुक्तः इत्यर्थादुक्तम्। [14]एतदेव पुरुषसूक्तार्थकथनेन द्रढयति। तत्र "सहस्रशीर्षा" (तैत्ति.आ.3-32-33) इत्यर्धर्चस्य "ब्राह्मणोऽस्य मुखमासीत्" (तैत्ति.आ.3-36-37)

---

1. M.Ma. W. °तं 2. M.Ma.W. च 3. H.V. °राः 4. W. °गाः 5. H.V.W. °डि° 6. M.Ma.V.W. °ता 7. AF.GF. °प्रातपत्रा° 8. H.V. °मम 9. H.V. °रसः 10. H.V. °मा° 11. H.V. Omit यथा......पृथक्। 12. H.V. °स्य नि° 13. H.V. शो नि° 14. H.V. Omit ए°

इत्यादेश्च ऋक्त्रयस्यार्थः पूर्वाध्याये एव दर्शितः। "पुरुष एवेदं सर्वं" (तैत्ति.आ.3-32-33) इत्यस्यार्थं दर्शयति अहं भवानिति सार्धैस्त्रिभिः। ते अग्रजा इमे सनकादयो मरीच्यादयश्च। [3]नागा गजाः।।१२।।

[4]गन्धर्वेति। भूतगणाः शिवपार्षदाः, उरगाः सर्पजातयः, सर्वेऽपि। पशवः चतुष्पादः। पितृप्रभृतयः चत्वारः देवेष्वान्तरभेदाः।।१३।।

**अन्य इति**। जलं च स्थलं च नभश्चौकांसि येषां ते। [5]जलौकसो मत्स्यादयः। नभौकस इति सन्धिरार्षः। [6]स्थलौकसः स्थलवासिनो सर्वेऽपि प्राणिनः। नभौकसः पक्षिणः। [7]ऋक्षाणि अश्विन्यादीनि केतवो धूमकेतुप्रभृतयः औत्पातिकाः[8]।।१४।।

**सर्वमिति**। सर्वं [9]इदं पुरुष एव न ततः पृथिगित्यर्थः। प्रपञ्चेन तस्य अपरिच्छेदं वक्तुं "स भूमि"मित्यस्य अर्थमाह। [10]तत्पदं विभक्तिव्यत्ययेन व्याचष्टे तेनेति। तेन पुरुषेण विश्वमिति भूमिपदस्यार्थः। वितस्तिमिति [11]दशाङ्गुलपदस्य, अधीत्यधिशब्दस्य, आवृतमिति वृत्वेत्यस्य। स च वितस्तिमधिकं व्याप्य तिष्ठतीत्याधिक्यमात्रं विवक्षितं नतु [12]परिमाणम्। अनुपयोगात् अपरिच्छिन्नत्त्वाच्च।।१५।।

एतत् सदृष्टान्तमाह - स्वधिष्ण्यमिति। असौ प्राण आदित्यः। "असौ वा आदित्यः प्राणः" (छन्दो.उ.3-1-1) इति श्रुतेः। स्वधिष्ण्यं मण्डलं प्रकाशयन् [13]यथा बहिश्च प्रकाशयति एवं विराड्देहं प्रकाशयन् ब्रह्माण्डं अन्तर्बहिश्च प्रकाशयति।।१६।।

**वीर॰** पराभूतेः अलक्ष्म्याः अधर्मस्य [14]तमसः अज्ञानस्यापि पश्चिमः तत्पृष्ठभागः आश्रयः नदनदीनां तन्नाड्यः स्थानम्, गोत्राणां गिरीणां तदस्थिसंघः स्थानम्।।९।।

अव्यक्तं प्रधानं, रसः अन्नादिरसः, सिन्धवः समुद्राः, तेषां भूतानां निधनस्य लयस्य च तदुदरं स्थानं विदितम्। मनसः सर्वदेहिमनस्तत्त्वस्य पुंसः ईश्वरस्य यद्धृदयं तत्पदं स्थानम्।।१०।।

धर्मस्य मम चतुर्मखस्य, तुभ्यं तव कुमाराणां सनकादीनां भवस्य रुद्रस्य [15]च विज्ञानस्य च तत्त्वस्य महत्तत्त्वस्य परस्य भगवतः आत्मऽन्तःकरणं परायणं श्रेष्ठस्थानम्।।११।।

---

1. H.V. 'गणा' 2. H.V. इति 3. B. Omits नागा गजाः 4. A.B. Omit गन्धर्वेति......भेदाः। 5. A.B. Omit जलौकासा मत्स्यादयः। 6. A.B. Omit सथलौकसः......पाक्षिणः। 7. B.H.V. Omit ऋक्षाणि अश्विन्याग्दीनि 8. H.V. add ताराः अश्विन्यादयः 9. A.H.V. Omit इदं 10. B. Omits तत्पदं......तेनेति। 11. H.V. add द्वा' 12. B.H.V. प्रमा' 13. H.V. Omit यथा 14. W. तामसस्य 15. A.B. Omit च

एवं परमात्मनो जातं कृत्स्नं जगत् तद्विभूतिभूतं तच्छरीरत्त्वेन ततो[1] न विविक्तमित्युक्तम्। एतदेव पुरुषसूक्तार्थकथनेन प्रथयति तत्र[2] "सहस्रशीर्षा" (तैत्ति.आ.3-32-33) इत्यर्द्धर्चस्य "ब्राह्मणोऽस्य मुखमासीत्" (तैत्ति.आ.3-36-37) इत्यादेश्च अर्थः पूर्वाध्याये कथितः। "पुरुष एवेदं सर्वं" (तैत्ति.आ.3-32-33) इत्यस्य अर्थमाह - अहं इत्यादिभिः सार्धैः त्रिभिः। अहं चतुर्मुखः भवान् नारदः भवो रुद्रः अग्रजाः मुनयः सनकादयः।।१२।।

विद्याध्रा विद्याधराः।।१३।।

जलं स्थलं नभश्च ओकांसि स्थानानि येषां ते जलस्थलनभौकसः[3]। नभौकस[4] इति सन्धिरार्षः। ग्रहाः सूर्यादयः, ऋक्षाणि नक्षत्राणि, केतवः[5] केतुसदृशानि नक्षत्राणि, तारा अपि नक्षत्रस्यैव भिदा। तडितः[6] विद्युतः स्तनयित्नवो मेघाः गर्जितानि वा।।१४।।

किं बहुना, यच्च कालत्रयवर्तिवस्तुजातं विदितं[7] सर्वं पुरुष एव परमपुरुष[8] एव कालत्रयवर्ति कृत्स्नवस्तुजातशरीरकत्वात् अपुरुषशरीरभूतं स्वतन्त्रं वस्तु नास्तीत्यर्थः। नामरूपविभागानर्हातिसूक्ष्म प्रकृतिपुरुषकालशरीरकस्य परमपुरुषस्यैव विभक्तनामरूपप्रकृतिपुरुषशरीरकपरमात्माऽऽत्मक जगदाकारेण अवस्थानात् अयं ऐक्योपदेशः उपपन्नः। सर्वत्र वेदान्तेषु एवमेव हि ऐक्यम् - "सर्वं खल्विदं ब्रह्म" (च्छान्दो.उ.3-14-1) "अयमात्मा ब्रह्म" (बृह.उ.6-4-5) "तत्त्वमसि" (छान्दो.उ.6-8-7) इत्यादिभिः उपदिश्यते "पुरुष एवेदं" (तैत्ति.आ.3-32-33) इति। सामानाधिकरण्यस्य व्याप्तिनिबन्धन-त्त्वमाह तेनेति। "अधोनिष्ठ्या वितस्त्यांते नाभ्यामुपरि तिष्ठति हृदयं तद्विजानीयात् विश्वस्यायतनं महत्" (मना.उ.26) इति श्रुत्युक्तदिशा नाभ्या उपरि वितस्तिपरिच्छिन्नप्रदेशान्ते स्थितं हृदयं अधितिष्ठता तेन परमात्मना इदं विश्वं आवृतं व्याप्तम्।।१५।।

असौ हृदयान्तर्वर्ती प्राणः परमात्मा स्वधिष्ण्यं स्वाऽऽवासस्थानं[9] शरीरं प्रतपन् अन्तर्व्याप्त्या प्रशासनाधीनं कुर्वन् बहिश्च स्वधिष्ण्याद्बहिष्ठमपि वस्तुजातं प्रशासनाधीनं यथा करोति - एवं विराजं विराट्शब्दवाच्यानिरुद्धकार्यं प्रपञ्चं प्रशासनाधीनं कुर्वन् अन्तर्बहिश्च प्रशासनाधीनं करोतीत्यर्थः। अत्र कार्ये कारणोपचारात् विराट्शब्दः ब्रह्माण्डपरः, एतेन अपरिच्छन्नत्वप्रतिपादकं "स भूमिं विश्वतो वृत्वा" इत्यर्द्धर्चं व्याख्यातं भवति। सः परमात्मा भूमिं ब्रह्माण्डरूपं प्रपञ्चं विश्वतः सर्वतः वृत्त्वा व्याप्य भूमिं दशाङ्गुलमात्रं अतिक्रम्य स्थितः "अत्यतिष्ठद्दशाङ्गुलं" इत्याधिक्यमात्रं विवक्षितं न प्रमाणं अनुपयोगात् अपरिच्छिन्नत्वात् चेति तस्य अर्थः।।१६।।

---

1. W. 'तोऽनतिरिक्तम्। 2. W. Omits तत्र 3. W. Omits जलस्थलनभौकसः 4. A.B. Omit नभौकसः 5. A.B. Omit केतवः केतुसदृशानि नक्षत्राणि 6. W. 'टि' 7. A.B. तदिदं 8. W. Omits परमपुरुष एव 9. W. स्ववा'

**विज०** पराभूतेः पराजयस्य अलक्ष्म्या वा अधर्मस्य पापस्य तदभिमानिनः अधर्मस्य कलेश्च तमसः तमोगुणस्य च पश्चिमः पृष्ठभागः क्षेत्रम्। नदनदीनां शोणगङ्गादीनाम्। तुशब्दादितरनदीनां च। पुंसो नाड्यः क्षेत्रम्। गोत्राणां पर्वतानां हरेरस्थ्नां संहितः क्षेत्रम्।।९।।

अव्यक्तस्य मूलप्रकृतेः रसादीनां मधुरादीनां सिन्धूनां समुद्राणां भूतानां जीवानां निधनस्य संहारस्य च। पुसः उदरं क्षेत्रमिति विदितं मनसः परस्य हृदयं पदं क्षेत्रम्।।१०।।

धर्मस्य सुकृतस्य तदभिमानिनो धर्माख्यदेवस्य चतुर्मुखनाम्नो मम तुभ्यं तव कुमाराणां सनकादीनां चतुर्णां भवस्य रुद्रस्य च विज्ञानस्य तत्त्वस्य च तदभिमानिन्याः सरस्वत्याश्च परस्य पुंसः आत्मा मध्यदेहः परायणं 'कुमारब्रह्मरुद्राद्याहरेर्मध्यात् समुद्गता' इत्यनेन "आत्मा जीवे धृतौ देहे" (वैज.को.6-1-6) इत्यादि अभिधानेनापि सिद्धम्।।११।।

'सृजामि तन्नियुक्तोऽहम्' इति यत् सर्वस्वातन्त्र्यं हरेः उक्तं तत्पुरुषसूक्तसंवादेन विवृणोति 'अहं भवान्' इत्यादिना। अग्रजा मुनयः सनकादयः।।१२,१३।।

घटादिवत् न भातीति नभ आकाशः अकारान्तोऽप्यस्ति।।१४।।

यदेतदस्मदादिकं, आतृणं भूतं भव्यं भवत् जगत् एतस्माद्धरेरुत्पन्नं, तदिदं सर्वं पुरुष एव पुरुषाधीनसत्ताद्येव। त्रिकालमपि तदधीनमेव, न तु तेनैकीभूतम् "यदधीना यस्य सत्ता तत्तदित्येव भण्यते" इति वचनात्। यद्वा पुरुष एवेदं पुरुषेणैवेदं व्याप्तं "पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यं" (तैत्ति.आ.3-32-33) इति "पुरुषेणैवेदं व्याप्तमातृणादाकरीषात् सर्वं भगवानिति मिथ्यादृष्टिरेवेति" श्रुतेः। तामेव व्याप्तिं स्पष्टीकरोति तेनेदमिति। वितस्तिमात्रं जीवहृदयमधितिष्ठता तेन पुरुषेण सर्वं पुरुष एवेति भण्यते। भेदवत् जगत्। वितस्तिमात्रं हृदयमास्थाय व्याप्नुते जगदित्यादेः सर्वं सिद्धम्।।१५।।

हृदयोपाध्यवच्छिन्नस्य हरेः जीववैलक्षण्यमाह - **स्वधिष्ण्यमिति**। तप-सन्तापदर्शनयोः इति धातोः स्वधिष्ण्यं स्वस्थानं हृदयं अधिष्ठायान्तः सर्वं प्रतपन् पश्यन् असौ प्रकृष्टचेष्टायोगात् प्राणनामा परमात्मा देहाद्बहिश्च बहिष्ठान् विषयानपि प्रतपति पश्यति। एवं विराजं विराडाख्याण्डान्तःस्थान्, बहिः ब्रह्माण्डात् बहिष्ठान्, विशेषादिमूलप्रकृत्यान्तान् सर्वान् पदार्थान् अशेषविशेषाकारेण तपति पश्यति। "पश्यन् स्वधिष्ण्यं देहं स बहिष्ठान् विषयानपि। एवमण्डान्तरं पश्यन् बहिः सर्वं च पश्यति" इति वचनात्।।१६।।

**रा०कृ०** पश्चिमः तस्य पृष्ठभागः पराभूतेः पराभवस्य अधर्मस्य तमसः अज्ञानस्य अपिशब्दात् संसारस्य च स्थानम्, तस्य नाड्यस्तु नदनदीनां स्थानम्; अस्थिसंहतिः अस्थिसमूहः गोत्राणां स्थानम्।।९।।

पुंसः परमपुरुषस्य उदरं अव्यक्तरससिन्धूनां अव्यक्तं प्रधानं रसः अन्नादिसारः, सिन्धवः समुद्राः तेषां भूतनां पृथिव्यादिभूतानां प्राणिनां च निधनस्य पदं विदितं ज्ञातम्। तस्य हृदयं मनसः प्राणिनां मनसः पदं विदितम्।।१०।।

परस्य परमेश्वरस्य आत्मा अन्तःकरणं धर्मस्य मम चतुर्मुखस्य तुभ्यं तव नारदस्य कुमाराणां सनकादीनां भवस्य च रुद्रस्य च विज्ञानस्य च सत्त्वस्य सत्त्वगुणस्य च परायणं उत्तमस्थानम्।

सनकसनन्दसनत्कुमारसनत्सुजाताख्याः सर्वदा कौमारे वर्तमानाः ब्रह्ममानसपुत्राश्चत्वारो मुनयः कुमारा इत्यभिधीयन्ते। तेषु सनत्कुमारः शुक्रग्रहद्वारा भुवमवतीर्णः भूतलजीवेभ्यो ब्रह्मविद्योपदेशार्थं योगविद्याकेन्द्राणि स्थापितवानिति दिव्यज्ञानप्रवर्तकाः परमगुरवः कथयन्ति।।११।।

अहं ब्रह्मा, भवान् नारदः, भवश्चैव रुद्रश्च, इमे मरीच्यादयः ते तव अग्रजाः मुनयः, सुरासुरनरा देवदानवमानवाः नागाः गजाः खगाः पक्षिणः मृगसरीसृपाः मृगाः वृश्चिकादयश्च।

गन्धर्वाप्सरसः यक्षाः, रक्षोभूतगणोरगाः पशवः, पितरः, सिद्धाः विद्याध्राः विद्याधराः चारणाः द्रुमा वृक्षाश्च।

जलस्थलनभौकसः जलस्थलाकाशवासाः अन्ये च विविधाः जीवाः ग्रहर्क्षकेतवः ग्रहाः ऋक्षाणि, अश्विन्यदीनि नक्षत्राणि, केतवो धूमकेत्वादयः। ताराः तारकाः, तडितः विद्युतः, स्तनयित्नवो मेघाः।

यच्चेदं भूतं भव्यं भवच्च कालत्रयवर्ति वस्तु जातं विद्यते तत् सर्वं पुरुष एव परमपुरुष एव ततो भन्नं न किञ्चिदस्तीति भावः तेन पुरुषेण इदं विश्वमावृतं व्याप्तम्। स च पुरुषः वितस्तिं दशाङ्गुलं अधितिष्ठति वितस्तितोऽधिकं व्याप्य तिष्ठति।।१२-१५।।

असौ प्राणः आदित्यः यथा स्वधिष्ण्यं स्वमण्डलं प्रतपन् प्रकाशयन् बहिश्च सर्वमपि प्रतपति प्रकाशयति एवं पुमान् वैराजपुरुषः विराजं स्वविराड्देहं प्रतपन् प्रकाशयन् अन्तर्बहिः ब्रह्माण्डमन्तर्बहिश्च तपति प्रकाशयति। एतेन अस्माभिर्दिवि दृश्यमानं तेजोमयं सौरमण्डलं तदन्तर्वर्तिनः सूर्यस्य जगत्साक्षिणो देहभूतमित्युक्तं भवति।।१६।।

**सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात्।**
**महिमैष ततो ब्रह्मन् पुरुषस्य दुरत्ययः।।१७।।**

**पादेषु[1] सर्वभूतानि पुंसः[3] स्थितिपदो[2] विदुः।**
**अमृतं क्षेममभयं त्रिमूर्ध्नो[4]ऽधायि मूर्धसु[5]।।१८।।**

**पादास्त्रयो बहिश्चा[6]सन् न प्रजानां च आश्रमाः[7]।**
**अन्तस्त्रिलोक्यास्त्वपरो गृहमेधो[8]ऽबृहद्व्रतः।।१९।।**

**सृती विचक्रमे विष्वङ्[9] साशनानशने उभे।**
**यदविद्या च विद्या च पुरुषस्तूभयाश्रयः।।२०।।**

**यस्मा[10]दण्डं विराड् जज्ञे भूतेन्द्रियगुणात्म[11]कः।**
**तद्द्रव्यमत्यगाद्विश्वं गोभिः सूर्य इवाऽऽ[12]तपन्[13]।।२१।।**

**श्रीध०** नित्यमुक्तत्वं दर्शयितुमुतामृतत्वस्येत्यस्यार्थमाह - **स इति**। अभयस्येति मन्त्रगतामृतत्व पदव्याख्या। अन्नेनेति पदं विभक्तिव्यत्ययेन व्याचष्टे। मर्त्यं मरणधर्मकमन्नं कर्मफलं यस्मादत्यगादति-[14]क्रान्तवान्। अतो न केवलं सर्वात्मकः किन्तु अमृतत्वस्य निजानन्दस्यापीश्वर इत्यर्थः। ननु प्रपञ्चात्मकस्य कुतो नित्यमुक्तत्वमित्याशङ्क्य तत्परिहाराय एतावानस्येत्यस्यार्थमाह [15]महिमेति। प्रपञ्चात्मकस्याप्यमृत[16]त्वेशत्वमित्येष महिमा दुरत्ययोऽपरः प्रपञ्चानभिभूतत्वादिति भावः। मन्त्रेण च "एतावानस्य महिमा" "विभूतिः स तु ज्यायान् महत्तरः" इति वदताऽयमेवार्थः उक्तः।।१७।।

तदेवमीश्वरो नित्यमुक्त इत्युक्तम्। तदाश्रितानां भूतानां बन्धमोक्षौ व्यवस्थयेति दर्शयन् "पादोऽस्य विश्वा भूतानि" इत्यस्यार्थमाह - **पादेष्विति**। तिष्ठन्त्यत्रेति स्थितयो भूरादिलोकास्ते पादा इव पादाः अंशाः यस्य स स्थितिपात् तस्य [17]स्थितिपदः पादेष्वंशभूतेषु लोकेषु स[18]र्वभूतानि जीवान् विदुः। मन्त्रे तु "पादोऽस्य विश्वाभूतानि" इति। सामानाधिकरण्यमधिष्ठानाधिष्ठे[19]याभेदविवक्षया पाद इत्येकवचनं [20]च सामान्याभिप्रायेणेति व्याख्यातं भवति। [21]भूतेषु फलवैचित्र्यं दर्शयन् "त्रिपादस्यामृतं दिवी"त्यस्यार्थमाह। अस्येश्वरस्य सम्बन्धि त्रिपादमृतं नित्यसुखं दिव्यूर्ध्वलोकेषु न [22]तु त्रिलोक्यामित्यर्थः।

---

1. M.Ma. °दोऽस्य 2. M.Ma. °वि° 3. W. °र्धा; AF.GF. °र्ध्नो 4. AF.GF. वाऽपि 5. W. °नि 6. H.M.Ma.V.W. °स्त्वा° 7. M.Ma.W. °या: 8. M.Ma. °धेर्बृहद्व्रतः; W. °धो बृहद्व्रतः; AF.GF. °धोऽमहद्व्रतम् 9. H.M.MaV. °क् 10. M.Ma.W. त° 11. M.Ma. °श्रयः 12. M.Ma. °श्रयम्; W. °श्रयात् 13. AF.GF. °त् 14. H.V. °क्रम्यास्थितः 15. H.V. Omit महिमेति 16. A.B. °तेश° 17. A.H.V. Omit स्थितिपदः 18. B. °र्वाणि भू° 19. H.V. °यथोरभेदेन वि° 20. B.H.V. Omit च 21. H.V. Omit भू 22. H.V. Omit तु

तदेव त्रिपाच्छब्दोक्तं त्रैविध्यं दर्शयन्नाह। त्रयाणां लोकानां मूर्धा महर्लोकस्तस्य मूर्धानस्तदुपरितन[1]लोकाः [2]जनस्तपस्सत्यमिति तेषु [3]त्रिषु यथाक्रमममृतादिकमधायि निहितम्। तत्र त्रिलोक्यां नश्वरमेव सुखम्। महर्लोकस्य क्रममुक्तिस्थानत्वेऽपि कल्पान्ते तत्रत्यानां स्थानत्यागान्नाविनाशि सुखम्। जनलोके-त्वमृतमविनाशि सुखं यावज्जीवं स्वस्थानापरित्यागात्। किन्तु महर्लोकवासिनां कल्पान्ते [4]त्रिलोकदाहोष्मपीडितानां तदा तत्र गमनादक्षेमदर्शनमस्ति तपोलोके [5]तस्याभावात्क्षेममेव। वक्ष्यति हि "त्रिलोक्यां दह्यमानायां शक्त्या सङ्कर्षणाग्निना। यान्त्यूष्मणा महर्लोकाज्जनं भृग्वादयोऽर्दिताः" इति सत्यलोके त्वभयं मोक्षः। तत्प्रत्यासत्तेः।।१८।।

एतदेव वैचित्र्यमधिकारिभेदेनोपपादयन् "त्रिपादूर्ध्व" इत्यस्यार्थमाह **पादा इति**। न प्रजायन्ते पुत्रादिरूपेणेत्यप्रजाः। नैष्ठिकब्रह्मचारिवानप्रस्थयतयस्तेषामाश्रमास्त्रिलोक्या बहिरासन् गृहमेधस्त्वन्तः यस्मादबृहद्व्रतो ब्रह्मचर्यव्रतरहितः।।१९।।

अयं चाधिकारिभेदः एकस्यैवाव[6]स्थाभेदेन नत्वत्यन्तभिन्नविषय इति दर्शयन् "ततोविष्वङ् व्यक्रामत्" इत्यस्यार्थमाह **सृती** इति। विविधं सुष्ठु अंचतीति विष्वङ् पुरुषः क्षेत्रज्ञः सृती मार्गौ दक्षिणोत्तरौ। विचक्रमे चलतिस्म। कथम्भूते सृती? साशनानशने भोगापवर्गप्राप्तिसाधनभूते। [7]अत्र हेतुत्वेन पुनर्विशेषणम्। यत् यतः अविद्या कर्मरूपा एका विद्या च तत्साधनोपासनारूपाऽन्या।।२०।।

तदेव विराडन्तर्वर्तिनां फलवैचित्र्यमुक्त्वा तत्कारण[8]स्येश्वरस्य तद्वैलक्षण्यं दर्शयितुं "तस्माद्विरा-डजायते" त्यस्यार्थमाह - **यस्मादिति**। यस्मादण्डं जज्ञे तत्र [9]च भूतेन्द्रियगुणात्मको विराट् [10]च जज्ञे स ईश्वरस्तद्विधं विराड्देहं द्रव्यमण्डं चातिक्रान्तवान्। सूर्य इवेति पूर्वो[11]क्त एव दृष्टान्तः।।२१।।

**वीर०** जीवान्तरात्मत्वेन वसतोऽपि [12]परमपुरुषस्य भोक्तृत्वं मोक्षप्रदत्वं च प्रतिपादयन्[13] "उतामृतत्वस्य" इत्यस्यार्थमाह **स** इति। न विद्यते भयं यस्मात् तस्यामृतस्य मोक्षस्येशः प्रदाता यद्यस्मात् मर्त्यमनित्यमन्नं भोग्यं कर्मफलमत्यगात् श्रुतावन्नेनेति व्यत्ययेन द्वितीयार्थे तृतीया। अतिक्रम्य स्थितः। "अनश्नन्नन्यो अभिचाकशीति" इति श्रुत्युक्तरीत्याऽसंम्भावितकर्मफलसम्बन्धत्वात् परमात्मा मोक्षद इत्यर्थः। शरीरान्त[14]:स्थितिः जीववैलक्षण्यं [15]चेत्यनुपपन्नमित्याशङ्कायां "एतावानस्य महिमे" त्यस्यार्थमाह महिमेति। पुरुषस्य कृत्स्नचिदचिदात्मकप्रपञ्चस्य अन्तर्बहिश्च व्याप्य सर्वं स्वप्रशासनाधीनं कुर्वतः परमात्मनः एष महिमा अमृतत्[16]वेशानत्वरू[17]पमहिमा दुरत्ययः अपारकृत्स्नप्रपञ्चात्मकत्वेनाव-

1. H.V. °नाः 2. B.H.V. Omit जनस्तपस्सत्यामिति 3. A.H.V. Omit त्रिषु 4. H.V. त्रैलोक्य° 5. B. adds तु 6. H.V. °स्थान° 7. H.V. तं° 8. B. °णेश्व° 9. H.V. Omit च 10. H.V. Omit च 11. H.V. क्तमेवदृष्टान्तमाह 12. W. परस्य 13. W. °तः 14. A.B. °न्तरावाशितिः 15. A.B. चानुप° 16. A.B. °स्ये° 17. W. °पो

स्थितस्यापि प्रपञ्चगतदोषासंस्पर्शित्वममृतेशितृत्वं चेत्येतदनुपपद्यमानमपि तस्य महिम्ना उपपद्यत इत्यभिप्रायः।।१७।।

अपारमहिमत्वमेव प्रतिपादयतः "पादोऽस्य विश्वा भूतानि" इति वाक्यास्यार्थमाह **पादेष्विति**। तिष्ठन्त्यत्रेति स्थितयो भूरादयो लोकास्ते पाद इव पादाः अंशाः यस्य स स्थितिपात्[1] तस्य पादेष्वंशभूतेषु लोकेषु सर्वभूतानि देवादिचतुर्विधभूतानि विदुः। एतेन मन्त्रेऽपि "पादोऽस्य विश्वा भूतानि" इति सामानाधिकरण्यमधिष्ठानाधिष्ठेय[2]योरभेदविवक्षया पाद इत्येकवचनं च[3] सामान्याभिप्रायेणेति व्याख्यातं भवति। बद्धमुक्तयोरसाङ्कर्येण प्राप्यस्थानानां तद्विभूतित्वप्रतिपादकस्य "त्रिपादस्यामृतं दिवि" इत्यादेरर्थमाह अमृतमिति। अस्येश्वरस्य सम्बन्धि त्रिपात् त्रिविधम् अमृतं अक्षय्यसुखं दिवि प्रकृतिमण्डलाद्बहि[4]रिति श्रुत्यर्थः। अत्र त्रिपाच्छब्दोक्त[5]त्रिविधत्वं दर्शयन्नाह - अमृतं मरणादि विकाररहित्यम्, अभयं तत्कार्यभयराहित्यं, क्षेमं इष्टप्राप्तिरूपलक्षणं निरतिशयानन्दप्रापणमित्यर्थः। अपहतपाप्मत्वादि गुणाष्टकाविर्भवरूपं[6] मुक्तैश्वर्यं कोटित्रयेण[7] संगृहीतम्। अमृतमिति विरजविमृत्युशब्दार्थः उक्तः। क्षेममिति सत्यकामत्वाद्यनुवृत्तिरुक्ता। अभयमित्यपहतपाप्मविशोकादिशब्दार्थः उक्तः। पाप्मा हि भयहेतुः। भयमिति च[8] शोकादिसर्वदुःखप्रदर्शनम्। एवं त्रिमूर्धा त्रिविधं मुक्तै[9]श्वर्यं मूर्धनि उपरिष्टादित्यर्थः। "तमसः परस्तात्" इतिवत् लीलाविभूतेः परस्तादमृतं क्षेममभयं चाधायि विहितमित्यर्थः मूर्धस्विति पाठे उपरिष्टाद्वर्तमानेषु त्रिषु[10] पादेष्वित्यर्थः।।१८।।

बद्धेभ्यो मुक्तानां[11] जीवानां बहुत्वम्, तत्प्राप्यस्थानानन्त्यमुभयोस्तद्विभूतित्वं, बद्धानामल्पीयस्त्वंतत्प्राप्यस्थानं तस्यापि तद्विभूतित्वं च प्रतिपादयतः "त्रिपादूर्ध्वं" इत्यादेरर्थमाह **पादा** इति।[12] त्रयः पादा यस्य सः त्रिपात् पुरुषः परमपुरुषः ऊर्ध्वं प्रकृतिप्राकृतेभ्यः उपरिष्टादुदेदुदयं गतः स्वेच्छोपात्तदिव्यमङ्गलविग्रहः समस्तमुक्तनित्यभोग्यः आस्त इत्यर्थः। अत्र पाच्छब्दः पादवदंशत्वेनावस्थितानां[13] मुक्तानां तत्प्राप्यस्थानस्य च भागानाह। एवं च त्रयः पादाः मुक्तजीववर्गस्य तत् प्राप्यस्थानस्य च भागाः विभूतित्वेन यस्य स त्रिपात्। बद्धजीव-तत्प्राप्यस्थानापेक्षया मुक्ततत्प्राप्यस्थानानां त्रिभागत्वकथनं[14] अनन्तत्वतात्पर्यकम्। अस्य परमपुरुषस्य पादः विभूतिभूतः एको भागः। इह प्रकृतिमण्डलेऽभवद्बद्धः[15] तत्प्राप्यस्थानानि च "एकांशेन स्थितो जगत्" तस्या[16]युतायुतशतैककलांशकांशे। विश्वं विचित्रचिदचित्प्रविभागवृत्त" मित्युक्तप्रकारेण तद्विभूत्येकदेश इति श्रुत्यर्थः। एतदेव व्याचष्टे पादा इति। त्रयः पादास्तु बहिः प्रकृतेः प्राकृतेभ्यो बहिरासन्। ये तस्य पादास्तेऽप्रजानां जन्मरहितानां मुक्तानामाश्रयाः प्राप्या इत्यर्थः। एकस्य पादस्य[17] बहिष्ठत्वमाह अन्तरिति। अपरः सांसारिक क्षेत्रज्ञवर्गप्राप्यस्थानरूपः पादः

---

1. W. Omits स्थितिपात् 2. W. "याभे" 3. W. Omits च 4. W. "त्यर्थः 5. W. "त्रैविध्यं 6. A.B. "प" 7. A.B. "येऽत्र 8. W. Omits च 9. W. Omits मुक्त 10. W. त्रिपा" 11. W. "क्तजी 12. W. adds त्रिपात् 13. A.B. "तमुक्ता" 14. A.B. "वत्व" 15. A.B. "द्धाः 16. W. य" 17. A.B. Omit पादस्य

त्रिलोक्याः अन्तरित्यर्थः। तमेव पादं विशिनष्टि गृहमेधः अहङ्कारममकारादिमान्वर्णाश्रमान्वितश्चेत्यर्थः। बृहद्व्रतः कर्मवश्यः उपचारात्[1]प्राप्ते प्राप्तृधर्मव्यपदेशः।।१९।।

एवमपारमहिमत्वमुपपाद्याथ प्रस[2]ङ्गाद् बुभुक्षुमुमुक्षूणां च भगवल्लीलाविभूतित्रिपाद्विभूतिगति-हेतुमार्गद्वयप्रतिपादकं "ततो विष्वङ्" इति वाक्यं व्याचष्टे **सृती** इति। विविधं सुष्ठु अञ्चतीति विष्वङ् क्षेत्रज्ञः सृती धूमाद्यर्चिरादिमार्गौ विचक्रमे आक्रमदाक्रान्तवानित्यर्थः। कथाभूते सृती? साशनानशने अशनं भोगः भोगार्थत्वतदभावाभ्यां मार्गयोः साशनत्वानशनत्वे। साशनानशनलक्षणमार्गद्वयप्राप्त्युपाय-माह यदिति। य[3]त् यत्र मार्गद्वयमध्ये अविद्या कर्म "अविद्याकर्मसंज्ञाऽन्या" इत्याद्युक्तेः[4] कर्मरूपाऽवि-द्याधूमादिमार्गप्राप्त्युपायभूता एका, विद्या अर्चिरादिप्राप्त्युपायभूता परमात्मोपासनरूपा अपरा। पुरुषो जीवस्तूभयाश्रयः साधनद्वयनिष्ठः "(ते) तं विद्याकर्मणी समन्वारभेते" इति श्रुतेः। समन्वारभेते संग[5]च्छेते इत्यर्थः।।२०।।

एवं बुभुक्षुमुमुक्ष्वधिकारिभेदेन तद्गन्तव्यमार्गद्वयं तदुपायं चोक्त्वाऽथ भगवतः स्वविभूतिभूत-प्रपञ्चाद्वैलक्षण्यं, भगवत[6]ः प्रपञ्चाकारेण परिणाम[7]ं तद्गतदोषासंस्पर्शित्वं च प्रतिपादयत् "तस्माद्विराडजायत" इत्यादिवाक्यं व्याचष्टे **य[8]स्मादिति**। विराट् अण्डकारणभूतो विराट्पुरुषोऽनिरुद्धः अण्डादिति ल्यब्लोपे पञ्चमी। यस्मात्स्वशरीरभूतात् प्रधाना[9]दुपादानाद्यदण्डं सृष्ट्वा स्वयमपि भूतेन्द्रियगुणात्मकः देवादिव्यष्टिप्रपञ्चा[10]नुरूपो जज्ञे [11]तत्प्रधानं तदण्डरूपं [12]च सर्वं द्रव्यमत्यगात्र तत्र परिच्छिन्नः - बहिरपि व्याप्तवानित्यर्थः। [13]तत्र दृष्टान्तः आश्रयाद्घट[14]पटादिपदार्थजातात् गोभिः किरणैरादित्य इवात्यगा[15]दित्यर्थः। वेदान्तेषु सत्कार्यवादस्याभिहितत्वात्कारणभूतो विराडेव व्यष्टिरूपेण जज्ञे। सूक्ष्मचिदचिच्छ[16]रीरको भगवानेव स्थूलचिदचिच्छ[17]रीरको जातः। जातश्च स्वयं स्वशरीरभूतचेतनाचेतनगतदोषैरस्पृष्टः स्वकार्यभूतकृत्स्नप्रपञ्चमन्तर्बहिश्च व्याप्य [18]व्यवस्थितः इत्यर्थः। नामरूपविभागानर्हसूक्ष्मप्रकृतिपुरुष-शरीरकस्य परमपुरुषस्य जगदुपादानत्वादुपादानत्वस्यावस्थाश्रयत्वरूपत्वात्प्रकृतिपुरुषेश्वराणां त्रयाणामप्यवस्थाश्रयत्वमस्त्येव। तत्राचेतनस्यावस्थाश्रयत्वं स्वरूपान्यथाभावरूपं, चेतनस्य तु स्वभावान्यथाभावरूपं, ईश्वरस्य तु कार्यावस्थचेतनाचेतननियन्तृत्वरूपम्। नहि कारणावस्थचेतना-चेतननियमनात्कार्यावस्थाचेतनाचेतननियमनमभिन्नमिति वक्तुं शक्यम्। किञ्चेश्वरस्य सद्वारकावस्था-श्रयत्वमस्त्येव। एवमसाङ्कर्येणावस्थानां प्रतिनियतत्वाच्छुक्लनीलादितन्त्वारब्धे पटे शौक्ल्यादेस्तत्तत्प्र[19]देश-गतत्ववच्चेतनाचेतनगताः धर्माः अज्ञत्वपरिणामित्वादयः, तत्रैवावतिष्ठन्ते न परमात्मानं स्पृशन्ति।

---

1. B. ॰त्प्राप्ये प्राप्त॰ 2. W. ॰पञ्चा॰ 3. W. Omit यत् 4. A.B. ॰क्तम्। 5. A.B. ॰गते 6. A.B. ॰त्प्रप॰ 7. A.B. ॰मत॰ 8. W. त॰ 9. A.B. Omit उपादानात् 10. A.B. Omit अनु 11. W. Omit तत्प्रधानं 12. W. Omits च सर्वं 13. W. अ॰ 14. W. Omits पट 15. A.B. Omit इत्यर्थः 16. W. ॰त्स्वरूपको 17. W. ॰त्स्वरूपको 18. A.B. Omit व्यव॰ 19. W. ॰देश॰

परमात्मा तु स्वयं निरस्तनिखिलदोषोऽनवधिकातिशयासंख्येयकल्याणगुणगणः[1] स्वशरीरभूतचेतनाचेतनगतस्वपर्यन्तनामरूपनिर्वाहकः कारणावस्थ[2]चेतनाचेतनशरीरकत्वेन तद्वाचिभिः शब्दैरभिधीयमानः सर्ववस्तुसमानाधिकृतोऽवतिष्ठत इत्ययमत्र सङ्ग्रहः। श्रुत्यर्थस्तु तस्मात्परमप्रस्तुतकारणपुरुषाद्विराडनिरुद्धो जज्ञेऽवतीर्णः। विराजोऽनिरुद्धाद्वैराजो ब्रह्माण्डशरीरकः पुरुषो जज्ञे। जातश्च स वैराजः भूमिं विश्वं पश्चादुपरिष्ठादधः अन्तश्चाऽत्यतिरिच्यते तद्विलक्षणो व्याप्तवानिति।।२१।।

**विज०** नन्वस्त्वमुक्तप्रपञ्चादवैलक्षण्यं, मुक्तप्रपञ्चवैलक्ष्यण्यं कुत इति तत्राऽऽह - **स** इति। स पुरुषः अभयस्य जननादिभयरहितस्यामृतस्यानन्तमुक्तसमुदायस्य ईशः स्वामी सर्वाभीष्टदानेनेति शेषः। आत्मनोऽन्नं भोग्यं नित्यमुक्तलक्ष्मीतत्वं तदभिमन्यमानमव्यक्तं जडं तत्कार्यं मर्त्यं देहनाशादिना विनाशिनं महदादितत्त्वाभिमानिनं ब्रह्मादिसर्वजीवसमुदायं तानि तत्त्वादीनि चानाद्यन्तकालतोऽत्यगादिति शेषः। नानैकान्तोऽयं हेतुरिति भावेनाऽऽह महिमेति। ब्रह्मादितत्त्वं पक्षान्तर्भूतमिति यत्तत इति। "अव्यक्तमात्मनोऽन्नं च महदादिविनाशि च । यदतीतः परो विष्णुः स एवातो विमोक्षदः" इति स्मृतेः।।१७।।

जीवानां परमांशत्वात्कथं दुरत्ययत्वं महिम्नः इति तत्राऽऽह - **पाद** इति। स्वरूपांशो भिन्नांश इति द्विविधोंऽशो हरेरस्ति[3] तत्र सर्वभूतानि सर्वजीवाः अस्य पुरुषस्य पादो भिन्नांशः इति स्थितिविदः सर्वस्य यथावत् स्थितिज्ञा विदुः अतः खद्योतस्य कालाग्न्यंशत्वेऽपि तन्महिमात्ययत्वं यथा नास्ति प्रमाणविरुद्धत्वादेवं जीवानमपीति भावः। तर्हि स्वरूपांशाः के कुत्र सन्तीति तत्राऽऽह - अमृतमिति। अमृतमनन्तासनाख्यं, क्षेमं वैकुण्ठाख्यम्, अभयम् श्वेतद्वीपाख्यमिति पुरत्रयं त्रिमूर्ध्नो हरेस्त्रिषु मूर्धस्वधायि धृतं रूपान्तरेणेति शेषः। नन्वनेन प्रश्नपरिहारः कथमागत इत्यस्यापीदमेवोत्तरम्। तथाहि त्रिविधाः मुरो जीवास्तान् धत्त इति त्रिमूर्धा तस्य हरेरमृतमनन्तगतं रूपम् अनन्तासनमिति यावत्। अनन्ते ऋतं गतं रूपमिति। "अमनन्तं विदुर्बुदाः" इत्येकाक्षरमालायाम्। विकुण्ठनाम्नोऽपमृत्युलक्षणं क्लेशं क्षिणोतीति क्षेमं वैकुण्ठाख्यं भा दीप्ताविति धातोर्दीप्तिनिरोधित्वादभानि (अभानि) जलानि यात्याप्नोति आश्रयत्वेनेत्यभयम् नारायणाख्यमिति रूपत्रयम्। एषु त्रिषु मूर्धसूत्तमेषु बहुलक्षोच्छ्रितेषु परेष्वधायि निहितम्। तस्मादनन्तासनवैकुण्ठनारायणाः स्वरूपांशाः येषु लोकेषु वसन्तीति भावः। तदुक्तम् "स्वरूपांशो विभिन्नांश इति द्वेधांश इष्यते" इत्यादि "त्रिमूर्धा सन् हरिर्धत्ते द्युत्रयं मूर्धभिस्त्रिभि" रित्यादिना ब्रह्मविष्णुमहेश्वरात्मना त्रयो मूर्धानो यस्य स त्रिमूर्धा तस्य मूर्धसु सत्यवैकुण्ठकैलासाख्यस्थानेषु तेषामेव नामान्तरविशिष्टममृतमित्यादिरूपत्रयमधायीत्यपव्याख्यानमपास्तम्[4]।।१८।।

ते च लोकास्त्रिलोक्या बहिरेवासन्नित्याह **पादा** इति। पादयन्ति प्रापयन्तीत्यात्मानमिति पादाः।

1. W. Omits गण 2. A.B. add कार्यावस्थ 3. A.B. °रास्ते 4. M.Ma. °पहास्तितम्

ये लोकाः ये च तेषु वसन्तः स्वरूपांशाः अप्रजानामपुत्राणां मदाद्यादीनां ब्रह्मादिदेवानाम्, आश्रयास्ते भूम्यादित्रिलोक्याः बहिरेवासन्नित्यन्वयः। अत्र तु नासूचितमिदं प्रमाणम् - "अनन्तासनवैकुण्ठनारायणपुराणि तु" इत्यदि। तस्यैव त्रिधाम्नो विष्णोस्त्रिलोक्यन्तर्गतस्वरूपांशान्तरमाह अन्तरिति। बृहदिति। भावप्रधानः स एव विष्णुः त्रिलोक्याः अन्तरपरो यज्ञपुरुषाख्यः गृहमेधैर्गृहस्थैः बृहत्त्वेन ब्रह्मत्वेन ब्रह्मार्पणबुद्ध्येति यावत्, हुतो वसतीति शेषः। तुना तस्य स्थानस्य शक्रलोकसामीप्यं सूचयति। तदुक्तं - "स एवान्यस्वरूपेण शक्रलोकसमीपगः" इत्यादि। न केवलं शक्रलोकनिकटवर्तिलोकस्थ एव पूज्यते, अपितु त्रिलोक्याः अन्तर्ध्रुवादिलोकस्थोऽपीति। इममर्थमपि तुशब्देनाह। तदुक्तं "यतीनां ध्रुवलोकस्थोऽवनिनां मेरुमध्यगः" इत्यादि।।१९।।

एतत्त्रयोऽपि स्वरूपांशाः इति निर्णयाय मूलरूपवद्भिन्नांशेषु देवादिसर्वजीवेषु तेषां व्याप्तिप्रकारमाह - **सृती** इति। अनन्तासनवैकुणठनरायणाख्यः त्रिपादभगवान्विद्या ब्रह्मविद्या तदविद्या च आश्रिते ते विरुद्धलक्षणत्वादुभे देवमनुष्यसंज्ञे सृती सरणी मार्गौ विष्वक् सर्वतो विचक्रमे आप। देवमनुष्यसंज्ञे कुतोऽवगते? इति तत्राह - साशनानशने इति। साशना मनुष्याः अनशनाः देवाः तद्विषयवत्त्वात्तथोक्ते, यद्वा "ये विद्या वाऽविद्या चैते सृती" इत्यनेन तद्वन्तः पुरुषा लक्ष्यन्ते तेषु विक्रम्य स्थितः तदुक्तं - "त्रिपात्स एव भगवान्सर्वप्राणिषु संस्थितः। निरन्नेषु च विद्वत्सु त्रिदशेष्वितरेषु च" इति। ननु हरेराधेयत्वेन पारतन्त्र्यमागतमत्राह पुरुष इति। पुरुषो विष्णुरुभयोराश्रयः आधारः। तुशब्देनान्ये मत्स्यादयः स्वरूपांशाः अपि सर्वव्याप्तिमन्त इति सूच्यते।।२०।।

अण्डव्याप्तचतुर्मुखोत्पत्तिमाह - **तस्मादिति**। पूर्वं महदादितत्त्वोत्पादनाय हरिणा यदण्डं निरमायि तस्मादण्डाद्ब्रह्मनामा विराट् जज्ञे, अण्डव्यापिनं तं विशिनष्टि भूतेति। भूतानां पृथिव्यादीनां जीवानां वा, इन्द्रियाणां श्रोत्रादीनां गुणानां शब्दादिविषयाणां विषयवृत्तौ सहकारिणां, दिगादिदेवानां वाऽऽश्रयः आधारः, यद्वा स्वसृष्टात्तस्मादण्डात् विश्वासौ राट् चेति विराट् विष्णुः जज्ञे शेषशायित्वेन प्रादुर्भूतः। किञ्चाण्डादभिव्यक्तात् तस्माच्छेषशायिनो हरेर्नाभिपद्मात् रूपान्तरेण भूतेन्द्रियगुणाश्रयो विराट् ब्रह्मा जज्ञे इत्यन्वयः। "तस्माद्धरेरण्डमभूदण्डादपि चतुर्मुखः" इत्यादेरुक्तार्थः, एवाऽयं श्लोकः। एतस्मात् गुणयोगात् परमेष्ठिनाम चास्य अभूदिति भावेनाऽऽह - तद्द्रव्यमिति। यदा ब्रह्माण्डात् शर्वपूर्वादि विश्वमुत्पन्नं तद्द्रव्यं गोभिर्भक्तिज्ञानादिगुणलक्षणादिभिः अत्यगात् उद्रिक्तोऽभूत्। कथमिव? यथा सूर्यो दिगन्तविश्रान्तैः रश्मिभिः, अन्तरिक्षाद्याश्रयं अत्येति तथेत्यन्वयः। तदुक्तम् - "यदोभयात्मको जज्ञे ब्रह्मा लोकपितामहः।" इत्यादि।।२१।।

**रा०कृ०** यत् यस्मात् कारणात् मर्त्यं मरणधर्मकं अन्नं कर्मफलं अत्यगात् अतिक्रान्तवान्। तस्मात् कारणात् सः परमेश्वरः अभयस्य जननमरणादिदुःखभयरहितस्य अमृतस्य परमानन्दरूपस्य

मोक्षस्य ईशः दातृत्वेन समर्थः। ततो हे ब्रह्मन्! नारद! पुरुषस्य तस्य परमपुरुषस्य एष महिमा दुरत्ययः अपारः केनापि तर्तुमशक्य इति भावः। भगवत्कर्मणां फलनिरपेक्षत्वात् भगवतो मरणधर्मककर्मफलातीतत्त्वम्। तथा च भगवदनुयायिनां भक्तानां भगवद्गुणसिद्धेः भगवतोऽमृतत्वप्राप्तिः।।१७।।

स्थितिपदः अत्र स्थितिपदेन जीवस्थितिहेतुभूताः लोकाः उच्यन्ते। तथा च स्थितयो लोकाः पादाः पादा इव अवयवभूताः यस्य तथाभूतः स्थितिपाद् तस्य पुंसः परमपुरुषस्य पादेष्ववयवभूतेषु लोकेषु सर्वभूतानि स्थितानि विदुः, मन्त्रज्ञाः कथयन्ति। त्रिमूर्ध्नः त्रयाणां भूर्भूवस्स्वर्नाम्नां लोकानां मूर्ध भूतस्य महर्लोकस्य मूर्धसु उपरितनेषु लोकेषु जनतपस्सत्यनामकेषु यथाक्रमं अमृतं मरणाभावं, क्षेमं रोगाद्यभावः, अभयं भयाभावः, एतत्त्रयं अधायि स्थापितम्।

लोकानां भगवदवयवत्वोक्तेः लोकमयत्वेनैव भगवतो अवस्थानमुन्नेयम्। जनतपस्सत्यलोकानां भगवदभिव्यक्त्याराधना सत्तामयत्वात् यथाक्रमं अमृतक्षेमाभयप्रदायित्वम्।।१८।।

ये पूर्वोक्ताः त्रयः पादाः जनतपस्सत्यलोकाख्याः त्रिलोक्याः बहिश्चासन् ते अप्रजानां पुत्ररूपेण अजायमानानां ब्रह्मचारि, वनप्रस्थयतीनां आश्रमाः स्थानानि, अभवन्निति शेषः। अबृहद्व्रतः ब्रह्मचर्यादिव्रतरहितः अपरः ब्रह्मचर्यादिभ्यो भिन्नः गृहमेधो गृहस्थस्तु त्रिलोक्यां, अन्तः तिष्ठतीति शेषः।

प्रथमे ब्रह्मचर्याश्रमे ब्रह्माभिव्यक्तिप्रयत्नः कर्तव्यः। वानप्रस्थे लोकमयब्रह्माराधना विधेया। यत्याश्रमे तु ब्रह्ममयत्वावस्थितिनियतिः साधनीया। अतो जनतपस्सत्यलोकाः क्रमेण ब्रह्मचारि-वानप्रस्थयतीनां स्थानभूताः इत्युक्ताः। गृहस्थस्य च ब्रह्मचर्यव्रतराहित्येऽपि ब्रह्मचर्याश्रमसंस्कार-बलावाप्तलोकमयब्रह्मविहृतिविज्ञानद्वारा वानप्रस्थाश्रमानुप्रवेशादस्ति महत् प्राधान्यं साधनासान्तत्य-सम्पादकम्।।१९।।

यत् यस्मात् कारणात् अविद्या कर्मरूपा एका सृतिः विद्या च तत्साधनोपासनारूपा अपरा सृतिः स्तः। पुरुषो जीवस्तूभयाश्रयः भवति। सः विष्वक् सर्वतोमुखगतिः क्षेत्रज्ञः पुरुषः साशनानशने साशना कर्मफलभोगसहिता अनशना कर्मफलभोगरहिता ते उभे सृती दाक्षिणोत्तरमार्गौ विचक्रमे चचाल। कर्मफलभोगसाहित्यराहित्ययोः पुरुषेच्छाधीनत्वात् पुरुषस्योभयमार्गाश्रयत्वम्। कर्मफलभोग-साहित्यराहित्याभ्यां पुरुषस्य यथाक्रमं देवत्वजीवत्वसिद्धिः।।२०।।

यस्मात् परमेश्वरात् अण्डं ब्रह्माण्डं जज्ञे उद्बभूव, तस्मात् भूतेन्द्रियगुणात्मकः भूतानि पृथिव्यादि पञ्चमहाभूतानि, इन्द्रियाणि वागादीन्येकादशेन्द्रियाणि, गुणाः शब्दादयः पञ्च, एतदात्मकः विराट् जज्ञे। सः परमेश्वरः तत्र प्रविष्टोऽपि गोभिः किरणैः स्वमण्डलं सूर्य इव विश्वं विराट्च्छरीरात्मकं आतपन्

प्रकाशयन् तत्र विराट्च्छरीरात्मकं द्रव्यं अत्यगात् अतिक्रान्तवान् तद्द्रव्यमतिक्रम्य ततो बहिरपि व्याप्तवानिति भावः। परमेश्वरो युगपत् ब्रह्माण्डाकारो ब्रह्माण्डभिन्नश्च भवतीति भावः।।२१।।

**यदास्य नाभ्यान्नलिनादहमासं महात्मनः।**
**नाविन्दं[1] यज्ञसम्भारान् पुरुषावयवादृते[2]।।२२।।**

**तेषु यज्ञस्य[3] पशवः सवनस्पतयः कुशाः[4]।**
**इदं च देवयजनं कालश्चोरुगुणान्वितः[5]।।२३।।**

**वस्तून्[6]योषधयः स्नेहा[7] रसलोहमृदो जलम्।**
**ऋचो यजूंषि सामानि चातुर्होत्रं च सत्तम।।२४।।**

**नामधेयानि मन्त्राश्च दक्षिणाश्च व्रतानि च।**
**देवतानुक्रमः कल्पः सङ्कल्पस्तन्त्रमेव[8] च ।।२५।।**

**गतयो मतयः श्रद्धा[9] प्रायश्चित्तं समर्पणम्।**
**पुरुषावयवैरेते[10] सम्भाराः सम्भृता मया।।२६।।**

**श्रीध०** नन्वेवं पुरुषं एव चेत्सर्वं[11] तर्हि यज्ञस्य तत्साधनानां चापृथक्भावाद्यज्ञैः पुरुषाराधनं न सिद्ध्येदित्याशङ्क्य तत्परिहाराय "यत्पुरुषेण हविषा" इत्यादिमन्त्रार्थं संगृह्य दर्शयति **यदेत्यादिना**। अस्येति विराडन्तर्यामिणः तस्यैव प्रकृतत्वात् नाभौ भवं नाभ्यं तस्मात्कमलादहमासम्[12]। यज्ञस्य सम्भारान् साधनानि[13] पशुयूपादीनि[14] पुरुषावयवं विना नापश्यम्।।२२।।

तदा तेषु सम्भारेषु साध्येषु सत्सु "पुरुषावयवैरेते[15] सम्भाराः सम्भृता मया" (भाग.2-6-26) इति चतुर्थेनान्वयः। तानेव दर्शयति तेष्विति। वनस्पतयो यूपाः देवयजनं यज्ञभूमिः इदं चेति वचनाद्यज्ञार्हे स्थाने उपविष्टः कथयतीति गम्यते। बहुगुणान्वितो वसन्तादिकालः।।२३।।

**वस्तूनीति**। वस्तूनि पात्रादीनि ओषधयो व्रीह्यादयः स्नेहा **घृतादयः**। रसा मधुरादयः। लोहानि सुवर्णादीनि। मृदश्च चातुर्होत्रं होत्रादिकं कर्म।।२४।।

---

1. A.B.C.G.I.N. °दं 2. I.M.Ma. °नृ° 3. AF.GF. °ज्ञेषु; M.Ma. °ज्ञाश्च 4. W. शुभाः 5. H.V. °लो बहु° 6. M.Ma. °सू° 7. W. °ह° 8. M.Ma. °स्स्त्र° 9. B.C.I.N. चैव; H.V. शुद्धाः 10. M.Ma. °तैः 11. H.V. चेतत्स 12. B.H.V. Omit कमला......आसम् 13. H.V. Omit साध......विना 14. B. Omits पशु.......विना 15. B. °तैः ; H.V. °व

**नामधेयानीति**। [1]नामधेयानि ज्योतिष्टोमादीनि। ऋगादीनामुक्तत्वान्मन्त्रा इति[2] स्वाहाकारादयः। देवतानुक्रम उद्देशः। कल्पो बौधायनादिकर्मपद्धतिग्रन्थः। अनेनाहं यक्ष्ये इति[3] सङ्कल्पः तन्त्रमनुष्ठान-प्रकारः।।२५।।

**गतय** इति। गतयो विष्णुक्रमाद्याः। मतयो देवताध्यानानि प्रायश्चित्तं भूर्भुवः[4]स्वरादिकृतस्य भगवति समर्पणम्।।२६।।

**वीर०**. नन्वेवं पुरुष एव चेत् सर्वं तर्हि यज्ञस्य तत्साधनानां चापृथग्भावाद्यज्ञैः पुरुषाराधनं न सिध्ये[5]दित्याशङ्क्य तत्परिहाराय यत्पुरुषेत्यादिमन्त्रार्थं संगृह्य दर्शयति **यदेति**। महात्मनः अस्य विराडाख्यानिरुद्धस्य नाभौ भवं नाभ्यं तथाभूतान्नलिनात्कमलादहं चतुर्मुखः यदा आसमभू[6]वं तदा पुरुषावयवाद्विना यज्ञसम्भारान् अन्यानि यज्ञसाधनानि नाविन्दम् नापश्यम्।।२२।।

तेषु पुरुषावयवेषु यज्ञस्य साधनान्यासन्निति शेषः। तान्याह **पशव** इति। वनस्पतयो यूपादयो देवयजनं देवा इज्यन्तेऽस्मिन्निति देवयजनं यागभूमिः इदं चेति वचनाद्यज्ञार्हे स्थाने उपविष्टः कथयतीति गम्यते। बहुगुणान्वितः कालो वसन्तादिः।।२३।।

वस्तूनि पुरोडाशादीनि तदर्था ओषधयः व्रीह्यादयः। स्नेह आज्यादिः। रसः सोमादिरसः। लोहः सुवर्णादिः। मृदः कपालादीनि। चातुर्होत्रं चतुर्होतृशब्दवाच्यैर्मन्त्रैः प्रकाश्यं कर्म। हे सत्तम! सतां श्रेष्ठ!।।२४।।

नामधेयानि ज्योतिष्टोमादीनि ऋगादीनामुक्तत्वान्मन्त्रः स्वाहाकारादयः। व्रतं पयोभक्षणादिकं। देवतानुक्रमः देवतानामनुक्रमः उद्देशः। यद्वा देवतेति पृथक् पदं, सा च अनुक्रम अनुपाठः आनुपूर्वी वा[7]। कल्पः प्रयोगविधिः, सङ्कल्पः कर्तव्याध्यवसायः, तन्त्रं क्रियाकलापः।।२५।।

गतयो विष्णुक्रमाद्याः, मतयः देवताध्यानानि, श्रद्धा कर्तव्यविषया त्वरा, प्रायश्चित्तं वैकल्यस-माधानं समर्पणं देवताः[8] प्रति हविषो[9]ऽर्पणं[10] मया पुरुषावयवैः संभारा यज्ञसाधनानि सम्भृताः सम्पादितानि।।२६।।

**विज०** प्रथमरूपस्य विरिञ्चस्यापि स एष पुरुष इत्युक्तस्य वैराजपुरुषाभिधस्य हरेर्मुख्याधिष्ठा-

1. V. Omits नामधेयानि......स्वाहाकारादयः 2. B. Omits इति 3. B. adds एवं 4. B. Omits भूर्भुवस्वरादि 5. W. °ध्यती 6. W. °भ° 7. W. Omits वा 8. W. °तां 9. W. Omits हविषो 10. W. सम°

नत्वाद्यस्येहावयवैरित्याद्युक्तलक्षणं चतुर्मुखे सम्भवति तत्परिहारायाह **यदेति**। यदाऽस्य नाभ्यात् नाभिप्रदेशाज्जातात् नलिनादहमासम्। द्वितीयरूपेणोत्पन्नोऽभवम्। महात्मन इत्यनेन तन्माहात्म्यात्स्वमाहात्म्यस्यात्यन्तार्वाचीनत्वं सूचयति तदा भक्त्या तं यियक्षुरहं पुरुषावयवानृते अण्डस्य पुरुषप्रतिमात्वात् लोकादियागसम्भाराणामुक्तप्रकारेण तदवयवोत्पन्नत्वात्तदवयवव्याप्तत्वात्तदाश्रितत्वाच्च पुरुषावयवान् विहाय लोकादियज्ञसम्भारान्नाविदम्। न लब्धवानित्यन्वयः। अनेन यज्ञकर्मणा भगवद्विषयेण शुद्धान्तःकरणस्य पुंसः समुद्रिक्तभक्तिज्ञानदिभिस्तत्प्रसादातिशयो भवतीत्युक्तं भवति।।२२।।

पुनर्ब्रह्मणा किमकारीत्याशङ्क्य तदर्थत्वेन तत्सृष्टत्वेन तत्सन्निधानविशिष्टस्तैस्तैर्हरियजनाद्धरिप्रीतिर्भवतीति विमृश्य यज्ञसम्भरणप्रकारमाह - तेष्विति। तेषु पुरुषावयवेषु तदाश्रितयज्ञसम्भारो मया सम्भृतः साधित इत्यन्वयः। यज्ञाः अग्निष्टोमादयः, पशवोऽजादयः, वनस्पतयोऽश्वत्थादयः, यैररण्यादिनिर्माणं क्रियते। देवयजनं यागभूमिः। कालो वसन्तादिः। तस्य गुणाः धर्माद्याः।।२३।।

वसूनि काञ्चनादीनि, ओषधयो व्रीह्यादयः, स्नेहाः आज्यादयः, रसाः क्षीरगुडादयः, लोहाः अयःप्रभृतयः, मृदो वल्मीकमृदिष्टिकादयः, जलं गङ्गादि गतम्। नियतपादबद्धा ऋचः, अनियतच्छन्दोबन्धोपेतानि यजूंषि, गानप्रधानानि सामानि, चतुर्भिरध्वर्य्वादिभिः क्रियमाणं कर्म चातुर्होत्रम्।।२४।।

नामधेयानीन्द्र इत्यादीन्यग्निहोत्रदर्शादीनि वा। मन्त्राः द्विविधाः बीजात्मकाः मालात्मकाः। विंशद्वर्णादर्वाग्बीजमन्त्राः, ततोऽधिकाः मालाख्याः ते च देवताद्रव्यादिप्रकाशकाः। चन्द्रकलावत् बिन्दुमण्डितशिरसो वर्णा बीजाख्याः चतुर्थ्यन्ता इन्द्रादिनामविशिष्टाः नमःस्वाहाफडन्ताः मालामन्त्राः। उभये च जपाधिकान्यून जपाइति। कर्म दक्षयन्तीति दक्षिणाः। होत्रादिभ्यो द्रव्यदानसम्बन्धाः। व्रतानि ब्रह्मचर्यादीनि। देवतास्तत्तन्मन्त्रवाच्या अग्न्यादिकाः। अनुक्रमस्तासां तारतम्यं पौर्वापर्यलक्षणम्। अनुपाठो वा कर्मक्रमो वा। कल्पः प्रयोगविधिप्रतिपादको बौधायनादिः। सङ्कल्पः इदं करिष्ये इति मनोवाग्भ्यां स्मरणकीर्तनलक्षणः। सूत्रं मीमांसासूत्रम्। चशब्दात् कर्मदैवमीमांसासूत्रे च गृहीते।।२५।।

गतयः स्वर्गादिफलानि। मतयो ज्ञानानि, ऋषिमतभेदभिन्नानि वा। श्रद्धा आस्तिक्यबुद्धिः, इदं सत्यमस्मात्प्रयोजनमस्तीत्येवंरूपा। प्रायश्चितं अन्तरालावाप्तान्तरायपरिहारत्वेन यथोक्तकर्मफलसाधनं कर्म समर्पणं, ब्रह्मणीति शेषः।।२६।।

**रा०कृ०** महात्मनः अस्य विराडन्तर्यामिणो भगवतो नारायणस्य नाभ्यात् नाभिभवात् नलिनात्पद्मात् यदा अहमासं उदभवं तदा तं भगवन्तं यष्टुं उपक्रान्तोऽहं पुरुषावयवादृते पुरुषस्य भगवतो यज्ञपुरुषस्य अवयवं विना यज्ञसम्भारान् यज्ञस्य साधनभूतान् अन्यान्पदार्थान् नाविदं नाध्यगच्छम्।।२२।।

यज्ञस्य-तेषु सम्भारेषु साध्येष्विति शेषः। पशवो यज्ञपशवः; सवनस्पतयः वनस्पतयो यूपाद्यर्थाः, खदिरादयः तत्सहिताः कुशाः। इदं च देवयजनं यज्ञभूमिः। उरुगुणान्वितः कालश्च वसन्तादिकालश्च। वस्तूनि पात्रादीनि, ओषधयः व्रीहियवादयः, स्नेहाः घृतादयः, रसलोहमृद; रसाः मधुरादयः, लोहानि सुवर्णादीनि, मृदः कपालादयः, जलं, ऋचो यजूंषि सामानीति वेदत्रयप्रोक्ताः, मन्त्रः चातुर्होत्रं होत्रादिभिः चतुर्भिः अनुष्ठेयं कर्म। नामधेयानि ज्योतिष्टोमादीनि मन्त्राश्च स्वहाकारादयः, दक्षिणाश्च गवादयः व्रतानि च जलाशनादीनि च, देवतानुक्रमः देवतानां आनुपूर्व्या उद्देशः, कल्पः, बोधायनादिप्रोक्तकर्मपद्धतिग्रन्थः, सङ्कल्पः अनेन विधानैस्तदर्थमहं यक्ष्ये इति सङ्कल्पः। तन्त्रमेव च अनुष्ठानप्रकारश्च गतयो विष्णुक्रमप्रभृतयः, मतयो देवताध्यानानि, श्रद्धा आस्तिक्यबुद्धिः अथवा कर्तव्यविषयिणी त्वरा, प्रायश्चित्तं विघ्नसमाधानं, समर्पणं कृतस्य भगवति समर्पणं - सर्व एवैते सम्भाराः हे सत्तम! सज्जनश्रेष्ठ! मया पुरुषावयवैरेव भगवतो नारायणस्य अवयवैरेव सम्भृताः सम्पादिताः।।२३-२६।।

**इति सम्भृतसम्भारः पुरुषावयवैरहम्।**
**तमेव पुरुषं यज्ञं तेनैवायजमीश्वरम्।।२७।।**

**ततस्ते भ्रातर इमे प्रजानां पतयो नव।**
**अयजन् व्यक्तमव्यक्तं पुरुषं सुसमाहिताः।।२८।।**

**ततश्च मनवः काले[1] ईजिरे ऋषयो[2]ऽपरे।**
**पितरो विबुधा दैत्या मनुष्याः क्रतुभिर्विभुम्।।२९।।**

**नारायणे भगवति तदिदं विश्वमाहितम्।**
**गृहीतमायोरुगुणः सर्गादावगुणः स्वतः[3]।।३०।।**

**सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः।**
**विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक्[4]।।३१।।**

**श्रीध० इतीति** । सम्भृताः सम्पादिताः सम्भारा येन सोऽहं तेनैव यज्ञेनैव। अनेन "यज्ञेन यज्ञमयजन्त देवाः" इति मन्त्रार्थः सूचितः।।२७।।

---

1. AF.GF. °लं 2. H.V. मुन° 3. W. स्व° 4. H.V.W. धृत्

"तेन देवा अयजन्त" इत्यस्यार्थं सप्रपञ्चं दर्शयति **तत** इति द्वाभ्याम्। व्यक्तमिन्द्रादिरूपेण अव्यक्तं स्वतः। अनेन "पुरुषं जातमग्रतः" इत्यस्यार्थो दर्शितः।।२८।।

**तत** इति। काले स्वस्वावसरे।।२९।।

यदधिष्ठानमित्येतत्प्रश्नोत्तरार्थमुपसंहरति **नारायण** इति। आहितमधिष्ठितम्। भगवत्वे हेतुः। यः स्वतोऽगुणः। सर्गादौ गृहीता मायया उरवो गुणा येन सः तस्मिन्।।३०।।

"यत्परस्त्वम्" (भाग.2-5-4) इत्येतत्प्रश्नोत्तरं यदुक्तं "स एष भगवान् सर्वेषां मम चेश्वर" (भाग.2-5-20) इति तदुपसंहरति। **सृजामीति**। पालनं तु स्वयमेव करोतीत्याह - विश्वमिति। पुरुषरूपेण श्रीविष्णुरूपेण त्रिशक्तिर्माया तां धारयतीति तथा सः।।३१।।

**वीर०** इति इत्थं सम्भृताः सम्पादिताः सम्भारा येन सोऽहं तमेव पुरुषं नियन्तारं "यज्ञं विष्णुं तेनैव यज्ञेनैवायजं इष्टवानस्मि" अनेन "यज्ञेन यज्ञमयजन्त" इति मन्त्रार्थ उक्तः।।२७।।

"तेन देवा अयजन्त" इत्यस्यार्थं सप्रपञ्चं दर्शयति **तत** इति द्वाभ्याम्। ते तव भ्रातरः मरीच्यादयो नव प्रजापतयः सुसमाहितचित्ताः व्यक्तं इन्द्रादिरूपेण अव्यक्तं स्वतः, पुरुषं परमपुरुषमयजन् इष्टवन्तः।।२८।।

काले स्वे स्वे कालेऽवसरे मन्वादयः क्रतुभिर्विभुं विष्णुं ईजिरे इत्यर्थः।।२९।।

एवं यद्रूपमित्यादिप्रश्नानां पुरुषसूक्तसंवादेनोत्तराण्यभिधाय यदधिष्टानमित्येतत्प्रश्न[2]स्योत्तरार्थमुपसंहरति **नारायण** इति। आहितमवस्थितं एवं स्वस्मिन्नेव सूक्ष्मरूपेणावस्थितं विश्वं [3]स्वशरीरभूतेन मया सृजति, रुद्ररूपेण हरति, पुरुषरूपेण [4]तं पातीत्युपसंहरति गृहीतेत्यादिना। स्वत अगुणः सत्त्वादिगुणरहित; [5]प्रत्यगात्मस्वरूपं हि स्वतः सत्त्वादिरहितं अगुणोऽप्यहं गृहीता मायया उरवो गुणा येन तथा भूतः सर्गादौ तन्नियुक्तस्तन्नियोज्यस्सन् तं सृजामि हरो रुद्रः तद्वशः तदधीनः विश्वं हरति पुरुषरूपेण [6]स्वावताररूपेण पाति। अत्र तन्नियुक्तः तद्वश इत्यनेन ब्रह्मरुद्रयोः तन्नियाम्यत्वप्रतीतेः पुरुषरूपेणेत्यत्र तदप्रतीतेश्च सृष्टिसंहारौ ब्रह्मरुद्राख्यजीवान्तर्यामित्वेन करोति पालनं तु स्वयमेव [7]करोतीति वेदितव्यम्। अत त्रिशक्ति[8]धृत् सृष्टिस्थितिसंहार[9]सामर्थ्यरूपशक्तित्रययुक्त एक एवेत्यर्थः।।३०,३१।।

---

1. B. धर्ता 2. A.B. 'श्नो' 3. A.B. Omit स्व' 4. A.B. तु 5. A. Omits प्रत्य......अगुणो 6. A.B. Omit स्वाव......रूपेणो' 7. W. Omits करोति 8. A.B. 'भृक् 9. A.B. Omit सामर्थ्य'

**विज०** इति शब्दः आदिवचनः, एवमादिसम्पादितयज्ञसाधनोऽहं पुरुषावयवैः कल्पितैः पश्वादिभिस्तमेव यज्ञपुरुषं तेन मय्यनुविष्टेन प्रेरितो देशकालपश्वादिसाधनेषु चाहितेन मद्दृष्टिविषयेण वाऽयजमित्यन्वयः। ईश्वरमित्यनेन स्वेन यष्टव्यमाहात्म्यं सूचयति।।२७।।

तत्र[1] स्वकृतयज्ञस्य व्याप्तिं कथयति **तत** इति। अनेन स्वस्य सर्वस्मात् श्रैष्ठ्यं स्वकर्मणः प्रामाण्यं च दर्शितम्। ते तव भ्रातरो मरीच्यादयः न सनकादय इति परिच्छिनत्ति। प्रजानां पतय इति। व्यक्तं गम्यमव्यक्तमगम्यम्। अनेन साधनसामग्र्यसामग्रीभ्यां हरेः कश्चन स्वभावो दर्शितः। पुरुषं बहुफलप्रदं समाहिता इदमेव श्रेयो नातोऽन्यदित्येकाग्रचित्तगुणाः।।२८।।

काले वसन्तादिसमये अपरे मरीच्यादिव्यतिरिक्ताः पितरो अग्निष्वात्तादयः, विबुधा इन्द्रादयः, दैत्याः प्रह्लादादयः, मनुष्याः प्रियव्रतप्रभृतयः, क्रतुभिर्यागैः। अत्राहं भवानित्यारभ्य ततश्च मनव इत्यन्तैर्ग्रन्थैः पुरुषसूक्तार्थो विवृत इति ज्ञातव्यम्। तथाहि "सर्वं पुरुष" इत्यनेन "पुरुष एवेदं सर्वं" इत्यस्यार्थः प्रदर्शितः। "तेनेद"-मित्यनेन "सहस्रशीर्ष"-त्यस्य, "सोऽमृतस्ये"-त्यनेन "उतामृतत्वस्येशानः" इत्यस्य "महिमैष" इत्यनेन "एतावानस्ये"-त्यस्य, "पादास्त्रय" इत्यनेन "त्रिपादूर्ध्वं" इत्यस्य, "सृती" इत्यनेन '"ततो विष्वङ्" इत्यस्य, "तस्मादण्डा"-दित्यनेन "तस्माद्विराडजायत" इत्यस्य 'तद्द्रव्यम्' इत्यनेन "सजात" इत्यस्य तेषु यज्ञादय इत्यनेन "ब्राह्मणोऽस्य मुखमासीत्" इत्यस्य "इति सम्भृत" इत्यनेन 'यत्पुरुषेण' इत्ययस्य 'ततस्ते भ्रातरः' इत्यनेन 'यज्ञेन यज्ञः' इत्यादेः।।२९।।

तद्द्रव्यमत्यगादित्यनेन भक्त्यादिभिरेवोत्तमत्वमुच्यते न तु स्वरूपत इत्युक्तमेवार्थं स्फुटयन्नुपसंहरति नारायण इति। श्रीमत्पुण्डरीकाक्षकटाक्षप्रेक्षणप्राप्तसर्वप्रभावोऽहं तमेव नारायणं यज्ञादिभिरयजमिति यस्मात्तस्मादिदमस्मदादिविश्वं तस्मिन्नारायणे एवाऽऽहितं तदाधारतया तदधीनतया तद्व्याप्ततयाऽवस्थितमित्यन्वयः। आहितत्त्वे हेतुमाह गृहीतेति। सत्त्वादिगुणाधीनं सर्वम्, ते चानेन गृहीताः, अतः सर्वं तस्मिन्नाहितम् 'ग्रह उपादाने' इति धातोः सर्गादावुपादानीकृत प्रकृत्युरुगुणे अन्यदा समीपावाप्तमायोरूगुणे। ननु हरेर्जीवजडवद्गुणसम्बन्धः किं न स्यादिति तत्राऽऽह - अगुण इति। जीवस्य स्वतो गुणराहित्येऽपि मिथ्याभिमानाज्जडस्य तु तन्मयत्वाद्गुणित्वं युक्तं हरेस्तदुभयाभावादगुणत्वं गुणस्वातन्त्र्यात् बहिः समीप एव सदाऽवस्थनात् गृहीतगुणत्वं युक्तम्। उर्वित्यनेन हरेरतिशयितमाहात्म्यं सूचयति। 'नित्यं गृहीताः सत्त्वाद्याः जीववज्जडवन्न तु। मिथ्यामानात् स्वरूपत्वात्स्वातन्त्र्याद्बहिरेव तु' इत्येतदत्र मानम्।।३०।।

---

[1]. M.Ma. Omit तत्र

"येन स्वरोचिषा विश्वम्" (भाग.2-5-11) इत्याद्युक्तमुपसंहरन् हरस्य संहारस्वातन्त्र्यं मन्दमतीनां प्रतीयमानं परिहरति सृजामीति। पुरुषरूपेण विष्णुरूपेण त्रिशक्तिधृक् सृष्टिपालनसंहार-शक्तिधरो ज्ञानबलक्रियाशक्तिधरो वा।।३१।।

**रा०कृ०** इति पुर्वोक्तप्रकारेण पुरुषावयवैः सम्भृतसम्भारः सम्पदितयज्ञसाधनः अहं तेनैव सम्भृतसम्भारेण यज्ञेन तमेव यज्ञं यज्ञमयं ईश्वरं पुरुषं अयजं इष्टवान्।

शब्दाविर्भावस्य नाभिमूलकत्वात् शब्दमयस्य ब्रह्मणोऽपि नारायणनाभिसम्भवः। किं च तद्ब्रह्मणो बृंहणशीलत्वात् तदुत्पत्तिस्थानभूतनाभेर्विकसनशीलेन नलिनेनौपम्यम्।

नारायणनाभिसम्भवस्य ब्रह्मणो यज्ञकरणसङ्कल्पो नारायणाज्ञातः। यज्ञसम्भाराश्च सर्वे पूर्वोक्ताः नारायणावयवसम्भूताः। तथा च सर्वं नारायणमयम्। एवमत्र "यज्ञेन यज्ञमयजन्त देवाः" इति पुरुषसूक्तोक्तार्थः प्रतिपादितः। तथा च भगवत्समर्पणधिया कृतं कृत्स्नमेव कर्म 'यज्ञ' पदव्यपदेश्यं भवतीत्युक्तं भवति। तथाहि - पश्यन्तीति पशव इति व्युत्पत्त्या पशुशब्देन मानवमनोनियताः प्रज्ञाः गम्यन्ते। पाणिपादं यूपात्मकम्। यज्ञभूमिर्मानवदेहः यज्ञपात्राणि शिरःप्रभृतिगात्राणि। तथा च नररूपी नारायणः स्वप्रज्ञाशरीरपाटवादिकं विश्वमानवजीवनाधारभूतानां फलपाकान्तानां औषधीनां परिवर्धनो-पयोगयोरेव चरितार्थतां प्रापयेदिति, तेन तच्छरीरं निष्कामकर्मरूपयज्ञायतनं भवतीति च व्यज्यते। एवमन्येषां च सम्भाराणां निष्कामकर्मैकप्रयोजनकत्वमवसेयम्। इदं च यज्ञार्थजीवनं नित्यनिष्काम कर्माचरणपरायणेन नारायणेनैव प्रागुक्तदिशा लोकायोपदिश्यते।।२७।।

ततः अनन्तरं इमे ते तव भ्रातरः मरीच्यादयो नव प्रजानां पतयः सुसमाहिताः सावधानचित्ताः सन्तः व्यक्तं इन्द्रादिरूपेण व्यक्तं अव्यक्तं पुरुषं भगवन्तं अयजन्।।२८।।

ततश्च तदनन्तरं च काले समुचितेऽवसरे मनवः अपरे मुनयः पितरः विबुधाः देवाः दैत्याः मनुष्याः क्रतुभिः यज्ञैः विभुं सर्वेश्वरं नारायणं ईजिरे इष्टवन्तः। मन्वादयस्सर्वेऽपि निष्कामकर्मरूपैः यज्ञैः सर्वव्यापकं नारायणमर्चितवन्त इत्यर्थः। ततश्च प्रकृतिः विना फलाभिसन्धिं जीवेभ्यः स्वसम्पदं प्रयच्छतीति व्यज्यते। अपि च मानवः प्रकृतिमनुसृत्य निष्कारणमेव लोकहिते प्रवर्तेतेति रहस्यम्।।२९।।

यः स्वतः अगुणोऽपि सर्गादौ सृष्ट्यादौ गृहीतमायोरुगुणः मायया स्वेच्छया स्वीकृतनानागुणो भवति तस्मिन् भगवति नारायणे तत् पूर्वोक्तं इदं दृश्यमानं विश्वं आहितं अवस्थितम्।।३०।।

तन्नियुक्तः तेन भगवता नियुक्तः प्रेरितोऽहं विश्वं सृजामि तद्वशः तस्य भगवतोऽधीनः हरः रुद्रः विश्वं हरति उपसंहरति, पुरुषरूपेण विष्णुरूपेण विश्वं परिपाति स्वयमेव परिरक्षति। एवमेष भगवान् त्रिशक्तिधृक् सर्गार्थं रजोगुणमाधाय ब्रह्मा भवति। स्थित्यर्थं सत्त्वगुणमाधाय विष्णुर्भवति। संहारार्थं तमोगुणमाधाय रुद्रो भवतीति भावः ।।३१।।

**इति तेऽभिहितं तात! यथे[1]दमनुपृच्छसि।**
**नान्यद्भगवतः किञ्चिद्भाव्यं सदसदात्मकम्।।३२।।**

**न भारती मेऽङ्ग मृषोपलक्ष्यते न वै[2] क्वचिन्मे मनसो मृषा गतिः।**
**न मे हृषीकाणि पतन्त्यसत्पथे यन्मे हृदौत्कण्ठ्यवता धृतो हरिः।।३३।।**

**सोऽहं समाम्नायमयस्तपोमयः प्रजापतीनामभिवन्दितः पतिः।**
**आस्थाय योगं निपुणं समाहितस्तं नाध्यगच्छं यत आत्मसम्भवः।।३४।।**

**नतोऽस्म्यहं तच्चरणं स[3]मीयुषां भवच्छिदं स्वस्त्ययनं सुमङ्गलम्।**
**[4]यो ह्यात्ममायाविभवं [5]स्म पर्यगात् [6]यथा [7]नभः स्वान्तमथापरे कुतः।।३५।।**

**नाहं न यूयं [8]यदृतां गतिं विदुर्न वामदेवः किमुतापरे सुराः।**
**[9]तन्मायया मोहित बुध्दयस्त्विदं विनिर्मितं [10]चात्मसमं विचक्ष्महे।।३६।।**

**श्रीध०** यच्चेदं विश्वं यदात्मकश्च त्वमित्येवमादिसर्वप्रश्नानां सामा[11]न्योत्तरम्। यदुक्तम् - "वासुदेवात्परो ब्रह्मन्न चान्योऽर्थोऽस्ति तत्त्वतः" (भाग.2-5-14) इति 'पुरुष एवेदं सर्वम्' इति[12] श्रुत्या च यद्दृढीकृतं तदुपसंहरति **इतीति**। सदसदात्मकं कार्यकारणात्मकं भाव्यं सृज्यं भगवतः सकाशादन्यत् [13]पृथक् न भवती[14]त्यभिहितम्।।३२।।

यदुक्तं "[15]यथा मां प्रब्रवीषि भोः अविज्ञाय परं मत्तः एतावत्त्वं यतोऽस्ति मे" इति तदुपपाद्योपसंहरति **न भारतीति**। यद्यस्मान्मे मया औत्कण्ठ्यं[16] भक्त्युद्रेकः। तद्युक्तेन हृदा हरिर्धृतो ध्यातः। अङ्ग!

1. H.V. °देतद °; W. °थेतद ° 2. H.M.Ma.V.W. °कर्हि ° 3. B. °त° 4. M.Ma. यस्स्वा; AF GF. यस्त्वा 5. H.V. सु पर्यगात्, M.Ma.W. स्वयं गतो 6. M.Ma. नाहं नभस्वांस्त° 7. °भस्वन्त° 8. M.Ma. WF. बत तद्° 9. H.M.Ma.V. यन्मा° 10. AF.GF. त्वा°; H.M.Ma.V.W. °स्वा° 11. B. °न्येनो° 12. H.V. add आदि 13. H.V. Omit पृथक् 14. H.V. °त्युक्तम्; B. °ति तेऽभिहितम् 15. A.B. "एतावत्त्वं यतो हि मे तमविज्ञाय मामीश्वरं प्रब्रवीषि" 16. B. adds तत्

हे नारद! अतो[1] मे वाङ्मनसेन्द्रियाणां वृत्तयः सत्यार्था न तु मत्[2]प्रभावेनेत्यर्थः।।३३।।

अत्र स्वानुभवमेवान्वयव्यतिरेकाभ्यां प्रमाणयति द्वाभ्याम् - **स इति**। सोऽहं समाम्नायादिभिः सर्वोत्कृष्टोऽपि योगमा[3]श्रित्यापि यत आत्मनो मम सम्भवो जन्म तमेव न ज्ञातवान् कुतोऽन्यस्य वार्ता। एतच्च तृतीयस्कन्धे पद्मोद्भवे वक्ष्यते[4]।।३४।।

**नतोऽस्मीति**। तदा[5] समीयुषां शरणागतानां भवच्छिदं संसारनिवर्तकं स्वस्त्ययनं[6] मङ्गलावहं सुमङ्गलं सुसेव्यं च[7] तस्य चरणं नतोऽस्मि। ततो[8]ऽचिन्त्यमहिमत्वेन न ज्ञातवानस्मीति कैमुत्य[9]न्यायेनाह। यो हीति। स्वमायाविस्तारं यः स्वयमपि पर्यगात्। परिशब्दो निषेधे, एतावानिति न ज्ञातवानित्यर्थः। अपरे कुतो जानीयुः। तस्य[10] चरणं नतोऽस्मीति पूर्वेण सम्बन्धः। ननु सर्वज्ञः कथं न जानाति अन्ताभावादिति दृष्टान्तेनाह। यथा स्वस्यान्तं नभो नाप्नोति[11] तद्वत्। नहि खपुष्पादर्शनं सार्वज्ञ्यं[12] निहन्तीति[13] भावः। तथा च वक्ष्यति "द्युपतय एव ते न ययुरन्तमनन्ततया त्वमपि यदन्तराण्डनिचया ननु सावरणाः" (भाग.10-87-41) इत्यादि। श्रुतिश्च- "यो अस्याध्यक्षः परमे व्योमन्त्सो अङ्ग वेद यदि वा न वेद" इति।।३५।।

एतत्प्रपञ्चयति - **नाहमिति** द्वाभ्याम्। वामदेवो रुद्रः यस्य[14] ऋतां गतिं परमार्थस्वरूपम्। किन्तु[15] इदं प्रपञ्चरूपं तस्य मायया विनिर्मितं विचक्ष्महे विद्मः। तदपि आत्मसमं स्वज्ञानानुरूपमेव न तु कृत्स्नम्। मोहितबुद्धय इत्ययं तदज्ञाने प्रपञ्चज्ञाने च हेतुः।।३६।।

**वीर०** यद्रूपमित्यादिप्रश्नानां यदात्मकस्त्वमित्येवमादि[16] - सर्व प्रश्नानां च सामान्येनोत्तरम्, यदुक्तं- "वासुदेवात्परो ब्रह्मन्न चान्योर्थोऽस्ति तत्त्वतः" (भाग.2-5-14) इति, 'पुरुष एवेदं सर्वं' इति श्रुत्या च तद्दृढीकृतं तदुपसंहरति - **इतीति**। हे तात! इदं विश्वं प्रति यथा अनुपृच्छसि विश्वविषयप्रश्नं करोषि तस्य प्रश्नस्योत्तरं चेतनाचेतनात्मकं कृत्स्नं जगत्किञ्चिदपि भगवतः अन्यत्पृथगिति न भाव्यम्, नानुसन्धेयमिति ते तुभ्यमभिहितं कथितमित्यर्थः[17]।।३२।।

यदुक्तम् - "एतावत्त्वं यतो हि मे" (भाग.2-5-10) तमविज्ञाय मामीश्वरं प्रब्रवीषीति तदुपपादयितुमुपसंहरति **न भारतीति**। मे भारती वाक् मृषा मिथ्या न दृश्यते मे मनसो गतिः वृत्तिः न मृषा। हृषीकाणि इन्द्रियाणि असत्पथे असद्विषये न पतन्ति न प्रवर्तन्ते यस्मात् मयौत्कण्ठ्यं आशा, तद्वता

1. A.B. 'न इन्द्रि' 2. H.V. त॑ 3. B. 'गं समा' 4. B. 'ति 5. H.V. 'था; B. 'दाऽहं' 6. H.V. Omit स्वस्त्ययनं 7. H.V. Omit च तस्य 8. B. य॑ 9. H.V. 'तिक' 10. H.V. 'तोऽस्य 11. H.V. न प्रा॑ 12. H.V. सर्वज्ञत्वं 13. A.B. वि॑ 14. H.V. Omit यस्य 15. B. 'ञ्चित् 16. A.B. 'त्यादि प्र॑ 17. W. Omits कथितं

हृदयेन हरिर्धृतः ध्यातः। अङ्ग! हे नारद! अतो मे वाङ्मनसेन्द्रियाणां वृत्तयः सत्यार्था नतु मत्प्रभावेनेत्यर्थः।।३३।।

अतो ममापि ज्ञानप्रदो मदचिन्त्यस्वरूपस्वभावः सर्वेश्वरो मत्तोऽन्योऽस्तीत्याह - **सोऽहमिति**। समाम्नायमयः समाम्नायप्रचुरः तपोमयः तपःप्रचुरः विद्यातपोभ्यां सर्वोत्कृष्ट इत्यर्थः। प्रजापतीनां मरीच्यादीनामभिवन्दितः तैर्नमस्कृतः तेषां पतिश्चात्मनः परमात्मनः सम्भव उत्पन्नः तत्कृपालब्ध ज्ञानसम्पन्नोऽहं समाहितः सन्निपुणं निर्विघ्नं योगं समास्थाय यः स्वमायाविभवं स्वयं गतस्तं परमात्मानं यतो नाध्यगच्छं स्वरूपतो गुणतश्चैतावानिति न ज्ञातवान्।।३४।।

अतस्तच्चरणं प्रति केवलं नतोऽस्मि। कथम्भूतं चरणं समीयुषां शरणागतानां भवच्छिदं संसृतिनिवर्तकं स्वस्त्ययनं मङ्गलानामाश्रयं सुमङ्गलं सुसेव्यम्। अनवगमे दृष्टन्तः यथेति। दोषास्पर्शाय दुर्ग्रहत्वाय च नभस्स्वदृष्टान्तः "दुःस्पर्शः पाणिना वायु" रिति। महाभारतोक्तेः 'स्वमायाविभवं स्वयंगत' इत्यनेन यवनिकां गत इतिवत् अन्यानुपलभ्यत्वमुक्तं न तु मायावश्यत्वम्, आत्ममायाविभवेनान्यानुपलभ्यत्वं गत इत्यर्थः। एवंविधं परमात्मानम् उक्तविधोऽप्यहमेव नाध्यगच्छमन्ये नाधिगच्छन्तीति, किमु वक्तव्यमित्याह अथेति। अपरे जीवाः कुतो हेतोर्विदुरित्यर्थः।।३५।।

एतदेवोपपादयति - **नेति**। यूयमिति सनकाद्यभिप्रायेण बहुवचननिर्देशः। वामदेवो नाम कश्चिदृषिः शङ्करो वा, न चाहं न च शङ्करश्च जानन्तीति। श्रीवैष्णवीयचतुर्मुखवाक्यान्तरात् यदतां यस्य परमात्मनः ऋतां सत्यां गतिं स्वरूपरूपयथावस्थितिम्। बत तद्गतिं इति पाठान्तरम्। अस्मदादयो न विदुः कैमुत्यन्यायेनाह किमुतेति। कुतो न विदुरित्यत आह - तन्माययेति। तस्य भगवतो मायया 'दैवी ह्येषा गुणमयी' इत्युक्तविधमायया मोहिता बुद्धिर्येषां ते तन्मायया मोहितबुद्धित्वादेते न विदुरित्यर्थः। तर्हि किं विदुरित्यत आह - तेनैव विनिर्मितमिदमचेतनं शरीरं स्वात्मसममात्मानं देहाकारं मन्यामहे इत्यर्थः। देहात्मविभागमप्यजानतां कथं परमात्मवेदनमिति भावः।।३६।।

**विज०** प्रश्नप्रतिवचनमुपसंहरति - **इतीति**। अथ कुत्रापि कदाचिदपि मे जगतः स्वातन्त्र्यबुद्धिं न कुर्विति भावेनाह - नान्यदिति। सदसदात्मकं व्यक्ताव्यक्तात्मकं ज्ञेयाज्ञेयस्वरूपत्वात्तत्तत्स्वभावं भाव्यमुत्पाद्यं महदहङ्कारादि यज्जगत् किञ्चिदपि हरेरन्यत् स्वतन्त्रं न भवति। किन्तु तदधीनसत्ताकमतो युज्यते तदनन्यदित्यर्थः। तदुक्तम् "सदिति व्यक्तमुद्दिष्टमसदव्यक्तमुच्यते" इत्यादि।।३२।।

---

1. A.B. 'न इ' 2. A.B. Omit यतः 3. A.B. 'णा' 4. A.B. ज'

एवंविधमाहात्म्यस्य हरेः प्रसादः कस्य स्यादित्याशङ्क्य भक्तिनदीस्नानेन विधूतमनोमलस्य सदा भगवदेकविषयेन्द्रियव्यापारस्य स्यादिति भावेनाह - **नेति**। हृषीकाणीन्द्रियाणि। अत्र हेतुमाह - यन्म इति। औत्कण्ठ्यं प्रियवस्तुनि मनोवृत्तिविशेषः स्नेहलक्षणभक्तिस्तद्वता हृदा मनसा धृत इति यत्तस्मादित्यर्थः। अनेन भगवत्प्रसादसामग्रीसम्पादने भक्तिरङ्गमित्युक्तं भवति।।३३।।

इतोऽपि पुंसां भक्तिरेव साध्या तत्प्रसादजननी अन्यथाऽसौ दुर्ज्ञेय इति भावेनाह-**सोऽहमिति**। मद्भक्तिविषयो यो विष्णुस्तस्यानुग्रहेण तमन्तरेणाम्नायमयो वेदप्रतिपाद्येषु प्रधानः समीचीनज्ञानसम्प्रदाय-प्राचुर्यो वा तपोमयस्तपस्विषु प्रधानः दक्षादिप्रजापतीनां पतिस्तैरभिवन्दितश्च समाहितः एकाग्रतया निश्चलमनाः भूत्वा निपुणं चतुरतमं योगध्यानलक्षणमुपायमास्थाय यतः आत्मनो मम सम्भवस्तं भगवन्तं नाध्यगच्छम्। अधीतिविशेषणादनन्तत्वेनाधिगतविशेषस्याधिक्यात् नाज्ञासिषमित्यर्थः।।३४।।

नारादायैवंविधं हरिमहिमानं व्याचक्षाणः स्मारं स्मारं भक्तिप्रसरसिन्धुनिमग्नः तन्नतिं करोति - **नतोऽस्मीति**। यो विष्णुः स्वात्ममायायाः स्वरूपभूतमहिम्नो विभवं विविधभवनमनन्ततां स्वयंगतः स्वयमेव जानाति, विशेषोक्तौ निमित्तमाह नाहमिति। नभस्वान्वायुः। अपरे वाणीशेषाद्याः। 'अथ' शब्दात्साकल्यज्ञानमेव निषिध्यते, न तु तद्विषयज्ञानमात्रम्। "सर्वजीवनिकायेषु ब्रह्मवायू हरेर्विदौ" इत्यादिवाक्यसूचकादयं विशेषो बोद्धव्यः प्रेक्षावतेति। "मङ्गलानन्तरारभ्य प्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः। (अम.को.) "अथातोऽनन्तराप्यर्थ विकल्पारम्भमङ्गले" इति च। समीयुषां शरणं प्राप्तानां स्वस्त्ययनमलंबुद्धिगोचरस्वानन्दानुभवप्रदं सुमङ्गलं मङ्गलानां मङ्गलं तच्चरणं तस्य हरेश्चरणं नतोऽस्मीत्येतावदेव सुशकमिति भावः। "मङ्गलानां च मङ्गलम्" इति च।।३५।।

इदानीं स्वात्मानं निदर्शनीकृत्य कस्यापि साकल्यज्ञानं नास्तीत्याह - **नाहमिति**। लुप्तोपममिदं, यथाऽहं साकल्येन तद्गतिं न वेद्मि तथा यूयं भवन्तोऽपि न विदुः। अत्रापि व्यत्ययात् साकल्यज्ञानमेव निषिध्यते उत्तरखण्डेन स्वयोग्यज्ञानस्योक्तत्वादिति ज्ञातव्यम्। त्रिपुरान्तकः सर्वज्ञ इत्यज्ञरूढिरेव न विद्वद्रूढिरिति भावेनाह - न वामदेव इति। वामो निर्दोषो देवो नारायणो यस्य मते स तथोक्तः। "वामन्तु शुभं पेशलम्" इत्यभिधानम्। अनेनैवान्यस्यासद्भावं[1] सिद्धमुद्बलयति किमुतेति। अत्र हेतुमाह-यन्माययेति। यस्य हरेर्मायया बन्धकशक्त्या मोहितबुद्धित्वात् इत्यर्थः, तत्फलमाह इदमिति। विनिर्मितमिदं जगत् स्वात्मसमं परमात्मसदृशं विचक्षते। ननु भवन्तोऽप्येष्वेके किमित्याशङ्क्य सत्यं, विशेषोऽस्तीत्याह - इदमिति। वयन्तु एनेदं निर्मितं तं स्वात्मसमं स्वयोग्यतानुसारं विचक्ष्महे, नातोऽधिकं तदपि तत् प्रसादायत्तं अतो न विदुरिति ब्रूम इत्ययं विशेषः। 'तु' शब्दादवगन्तव्य इति

1. A.B. "न्य स"

"तुः स्याद्भेदेऽवधारणे" इति। स्वाप्नसममिति पाठे स्वाप्नपदार्थवत् अनित्यमस्वतन्त्रमिदं अत एव तन्नियामकेन स्वतन्त्रेण परमनित्येन भवितव्यमिति विचक्ष्महे इति भावः।।३६।।

**रा०कृ०** हे तात! इदं विश्वं प्रति यथा येन प्रकारेण अनुपृच्छसि प्रश्नमकरोः तथा इति प्रागुक्तरीत्या ते तव अभिहितं कथितम्। सदसदात्मकं स्थूलसूक्ष्मात्मकं किञ्चिदपि वस्तु यदस्ति तत् भगवतोऽन्यत् भिन्नं न भाव्यं भगवतो भिन्नत्वेन त्वया नानुसन्धेयमिति भावः।।३२।।

हे अङ्ग! हे नारद! यत् यस्मात् कारणात् मे मम औत्कण्ठ्यवता प्रेमोद्रेकवता हृदा हृदयेन हरिः धृतः ध्यातः तस्मात् मे भारती वाणी मृषा अयथार्था क्वचित् - नोपलक्ष्यते, मे मनसो गतिः सङ्कल्पात्मिका क्वचिदपि विषये न वै मृषा भवति मे हृषीकाणीन्द्रियाणि क्वचिदपि असत्पथे निन्द्यमार्गे नैव पतन्ति।

"नान्यद्भगवतः किञ्चिद्भाव्यं सदसदात्मकम्" (भाग.2-6-32) इत्यव्यवहितपूर्वश्लोकोक्तरीत्या विश्वस्मिन् भगवन्मयतामनुसन्दधानः पुरुषः पुरःस्थितेऽपि जने भगवन्मयताऽऽकलनयाऽसत्यं वक्तुं न प्रभवति। एवं सत्यस्वरूपस्य भगवतोऽनुसन्धानेन तस्य मनःसङ्कल्पोऽपि यथार्थ एव भवति, तथा च मनसि सत्यसङ्कल्पे वशीकृतमनसस्तस्य सर्वाणीन्द्रियाणि स्वत एवासत्पथान्निवर्तन्ते। तदेवमत्र विश्वमयहरिप्रेमिणो भागवतस्य माहात्म्यं सुचितम्।।३३।।

सः भगवन्नाभिकमलादुत्पन्नः समाम्नायमयः वेदमयः तपोमयः तपोदेहः अथवा तपोनिष्ठः प्रजापतीनां कश्यपादीनां अभिवन्दितो नमस्कृतः पतिः एवंभूतोऽहं निपुणं साङ्गं योगं आस्थाय आश्रित्य समाहितः सावधानोऽपि च सन् यतः पुरुषात् आत्मसम्भवः आत्मनो मम जन्म अभवत् तं नाध्यगच्छं न ज्ञातवानस्मि। एवं स्वान् जातमात्रानेव जानन्तो जीवा अपि निजोत्पत्तिर्यथा, यत इत्यादिकं नाभिजानन्तीति व्यज्यते।।३४।।

समीयुषां शरणागतानां भवच्छिदं जननमरणादि संसारदुःखनिवर्तकं, स्वस्त्ययनं इह लोके कलत्रपुत्रगेहादिसुखकरं सुमङ्गलं, परत्र परमानन्दप्रदं तच्चरणं तस्य भगवतश्चरणं अहं नतोऽस्मि। नभः आकाशं यथा स्वान्तं स्वस्य अन्तं सुपर्यगात् स्म परिहृत्य आसीत् स्वावधिं न प्राप्तवदिति यावत्, तथा यो हि भगवान् आत्ममायाविभवं पर्यगात् न प्राप्तवान् अथ तस्य मायाविभवं अपरे ब्रह्मादयः कुतः कथं वा, जानीयुरिति शेषः।।३५।।

यद्दतां यस्य भगवतः यथार्थरूपां गतिं स्वरूपं नाहं वेद ब्रह्माऽहं न जानामि न यूयं विदुः नारदसनकादयो भवन्तो न जानन्ति न वामदेवो महादेवश्च न जानाति। अपरे सुराः देवाः किमुत!

न जनन्तीति किमु वक्तव्यम्? तन्मायया तस्य भगवतो मायया विनिर्मितं इदं च जगदपि मोहितबुद्धयः, वयमिति शेषः। आत्मसमं स्वमत्यनुरूपमेव विचक्ष्महे जानीमः न तु परमार्थतः इति भावः।।३६।।

**यस्यावतारकर्माणि गायन्ति ह्यस्मदादयः।**
**न यं विदंन्ति[1] तत्त्वेन तस्मै भगवते नमः।।३७।।**

**स एष आद्यः पुरुषः कल्पे कल्पे सृजत्यजः[2]।**
**आत्मा[3]ऽऽत्मन्यात्मनाऽऽत्मानं संयच्छति[4] च पाति च।।३८।।**

**विशुद्धं केवलं ज्ञानं प्रत्यक् सम्यगवस्थितम्।**
**सत्यं पूर्णमनाद्यन्तं निर्गुणं नित्यमद्वयम्।।३९।।**

**ऋषे[5] विदन्ति[6] मुनयः[7] प्रशान्तात्मेन्द्रियाशयाः।**
**यदा तदेवा[8]सत्तर्कैस्तिरोधीयेत विप्लुतम्।।४०।।**

**श्रीध०** ननु सर्वेऽपि तं वर्णयन्तो दृश्यन्ते तत्राऽऽह - **यस्येति**।।३७।।

अवतारकर्माणि[9] संक्षेपतो दर्शयति - **स** इति। स एष आद्यो भगवान् यैः[10] पुरुषावतारः सन् सृष्ट्यादिकं[11] करोति। आत्मा[12] आत्मनि आत्मना आत्मानं इति कर्ता अधिकरणं साधनं कर्म च स्वयमेवेत्यर्थः। पुरुषावतार[13]सृष्ट्यादीनि[14] च[15] कर्माणीति संक्षेपोक्तिः ।।३८।।

न यं विदंन्ति[16] तत्त्वेनेत्युक्तं किं तत्तत्त्वम्[17]इत्यपेक्षायामाह - **विशुद्धमिति**। ज्ञानं केवलं सत्यं तत्त्वम्[18]। तत्र[19] घटाद्याकारवृत्तिज्ञानव्यवच्छेदार्थं विशेषणानि। विशुद्धं विषयाकारशून्यम्। यतः प्रत्यक् सर्वान्तरम् अत एव सम्यक् सन्देहादिरहितम् अवस्थितम्। स्थिरं यतो निर्गुणम्। गुणकार्यं हि गुणव्यतिरेका[20]च्चञ्चलं भवति। यद्यपि वृत्तिज्ञानमपि स्वरूपज्ञानमेवेति न चाञ्चल्यादिदोषयुक्तं तथाऽप्यन्तःकरणवृत्तिदोषैस्तथा तथा भातीति[21] व्यवच्छिद्यते। एभिरेव विशेषणैः तत्सत्यत्वमपि[22] समर्थितम्। किञ्च यद्विकारवत्तदसत्यं दृष्टम्। न चास्य जन्मादयः षड्विकाराः सन्तीत्याह। अनाद्यन्तं जन्मनाशरहितम्।

---

1. H.M.Ma.V.W. °न्द ° 2. AF.GF. ऽसृजत्प्रजाः 3. H.V. °त्मन्येवा ° 4. AF.GF. समं गच्छति; B.I.M.Ma. स संयच्छति 5. M.Ma. °तं 6. H.M.Ma.V.W. °न्द° 7. W. °कव° 8. M.Ma. °दै° 9. B. adds तु 10. V. Omits यः 11. A.B. Omit कं 12. H.V. आत्मन्यात्मानमात्मना इति कर्त्राद्याधिकरणं 13. B. °रव्योऽव° 14. H.V. °दिकर्मा 15. B. Omits च 16. H.V. °न्द° 17. H. Omits तत् 18. H.V. Omit तत्त्वम् 19. A.B. Omit तत्र 20. A.B. °कराञ्च 21. A.B. भव° 22. A.B. Omit तत्

अत एव जन्मानन्तरास्तित्त्वलक्षणोऽपि विकारो नास्ति वृद्धि[1]विपरिणामापक्षयाश्च न सन्ति। यतः पूर्णम्। सर्वत्र हेतुः नित्यमद्वयम्। नित्यं सर्वदा द्वैतप्रतीतिसमयेऽपि परमार्थतोऽद्वयमिति।।३९।।

अ[2]त्र विद्वदनुभवं प्रमाणयति **ऋषे** इति। हे ऋषे! नारद! प्रशान्तात्मेन्द्रियाशयाः प्रसन्नदेहेन्द्रिय-मनसो यदा[3] भवन्ति तदा[4] विदन्ति अन्यदा[5] तदज्ञाने कारणमाह। यदा तु तदेव प्रकाशमानमेवासता तर्कैर्विप्लुतं स्यात्तदा तिरोधीयतेति।।४०।।

**वीर०** तर्हि मायातरणे कः उपायः इत्यत आह **यस्येति**। यस्य भगवतो अवताराणां कर्माणि चेष्टितान्यस्मदादयश्चतुर्मुखादयो[6] गायन्ति यं तत्त्वेन याथात्म्येन न वि[7]न्दन्ति न जानन्ति किन्तु तस्मै भगवते नमस्कुर्वन्ति तस्य गुणकर्मानुकीर्तनमेव मायातरणोपाय इत्यभिप्रायः।।३७।।

केऽवताराः? कानि चेष्टितानि च[8] यदनुकीर्तनेन माया[9] तरन्ति इत्याशङ्कायामवतारांस्तत्कर्माणि च वक्ष्यन् यद्रूपमित्यादि प्रश्नानामुत्तराण्युपसंहरति - **स एष** इति। अजः कर्माधीनजन्मरहितः एष आद्यः कारणभूतः परमपुरुषः कल्पे कल्पे प्रतिकल्पमात्मन्येवाधारे आत्मना उपकरणभूतेन आत्मानमुपादान भूतम् आत्मैव कर्ता सृजति संयच्छति संहरति पाति च।।३८।।

नन्वयं जगद्व्यापारो भगवतः किं कर्माधीन इत्याशङ्क्य नेत्याह - **विशुद्धमिति**। पुण्यपापरूप कर्मरहितमतो न जगद्व्यापारः कर्माधीन इत्यर्थः। एवञ्च कर्माधीनव्यापारजीवस्वरूपाद्वैलक्षण्यमुक्तं भवति। जीवविलक्षणं चेत्तत्किं जडमित्यतआह - केवलं ज्ञानं क्वचिदप्यजडमित्यर्थः। तर्हि किं घटपटाद्याकार वृत्तिज्ञानमित्यत आह - प्रत्यक् स्वस्मै भासमानम्। ननु जीवोऽप्येवंरूपोऽत आह - सम्यगवस्थित-मर्थान्तरानपेक्षस्थितिम्। जीवस्तु परमात्मधार्य इत्यभिप्रायः। अन्यानपि चेतनाचेतनविलक्षणाकारानाह-सत्यं स्वरूपतो धर्मतश्च निर्विकारमनेन स्वरूपतो विकार्यचेतनद्रव्यं स्वभावतो विकारी चेतनश्च। व्यावृत्तः पूर्णमवाप्तसमस्तकामं निर्गुणं सत्त्वादिरहितमनाद्यन्तमुत्पत्तिना[10]शरहितमत एव नित्यं का[11]ला-द्यनवच्छिन्नमद्वयं समाभ्यधिकरहितम्। एते यथासम्भवं चेतानाचेतनव्यावर्तकत्वेनानुसन्धेयाः।।३९।।

अत्र विद्वदनुभवं प्रमाणयति - **ऋषे** इति। हे ऋषे! नारद! आत्मा अन्तःकरणमाशयो वासना प्रशान्ता आत्मेन्द्रियाशया येषां ते कवयः। त[12]त् उक्तविधं परमात्मस्वरूपं जानन्ति। कवयः समीचीनतर्कैः विविच्य तत्स्वरूपं चेतनाचेतनविलक्षणं शोधयन्ति। कुतर्कैर्दुर्ज्ञेयत्वमाह - असत्तर्कैरसतां तर्कैः, सतामेव वा हेतुवादैः यदा विप्लुतमुपद्रुतं स्यात्तदा तिरोधीयेतेत्यर्थः।।४०।।

---

1. H.V. Omit वि 2. H.V. Omit अत्र......यति। 3. H.V. °था 4. H.V. Omit तदा विदन्ति 5. H.V. °था 6. W. adds ये 7. B. वि° 8. W. Omits च 9. W. °या तीर्यते 10. W. adds वि 11. W. °लन° 12. A.B. Omit तत्

**विज०** इतोऽपि तत्स्वरूपसाकल्यज्ञानमेव निषिध्यते न तु तद्विषयज्ञानमात्रम्, अन्यथा वागिन्द्रियप्रवृत्तिस्तद्विषया नोपपद्यते सा[1] चास्ति तस्मादुक्तं युक्तमिति भावेनाह - **यस्येति**। एकदेशज्ञानमपि स्वातन्त्र्येणेत्यभिमाने तदपि न स्यादिति भावेन पौनःपुन्येन नमनमिति भावः।।३७।।

युक्तं चान्तस्थरूपबाहुल्यं तन्नियमनलक्षणकर्म चान्तरेणान्यावताराणां तत्कार्याणाञ्च[2] सद्भावे किं प्रमाणमित्याशङ्क्य संक्षिप्य तदाह - **स एष** इति। योऽस्मदादिभिः[3] सर्वैः साकल्येनाविज्ञातः स एष पुरुषः श्रीनारायणः आत्मा स्वयमेव कल्पे कल्पे आत्मना स्वेच्छया नियतमनसाऽऽत्मनि स्वाधारतयाऽऽत्मानं मत्स्यादिरूपेण सृजति दीपाद्दीपान्तरवद्व्यक्तं करोति। देवदत्तवन्न जायत इत्यज इति, आद्यः उपजीव्यः इति व्यक्तीकरणम्। उपजीव्यत्वमेवाह - स संयच्छतीति। तैरवतारैः देवादिस्वजनं पाति हयग्रीवादिदैत्यान् संयच्छति। चशब्दः उक्तार्थसमुच्चये व्यासाद्यवतारान्तरसूचने च वर्तते। तथा च व्यासाद्यवतारैर्मणिमदादितामसजनवचनेन तिरोहितस्वरूपं शास्त्रप्रवर्तनेन प्रकाशयतीति ज्ञायते। तथा चोक्तं "स्वयमेव स्वरूपाणि मत्स्यकूर्मादिकान्यजः। स्वात्मन्येवेच्छया सृष्ट्वा तैर्देवादीन्प्रपात्यसौ" इत्यादि।।३८।।

शास्त्रतः कीदृशं प्रकाशितमत्राह **विशुद्धमिति**। विशुद्धं निर्दोषत्वात् केवलमद्वितीयम्। ज्ञानं विषयनिरपेक्षसंविद्रूपम्। प्रत्यक् सर्वेषामन्तरम्[4]भिमुखत्वेन स्थितम्। स्वतः शुद्धस्यापि परतो दोषित्वं[5] स्यादित्यतः सम्यगवस्थितं दुष्टांशरहितत्वात् सत्यं निर्दुःखनित्यनिरतिशयानन्दानुभवरूपम्। पूर्णं देशतः कालतो गुणतश्चापरिच्छिन्नम्। अनाद्यन्तमादिविनाशवर्जितम्। निर्गुणं सत्त्वादिगुणरहितम्। अत एव नित्यं परिणामस्वभाववर्जितम्, अद्वयं स्वगतभेदवर्जितम्।।३९।।

स्वतोविकाराभावेऽपि निमित्तेन स्यादित्यतः ऋतं शश्वदेकप्रकारम्। तदुक्तम् - "ऋतं तदात्मना ज्ञप्तेः सत्त्वं साधुत्वतः परम्" इत्यादि। एतज्ज्ञानस्य मोक्षैकफलहेतुत्वादिदमेव शास्त्रेण प्रकाशितं नान्यदित्याशयेनाह **विन्दन्तीति**। प्रकर्षेण शान्ता मङ्गलीभूतात्मानः श्रोत्रादीन्द्रियाण्याशयो बुद्धिर्येषान्ते तथोक्ताः। यदा भगवदेकनिष्ठया निर्मलीभूतमनआदीन्दियप्रवृत्तयो मुनयः सर्वज्ञा ब्रह्मादय एवंविधगुणोपेतं ब्रह्म अपरोक्षीकृत्य विन्दन्ति स्वानन्दं लभन्ते। तदैवासत्तर्कैर्विमतं मिथ्यादृश्यत्वादिकैर्विप्लुतमुपहतमन्यथाभूतं[6] बाह्यान्तःकरणं संसारबीजभूतं तिरोधीयेत दग्धबीजवद्भवतीत्यन्वयः। अनेनावतारकर्मकीर्तनश्रवणादीनां किं फलमिति चोद्यमपि निरस्तम्। किञ्च मूलरूपस्य यादृशं रूपं, यादृशं कर्म, यादृशो गुणः तत्सर्वमवताराणामस्तीति। अतस्तत्स्वरूपत्वं युक्तमिति च ज्ञापितम्। यद्वाऽसत्तर्कैर्यदि गुणवान् तर्हि दोषवान्, यदि कर्ता तर्हि श्रान्तः स्यात्, देवदत्तादौ दृष्टत्वात् इत्यादिरूपैस्तिरोहितं विरुद्धत्वादिलक्षणं रूपं व्यासादिप्रणीतशास्त्रनिशितया बुद्ध्या यदा सम्यग् विन्दन्ति मुनयस्तदैव

1. Ma. या 2. M.Ma. °त्कर्म° 3. M.Ma. °मदा° 4. A. °राभि° 5. A. दुष्टं 6. B.M.Ma. °दिना

दोषित्वादिरूपं[1] तिरोधीयेत तत्तद्विषया बुद्धिर्निवर्तत इति। कदाऽवतारप्रसङ्ग इत्यतो[2] वा आह - स एष इति। यदा बौद्धाद्यसत्तर्कैर्विप्लुतं धर्मशास्त्रं तिरोधीयतेऽधर्मशास्त्रमुज्जृम्भते च तदाऽऽत्मानं सृजतीत्यन्वयः। कीदृशमात्मानमित्यत उक्तं विशुद्धमित्यादि। तत्र किं प्रमाणमत्राह - विन्दन्तीति। मत्स्याद्यवतारा विष्णोः स्वरूपांशाः इत्यत्र तेषां प्रत्यक्षं प्रमाणमवतारप्रसङ्गे चेत्यर्थः।।४०।।

**रा०कृ०** यस्य भगवतः अवतारकर्माणि अवताराणां मत्स्यकूर्मादीनां सम्बन्धीनि कर्माणि अस्मदादयः ब्रह्मादयो गायन्ति हि, किन्तु यं भगवन्तं तत्त्वेन याथार्थ्येन न विदन्ति न जानन्ति तस्मै भगवते नमः। एतेन ये तावत् मत्स्यकूर्मादयो जीवाः प्रायशो ज्ञानहीना इति विभाव्यन्ते तद्रूपेणापि भगवानवतरतीति भगवदन्तर्यामिता ज्ञाननिरपेक्षेति ज्ञानिनोऽज्ञानिनोऽप्यभिव्याप्य सोऽस्तीति तथा च अन्यथा अज्ञेयं तं तद्दिव्यचरितानुसन्धानेनैव ब्रह्मादयश्च जानन्तीति गम्यते।।३७।।

स एषः पूर्वोक्तः आद्यः अजः कर्मायत्तजन्मरहितो भगवान् पुरुषः पुरुषावतारस्सन् आत्मा स्वयमेव कर्ता आत्मनि अधिकरणभूते, आत्मना साधनभूतेन, आत्मानं कर्मभूतं जगदाकारेण कल्पे कल्पे प्रतिकल्पं सृजति पाति रक्षति संयच्छति च। अन्ते संहरति च। कर्ताऽधिकरणं, साधनं कर्म च स्वयं भगवानेवेति भावः।।३८।।

हे ऋषे! नारद! यदा मुनयः प्रशान्तात्मेन्द्रियाशयाः वशीकृतशरीरेन्द्रियमनसो भवन्ति तदा ते विशुद्धं निर्मलं केवलं एकं ज्ञानं ज्ञानस्वरूपं प्रत्यक् सर्वान्तर्यामिणं, सम्यक् अवस्थितं संशयादि-राहित्येन स्थितं सत्यं, सर्वकालवर्तिनं पूर्णं अखण्डाकारं अनाद्यन्तं जननमरणविरहितं निर्गुणं गुणरहितं नित्यं सर्वदा परिणामशून्यं अद्वयं सर्वात्मकतया सर्वाभेदेन स्वातिरिक्तवस्तुरहितम् एवम्भूतं वासुदेवाख्यं परंब्रह्म विदन्ति जानन्ति। किन्तु तदेव ब्रह्म असत्तर्कैः असतां ब्रह्मज्ञानविमुखानां कुतर्कैः विप्लुतं उपद्रुतं सत् तिरोधीयेत तिरोहितं भवति न ज्ञानविषयीभवतीत्यर्थः। अत्र प्रशान्तात्मेन्द्रियाशय-पदेन[3] भगवति सर्वसमर्पणं कृतवन्तो भागवताः व्यज्यन्ते। ते च मुनयो नित्यं मननशीलास्सन्तः विशुद्धत्वादिपूर्वोक्तलक्षण लक्षितं वासुदेवाख्यं परब्रह्म जानन्ति। यद्धि भगवत्तत्त्वज्ञानविमुखानां कुतर्कैरप्रकाशितं वर्तते। अपि च भागवतधर्ममपहाय भगवत्तत्त्वज्ञाननैरपेक्ष्येण समभ्यस्ताः सर्वा एव विद्याः अहङ्कारममकारादिदोषदूषिततर्ककर्कशाज्ञानायसपञ्जरेषु स्वाध्येतॄन् निगृह्य ब्रह्मानन्दपदप्रवेशा-नर्हान् विदधातीति गम्यते। तदुक्तं अध्यात्मरामायणे - "मद्भक्तिविमुखानान्तु शास्त्रगर्तेषु मुह्यताम्। न ज्ञानं न च मोक्षः स्यात् तेषां जन्मशतैरपि" इति।।३९,४०।।

---

1. A. द्दं 2. A. 'त आ' 3. M.Ma. 'येत

**आद्योऽवतारःपुरुषःपरस्य कालः स्वभावः सदसन्मनश्च।**
**द्रव्यं विकारो गुण इन्द्रियाणि विराट् स्वराट् स्थास्नु चरिष्णु भूम्नः।।४१।।**

**अहं भवो यज्ञ इमे प्रजेशा दक्षादयो ये भवदादयश्च।**
**स्वर्लोकपालाः खगलोकपाला नृलोकपालास्तललोकपालाः।।४२।।**

**गन्धर्वविद्याधरचारणेशा ये यक्षरक्षोरगनागनाथाः।**
**ये वा ऋषीणामृषभा[1]ः पितॄणां दैत्येन्द्रसिद्धेश्वरदानवेन्द्राः।**
**अन्ये च ये प्रेतपिशाचभूतकूष्माण्डयादोमृगपक्ष्य[2]धीशाः।।४३।।**

**यत्किं च लोके भगवन्महस्वदोजस्सहस्वद् बलवत् क्षमावत्।**
**श्रीह्रीविभूत्यात्मवदद्भु[3]तार्णं तत्त्वं[4] परं रूपव[5]दस्वरूपम्।।४४।।**

**प्राधान्यतो या[6]न्नृषं आम[7]नन्ति लीलावतारान् पुरुषस्य भूम्नः।**
**आपीयतां क[8]र्णकषायशोषाननुक्रमिष्ये त इमान् सुपेशा[9]न्।।४५।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
द्वितीयस्कन्धे षष्ठोऽध्यायः।।६।।

**श्रीध०** कल्पे कल्पे आत्मानं सृजतीत्युक्तं के तेऽस्य सृज्यमाना [10]अवतारास्तानवतारान् विस्तरेणाह - **आद्य** इत्यादि याव[11]दध्यायसमाप्ति। परस्य भूम्नः पुरुषः प्रकृतिप्रवर्तकः यः सहस्रशीर्षेत्युक्तो लीलाविग्रहः स आद्योऽवतारः। वक्ष्यति हि एकादशे - "भूतैर्यदा पञ्चभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन्। स्वांशेन[12] विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः" (भाग.11-4-3) इति [13]यथोक्तम् - "विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः। प्रथमं महतः [14]सृष्टिः द्वितीयन्त्वण्डसंस्थितम्। तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते" इति। यद्यपि सर्वेषामविशेषेणावतारत्वमुच्यते। तथाऽपि कालश्च स्वभावश्च सदसदिति कार्यकारणात्मिका प्रकृतिश्चैताः शक्तयः, मन आदीनि कार्याणि, ब्रह्मादयो गुणावताराः, दक्षादयो विभूतयः, इति [15]विवेक्तव्यम्। मनो महत्तत्वं द्रव्यं महाभूतानि, क्रमोऽत्र न

---

1. AF.GF. °षः 2. H.M.Ma.V.W. °श्च° 3. W. °थं 4. M.Ma. °तत्प° 5. W. °तस्व° 6. M.Ma. °षय 7. W. °वद° 8. M.Ma. °र्म°
9. °शलान् 10. B. Omits अवताराः 11. A. °वत्स° 12. H.V. निविष्टः 13. H.V. तत्र तथाचोक्तम् 14. A. स्रष्टृ° 15. H.V. वक्त°

सविवक्षितः। विकारोऽहङ्कारः। गुणः सत्त्वादिः। विराट् समिष्टिशरीरम्। स्वराट् वैराजः। स्थास्नु स्थावरम्। चरिष्णु जङ्गमं च[1] व्यष्टिशरीरम्।।४१।।

अथवा[2] किं बहुना? संक्षेपेण शृणु - **अहमिति**। अहं ब्रह्मा, भवो रुद्रः, यज्ञो विष्णुः, दक्षादयो य इमे प्रजेशाः तल्लोकपालाः पातालाद्यधिपतयः।।४२।।

**गन्धर्वेति**। गन्धर्वादीनामीशाः यक्षादीनां नाथाः। रक्षोरगेति सन्धिरार्षः। ऋषीणां पितॄणां च श्रेष्ठाः, प्रेतादीनामधीशाः।।४३।।

**यदिति**। किं बहुना? यत्किञ्चिद्भगवदादि तत्सर्वं परमेव तत्त्वमित्यन्वयः। भगवदैश्वर्ययुक्तं महस्वत्तेजोयुक्तम् औजस्[3]सहस्वत् ओजः इन्द्रियशक्तिः सहः मनश्शक्तिः तद्युक्तं, बलं दार्ढ्यं[4] तद्युक्तम्[5], श्रीः शोभा, ह्रीः अकर्मजुगुप्सा, विभूतिः सम्पत्तिः, आत्मा बुद्धिस्तद्युक्तम्। अर्णो वर्णः अद्भुतार्णमाश्चर्य-वर्णमित्यर्थः। रूपवत्[6] अस्वरूपम् रूपवत् अरूपं[7] च यत् तत्सर्वं परमेव तत्त्वं तद्विभूतिरित्यर्थः।।४४।।

शुद्धसत्त्वावतारान्वक्तुमाह - **प्राधान्यत** इति। असत्कथाश्रवणैर्ये कर्णयोः कषायाः मलास्तान् शोषयन्तीति तथा तान्। सुपेशान् सुपेशलान्[8] सुन्दरान्। लकारलोपस्त्वार्षः[9]। हे ऋषे! नारद[10]! ते[11] तुभ्यमनुक्रमिष्ये तदनुक्रमणामृतं त्वया आपीयतामित्यर्थः। यद्वा[12] आपीयतामिति शत्रन्तम्[13] आपिबतां कर्णकषायशोषानित्यर्थः।।४५।।

इति श्रीमद्भागवते द्वितीयस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां षष्ठोऽध्यायः।।६।।

**वीर०** अथावतारांस्तत्कर्माणि च विवक्षुः आदिमावतारमाह[14] - **आद्य** इति। पुरुषो विराट् पुरुषः परस्य विष्णोः आद्योऽवतार इत्यर्थः। आद्यत्वं मत्स्यकूर्माद्यपेक्षया। अस्य विभूतीराह काल इत्यादिभिः। कालादयो रूपवतः स्वरूपमित्युत्तरेणान्वयः। रूपवतोऽकर्मकृतरूपस्य स्वरूपं स्वीयं रूपं शरीरं कालादयस्तन्नियाम्यवर्गरूपविभूतिरिति परं तत्त्वं कालादीनां परं याथात्म्यमित्यर्थः। स्वभावः प्रकृतिगतपरिणामस्वभावः सदसच्चेतनमचेतनं स्थूलं सूक्ष्मं वा द्रव्यं पृथिव्यादिविकारो महदहङ्कारादिः

---

1. H.V. Omit च 2. A.B. Omit किं बहु ......श्रृणु। 3. A.B. सहसीइन्द्रिय मनःशक्तीतद्यु" 4. A. क्ष्यं 5. A. Omits तद्युक्तं 6. A. रूपमेव स्वरूपम्। रूपवत् प्रशस्तरूपयुक्तम्।; B. रूपमेवस्वङरूपम् 7. B. अस्वरूपं 8. A.H.V. Omit सुपेशलान् 9. A. "ह्रा" 10. A.B. Omit नारद 11. H.V. Omit ते 12. H.V. Omit यद्वा 13. H.V. add वा 14. W. "मम"

गुणः सत्त्वादिः, इन्द्रियाणि ज्ञानकर्मात्मकानि, विरांडन्तरिक्षं, स्वराट् स्वर्गः, "अयं लोकस्तुवै सम्राडन्तरिक्षं विराट् स्मृतम्, स्वराडसौ स्मृतो लोकः" इत्युक्तेः। स्थास्नु स्थावरं चरिष्णु जङ्गमं भूम्नो भूमवतो भगवतः।।४१।।

किं बहुना? संक्षेपेण शृण्वित्याह - **अहमिति**। अहं ब्रह्मा, भवो रुद्रः, यज्ञो विष्णुः यद्यप्ययं विभूतिमध्ये पठितस्तथाऽपि न विभूतिरर्थान्तराभावात्। पालनाधिकृतविष्णववतारगतपालनानुगुणं यत्सामर्थ्यं तस्य विभूतित्वद्योतनाय यज्ञोऽपि विभूतिषु पठितः। विभूतित्वं नाम नियाम्यत्वम्, सर्वभूतानां प्रवर्तनरूपम्। नियमनमात्मतयाऽवस्थानात्। आत्मा हि नाम शरीरस्य सर्वात्मना आधारो नियन्ता शेषी च। भगवतः स्वविभूतिभूतेषु सर्वेष्वात्मतयाऽवस्थानमेव क्वचित् तत्तच्छब्दसामानाधिकरण्यनिर्देशहेतुः भगवत्यात्मतयाऽवस्थिते हि सर्वे शब्दाः तस्मिन्नेव पर्यवस्यन्ति, यथा - देवमनुष्यपक्षिवृक्षादयः शब्दाः शरीराणि प्रतिपादयन्तस्तत्तदात्मनि पर्यवस्यन्ति। दक्षादयो ये इमे प्रजेशाः भवदादयो नारदप्रभृतयः सनकादयः खगलोकपालाः पक्षिश्रेष्ठाः, तल्लोकपालाः पातालेश्वराः।।४२।।

गन्धर्वादीनामीशाः, उरगाः सर्पाः, नागाः गजाः, यक्षादीनां ये नाथाः। रक्षोरगेति सन्धिरार्षः। ऋषीणां पितॄणां च[1] ये श्रेष्ठा, दैत्या दितिपुत्राः तेषामिन्द्राः[2] अन्ये च ये[3] प्रेतादीनामधीशाः।।४३।।

किं बहुना - **यदिति**। यत्किञ्चित् भगवदादि तत्सर्वं रूपवतः स्वरूपमित्यन्वयः। भगवत् ऐश्वर्यवत् महस्वत्, तेजस्वत्, औजस्वत्, उत्साहवत्, सहस्वत्, वेगवत्, धैर्यवत्, बलवत् धारणासामर्थ्यवत्, क्षमावत्, सहनवत्, श्रीः शोभा, ह्रीर्लज्जा, विभूतिर्नियाम्यवर्गः आत्मा बुद्धिः तद्युक्तम्, अद्भुतार्थमद्भुतशब्दवाच्यम्, एतत्सर्वं रूपवतः प्रशंसायां मतुप्। अकर्मकृत स्वेच्छोपात्तदिव्यमङ्गलास्पदविग्रहस्य भगवतो विराट् पुरुषस्य स्वीया विभूतिरित्यर्थः।।४४।।

अवताराणामानन्त्यात्तत्र प्रसिद्धान् वक्ष्यामीत्याह - **प्राधान्यत** इति। असत्कथाश्रवणैर्ये कर्णयोः कषायाः मलाः[4] तान् शोषयन्तीति तथा तान् सुपेशान् सुन्दरान्। हे ऋषे! आवदन्ति,.मुनय इति शेषः। ऋषय इति पाठे ऋषयो वदन्तीत्यन्वयः। तान् ते तुभ्यमनुक्रमिष्ये क्रमेण वर्णयिष्यामि, तदनु श्रवणामृतं[5] त्वया आपीयताम् यद्वा आपीयतामिति शत्रन्तमपिबतां कर्णकषायशोषानित्यर्थः।।४५।।

इति श्रीमद्भागवते द्वितीयस्कन्धे
श्रीवीरराघवविदुषा लिखितायां श्रीभागवतचन्द्रचन्द्रिकायां
व्याख्यायां षष्ठोऽध्यायः।।६।।

1. A.B. Omit च 2. W. Omits तेषामिन्द्राः 3. W. Omits अन्ये च ये 4. A.B. Omit मलाः 5. A. 'क्रम'; B. क्रम

**विज०** तत्र प्रथमावतारः क इत्याशङ्क्य तमाह - **आद्य** इति। परस्य परायणस्य हरेराद्योऽवतारः **पुरुष** इति, वदन्तीति शेषः। प्रलयोदके शयानः महाकृतिः नराणामाश्रयत्वेन नारायणः शून्यनामाऽभूत्। सिसृक्षोः तस्य दीपाद्दीपान्तरं यथा, तथा द्वितीयं रूपमभूत्। तत्तत्त्वविदो जनाः तद्रूपं नाम्ना पुरष इति संवदन्ते। स पुरुषः प्रकृतिनाम्न्या रमायाः द्वितीये रूपे स्ववीर्यमाधत्त। तस्माद्वीर्यात् नाम्ना महानभूत्, यं हिरण्यगर्भः पुरुष इति च सङ्गिरन्ते, तत्पत्नी श्रद्धेति। तौ प्रलये स्थूलशरीररहितत्त्वात् विश्लिष्टौ पुरुषाद्देहं प्राप्य संयोगं कृत्वा जगदङ्कुरं महत्तत्त्वं पुनः उदभावयताम् स्वस्यैव पुत्रतां यातात् महत्तत्त्वात् अहंतत्त्वमजीजनत् इति इतिहासमाचक्षते। "यश्शेते प्रलये विष्णुः शून्यनामा महाकृतिः" इत्यादिवाक्यसिद्धं सन्निधानविशेषाधिष्ठानत्वात् अंशत्वं ब्रह्मादीनां न साक्षादिति इममर्थं स्पष्टमाह - **काल** इत्यादिना। यद्यत्कालाद्यद्भुतार्णान्तम्। तत् परं विशिष्टं सर्वं नारायणस्य रूपवत् प्रतिमावत् अधिष्ठानम्। तत्प्रीतिहेतुत्वात् स्वतोऽस्वरूपं, प्राकृतत्वात् "पुरुषाद्या हरे रूपं ब्रह्माद्यास्तत्प्रियाः स्मृताः। प्रधानत्वेन सर्वस्मात् मत्स्यकूर्मादयो हरेः। अवताराः श्रुतौ ख्याताः स एवैते ततः स्मृताः" इत्यादेः कालः परमाण्वादि परममहदन्तः, स्वभावो वस्तुस्वभावः सत् प्राणः असत् सूक्ष्मत्वान्मूल- प्रकृतिः, मनो मनस्तत्त्वम्। "कालो वस्तुस्वभावश्च प्रकृतिः प्राण एव च"। इत्यादेः, "सदिति प्राणः" इति श्रुतेश्च। द्रव्यं पञ्चभूतानि विकारोऽण्डं, गुणः सत्त्वादिः, विराट् गरुडः, स्वराट् इन्द्रः। "द्रव्यं तु पञ्चभूतानि विकारोऽण्डमुदाहृतम्। विराजं गरुडं प्राहुः स्वराडिन्द्र उदाहृतः" इति च। स्थास्नु चरिष्णु स्थावरं जङ्गमं च। भूम्न इत्यनेन स्थावरादिव्यापित्वं युक्तमित्याह।।४१।।

**अहमिति**। अहं चतुर्मुखः। भवः शर्वः। यज्ञो यज्ञाभिमानी रुद्रच्छिन्नः। "यज्ञशब्दोदितौ द्वौ तु देवौ लोकपुरस्कृतौ" इत्यादेः भवदादयः परमहंसाः। स्वर्लोकपालाः इन्द्रादयः। खगलोकपालाः गरुडादयः। नृलोकपालाः प्रियव्रतादयः। तललोकपालाः अनन्तबल्यादयः।।४२।।

गन्धर्वेशा विश्वावस्वादयः। विद्याधरेशाः चित्रकेत्वादयः।[1] चारणेशाः पुष्पदन्तादयः। यक्षनायकाः कुबेरादयः। रक्षोनाथाः निर्ऋत्यादयः उरगनाथाः वासुक्यादयः। नागनाथाः अनन्तादयः। पूर्वोक्तोऽनन्तः एककुण्डलः। ऋषीणामृषभाः वसिष्ठादयः पितॄणामृषभो यमः, दैत्येन्द्राः प्रह्लादादयः। सिद्धेशाः सनकादयः। दानवेन्द्राः वृषपर्वतादयः।।४३।।

प्रेतेशोऽपि यमः रूपान्तरविवक्षया पुनर्वचनं व्यासवासुदेववत्। पिशाचेशाः घण्टाकर्णादयः। भूतेशाः भैरवादयः। कूष्माण्डेशाः भृङ्गीरुक्मादयः। यादसामीशाः तिमिङ्गिलादयः। मृगाणामीशाः सिंहादयः। पशूनामीशाः नन्दिकेश्वरादयः। भगवत् यशोज्ञानादिमत्, महस्वत् स्वतः महत्त्ववत्, औजस्वत् अवष्ट-

---

1. A.B. Omit विद्याधरेशाः चित्रकेत्वादयः।

म्भवत् सहस्वत् सहनगुणवत्, बलवत् इच्छाकरणशक्तिमत्, क्षमावत् क्रोधसमुत्थितमत् ह्रीमत् योग्यलज्जावत्, श्रीमत् लक्षणोन्नाहं, विभूतिमत्, विशेषप्राप्तियोग्यतावत्। स्वतो महत्त्वाच्च महो विशेषप्राप्तिशक्तिताविभूतिः लक्षणोन्नाहा लक्ष्मीशब्देन भण्यत इति। आत्मवत् धृतिमत् मनोजयवद्वा, अद्भुतार्णम् आश्चर्यसमुद्रम्, "स्वेच्छयैषां विशिष्टत्वं कुरुते तत्तया स्मृतम्" इत्यतो मिथ्याविभूतित्वं प्रत्युक्तम्।।४४।।

पुरुषनामक एव स्वरूपांशावतारो नान्य इति शङ्कां परिहरन्निव तदवतारानुक्रमणं प्रतिजानीते- **प्राधान्यत** इति। ऋषयः ब्रह्मादिज्ञानिनः भूम्नः आनन्दादिगुणपूर्णस्य पुरुषस्य यान् लीलावतारान् आमनन्ति पठन्ति अभ्यासेनोपासते च, तान्, ते एव प्राधान्यतोऽनुक्रमिष्ये गणयिष्यामीत्यन्वयः। भवता तदनुक्रमणरसः कर्णपुटेन आपीयताम् अभिगम्यताम्। यद्वा, पीयतां गायतां ध्यायतां पश्यतां पिबतां जनानां कर्मकषायः देहारम्भहेतुः कर्माख्यरसः तस्य शोषो यैस्ते तथोक्ताः तान्। पेयत्वे गुणमाह - सुपेशलानिति। मधुरेभ्योऽप्यतिमधुरान् इमान् इति स्वमनसि प्रकाशितत्वेन कालक्षेपं क्षिपति।।४५।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
द्वितीयस्कन्धे षष्ठोऽध्यायः।।६।।

**रा०कृ०** भूम्नः सर्वव्यापकस्य परस्य परमपुरुषस्य आद्योऽवतारः पुरुषः पुरुषसूक्तोक्तसहस्रशीर्षत्वादिसहितः प्रपञ्चदेहः पुरुषः, कालः स्वभावः, सदसत् कार्यकारणात्मिका प्रकृतिश्चैताः शक्तयः। मनश्च महत्तत्वं च द्रव्यं पृथिव्यादिमहाभूतपञ्चकं विकारोऽहङ्कारः, गुणः सत्त्वादिः, इन्द्रियाणि एकादशेन्द्रियाणि; विराट् ब्रह्माण्डात्मको देहः, स्वराट् विराडभिमानी जीवः, स्थास्नु स्थावरं चरिष्णु जङ्गमं इत्येतानि कार्याणि। अहं ब्रह्मा, भवो रुद्रः, यज्ञो विष्णुः इत्येते गुणावताराः। इमे दक्षादयः प्रजेशाः प्रजापतयः भवदादयश्च नारदादयो भक्ताश्च स्वर्लोकपालाः इन्द्रादयः, खगलोकपालाः गरुडादयः, नृलोकपालाः मान्धातृप्रभृतयो राजानः, तल्लोकपालाः पातालाद्यधिपतयः, अनन्तवासुकिप्रभृतयः गन्धर्वविद्याधर चारणेशाः गन्धर्वादीनां ईशाः ये यक्षरक्षोरगनागनाथाः यक्षादीनां नाथाः ये वा ऋषीणां पितॄणां च ऋषभाः श्रेष्ठाः, ये च दैत्येन्द्रसिद्धेश्वरदानवेन्द्राः अन्ये च ये प्रेतपिशाचभूतकूष्माण्डयादोमृगपश्वधीशाः प्रेतादीनां अधीशाः, किं च लोके यत् भगवत् ऐश्वर्यवत् महस्वत् तेजःसहितं ओजस्सहस्वत् कान्तिमत् वेगवत्, बलवत् शरीरशक्तिमत् क्षमावत् परापराधसहनशीलवत्। श्रीह्रीविभूत्यात्मवत् श्रीः शोभा तद्वत्, ह्रीः अकर्माचारणशङ्का तद्वत्, विभूतिः सम्पत्तिः तद्वत्। आत्मा यथार्थ बुद्धिः तद्वत्, अद्भुतार्णं विचित्रवर्णं वस्तु। परं तत्त्वं रूपवत् रूपसहितम्। अस्वरूपं रूपरहितम्। एवं सर्वमपि वस्तु भगवत्स्वरूपमिति शेषः। हे ऋषे! नारद! भूम्नः पुरुषस्य पुरुषोत्तमस्य

1. A.B. Omit विशेषप्राप्ति......महो

प्राधान्यतो यान् लीलाऽवतारान् आमनन्ति विज्ञाः कथयन्ति कर्णकषायशोषान् स्वकीयकथाः श्रुण्वतां कर्णदोषनिवारकान् सुपेशान् सुमधुरान् तानिमान् लीलावतारान् ते तुभ्यं अनुक्रमिष्ये अनुक्रमेण कथयिष्यामि। आपीयतां तदिदं भगवल्लीलाकथाऽमृतं भवता आतृप्तेः पीयतामिति भावः।।

अत्र पुरुषसूक्तप्रतिपादितः सहस्रशीर्षत्वादिसहितः पुरुषो दशाङ्गुलः। दशसंख्या च एकेन सर्वान्तर्यामिणं तदुत्तरवर्तिना बिन्दुना प्रकृतिं च गमयन्ती प्रकृतिसहितस्य भगवतः सङ्केतो भवति। पञ्चभूतानि, मनोबुद्ध्यहङ्काराः माया, पुरुषश्चेति दश दशाङ्गुलपदेन सूच्यन्ते। द्रव्यशक्तिप्रज्ञामयलोकाभिव्याप्तस्य भगवतो दशाङ्गुलाः दशाहतैर्दशभिराहतास्सन्तः सहस्रसंख्याकाः भवन्ति। तदेवं भगवतस्सहस्रशीर्षत्वादिसंज्ञाऽन्वर्था भवति। कालस्वभावकार्यकारणप्रकृत्याख्यास्तिस्रश्शक्तयः वैष्णवतन्त्रेषु भगवतो भार्याः श्रीभूनीला इति शाक्ततन्त्रेषु च इच्छाज्ञानक्रियाशक्तय इति समभिवर्णिताः।।४१।।

दक्षादयो नव प्रजापतयो नवानामङ्कानां अधिदेवताः प्रजाः। अङ्केषु च प्रथमस्य द्वित्र्याद्यङ्कजनन दक्षत्वात् प्रथमस्य प्रजापतेर्दक्ष इत्यन्वर्था संज्ञा। एतैरेव प्रजापतिभिः जीवशरीरेषु द्रव्यानां संयोगवियोगौ जायेते। अयं च प्राचामाशयः प्रथमे नवाङ्काः सृष्ट्याधारभूताः इति पैथागरस् (PHYTHAGAROS) नामकस्य पाश्चात्यगणितशास्त्रविदुषो वचनेन संवदति। नारदसनकसनन्दनसनत्कुमार सनत्सुजाताख्याः ब्रह्ममानसपुत्राः केवलज्ञानमयमूर्तयः भक्तियोगाचार्याः मुमुक्षूणां साधकानां मनसि स्वसान्निध्यबलेन भक्तिस्फूर्तिमाधाय ऊर्ध्वलोकप्राप्तौ सहकारिणो भवन्ति।

स्वर्लोकपालाः इन्द्रादयः इन्द्रियाधिदेवताः प्रज्ञा। ते स्वप्रेरणया फलाभिसन्धिसहितानि सत्कर्माण्याचरतो जीवन् सौख्यदानेन निबध्नन्ति फलाभिसन्धिना जीवेष्वन्तर्यामिणो मोक्षदस्य भगवतो व्यवहितत्वात्। निष्कारणसत्कर्माचरणपरायणास्तु यज्ञेश्वराङ्गभूतेन्द्रियव्यापाराः इन्द्रादिभिस्सम्मानिताः साक्षात्कृतसर्वान्तर्यामिणो बन्धैर्विमुच्यन्ते।

खगलोकपालाः गरुडादयो मण्डलचारिणस्सन्तः परितो भानुमण्डलं ग्रहाणां गमनस्य, भूभ्रमणस्य सौरकुटुम्बपरिवर्तनस्य च सहकारिणो भवन्ति। तेषु अहोरात्ररूपपक्षद्वयवान् ब्रह्माण्डस्थितिहेतुभूतो भगवान् वैनतेयः सुपर्णाऽक्ष्यो गरुत्मान् स च अखण्डकालस्वरूपः। अत एव कालसूचकस्य सूर्यस्य अग्रयायी अरुणः गरुत्मदग्रज इति दिनरूपार्धशरीरत्वात् अनूरुरिति व्यपदिश्यते। विशिष्य दिवो नता भुवं स्पृशन्तीव दृश्यमाना कलाभिव्यक्तिहेतुभूता भूम्याकाशविभागरेखा च गरुडमाता विनता इति व्यवाह्रियते।

नृलोकपालपदेन सूर्यचन्द्रकिरणमुखेन भुवमवतीर्णाः नरलोकधर्मपालकाः मनुमान्धात्रादयः प्रज्ञामयाऽऽकृतयः कदाचित् स्वेच्छया पार्थिवरूपधारिणश्च प्रभवो लक्ष्यन्ते।

पातालाद्यधोलोकाः भूगोलान्तरे मानवशरीरकशेरुकायाः अधश्च वर्तन्ते। भूगोलेतु उत्तरध्रुवं आरभ्य दक्षिणध्रुवं यावत् व्याप्ता, सर्पाकृतिः कुण्डलिनी भूस्थितिहेतुभूता अनन्तशक्तिः अनन्तः आदिशेष इति च व्यपदिश्यते। अत एव अनन्तो भुवो भारं वहतीति पुराणेषु अभिवर्णितः वासुक्यादयस्तु दिवि ग्रहाणां मध्ये परस्पराकर्षणशक्तिमार्गाणां भुवि नदीप्रवाहानां प्राणिशरीरेषु रक्तनालादीनां च निर्माणे सहकारिणो भवन्ति।।४२।।

गानविद्यासङ्केताः गन्धर्वाः। तैरेव पाणिनां उच्छ्वासनिश्श्वासप्रवृत्तिः हृदयस्पन्दनं च निर्दिष्टार्थसाधनोपयोगिशब्दार्थसङ्घटनास्वरूपाः मन्त्रतन्त्रादिनानाविधकार्यसाधनप्रज्ञाप्रकाराश्च विद्याधरा तैरेव जीवानां कार्यसिद्धिः, प्राणिनां गमनागमनादिप्रवृत्तिप्रज्ञामयाचारणाः दृश्यमानप्रपञ्चोपयोगिनो निभृतं वर्तमानाः दैर्घ्यवैशाल्यघनतादिपरिमाणकोणादिधर्ममयाः साध्याः। पर्वतनितम्बेषु महावृक्षेषु निबिडगुल्मेषु विविक्तदेशेषु शिथिलालयेषु च पार्थिवदेहं विना वर्तमानाः प्रज्ञामयाः यक्षाः। सङ्घीभूतवृश्चिकक्रिमिकीटकादिमुखेनाहारं स्वीकुर्वन्तः ते स्वस्थितिविच्छेदकान् बुद्धिजीवान् जनान् त्रासयन्तः पीडयन्तोऽपि स्वैः सख्यं कुर्वतां मानवानां भारवहनादिगुरुतरकार्यनिर्वहणेन उपकारिणो भवन्ति। पितृवीर्यबिन्दुमूलकशरीरनिर्माणकारणभूताः जीवास्तित्वरक्षिणः स्थूलशरीरकोशास्तराधिदेवताः रक्षांसि। साधारणसरीसृपादयः उरगाः नागाश्च प्रसिद्धाः जीवपिण्डोत्पत्तिकारिणः बीजाङ्कुरोत्पत्तिकारिणश्च पितरः।

सायंसंध्यासमये गर्भधारणेच्छादितिरित्युच्यते। दितेर्जाताः जीवाः दैत्याः। सायंसंध्यायाः तमःप्रवर्तकत्वात् तमःप्रवृत्युन्मुखप्रज्ञामयाः विश्वश्रेयोदृष्टिमपहाय विनाशकरप्रवृत्तिसङ्कल्पकारकाश्च दैत्या इच्युच्यन्ते। दैत्येभ्यः ईषद्भिन्ना एव दानवाः। देहरहिताः जीवाः प्रेताः मांसऽशनाधीनजीवनाः शक्तयः पिशाचाः। देहरहिताः प्रकृतिशक्तयो भूतानि। कूष्माण्डादयः एतज्ञातीया एव। भौतिकतनुत्यागानन्तरं दहनादिसंस्कारविरहिता जीवाः भूतप्रेतादिरूपिणः सन्तः स्वसंस्काराधानविमुखान् भौतिक देहधारणकाले स्वापकृतश्च जनान् दैहिकमानसिकरोगाधानेन बाधन्ते।

एवमत्र वर्णिता आद्या जीवोत्पत्तिः महत्तत्त्वसृष्टिरित्युच्यते। अस्मिन् सन्दर्भे - "जलचरभूचरादीनामुत्पत्तिः परिणामक्रमनिष्पन्नेति तत्परिणामचरमावतारो नरः" इति पाश्चात्यजीवशास्त्रकोविदानामुक्तिः अनुभवविरुद्धेव भाति। कुत इति चेत् तेषां मतमनुसृत्य आद्यजीवेषु सर्वेषु युगपत् उत्तम

जीवपरिणामं प्राप्तेषु आद्यजीवानामत्यन्ताभावप्रयुक्तः सृष्ट्याभावः प्रसज्येत। तथा नैव दृश्यते प्राचीनभारतीय जीवशास्त्रेतु परिणामवादेऽभ्युपगतत्वेऽपि परिणामो निरन्तरभावी लक्ष्यते। परिणामदशाविशेषाः परिणामिनां जीवानां परिणामप्रयाणसर्गे शिबिरतुल्याः येषु सर्वेषु पथिका इव जीवाः सदा वर्तन्ते। ततश्च सर्वजीवपरिणामाः समकालीनाः सर्वकालिका एव नतु पाश्चात्य जीवशास्त्रमतानुसारेण क्रमानुगताः इति विभावनीयम्।।४३-४५।।

इति श्रीमद्भागवते द्वितियस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां
व्याख्यायां षष्ठोऽध्यायः।।६।।

oooOooo

# सप्तमोऽध्यायः

**ब्रह्मोवाच**

**यत्रोद्यतः क्षितितलोद्धरणाय बिभ्रत् क्रौडीं तनुं सकलयज्ञमयीमनन्तः।**
**अन्तर्महार्णव[1] उपागतमादिदैत्यं तं दंष्ट्रयाऽद्रिमिव वज्रधरो ददार।।१।।**

**जातो रुचेरजनयत् सु[2]यमा[3]न् सुयज्ञ आकूतिसूनुरम[4]रानथ दक्षिणायाम्।**
**लोकत्रयस्य महतीमहरद् यदार्तिं स्वायम्भुवेन मनुना हरिरित्यनूक्तः।।२।।**

**जज्ञे च कर्दमगृहे द्विजदेवहूत्यां स्त्रीभिस्समं नवभिरात्मगतिं स्वमात्रे।**
**ऊचे य[5]याऽऽत्मशमलं गुणसङ्गपङ्क[6]मस्मिन् विधूय कपिलस्[7]य गतिं प्रपेदे।।३।।**

**अत्रेरपत्यमभिकाङ्क्षत आह तुष्टो दत्तो मयाऽहमिति यद्भगवान् स दत्तः।**
**यत्पादपङ्कजपरागपवित्रदेहा योगर्द्धिमापुरु[8]भयीं यदु[9]हैहयाद्याः।।४।।**

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

स[10]प्तमे भगवल्लीलावतारा ब्रह्मणोदिताः। नारदाय तु तत्कर्मप्रयोजनगुणैः सह।।

**यत्रेति**। यत्र यदा क्षितितलोद्धरणार्थं वाराहीं तनुं बिभ्रत् सन् उद्यतोऽनन्तः तदा तं सुप्रसिद्धं हिरण्याक्षं दंष्ट्रया ददार।।१।।

यज्ञावतारमाह - **जात** इति। रुचेः प्रजापतेः सकाशात् तद्भार्यायाः आकूतेः सूनुः सु[11]तः सुयज्ञो नाम जातः। स च स्वभार्यायां दक्षिणायां सुयमा[12]ख्यान् देवानजनयत्। स एवेन्द्रः सन् यदा आर्तिमहरत्तदा पूर्वं सुयज्ञ इत्युक्तोऽपि अनु पश्चात् मनुना मातामहेन हरिरित्युक्तः। अनेन दे[13]वोत्पादनं लोकत्रयार्तिहरणं च त[14]स्य कर्म दर्शितम्। एवं सर्वत्रावतारः त[15]त्कर्म च ज्ञेयम्।।२।।

कपिलावतारमाह - **जज्ञे** इति। कर्द[16]मस्य प्रजापतेर्गृहे च[17] तद्भार्यायां देवहूत्यां जज्ञे नवभिः स्त्रीभिः भ[18]गिनीभिस्सह। स च स्वमात्रे आत्मगतिं ब्रह्मविद्यामुक्तवान्, ययाऽऽत्मगत्या साऽऽत्मनः शमलं मलिनीकरणं गुणसङ्गरूपं पङ्कमस्मिन्नेव जन्मनि विधूय कपिलस्य गतिं मुक्तिं प्राप्तवती।।३।।

---

1. H.V.W. °मु° 2. W. स य° 3. M.Ma. °शा: 4. V. °सु° 5. M.Ma. य आत्म° 6. H.V.W. °ङ्कं सा° 7. M.Ma. °स्स्व° 8. M.Ma. °रम° 9. V. है° 10. H.V. उच्यन्ते सप्तमे लीला° 11. B.H.V. Omit सुतः 12. H.V. °मान् 13. H.V. °वतो° 14. H.V. Omit तस्य 15. H.V. तत्तत्क° 16. H.V. °मप्र° 17. H.V. Omit च 18. H.V. Omit भगिनीभिः

दत्तात्रेयावतारमाह - **अत्रेरिति**। मया अहमेव तुभ्यं दत्त इति यद्यत आह ततः[1] स नाम्ना दत्तो जातः। स्वभक्तेभ्यो योगैश्वर्यादानन्दचरित्रं[2] दर्शयति। यस्य पादपङ्कजयोः परागः तेन पवित्राः देहाः येषां ते उभयीम् ऐहिकीमामुष्मिकीं च भुक्तिमुक्तिरूपां वा ।।४।।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचद्रिका

एवं प्रतिज्ञाय[3] अवतारान् तत्कर्माणि तत्तत्प्रयोजनानि तद्गुणांश्चाह - ब्रह्मा[4] - **यत्र** इत्यादिना। यत्र यदा काले क्षितितलोद्धरणार्थं समस्तयज्ञावयवां क्रौडीं वाराहीं तनुं बिभ्रत्सन्नुद्यतोऽनन्तोऽपरिच्छिन्न-स्वरूपभावो[5] भगवान् दंष्ट्रयाऽन्तर्महार्णवं समुद्रस्यान्तः उपागतं समागतं हिरण्याक्ष इति प्रसिद्धमादिदैत्यं दितेः प्रथमं पुत्रं ददार विदारितवान्। तत्र दृष्टान्तः वज्रधरः इन्द्रः अद्रिमेवेत्यर्थः।।१।।

सुयज्ञावतारमाह - **जातम्** इति। रुचेः प्रजापतेः सकाशात् तद्भार्यया आकूतेः सूनुः सुयज्ञो नाम जातः। स च स्वभार्यायां दक्षिणायां यमान्[6] यमाख्यगुणयुक्तान् यामान् देवानित्यर्थः। 'यज्ञस्य दक्षिणायां पुत्रा द्वादश जज्ञिरे। यामा इति समाख्याता' इति वचनात्, अजनयत् उत्पादयामास। आकूतेः सूनुः स एव इन्द्रः सन्नार्तिं यदा अहरत् तदा पूर्वं सुयज्ञ इत्युक्तोऽपि अनु पश्चान्मातामहेन मनुना हरिरित्युक्तः। अनेन देवोत्पादनं लोकत्रयार्तिहरणं च कर्म दर्शितम्। एवं सर्वत्रावतारः तत्कर्म च ज्ञेयम्।।२।।

कपिलावतारमाह - **जज्ञे** इति। कर्दमप्रजापतेः गृहे तद्भार्यायां देवहूत्यां हे द्विज! नारद नवभिः स्त्रीभिः भगिनीभिः सह जज्ञे जातः, स च स्वमात्रे आत्मगतिमात्मज्ञानं मोक्षमार्गं वा उक्तवान्। यया आत्मगत्या सा देवहूतिरात्मशमलं आत्मनो मलिनीकरणमस्मिन् देहे जातं गुणसङ्गपङ्कं गुणत्रयसङ्ग एव पङ्कः तं विधूय कपिलस्य गतिं कपिलोक्तगतिं प्राप्तवती।।३।।

दत्तात्रेयावतारमाह - **अत्रेः** इति। अपत्यं पुत्रम् अभिकाङ्क्षतोऽभिकाङ्क्षमाणादत्रेः[7][8] तुष्टः मयाऽहमेव तुभ्यं दत्त इति यद्यत आह, ततः स भगवान् नाम्ना दत्त इति जातः। स्वभक्तेभ्यो योगैश्वर्यदानं तच्चरित्रं दर्शयति। यस्य पादपङ्कजयोः परागः तेन पवित्रिताः देहा येषां ते हैहयाद्याः[9] सहस्रार्जुनप्रभृतयः यद्यतः दत्तात्रेयादुभयीमैहिकामुष्मिकीं[10] योगर्द्धिं योगैश्वर्यम् अणिमाद्यष्टैश्वर्यरूपामैहिकीं मुक्तिरूपामामुष्मिकीं च योगर्द्धिमापुः प्रापुः 'उः' प्रसिद्धौ यद्वा[11] यदुः ययातिपुत्र इति।।४।।

---

1. B. अतः 2. A.B. 'यदानं तच्चरितं; V. 'र्याद्यानन्दचरित्रं 3. A.B. 'ज्ञया 4. W. Omits ब्रह्मा 5. W. 'स्वभा' 6. A.B. Omit यमान् 7. W. Omits अभिकाङ्क्षतो 8. W. आकां' 9. W. हैहयप्रभु' 10. W. 'त्तादुभ' 11. W. Omits यद्वा.......इति

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अस्मिन्नध्याये प्रतिज्ञातवान् परमपुरुषस्य अवतारांस्तच्चरितानि[1] च वक्ति। तत्र प्रथमतो वराहकल्पमनुसृत्य वराहावतारं तत्कर्म चाऽऽह - **यत्रेति**। अत्र दंष्ट्राशब्देन सुदर्शनं गदा चोपलक्ष्यते। सकलयज्ञमयीं स्रुक्[2]स्रुवादिसर्वयज्ञोपकरणजननीं तदाधारां क्रौडीं क्रोडस्य वराहस्य विद्यमानां तनुं बिभ्रत् ब्रह्मादिभिः स्तुतोऽनन्तो यत्र यदा क्षितितलोद्धरणाय उद्यतः समुद्रे निमज्य रसातलगतां महीमुद्धृत्य दंष्ट्राग्रे निधाय ऊर्ध्वं गतो भवति तदा अन्तर्महार्णवे तद्रोधायोपागतं तमादिदैत्यं हिरण्याक्षं वज्रधरः इन्द्रो वज्रेणाद्रिं[3] यथा तथा दंष्ट्रया ददार। गदया विदीर्णगात्रं मुष्टिभिः कर्णमूले हत्वा गतासुमकरोदित्यर्थः। दृ विदारणे इति धातोः येनान्तर्महार्णवे भूर्नीता तमिति वा।।१।।

सुपूज्यं यशो यस्य सः सुयशाः उत्तमश्लोकशिखामणिः स्वार्पणबुद्ध्या क्रियमाणः शोभमानो यज्ञो यस्य स सुयज्ञः। क्रियाभिमानी यज्ञनामेन्द्रसूनुः शोभनो यस्मात् स इति वा। स नारायणो रुचेः प्रजापतेः सकाशात् यज्ञ इति नाम्ना आकूत्यां रुचिपत्न्यां जातोऽभूत्। अथेन्द्रपदस्य आकूतिसूनुर्यज्ञो दक्षिणायां रमावतारायां स्वपत्न्यां स्वयम्भुवमन्वन्तरे तुषिताख्यान् अमरान् अजीजनत्। यो राक्षसैरत्तुं प्राप्तेन स्वायम्भुवेन मनुना संसारक्लेश संहरणाद्धरिरिति ज्ञात्वा 'ईशावास्य' मित्यादिनाऽनूक्तो वेदवचनेन स्तुतः "त्रयीश्रुतिः नित्यवाक्यं वेदोऽनुवचनं तथा" इत्यभिधानम्। किञ्च यश्च असुरजनादुत्पन्नां लोकत्रयस्य महतीमार्तिमहरदिति यस्मात् तस्माद्धरिरिति ज्ञात्वाऽनूक्त इति वा "क्रियाभिमानाद्यज्ञोऽसौ इन्द्रसूनुः प्रकीर्तितः। यज्ञेशत्वात् स्वयंविष्णुर्यज्ञो रुचिसुतः स्मृत" इत्यादेरयं यज्ञो हरिरेवेति।।२।।

चशब्दः आनन्तर्यार्थे। हे द्विज! अथ स विष्णुः कर्दमप्रजापतिपत्न्यां नाम्ना देवहूत्यां नवभिः मरीच्यादिपत्नीभिः समं सह कपिलनामा जज्ञ इत्यन्वयः। तच्चरितमाह आत्मगतिमिति। यः कपिलः स्वमात्रे आत्मगतिं तत्त्वसंख्यानरूपामात्मविद्यामूचे स कपिलोऽस्मिन् सात्त्विकप्रकृतिचेतनगणे विद्यमानं गुणसङ्गपङ्कं शब्दादिगुणानां सङ्गात् निरन्तरनिषेवणादुत्पन्नमविद्याकामकर्माख्यं पङ्कमात्मशमलं मनःकल्मषं सांख्यशास्त्रश्रवणजातज्ञानवारिणा विधूय प्रक्षाल्य स्वगतिं दत्त्वा स्वलोकं प्रपेदे इत्यन्वयः।।३।।

हरिणा स्वम[4]मपत्यमभिकाङ्क्षतः इच्छतोऽत्रेर्मुनेस्तपसा तुष्टो भगवांस्तपसा प्रसन्नेन मयाऽहं तव पुत्रत्वेन दत्त इत्याहेति। यद्यस्मात् स हरिरत्रेरनसूयायामवतीर्णो नाम्ना दत्त इति प्रसिद्धोऽभूत्। यस्य दत्तस्य पादपङ्कजपरागनिषेवया पवित्रदेहाः यदुः कार्तवीर्यस्य पूर्वजः, हैहयः कार्तवीर्यार्जुनः तौ आद्यौ येषां ते तथा अमर्त्यां विष्णुप्रधानां योगर्द्धिमणिमादियोगसिद्धिमापुरित्यन्वयः। अ इति ब्रह्मेति श्रुतेः।

1. A. 'ढि 2. A. Omits स्रुक् 3. A. 'द्रीन् 4. A.B. स्वयम'

मयटोऽपि प्राधान्ये[1] प्रयोगदर्शनात् उभयीमिति पाठे इहलोकपरलोकविषयां सगुणनिर्गुणविषयां चेति व्याख्यानं च नाम्ना यज्ञानामिति ज्ञातव्यम्।।४।।

## श्रीराधाकृष्णप्रणीता सुधीसुधा

अनन्तो दिक्कालादिपरिच्छेदरहितो भगवान् यत्र यदा क्षितितलोद्धरणाय सकलयज्ञमयीं क्रौडीं वाराहीं तनुं बिभ्रत् उद्यतः उद्योगं कृतवान् तदा अन्तर्महार्णवे महासमुद्रमध्ये उपागतं तं आदिदैत्यं हिरण्याक्षं वज्रधरः इन्द्रः अद्रिमिव दंष्ट्रया ददार विदारितवान्।।१।।

रुचेः प्रजापतेः आकूतिसूनुः रुचिभार्यायाः आकूतेः सूनुः जातः पुत्रत्वेन सम्भूतः सुयज्ञः। अथ दक्षिणायां तन्नाम्न्यां भार्यायां सुयमान् तदाख्यान् अमरान् अजनयत् सः यदा लोकत्रयस्य महतीमार्तिं अहरत् तदा स्वायम्भुवेन मनुना हरिरिति अनु पश्चात् उक्तः।।२।।

हे द्विज! नारद! किञ्च कर्दमगृहे कर्दमप्रजापतेः गृहे देवहूत्यां तद्भार्यायां नवभिः स्त्रीभिः भगिनीभिः समं सह जज्ञे कपिलो जातः। स च भगवान् स्वमात्रे देवहूत्यै आत्मगतिं ब्रह्मविद्यामूचे उपदिदेश। यया ब्रह्मविद्यया सा आत्मशमलं आत्मनो मालिन्यकारणं गुणसङ्गपङ्कं गुणसङ्गरूपं पङ्कं अस्मिन् जन्मनीति शेषः। विधूय विहाय कपिलस्य गतिं कपिलोक्तं ब्रह्मपदं प्रपेदे प्राप।।३।।

यत्पादपङ्कजपरागपवित्रदेहाः यस्य दत्तात्रेयस्य पादपङ्कजयोः यः परागः तेन पवित्राः देहाः येषां ते तथाभूताः यदुहैहयाद्याः यदुः हैहयः कार्तवीर्यार्जुनः तदाद्याः तत्प्रभृतयः उभयीं ऐहिकीं आमुष्मिकीं च योगर्द्धिं योगसिद्धिमापुः प्राप्तवन्तः सः भगवान् अपत्यं सन्तानं अभिकाङ्क्षतः अत्रेः तुष्टः मयाऽहं दत्तः तुभ्यमिति शेषः इति यत् यस्मात् आह तस्मात् 'दत्त' इति प्रसिद्धोऽभवदिति शेषः।।४।।

**तप्तं तपो विविधलोकसिसृक्षया मे[2] आदौ सनात् स्वतपसः[3] स[4]चतुः सनोऽभूत्।**
**प्राक्कल्पसम्प्लवविनष्टमिहात्मतत्त्वं सम्यग् जगाद मुनयो यदचक्षतात्मन्।।५।।**

**धर्मस्य दक्षदुहितर्य[5]जनिष्ट मूर्त्यां नारायणो नर इति स्वतपः प्रभावः[6]।**
**[7]दृष्ट्वाऽऽत्मनो भगवतो[8] नियमावलोपं देव्यस्त्वनङ्गपृतना घटितं न शेकुः।।६।।**

---

1. A. °न्येन 2. AF.GF. यः 3. M.Ma.W. सु° 4. M.Ma. तपतः 5. AF.GF. °भवत्स्वमूर्त्याः ; M Ma °जनिस्वमूर्त्यां 6. AF GF. °गत 7. M.Ma. °ष्ट्वात्म° 8. W. °तोऽनि°

**कामं दहन्ति कृतिनो ननु रोषदृष्ट्या रोषं दहन्तमु[1]त ते न दहन्त्यसह्यम्।**
**सोऽयं यदन्तरमलं प्र[2]विशन् बिभेति कामः कथं नु पुनरस्य मनः श्रयेत।।७।।**

**विद्धः सपन्त्युदितपत्रिभिरन्ति राज्ञो बालोऽपि सन्नुपगतस्तपसे वना[3]नि।**
**तस्मा अदाद् ध्रुवगतिं गृणते प्रसन्नो दिव्याः स्तुवन्ति मुनयो यदुपर्यधस्तात्।।८।।**

**श्रीध०** कुमारावतारमाह तप्तमिति। मे मया आदौ यत्तपः तप्तं तस्मात् स्वतपसो मत्तपसो हेतोः स हरिश्चतुःसनोऽभूत्। सनत्कुमारः स[4]नकः सनन्दनः स[5]नत्सुजातः इति चत्वारः सनशब्दाः नाम्नि यस्य सः। कथम्भूतात् स्वतपसः सनात् अखण्डितात्। यद्वा। स्वतपसः सनाद्दानात् समर्पणादित्यर्थः। 'षणु दाने' धा[6]तुः। स च पूर्वकल्पस्य सम्प्लवे प्रलये विनष्टमुच्छिन्नसम्प्रदायमात्मतत्त्व[7]मिहास्मिन् कल्पे सम्यग्जगाद उक्तवान्। सम्यत्त्वं दर्शयति। यद्गदितमात्रमेव मुनय आ[8]त्मन् आत्मनि मनस्यचक्षत साक्षादपश्यन् आ[9]त्मन् इत्यत्र सप्तमीलोपः आर्षः।।५।।

न[10]रनारायणावतारमाह - धर्मस्येति द्व[11]येन। धर्मस्य पत्त्यां द[12]क्षदुहितरि मूर्तिसंज्ञायां नारायणो नर इति मूर्तिद्वयेन जातः। कथम्भूतः? स्वः असाधारणस्तपः प्रभावो यस्य। तदेवाऽऽह। अनङ्गस्य पृतनाः देव्योप्सरसो भगवतः सकाशादात्मनः स्वप्रतिरूपाः उ[13]र्वश्याद्याः स्त्री[14]र्दृष्ट्वा तस्य नियमावलोपं व्रतभङ्गं घटितुं घ[15]टयितुं साधयितुं न शेकुः। यद्वा। आत्मनः स्वस्य यो नियमः तपोना[16]शरूपः तस्यावलोपं तत्र दृष्ट्वा भ[17]गवतस्तं घटयितुं न[18] शेकुरि[19]ति। एतच्चाख्यानमेकादशे व[20]क्ष्यति।।६।।

यत्र कामविजयी क्रोधोऽपि बिभेति तत्र व[21]राकः कामो न प्रभवतीति किं वक्तव्यमित्याह - **काममिति**। कृतिनः श्रीरुद्रप्रमुखा रोषयुक्तया दृष्ट्या कामं दहन्ति। रोषं त्वात्मानं दहन्तमपि ते[22]ऽपि न दहन्ति क्रोधेन अभिभूयन्त इत्यर्थः। नु अहो सोऽयं रोषो यदन्तरं यन्मध्यं प्रविशन्नलं बिभेति। यद्वा। यस्यान्तर्मनः। कथम्भूतम्? अमलं निर्मलं शु[23]द्धसत्त्वात्मकं प्रविशन्निति।।७।।

चरित्रेणैव कमप्यवतारं सूचयति - **विद्ध** इति। मातुः सपत्न्याः सु[24]रुचेः उदितान्युक्तानि वाक्यान्येव पत्रिणो बाणाः तैः विद्धो ध्रुवो राज्ञ उत्तानपा[25]दस्य अ[26]न्ति समीपे तपसे तप[27]स्तप्तुं ध्रुवगतिं ध्रुवपदम्। यत्

---

1. C.H.V. °मपि 2. M.Ma.N.W. नि° 3. M.Ma. °य 4. V. सन्कसनन्दनौ 5. A.B. सनातनः 6. B.H.V. Omit धातुः 7. H.V. °त्त्व° 8. H.V. Omit आत्मन् 9. A.B. आत्मन्......आर्षः। 10. H.V. Omit नर 11. A.H.V. Omit द्वयेन 12. H.V. °क्षस्यदु° 13. H.V. ऊ° 14. H.V. स्त्रियः 15. A.H.V. Omit घटयितुं 16. B.H.V. °शन° 17. V. भङ्गं घटं° 18. H.V. add तत्र 19. V. °त्यर्थः। 20. A.B. भविष्यति 21. A.H.V. Omit वराकः 22. H.V. Omit अपि 23. H.V. Omit शुद्धसत्त्वात्मकं 24. A. Omits सुरुचेः; B. सुरुच्याः 25. A.B. पदः 26. A. °ति° 27. H.V. °श्चरितुं

यामुपरि स्थिताम् अधस्तात् स्थिताः। दिवि भवा दिव्याः सप्तर्षयः स्तुवन्ति। यद्वा उपरि भृग्वादयः अधस्तात्[1]सप्तर्षय इति।।८।।

**वीर०** कुमारावतारमाह - **तप्तमिति**। ननाविधलोकानां स्रष्टुमिच्छया मे मया यत्तपस्तप्तं तस्मात् सुतपसः महातपसो हेतोः स हरिः आदौ सनात् दीर्घ आर्षः सन[2]न्नामकः [3]कथम्भूतः चतुःसनः चतुर्थः [4]सनः सनको यस्य स चतुःसनः अभूत्। सनातनसनन्दनौ द्वितीयतृतीयौ अभूतामित्यभिप्रायः। [5]यद्वा चतुस्सनः चत्वारः सनशब्दाः नामसु यस्य स चतुःसनः। अस्मिन् पक्षे आदौ कल्पादौ सनादिति तपोविशेषणमखण्डितादित्यर्थः। यद्वा तपस इति षष्ठ्यन्तं तपसः सनात् समर्पणादित्यर्थः। षणु दाने। स च जातो हरिः पूर्वकल्पसम्प्लवे प्रलये विनष्टं विच्छिन्नसम्प्रदायं आत्मतत्त्वं इहास्मिन् कल्पे सम्यग्जगाद उक्तवान्। सम्यक्त्वं दर्शयति यद्गदितमात्रमेव मुनयः आत्मन् आत्मनि मनसि [6]अचक्षत साक्षादपश्यन्, यद्वा यद्गदितमेवाऽत्मनि तत्त्वं मुनयः अचक्षत अन्येभ्योऽप्युक्तवन्तः [7]इत्यर्थः।।५।।

नरनारायणावतारमाह - **धर्मस्येति**। धर्मस्य पत्न्यां दक्षदुहितरि मूर्तिसंज्ञायां नारायणो नर इति मूर्तिद्वयेन स हरिरभवत् जातः। कथम्भूतः स्वः असाधारणस्तपः प्रभावो यस्य सः उपास्यान्तराभावात्। प्रभावमेवाऽऽह - अनङ्गपृतानाः मन्मथसेनाः देव्यः अप्सरसः आत्मनः परमात्मनो भगवतः अनियमावलोपं नियमलोपाभावं दृष्ट्वा घटितुं [8]तं स्ववशीकर्तुं न [9]शेकुः समर्था न बभूवः। एतदाख्यान-मेकादशे स्फुटम्।।६।।

[10]यत्र कामविजयी क्रोधोऽपि बिभेति तत्र कामोऽपि न प्रभवतीति किं वक्तव्यम् इत्याह - **काममिति**। ननु हे नारद! कृतिनो रूद्रादयः रोषदृष्ट्या [11]रोषयुक्तया दृष्ट्या कामं दहन्ति ते रोषं त्वात्मानं दहन्तमसह्यं सोढुमशक्यं न दहन्ति नाभिभवन्ति किन्तु तेनैवाभिभूयन्ते इत्यर्थः। सोऽयं रोषः यदन्तरं [12]यस्य भगवतो मनः प्रति प्रविशन्नलं बिभेति प्रवेष्टुमधिकं बिभेतीत्यर्थः। अस्य मनः कामः मन्मथः कथं नु श्रयेत न कथमपीत्यर्थः। कामजेत्राऽप्यजेयं रोषं जितवतो मनः कामः कथं श्रयेदित्यर्थः।।७।।

चरित्रेणैव[13] कमप्यवतारं सूचयति - **विद्ध** इति। राज्ञः उत्तानपादः अन्ति अन्तिके मातुः सपत्न्याः सुरुचेः उदितान्येव वाक्यान्येव पत्रिणो बाणाः तैः विद्धः ताडितः बालोऽपि सन् तपसे तपश्चर्तुं वनानि यो ध्रुवो गतः तस्मै गतवते ध्रुवाय गृणते स्तुवते प्रसन्नो [14]यो हरिः ध्रुवगतिं स्थायिपदम् अदात्।

---

1. H.V. add च 2. A. 'न्ना' 3. W. अभूत् 4. W. Omits सनः 5. A.B. Omit यद्वा 6. A.B. Omit अचक्षत 7. W. Omits इत्यर्थः 8. A.B. Omit तं 9. A.B. शकुवत्यः।।६।। *- -* A. Omits 10. A.B. Omits यत्र......रुद्रादयः 11. A.B. Omit रोष - युक्तया दृष्ट्या 12. A. Omits यस्य 13. W. 'वमप्य' 14. A.B. Omit यो

सोप्येकः अवतारः इत्यर्थः। ध्रुवगतिं विशिनष्टि-यदुपरि यद्ध्रुवगतेरुपरि यतः अधस्ताच्च दिव्याः मुनयः सप्तर्षिप्रभृतयः स्तुवन्ति ध्रुवगतिप्रभावं प्रशंसन्तीत्यर्थः।।८।।

**विज०** आदौ इति उभयत्र सम्बध्यते। अत्र आदौ मया विविधलोकसिसृक्षया तपस्तप्तं कृतं तदा मे मम तपतः तपः कुर्वतः सुतपसः सर्वपूज्यतपसः सनादादौ सनोत्पत्तेः पूर्वं नोऽस्माकमर्थे स विष्णुनामाऽभूदित्यन्वयः। अवतीर्य च यत्तत्त्वं मुनय आत्मन्नात्मनि हृदयपद्मकर्णिकायामचक्षत। प्राक्कल्पस्य सम्प्लवेन जलीभावेन प्रलयेन इह जगति विनष्टं तिरोहितमात्मतत्त्वं सम्यग्जगाद मम उपदिदेशेत्यन्वयः। "ब्रह्मणस्तपतः पूर्वं विष्णूर्जात उरुक्रम" इत्यादि वाक्यं च इममर्थमनुवदति। सनात् सम्भाजनात् समाराधनलक्षणात् सुतपसः साधनात् ज्ञानभक्तिरूपात् करणादिति यावत्, स आराधितो देवः चतुःसनोऽभूत् सनकः सनन्दनः सनातनः सनत्कुमार इति चतुर्मूर्तिरभवदितीदं पूर्वोक्ततुल्यमिति अस्यावतारस्य [1]मुख्यप्रयोजनं, जगद्रक्षणमात्मतत्त्ववचनं प्रासङ्गिकमिति ज्ञातव्यम्। तदभिप्रायेण उक्तमाचार्यैः सर्वज्ञैः "यश्च पाति सदा लोकानजितो जयतां वर" इत्यादेः।।५।।

धर्मस्य सकाशात् दक्षदुहितरि दक्षपुत्र्यां स्वमूर्त्यां सच्चिदानन्दलक्षणस्वदेहेन नारायणो नर इति नाम्नाऽजनि। कीदृशः? स्वतपसः स्वज्ञानस्य प्रभावो माहात्म्यं यस्मिन् स स्वतपःप्रभावः प्रतापवान् वा। अत्रेदं तात्पर्यं नारायणो हरिः कृष्ण इति त्रयो विष्णोः साक्षादवतारा नरनाम्न्यन्तर्यामितया नरनामाऽवतीर्ण इति तत्र लोकशिक्षार्थं तपः कुर्वाणौ बदर्यां वसन्तौ सहैव तिष्ठत इति नारायणो नर इत्येतावेवोक्ताविति ज्ञातव्यम्। "नरो नारायणश्चैव हरिः कृष्णस्तथैव च" इत्यादिवचनात्। स्वतपःप्रभाव इत्युक्तं विवृणोति दृष्टात्मन इति। दृष्टात्मनो नित्यमपरोक्षीभूतनिजस्वरूपस्य नरनारायणात्मनो भगवतः नियमावलोपं तप आदेर्भङ्गं अनङ्गस्य पृतनाः सेनास्थानीयाः देवस्त्रियो घटितुं कर्तुं न शेकुरित्यन्वयः। किञ्च स्वतोऽप्यधिकसौन्दर्यमन्दिराणां भगवता तत्क्षणसृष्टानां स्त्रीणां दर्शनाल्लज्जिताः ततोऽन्ववर्तन्त इत्यस्मिन्नर्थे 'तु' शब्दः यद्यप्यनङ्गपृतनाः तथाऽपीत्यस्मिन्नर्थे वा।।६।।

क्रोधवतः एव मनसि कामः पदं लभते हरेस्तु स एव पदं न प्राप्नोति नितरां कामोऽतः तत्साधनं न कार्यक्षमभूदित्याह - **काममिति**। कृतिनो महात्मनः शङ्करादयो रोषाविष्टदृष्ट्या कामं दहन्ति ननु प्रसिद्धोऽयमर्थः उतशब्दः अप्यर्थे तेऽपि दहन्तं रोषं न दहन्ति तत्र हेतुगर्भं विशेषणमाह असह्यमिति। सोऽयं रोषो मधुसूदने अन्तः मनो विविशन् निवेष्टुमिच्छन् अलं बिभेति। अत्र हेतुरमलमिति वा। क्रोधनिवेशनसहकारिरागद्वेषलक्षणमलविधुरत्वादित्यर्थः। कामोऽस्य हरेर्मनः कथं नु श्रयेत न कथमपि सहकारिणः क्रोधस्य प्रवेशसन्देहादित्यर्थः। कञ्चनावसरमासाद्य अपीत्यस्मिन्नर्थे पुनरिति।।७।।

1. A.B. Omit मुख्य

यदुत्तानपादनाम्नो राज्ञोऽन्तिके सुरुच्या सुपत्न्या उदितपत्त्रिभिः वाग्बाणैः विद्धः सन् बालोऽपि पुरादुपगतो निर्गतः तपसे वनाय अगमदिति शेषः। तत्र नारदोपदिष्टविधिना तपश्चरते प्रत्यक्षं दृष्ट्वा गृणते स्तुवते तस्मै ध्रुवाय तपसा प्रसन्नो हरिर्वासुदेवनामविग्रहविशेषं गृहीत्वा ध्रुवगतिं नित्यस्थानमदादित्यन्वयः। वैकुण्ठाद्यन्यतमम् अदात् किमित्याशङ्क्य तद्विशिनष्टि दिव्या इति। यदुपर्यधस्तात् यस्या ध्रुवगतेः उपर्यधस्तात् स्थिता अम्बरचारिणो मुनयः यां स्तुवन्ति तामिति शेषः। "अवतारो महाविष्णोः वासुदेव इतीरितः" इत्यादेः किं नामाऽयमवतार इति शङ्का निरस्तेति।।८।।

**रा०कृ०** विविधलोकसिसृक्षया नानाविधलोकसृष्टीच्छया आदौ कल्पादौ मे मया तपः तप्तम्। तस्य स्वतपसः सनात् दानात् तस्मिन् भगवति समर्पणात् सः हरिः चतुस्सनः - सनत्कुमारः सनकः सनन्दनः सनत्सुजात इति चत्वारः 'सन' शब्दाः नाम्नि यस्य तथाभूतः - अभूत्। किञ्च सः प्राक्कल्पसम्प्लवविनष्टं प्राक्कल्पस्य पूर्वकल्पस्य सम्प्लवे प्रलये विनष्टं विच्छिन्नं यत् आत्मतत्त्वं इह अस्मिन् कल्पे सम्यक् जगाद उपदिष्टवान्। यत्तदोर्नित्यसम्बन्धात् तत् तत्त्वम् उपदिष्टमात्रमेव मुनयो मननशीलाः आत्मन् आत्मनि स्वस्मिन् अचक्षत साक्षाददाक्षुः।

एतेन सनत्कुमारादयो भक्तियोगादिमोक्षमार्गाचार्या इति प्राक्-सूचितमत्र दृढीकृतम्।।५।।

धर्मस्य दक्षदुहितरि भार्यायां दक्षसुतायां मूर्त्यां मूर्तिनाम्न्यां स्वतपःप्रभावः स्वः स्वकीयः अनन्य इति भावः तपःप्रभावो यस्य तथाभूतो भगवान् नारायणो नर इति मूर्तिद्वयेन अजनिष्ट समभूत्। अनङ्गपृतनाः मन्मथस्य सेनारूपाः देव्यः अप्सरसः भगवतः जाता इति शेषः। आत्मनः आत्मतुल्याः ऊर्वशीमुख्याः स्त्रियो दृष्ट्वा नियमावलोपं भगवतः नियमावलोपं तपोभङ्गं घटितुं कर्तुं न शेकुः न समर्था बभूवुः। अनेन नरनारायणावतारः उक्तः।।६।।

ननु हे नारद! कृतिनः समर्थाः रूद्रादयः रोषदृष्ट्या रोषसहितया दृष्ट्या कामं दहन्ति। दहन्तमुत आत्मानं दहन्तमपि असह्यं सोढुमशक्यं रोषं तु ते कृतिनः इति शेषः। न दहन्ति दग्धुं न प्रभवन्ति निवारयितुं असमर्था इति भावः। सोऽयं शेषः अमलं यदन्तः यस्य भगवतः अन्तः मनः प्रविशन् बिभेति - निर्मले मनसि प्रवेशे मलरूपस्य स्वस्य दाहप्रसङ्गादिति भावः। अस्य तादृशस्य भगवतो मनः कामः कथं नु पुनः कथं वा श्रयेत? प्रविशेत्? न कथमपीति भावः।

कामक्रोधयोः क्रोधो नितान्तं दुर्जयः ; जिते तु क्रोधे कामो दूरापास्त एव। अपि च दुष्टानां सन्मार्गानयने क्रोधादपि प्रेममयः सात्त्विकमार्गः युक्ततर इति गम्यते।।७।।

राज्ञः पितुः उत्तानपादाख्यस्य प्रभोः अन्ति समीपे सपत्न्युदितपत्रिभिः सपत्न्याः निजमातु सपत्न्याः सुरुचेः उदितानि वचनान्येव पत्रिणो बाणाः तैः विद्धः ताडितः बालोऽपि सन् यः तपसे तपः कर्तुं

वनान्युपगतः प्राप्तः। गृणते स्तुवते तस्मै बालकाय प्रसन्नो भगवान् उपरि अधस्तात् दिव्याः मुनयः उपरिस्थिताः भृगुमुख्याः अधःस्थिताः सप्तर्षयः यत् यां गतिं स्तुवन्ति तां ध्रुवगतिं अदात् दत्तवान्। अत्र ध्रुवजननमुक्तम्।।८।।

**य[1]द्वे[2]नमुत्पथगतं द्विजवा[3]क्यवज्र[4]विप्लुष्टपौरुषभगं निरये पतन्तम्।**
**[5]त्रात्वाऽर्थितो जगति पुत्रपदं च लेभे दुग्धा वसूनि वसुधा सकलानि येन।।९।।**

**नाभेरसावृषभ आस सुदेविसूनुर्योवै चचार समदृग् [6]जडयोगचर्याम्।**
**यत्पार[7]महंस्यमृषयः पदमामनन्ति स्वस्थः प्रशान्तकरणः परिमुक्तसङ्गः।।१०।।**

**सत्रे ममाऽऽस भगवान् हय[8]शीर्ष एव साक्षात् स यज्ञपुरुषः तपनीयवर्णः।**
**छन्दोमयो मखमयोऽखिलदेवतात्मा वाचो बभूवुरुशतीः श्वसतोऽस्य नस्तः।।११।।**

**मत्स्यो युगान्तसमये मनुनोपलब्धः क्षोणीमयो निखिलजीवनिकायकेतः।**
**विस्रंसितानुरुभये सलिले [9]मुखान्मे आदाय तत्र विजहार ह वेदमार्गान्।।१२।।**

**श्रीध०** पृथ्ववतारमाह - **यदिति**। यद्यदा ऋषिभिः अर्थितः [10]अवतरितुं प्रार्थितः तदा वे[11]नदेहादवतीर्णः [12]तं त्रात्वा अन्वर्थं तत्पुत्र इति पदं नाम लेभे। "पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः। तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा।।" इति हि पुत्रपदव्युत्पत्तिः। कथम्भूतम्। द्विजानां शापवाक्यमेव वज्रं तेन विप्लुष्टं[13] दग्धं पौरुषं भगः ऐश्वर्यं च यस्य तम्। चरित्रान्तरमाह - येन [14]च जगति जग[15]दवनाय वसूनि अन्नादिद्रव्याणि [16]वसुधा दुग्धा।।९।।

ऋषभावतारमाह - नाभेरिति। असौ श्रीहरिः नाभेराग्नीध्रपुत्रात् सुदेव्याः सूनुरास। नभेर्भार्यायाः मेरूदेव्याः एव सुदेवी इत्यपि संज्ञा। जडवद्योगेन नित्यसमाधिना चर्याम्। यत् यां [17]चर्यां पारमहंस्यं परमहंसप्राप्यं पदम्। तत्र हेतुः। समदृक्। तत्राऽपि हेतुः। स्वस्थः स्वस्वरूपे स्थितः। यतः प्रशन्तेन्द्रियः। तत्कुतः? यतः परितो मुक्तसङ्गः।।१०।।

श्रीहयग्रीवावतारमाह - **सत्रे** इति। अथो इत्यर्थान्तरे। स एव साक्षात् भगवान् मम ब्रह्मणः सत्रे

---

1. W. यो वेन 2. B. °र्ण 3. W. °शाप° 4. I. °निष्प्लुष्ट°; M.Ma. °निष्पिष्ट° 5. M.Ma. ज्ञा° 6. M.Ma. हृदि यो 7. H.V.W. Omit म 8. AB.C.G.I.N. °शीरषाथो; AF.GF. शीर्षशीर्षा 9. AG.GF. मखात्मा 10. H.V. Omit अवतरितुं प्रार्थितः 11. H.V. Omit वेनदेहादवतीर्णः 12. B.H.V. वेनं 13. B. adds (निष्प्लुष्टं) 14. H.V. वा 15. A. °दर्थे; B. दर्थं 16. A.B. Omit वसुधा 17. B.H.V. Omit चर्यां......पदम्

यज्ञे हयशीर्[1]ष आस। तपनीयं सुवर्णं तद्वद्वर्णो यस्य सः। 'छन्दोमयो वेदमयस्तद्विधेया ये मखास्तन्मयः अमृतमय' इति वा पाठः। मखैर्यजनीयाः याः[2] अखिलाः[3] देवतास्तदात्मा[4] च। अस्य श्वसतः श्वासं मुञ्चतो नस्तो नासापुटात्[5] उशतीः उशत्यः। अत्र[6] आर्षत्वात् प्रथमार्थे द्वितीया। कमनीयाः वेदलक्षणाः वाचो बभूवुः।।११।।

मत्स्यावतारमाह - **मत्स्य** इति। मत्स्यो भाविना वैवस्वतेन मनुना दृष्टः क्षोणीमयः[7] पृथ्वीप्रधानः तदाश्रय इत्यर्थः। अत एव निखिलजीवनिकायानामाश्रयः मे मुखाद्विस्रंसितान्[8] गलितान्[9] वेदस्य[10] मार्गान् वेदान्[11] भगवानादाय[12] तत्र युगान्तसलिले विजहार। हेति[13] हर्षे।।१२।।

**वीर०** पृथ्ववतारमाह - **य** इति। यः पृथुः ऋषिभिः अर्थितः वेनं त्रात्वा जगति पुत्रपदं लेभे, सोऽप्येकोऽवतार इत्यर्थः। पुत्रपदम् "पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः। तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा" इति व्युत्पत्तिस्मरणात्[14]। 'पुत्' आख्यान्नरकात् पितरं वेनं संरक्ष्य पुत्रपदवाच्यतां प्राप्तवानित्यर्थः। कथम्भूतं वेनं? निरये नरके पतन्तम्। तत्कुतः? द्विजानां मुनीनां शाप[15] एव वज्रं तेन विप्लुष्टौ[16] विशेषेण दग्धौ[17] पौरुषं भगः ऐश्वर्यं च यस्य तम्। द्विजशापः कुत इत्यत आह - उत्पथगत-मसन्मार्गवर्तिनम्। एतदाख्यानं चतुर्थे स्फुटम्। एतस्यैव चरित्रान्तरमाह - येन पृथुना वसुधा भूमिः सर्वापि वसूनि अन्नादिद्रव्याणि दुग्धाऽदुह्यत दुहधातुर्द्विकर्मकः।।९।।

ऋषभावतारमाह - **नाभेरिति**। यद्ब्रह्म पारमहंस्यं परमहंसप्राप्यं[18] पदं स्वरूपं ऋषयो वेदाः आमनन्ति। तदसौ हरिः कपिलादिवत् स्वांशेन ऋषभाख्यो राजा नाभेरग्नीध्रपुत्रात् सुदेव्याः सूनुरास। मेरूदेव्या एव 'सुदेवी' इत्यपि संज्ञा। यो जातो ऋषभः जडवत् योगचर्यां चचार। तत्र हेतुः - समदृक् सर्वस्यापि स्वात्मकत्वेन समदर्शनः। तस्यान्यात्मकत्वं व्यावर्तयति स्वस्थः "स्वे महिम्नि प्रतिष्ठितः" इति श्रुतेः। स्वस्मिन्नेव स्थितः नत्वात्मान्तरधार्यः। जडयोगचर्याचरणे हेत्वन्तरमाह - प्रशान्तकरणः प्रशान्तेन्द्रियः। तत्कुतः परिमुक्तसङ्गः परितः शब्दादिषु मुक्तस्त्यक्तः सङ्गः आसङ्गो येन सः।।१०।।

हयग्रीवावतारमाह **सत्र** इति। स एव साक्षद्भगवान् मम ब्रह्मणः सत्रे हयशीर्षः आस सः[19] कथम्भूतः? तपनीयं सुवर्णं तद्वद्वर्णो यस्य सः छन्दोमयः वेदमयः वेदोत्पादकत्वेन तत्प्रचुर इत्यर्थः। मखमयः यज्ञाराध्यः अखिलदेवतात्मा[20] अखिलं[21] देवतानामात्मा "स आत्मा अङ्गान्यन्या देवता" इति श्रुतेः। श्वसतः निश्वसतः अस्य हयग्रीवस्य नस्तः नासिकातः उसतीः शुद्धा वाचः वेदवाचः बभूवुः।

1. A.B. 'शीर्षा 2. A. Omits या; B. ये 3. H.V. 'लं' 4. B. 'वास' 5. B. पुटतः 6. A.B. Omit अत्र......द्वितीया 7. B. adds पृथ्वीमयः 8. B. adds अधःपरितान् 9. H.V. स्खं 10. B. 'दमा' 11. H.V. 'भें' 12. A.B. Omit भगवान् 13. A.B. ह हर्षेण 14. W. Omits व्युत्पत्ति 15. A.B. शापवाक्यमेव 16. A.B. 'ष्टं 17. A.B. 'ग्धं 18. A.B. पारमं 19. A.B. Omit सः 20. A.B. Omit अखिलदेवतात्मा 21. W. 'लानां दें'

"तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेद" इति[1] श्रुतेः। वेदानां तद्विहितानां कर्मणां तदाराध्यदेवतानां तत्प्रवर्तकत्वतदाराध्यत्वतदात्मकत्वान्युक्तानि इति।।११।।

मत्स्यावतारमाह - **मत्स्य** इति। मत्स्यो भाविना वैवस्वतेन[2] मनुना उपलब्धः[3] दृष्टः क्षोणीमयः आगामिसृष्ट्युपयोगिपार्थिवद्रव्यमयः[4] पार्थिवद्रव्याश्रय इत्यर्थः। अत एव निखिलजीवनिकायानां समस्त जीवसमूहानां निकेतः निलयः। मे मम मुखाद्विस्रंसितान् वेदमार्गान् वैदिकप्रमाणान्यादाय समर्प्य मह्यमिति शेषः। वेदरूपप्रमाणप्रदानमेवास्य अवतारस्य कृत्यम्। तत्र[5] उरुभये अतिभयङ्करे युगान्त-सलिले विजहार विहितवान्, हेति हर्षे, एतदाख्यानमष्टमे स्पष्टम्।।१२।।

**विज०** अथोत्पथगतं मामेव यजध्वं मत्तोऽन्यद्दैवं नास्तीति अद्वैतमार्गवर्तिनम्। अत एव द्विजवाक्यवज्रेण निष्पिष्टपौरुषभगं विनाशितपुरुषाकारभागधेयं, मृत्वा निरये पतन्तं वेनं ज्ञात्वा परमर्षिभिर्जगत्पालनायार्थितो जगति भूलोके पुत्रपदं मथितवेनदक्षिणभुजोत्पन्नपृथ्वाख्यमहाराजस्थानं लेभे इत्यन्वयः। स्वयं च पृथुनामा तत्र विष्णुरित्यर्थं चशब्देनानुवदति। "पृथुर्नाम महाराजस्तत्र विष्णुः स्वयं विभुः" इत्यादेः तत्कर्माऽऽह - दुग्धेति। येन पृथ्वाविष्टेन पृथुनाम्ना हरिणा वसुधा भूमिः सकलानि-वसूनि अमृतादिद्रव्याणि च दुग्धेत्यन्वयः।।९।।

असौ नारायणो नाभे राज्ञः सकाशात् सुदेविसूनुरासेत्यन्वयः। मेरुदेव्याः 'सुदेवी' इति नामान्तरं राजकृतम्। तदवतारप्रयोजनमाह - **यो वा** इति। ऋषभनामा यो वै हरिः समदृक् सर्वान्तर्हृदि स्थितं समं ब्रह्म पश्यतीति नित्यापरोक्षीकृतस्वरूप इत्यर्थः। योगचर्यां परमहंसधर्मं चचार। ऋषयो यद्रूपं पारमहंस्यं परमहंसप्राप्यमामनन्ति यश्च स्वस्थः स्वाधारः प्रशान्तकरणः प्रकृष्टसुखात्मकदेहेन्द्रियः अत एव परिमुक्तसङ्गो बाह्यसुखानपेक्षः विधिनिषेधविमुक्तस्य योगचर्याकरणं किमर्थमित्याशङ्का वा इत्यनेन निरस्ता। लोकसङ्ग्रहार्थत्वेन तदाचरणप्रसिद्धेरिति। स्वस्थ इत्यादि विशेषणबाहुल्याच्च प्राप्यप्रयोजनान्तरं नास्ति।।१०।।

साक्षात्तुर्यः एव यज्ञपुरुषो मम सत्रे यज्ञे नाम्ना हयशीर्षः आसेत्यन्वयः। तिर्यग्योनित्वेऽपि ऐश्वर्यादिगुणसामग्रीमान् इत्याह - भगवानिति। "तपनीयं रूप्यहेम्नोः" इत्यभिधानात् मूलावताररूपा-पेक्षया उभयवर्णत्वं युक्तम्। अनेन साक्षान्नारायण एवेति निरणायि। "हिरण्यश्मश्रुः" इत्यादिश्रुतेः। इतोऽप्ययं नारायण एवेत्याह छन्दोमय इति। छन्द आदीनामाधारत्वात् विषयत्वादुद्देश्यत्वात् अन्तर्यामि-त्वात् तन्मयत्वं तत्कर्म चाऽऽह - वाच इति। अस्य हयग्रीवस्य श्वसतः श्वासं कुर्वतः नस्तः

1. W. इत्यादि 2. W. त मनुना 3. W. Omits उपलब्धः 4. B. Omits पार्थिवद्रव्यमयः 5. A. Omits तत्र

नासिकायाः उशतीर्भगवद्गुणप्रतिपादकत्वेन शुद्धाः श्वासरूपाः वाचो वेदादिलक्षणाः बभूवुरित्यन्वयः। "छन्दांसि च मखाश्चैव देवा लोकाश्च सर्वशः" (महासंहिता) इत्यादिना मयटो विकारार्थत्वं प्रयुक्तम्।।११।।

मे मुखाद्विस्रंसितान् निर्गतान् वेदमार्गान् हयग्रीवदैत्येनापहतान् दृष्ट्वा मत्स्योऽवतीर्य तं हत्वा तान् समादाय स्थितः। पुनः युगान्तसमये मन्वन्तर प्रलये सप्तऋषिभिस्सह स्तुवता वैवस्वतमनुना उपलब्धो दृष्टः क्षोणीमयः। क्षोणीमयनावाश्रयत्वात्, अत एव निखिलजीवनिकायानां केतः आश्रयः। तत्र उरुभये महाभयङ्करे सलिले प्रलयसमुद्रजले विजहारेत्यन्वयः।।१२।।

**रा०कृ०** यत् यदा अर्थितः ऋषिभिः प्रार्थितः तदा उत्पथगतं असन्मार्गगतं द्विजवाक्यवज्र-विप्लुष्टपौरुषभगं द्विजानां महर्षीणां वाक्यं शापरूपं वाक्यमेव वज्रं तेन विप्लुष्टं विशेषेण दग्धं पौरुषं भगः ऐश्वर्यं च यस्य तथाभूतम्, अत एव निरये पतन्तं वेनं त्रात्वा पुत्रपदम् 'पुत्र' इति सार्थकं नाम यो लेभे येन वा जगति निमित्ते सति जगद्रक्षणायेत्यर्थः वसुधा भूमिः सकलानि वसूनि दुग्धा अदुह्यत- सोऽयं पृथुरपि भगवतः एकोऽवतार इति शेषः।।९।।

यो वै प्रसिद्धः ऋषभः समदृक् समदर्शनः स्वस्थः स्वात्मानन्दनिष्ठः प्रशान्तकरणः प्रशान्तेन्द्रियः परिमुक्तसङ्गः परितो मुक्त; कलत्रपुत्रादिसम्बन्धः येन तथाविधस्सन् जडयोगचर्यां जडवद्योगचर्यां चचार आचरितवान् यत् यां चर्यां ऋषयः पारमहंस्यं परमहंसानां सम्बन्धि पदं भगवत्प्राप्तिस्थानमामनन्ति वदन्ति सोऽसौ हरिः नाभेः आग्नीध्रपुत्रात् सुदेविसूनुः सुदेव्याः सुतः ऋषभः ऋषभाख्यः आस बभूव। एतेन ऋषभावतारः कथितः।

'सोऽहम्' इति मन्त्र एव 'हंस' मन्त्र इत्यपि कथ्यते। एतन्मन्त्रलीनमानसः विगलितजीवप्रज्ञाः साधकाः हंसमन्त्रानुभवरूपपरब्रह्मभावेन वर्तन्ते। तेषामेव स्थितिः पारमहंस्यपदनाम्ना व्यवह्रियते। हंस-मन्त्रात्मकश्वासगानमेव सामवेदः। तत्सहकृतेन कण्ठेन उच्चरितः स्पन्दनात्मको नादः ऋषभः। एतद्रूपस्य ओङ्कारस्य ध्यानेन ऋग्वेददर्शनसिद्धिः। एवमत्र ऋषभः ऋग्वेदमयमूर्तिः हरिरित्यवगन्तव्यम्। नादोत्पत्तिहेतु नाभिपदं, वाग्देवीस्फोरकं सुदेवीपदं च व्यत्ययेन मातापितृसूचके सती इममेवार्थं गमयत इति दिक्।।१०।।

अथ साक्षाद्यज्ञपुरुषः तपनीयवर्णः हेमवर्णः छन्दोमयो वेदमयः, मखमयो यज्ञात्मकः अखिलदेवतात्मा सकलदेवतास्वरूपः, स भगवान् नारायणः मम सत्रे सत्रयागे हयशीर्षः हयग्रीवः आस बभूव। श्वसतः श्वासान् मुञ्चतः अस्य हयग्रीवस्य नस्तः नासिकायाः उशतीः विश्वोपकारकत्वेन उशत्यः कमनीयाः वाचः वेदवाचः बभूवुः प्रवृत्ता अभवन्।

सकलविद्यास्वरूपिण्याः सरस्वत्याः देहभूताः हलः, प्राणभूतास्त्वचः। हकारोऽर्धमवद्यकारश्च यथाक्रमं हलामचां सङ्केतौ सन्तौ, "अक्षराणामकारोऽस्मि" (भगी.10-23) इति भगवद्गीतामनुसृत्य परमात्मसङ्केतभूतेन अकारेण च संयोजितौ अक्षराभिव्यक्तनिखिलविद्यासङ्केतभूतां हयसंज्ञां भजेते। किञ्च शीर्षस्य अथवा ग्रीवायाः सर्वाक्षरप्रपञ्चाभिव्याक्तिस्थानत्वात् नित्यस्याप्यात्मनो देहप्राणसंयोगदशायामेव अभिज्ञेयत्वात् निर्मलज्ञानानन्दमयस्य सर्वविद्याऽऽधारस्य परमात्मनः विज्ञानमये ब्रह्मयज्ञे हयशीर्षः अथवा हयग्रीवः इत्यन्वर्था संज्ञा। तथा च तदुच्छ्वासनिःश्वासयोः 'सोऽहं' मन्त्रापरपर्याय प्रणवकारणत्वात्, प्रणवस्य च छन्दसां सारभूतत्वात् हयग्रीवस्य नासिकातः विश्वजनीनवेदवाचामुत्पत्तिश्च युज्यते। अपि च हयशब्दस्य यदृच्छया लोके अश्ववाचित्वात् अत्र उपासकानामुपयोगाय भगवदाकारः अश्वशिरसा योजितो दृश्यते।।११।।

युगान्तसमये युगप्रलयसमये मनुना वैवस्वतमनुना उपलब्धः दृष्टः क्षोणिमयः भूरूपः निखिलजीवनिकायकेतः। सकलप्राणिसमुदायानामाश्रयभूतः मत्स्यः मत्स्यरूपी भगवान् उरुभये अतिभीकरे सलिले प्रलयसमुद्रजले मे मुखात् विस्रंसितान् विगलितान् वेदमार्गान् वेदशाखाः आदाय तत्र प्रलयसमुद्रसलिले विजहार विहृतवान्। हशब्दो हर्षसूचकः।

अत्र युगान्तपदेन जीवस्थूलरूपादर्शनमुच्यते। मत्स्यशब्देन पार्थिवतत्त्वात्मिका सकलजीवधर्माणां बीजरूपावास्थितिर्लक्षयते। प्रलयसमुद्रजलपदेन निराकारस्थितिर्व्यज्यते। बृंहणशीलस्य ब्रह्मणः प्रलयसमये प्रतिसंहृतशक्तिमत्त्वात् विश्वसृष्टिविज्ञानमयवेदशाखाः निराकारस्थितिरूपजले विगलिताः निलीयन्ते। ताः पुनरपि सृष्टिसमारम्भसमये बीजत्वावस्थितिरूपमत्स्यबलेन निराकारस्थित्यात्मकजलात् समुद्धृताः बृंहणशीले ब्रह्मणि समर्पिता सकलजीवसृष्टिनिदानभूताः भवन्ति। पुराणेष्वभिवर्ण्यमानं भगवता कृतं वेदानामुद्धरणं तावदिदमेवेत्याशेरते तत्त्वविदः।।१२।।

**क्षीरोदधावमरदानवयूथपानाम् उन्मथ्नताममृतलब्धय आदिदेवः।**
**पृष्ठेन कच्छपवपुर्विदधार गोत्रम् निद्राक्षणो[1]ऽद्रिपरिवर्तकषाणकण्डूः।।१३।।**

**त्रै[2]विष्टपोरुभयहा[3] स नृसिंहरूपं कृत्वा भ्रमद्भ्रुकुटिदंष्ट्रकरालवक्त्रम्।**
**दैत्येन्द्रमाशु गदयाऽभिपतन्तमारात् ऊरौ निपात्य विददार नखैः स्फुरन्तम्।।१४।।**

**अन्तः सरस्युरुबलेन पदे गृहीतो ग्राहेण यूथपतिरम्बुजहस्त आर्तः।**
**आहेदमादिपुरुषाखिललोकनाथः तीर्थश्रवः श्रवणमङ्गलनामधेयः।।१५।।**

---

1. M.Ma. °द्रे° 2. B.I. °पि° 3. M.Ma.W. °हारि ; A. maintains हं in veeraraghava commentary

**श्रुत्वा[1] हरिस्त[2]मरणार्थिनमप्रमेयश्चक्रायुधः पतगराजभुजाधिरूढः।**
**चक्रेण नक्रवदनं विनिपाट्य तस्मात् हस्ते प्रगृह्य भगवान् कृपयोज्जहार।।१६।।**

**श्रीध०** कूर्मावतारमाह - **क्षीरेति**। क्षीरोदधौ कच्छपवपुस्स[3]न् गोत्रं म[4]थनार्थं मन्दरगिरिं पृष्टेन [5]विधृतवान्। कदा अमृतलब्धये क्षीरा[6]ब्धिमुन्मथ्नतां सताम्। निद्रायाः क्षणोऽवसरः उत्सवो वा यस्य सः। [7]निद्रावसरः कुतः? तत्राऽऽह - अद्रेः परिवर्तः परिभ्रमः स[8] ए[9]व कषा[10]णः क[11]षणं घर्षणं [12]सुखप्रदो यस्यां सा कण्डूर्यस्य सः। यद्वा [13]अद्रिपरिवर्त एव कषः क[14]षणं तेन अणति अपयातीति कषाणा कण्डूर्यस्य।।१३।।

श्रीनृसिंहावतारमाह - **त्रैविष्टपेति**। त्रैविष्टपाः देवाः तेषामुरुभयं हन्तीति तथा स भगवान्। [15]यद्वा। त्रैविष्टपाः देवाः तेषामप्युरुभयं यस्मात्तादृशो हासो यस्य तन्नृसिंहरूपम् अथवा हिरण्यकशिपोः राज्यकाले त्रैविष्टपाः दैत्याः तेषामुरुभयजनको हासो यस्मिंस्तत् त्रैविष्टपोरुभयहासं तन्नृसिंहरूपं कृत्वा। कथम्भूतम् [16]रूपम्? भ्रमन्त्यौ भ्रुकुटेया दंष्ट्राश्च यस्मिंस्तत् करालं वक्त्रं यस्मिंस्तत् दैत्येन्द्रं स्फुरन्तमारात् समीप एव गदया उपलक्षितमभिपतन्तं तं नखैर्विददार।।१४।।

हरिसंज्ञकावतारमाह - **अन्तरिति** युगलेन। गजयूथस्य पतिः तीर्थरूपं श्रवो यशो यस्य स तीर्थश्रवाः [17]हे तीर्थश्रवः। श्रवणेनैव मङ्गलं नामधेयं यस्य सः।।१५।।

**श्रुत्वेति**। [18]तद्वचनं श्रुत्वा शरणार्थिनं तं हस्ते शुण्डायां प्रगृह्य। किं कृत्वा? [19]नक्रस्य ग्राहस्य वदनं विनिपाट्य विदार्य त[20]स्मात् तद्वदनात्।।१६।।

**विर०** कूर्मावतारमाह - **क्षीरोदधाविति**। क्षीरसमुद्रेऽमृतलब्धयेऽमृतलाभार्थम् अमरदानवयूथपानां सुरासुरश्रेष्ठानां उन्मथ्नतां मथनं कुर्वतां सतामादिदेवो भगवान् कच्छपवपुः धृतकूर्मतनुः पृष्टेन पृष्टभागेन गोत्रं मन्दरपर्वतं विदधार विधृतवान्। कथम्भूतो विदधार? निद्राक्षणः निद्रायाः क्षणः अवसरः उत्सवो यस्य सः। अद्रिपरिवर्तकषाणकण्डूः [21]अद्रेर्मन्दरस्य परिवर्तः परिभ्रम एव कषाणं कषणं यस्यां सा अद्रिपरिवर्तिकषाणा तथविधा कण्डूतिर्यस्य स तथोक्तः। कषाण इति दीर्घः आर्षः। **मन्दरभ्रमणसङ्घर्षितकण्डूरित्यर्थः।।१३।।**

1. M.Ma. स्मृत्वा 2. AF.GF. °स्त्वमर°; H.V. °स्तु शर°; W. °स्तदर° 3. H.V. °षा 4. A.B. °न्थ° 5. H.V. Omit वि 6. H.V. °ब्धिं मथ्न° 7. HV. Omit निद्रावसरः कुतः तत्राऽऽह 8. A.H.V. Omit सः 9. H.V. Omit एव 10. A.B. °णं 11. H.V. °र्ष° 12. H.V. वा 13. H.V. °द्रेः 14. H.V. °र्ष° 15. H.V. Omit यद्वा......रूपम् 16. A.B. Omit रूपम्? 17. H.V. Omit हे तीर्थश्रवः 18. H.V. add तस्य 19. H.V. add तस्य 20. B.H.V. Omit तद्° 21. W. Omits अद्रे......कण्डूतिः

नृसिंहावतारमाह - **त्रैविष्टपेति**।[1] त्रिविष्टपे [2]स्वर्गे भवाः त्रैविष्टपाः देवाः तेषामुरुभयं तत् [3]हरतीति त्रैविष्टपोरुभयहा[4]रि तथाविधं नृसिंहरूपं कृत्वा धृत्वा कथम्भूतं? भ्रमन्त्यौ भ्रुकुट्यौ दंष्ट्राश्च यस्मिंस्तथाभूतम्। करालं भयङ्करं वक्त्रं यस्मिन् [5]तत् आरात् समीपे आशु शीघ्रं गदया उपलक्षितं अभिमुखमापतन्तं [6]दैत्येन्द्रं हिरण्यकशिपुं स्फुरन्तं [7]चलन्तं [8]ऊरौस्वस्योरौ निपात्य पातयित्वा नखैः विददार विदारितवान्[9]।।१४।।

हरिसंज्ञकावतारमाह - **अन्तरिति** [10]द्वाभ्याम्। यूथपतिः गजयूथस्य पतिः गजेन्द्रः अन्तः सरसि [11]सरोमध्ये उरुबलेन अधिकबलेन ग्राहेण मकरेण पदे गृहीतः, अत एव आर्तः दुःखितः। अम्बुजं हस्ते यस्य स धृताम्बुजो[12]च्छ्रितहस्तः सन् इदमाह। किमित्यत आह हे आदिपुरुष! कारणपुरुष! हे तीर्थश्रवः! तीर्थं विशुद्धं श्रवः कीर्तिर्यस्य सः [13]तस्य सम्बुद्धौ हे तीर्थश्रवः! हे श्रवणमङ्गलनामधेय! श्रवणेनैव मङ्गलं कल्याण सम्पादकं नामधेयं यस्य सः ईदृशस्त्वं रक्षिता भवेत्याहेत्यर्थः।।१५।।

तच्छ्रुत्वा, गजेन्द्रस्य वचः श्रुत्वा अरणार्थिनं शरणार्थिनं हस्ते शुण्डायां प्रगृह्य भगवान् कृपया तस्मात् ग्राहादुज्जहार उद्धृतवान्। किं कृत्वा? चक्रेण सुदर्शनेन नक्रस्य ग्राहस्य वदनं विनिपाट्य विदार्य। कथम्भूतो भगवान्? पतगानां पक्षिणां राजा गरूडः तस्य भुजयोरधिरूढः [14]आरूढः चक्रायुध धरः अप्रमेयः अपरिच्छिन्नस्वरूपस्वभावः।।१६।।

**विज०** अमृतलब्धये अमरदानवयूथपानां क्षीरसमुद्रमुन्मथ्नतां सतामतिभारेण क्षीरोदधौ मज्जन्तं गोत्रं पर्वतं स आदिदेवः कच्छपवपुर्भूत्वा पृष्ठेन विदधारेत्यन्वयः। उपर्यधो नेत्रगोत्रयोरित्यर्थद्योतको वीत्युपसर्गः तज्जातिस्वभावमाह निद्रेक्षण इति नि[15]द्रया ईषन्मीलितनेत्रः। निद्राहेतुमाह अद्रीति। मन्दराद्रेः परिवर्तः परिभ्रमणं तेन कषाणं विलेखनं तेन जातः कण्डूः कण्डूयनं यस्य स तथा।।१३।।

त्रिविष्टपानां देवानां दैत्याद्यदुरुभयं तद्धारि तद्धननशीलं। भ्रमन्त्या स्फुरन्त्या भ्रुकुट्या दंष्ट्राभ्यां च करालं भयङ्करं च वक्त्रं यस्य तत्तथा नृसिंहयोर्नरस्य सिंहस्य च रूपमिव रूपं कृत्वा स हरिः आरात् दूरात् गदयाऽभिपतन्तं स्फुरन्तं दैत्येन्द्रं हिरण्यकशिपुं वेगेन ऊरौ निपात्य नखैर्विददारेत्यन्वयः। दृ विदारण इति धातोः।।१४।।

यदा यूथपतिर्गजेन्द्रः सरसि उरुग्राहेण पदे गृहीतः आर्तः सन् अम्बुजहस्तः, हे आदिपुरुष! अखिललोकनाथ। तीर्थश्रवः! पावनकीर्ते! श्रवणमात्रेण मङ्गलप्रदनारायणाद्यभिधा[16]नात् अस्माद्रक्ष इतीदमाह।।१५।।

---

1. A.B. add सः 2. W. Omits स्वर्गे 3. A.B. 'हन्ती' 4. A.B. 'हं 5. A.B. add तथाविधं 6. A.B. add तं 7. A.B. परितो गच्छन्तं 8. A.B. स्वोरौ 9. A.B. add भयहासनृसिंहरूपमिति पाठे हासेनैव सर्वभयनिवर्तकमित्यर्थः।२४।। 10. W. द्वयेन 11. W. Omits सरोमध्ये 12. W. 'दृ' 13. W. Omits तस्य......श्रवः 14. W. Omits आरूढः 15. A.B. 'द्रेष' 16. A. नात्यम्

तदा तापसो नाम[1] भगवानरणार्थिनं शरणार्थिनं स्मृत्वा तत्र आगत्य कृपया तं हस्ते प्रगृह्य उज्जहार। भगवच्छब्दवाच्यत्वं ऋष्यादीनां अप्यस्तीति ततो व्यावर्तयति अप्रमेय इत्यादिना। अप्रमेयः इयत्तारहितः, एतदाकाशस्याप्यस्तीत्यतः चक्रायुध इति नन्वनेन योद्धाऽप्युच्युते इति तत्राऽऽह पतगेति। पतगराजो गरुडः तस्य भुजमधिरूढः भुजस्कन्धयोरतिसामीप्यादेवमुक्तं किं कृत्वा? चक्रेण सुदर्शनेन नक्रस्य ग्राहस्य वदनं विनिपाट्य च्छित्वा "हरिस्तापसऽसौ जातस्तपसि वै मुनिः" इत्यादेः कोऽयमवतारो नाम इति शङ्का निरस्ता।।१६।।

**रा०कृ०** क्षीरोदधौ क्षीरसमुद्रे अमृतलब्धये अमृतप्राप्त्यै अमरदानवयूथपानां सुरासुरनायकानां उन्मथ्नतां सतां देवदानवेषु मथनं कुर्वत्सु सत्सु इति भावः। अद्रिपरिवर्तनकषाणकण्डूः मन्दराद्रेः परिवर्तः परिभ्रमणं स एव कषः कर्षणं तेन निवृत्तकण्डूतिः अत एव निद्राक्षणः निद्रारूपोत्सवशालीआदिदेवः भगवान् नारायण; कच्छपवपुः कूर्मशरीरस्सन् गोत्रं मन्दराद्रिं पृष्ठेन विदधार विशेषेण धृतवान्।

मातृगर्भे जीवप्रवेशानन्तरं जातेन आवर्तसमेन चलनेन प्रथमतः प्रभवति बुद्बुदतुल्याऽऽकारः योऽनन्तरं शिरोरूपं धत्ते। शरीरनिर्माणाय अपेक्षिताः प्रज्ञाः शक्तयश्च इतस्ततश्चलन्तः तत्र वर्तन्ते। तत्र विकासप्रज्ञाः देवताः परिमितत्वप्रापकाः अहङ्कारममकारकामक्रोधादयस्त्वसुराः। पक्षिशावकस्याभिवृद्धये। अण्डपेशिरिव जीवस्यापि परिमितप्रज्ञानिरासपूर्वकसर्वान्तर्यामित्वपरिणामप्राप्त्यै दैवासुरप्रज्ञाः आवश्यकीभवन्ति। एतदर्थमुभयविधप्रज्ञाभिः जननमरणाद्यवकाशमापकत्वेन प्रयत्नपूर्वकं अनन्त-कालविनियोजनमेव समुद्रे मन्दरमथनजन्यममृतं नानाविधप्रज्ञाविकासाधारपेशिः मस्तकः कूर्मः। एवमत्र कूर्मावतारकथापरमार्थः प्राज्ञैरुन्नेयः।।१३।।

त्रैविष्टपोरुभयहा त्रिविष्टपं स्वर्गः तत्र भवाः त्रैविष्टपाः देवाः तेषां उरुभयं हन्तीति तथाभूतः सः भगवान् भ्रमद्भ्रुकुटिदंष्ट्रकरालवक्त्रं भ्रमद्भ्रुकुटिदंष्ट्रं, अत एव करालं भीकरं वक्त्रं मुखं यस्मिन् तथाभूतं नृसिंहरूपं कृत्वा धृत्वा आरात् समीपे गदया सह अभिपतन्तं स्वसम्मुखमायान्तं दैत्येन्द्रं हिरण्यकशिपुं ऊरौ स्वस्योरौ निपात्य स्फुरन्तं इतस्ततश्चेष्टमानं तं नखैः आशु विददार विदारितवान्।।१४।।

अन्तः सरसि सरसः मध्यप्रदेशे ऊरुबलेन अधिकशक्तिना ग्राहेण नक्रेण पदे गृहीतः अत एव आर्तः यूथपतिः करियूथनाथः अम्बुजहस्तस्सन् "हे आदिपुरुष! अखिललोकनाथ! तीर्थश्रवः! पुण्यकीर्ते! श्रवणमङ्गलनामधेय! श्रवणेनैव शुभकरनामधेय" इदं इत्येवं प्रकारेण आह मां पाहीति हरिं प्रस्तुतवान्।।१५।।

अप्रमेयः तत्त्वैः प्रमातुमशक्यः चक्रायुधः चक्रधारी पतगराजभुजाधिरूढः गरुडवाहनः भगवान्

1. A. Omits नाम

हरिस्तु नारायणोऽपि श्रुत्वा गजेन्द्रप्रार्थनमाकर्ण्य, चक्रेण नक्रवदनं मकरमुखं विनिपाट्य विदार्य शरणार्थिनं गजेन्द्रमिति शेषः। हस्ते शुण्डादण्डे प्रगृह्य कृपया तस्मात् नक्रमुखात् उज्जहार उद्धृतवान्।

जीवगजो मातृगर्भसरःप्रवेशानन्तरं स्वप्रतुल्यविचित्रपरिमितप्रज्ञामयग्राहेण चिरं पीडितः प्रसवावसरे तत्पीडामसहमानः उच्छ्वसनिश्वासमयगरुत्मदधिरूढश्रीहरिसुदर्शनमहिम्ना तद्ग्राहदंष्ट्रामयजरायुबन्धात् विमुक्तः पृथिवीतले अवतरतीति भावः।।१६।।

**ज्यायान् गुणैरवरजोऽप्यदितेः सुतानां लोकान् विचक्रम इमान् यदर्था[1]धियज्ञः।**
**क्ष्मां वामनेन जगृहे त्रिपदच्छलेन याञ्चामृते पथि चरन् प्रभुभिर्न चाल्यः।।१७।।**

**नार्थो बलेरयमुरुक्रमपादशौचं' [2]आपः [3]शिखां धृतवतो विबुधाधिपत्यम्।**
**यो वै प्रति[4]श्रुतमृते न चिकीर्षदन्यदात्मानमङ्ग! [5]शिरसा [6]हरयेऽभिमेने।।१८।।**

**तुभ्यं च नारद! भृशं भगवान् विवृद्धभावेन साधुपरि[7]तुष्ट उवाच योगम्।**
**ज्ञानं च भागवतमात्म[8]संतत्त्वदीपं यद्वासुदेवशरणा विदुरञ्जसैव।।१९।।**

**चक्रं च दिक्ष्वविहतं दशसु स्वतेजो मन्वन्तरेषु मनुवंशधरो बिभर्ति।**
**[9]दुष्टेषु राजसु दमं [10]व्यदधात् स्वकीर्तिं सत्ये [11]त्रिपृष्ठ उशतीं प्रथयंश्चरित्रैः।।२०।।**

**श्रीध०** वामनावतारमाह - **ज्यायानिति**। अदितेः सुतानां द्वादशादित्यानां मध्ये अधियज्ञः यज्ञाधिष्ठाता श्रीविष्णुः अवरजः कनीयानपि गुणै र्ज्यायाञ्[12]ज्येष्ठः। गुणानेवाऽऽह - यद्यतः इमान् लोकान् विचक्रमे पादन्यासैः क्रान्तवान्। अथ प्रतिश्रुतानन्तरमेव। तत्र हेतुः। बलेः क्ष्मां [13]वामनेन रूपेण जगृहे। नन्वीश्वरः स्वयं किमिति दुर्बलवत्तथा चक्रे? तत्राऽऽह। याञ्चां विना धर्ममार्[14]गे वर्तमानः [15]प्रभुभिः न चाल्यः ऐश्वर्यान्न [16]भ्रंशनीय इति।।१७।।

ननु तर्हि याच्ञयाऽपि चालनमनुचितमेवेत्याशङ्क्य त[17]तोऽप्यधिकं स्वसालोक्यादि दास्यामीत्याशयेन [18]हृतवानित्याह - **नार्थ** इति। यद्विबुधाधिपत्यमिदानीं बलात् प्राप्तमग्रे दीयमानं चायं बलेः पुरुषार्थो न भवति। कुत इत्यत आह - आप इति। आ अप इति [19]पदच्छेदः। उरु[20]क्रमस्य पादशौचं [21]चरणक्षालनरूपाः

---

1. M.Ma. 'धोऽधि' 2. M.Ma. अम्मशिवं 3. C. 'खां 4. M.Ma. तेऽपि च शीर्षमाणमात्मन्य' 5. I.M.Ma. विदधत् 6. H.V. 'प्यर' 7. W. 'पृष्ट 8. M.Ma.W. 'सु' 9. W. हसेषु 10. M.Ma. विदुघत् 11. M.Ma. विनष्ट' 12. H.V. 'यान् श्रेष्ठः 13. A.B. वामनरू' 14. H.V. 'गेण प्रव' 15. AB. Omit प्रभुभिः 16. H.V. प्रभ्रं' 17. H.V. 'तोऽधि' 18. H.V. आहृ' 19. A.B. Omit पद 20. H.V. 'गायस्य 21. H.V. Omit पादप्रक्ष'

अपः आसर्वतो धृतवतः। क्व? [1]शिखां शिखायां मूर्ध्नि इत्यर्थः। किञ्च शुक्रेण वारितः शप्तोऽपि अङ्ग! हे नारद! [2]यः प्रतिश्रुतं विना अन्यत्र चिकीर्षत् [3]कर्तुं नैच्छत्। [4]अत्र अडागमाभावस्त्वार्षः। [5]किन्तु प्रतिश्रुतं दातुमेवैच्छत्। [6]यश्च तृतीयपादपूरणार्थं [7]हरये आत्मानं देहम[8]प्यभिमेने अङ्गीकृतवान्। एवं सदेहं त्रैलोक्यं श्रद्धया दत्तवतो विबुधाधिपत्यमर्थो न भवतीत्यर्थः।।१८।।

हंसावतारमाह - **तुभ्यमिति**। भृशं विवृद्धेन भावेन अत्युद्रिक्तया भक्त्या परितुष्टस्सन् [9]भक्तियोगं साधु यथा [10]भवति तथा उवाच ज्ञानं चेति। [11]ज्ञानं ज्ञानसाधनम्। किं तत्? भागवतं नाम। कथम्भूतं? तत्त्वमेव [12]सतत्त्वं [13]तद्दीपम् आत्मतत्त्वदीपकम्। विवृद्धभावेनेति विशेषणस्य फलमाह। यदिति [14]यस्मात्।।१९।।

तत्तन्मन्वन्तरावतारमाह - **चक्रमिति**। स्वते[15]जो निजप्रभावमेव चक्रं सुदर्शनं बिभर्ति। चक्रवत् अप्रतिहतं प्रभावं बिभर्तीत्यर्थः। तदेवाऽऽह - मनुवंशपालकस्सन् त्रयाणां [16]महर्जनतपोलोकानां पृष्ठे उपरि स्थिते [17]सत्ये सत्यलोकेऽपि कमनीयां स्वकीर्तिं विस्तारयन् [18]दुष्टेषु राजसु दण्डं विधत्ते।।२०।।

**वीर०** वामनावतारमाह - **ज्यायानिति**। अदितेः सुतानां द्वादशादित्यानां मध्येऽधियज्ञः यज्ञाधिपतिः भगवानवरजः कनीयानपि गुणैर्ज्यायान् श्रेष्ठः। गुणानेव आह - यद्यतः इमान् लोकान् विचक्रमे पादविन्यासैः क्रान्तवान्, अथ प्रतिश्रुतानन्तरमेव। [19]तत्र हेतुः बलेश्चक्रवर्तिनः सकाशात् [20]पदत्रयव्याजेन क्ष्मां भूमिं वामनेन [21]जगृहे रूपेणेति शेषः। वामनेन रूपेण[22] गृहीतवान्। नन्वीश्वरः स्वयं दुर्बलवत् किमिति तथा चक्रे? तत्राऽऽह याच्ञामृते यच्ञां विना पथि चरन् धर्ममार्गे प्रवर्तमानः प्रभुभिस्समर्थैर[23]पि न चाल्यः ऐश्वर्यात् न भ्रंशनीय इत्यर्थः।।१७।।

ननु तर्हि याच्ञयाऽपि चालनमनुचितमेवेत्याशङ्क्य प्रबुद्धस्य बलेर्लौकिकस्वीयैश्वर्यभ्रंश इष्ट एवेत्या[24]शयेनाऽऽह - **नार्थ** इति। उरुक्रमस्य विस्तृतपादविन्यासस्य हरेः पादप्र[25]क्षालनं प्रत्युपयुक्ता आपः आ अप इति च्छेदः। आसमन्तात् शिखायां मूर्ध्नि धृतवतः, "[26]सुप्सुपा" इति समासः। यद्वा सप्तम्या आर्षो लुक्। विबुधाधिपत्यं नार्थः न सदृशं प्रयोजनमित्यर्थः। एतदेव उपपादयति यो बलिः प्रतिश्रुतमृते प्रतिज्ञातार्थं विना अन्यत् न चिकीर्षत् कर्तुं नैच्छदडभाव आर्षः। किन्तु स्वात्मानं अङ्ग हे नारद! हरये शिरसाऽभिमेने भगवच्छेषभूतमात्मानं हरये समर्पितवान्। शुक्रेण वारितः शप्तोऽपि अन्यथा कर्तुं नैच्छत्, किन्तु तृतीयपादपूरणार्थमात्मानमपि शिरसा समर्पितवानित्यर्थः।।१८।।

---

1. H.V. स्वशिखायां मू° 2. H.V. Omit यः 3. H. Omits कर्तुं नैच्छत् 4. A.B. Omit अत्र 5. B.H.V. Omit किन्तु......वैच्छत् 6. B.HV. Omit च 7. H.V. अ° 8. V. Omit अपि 9. H.V. Omit भक्तियोगं 10. A.HV. Omit भवति 11. A.H.V. Omit ज्ञानं 12. H.V. सु° 13. A.B. Omit तद्दीपम् 14. A.B. Omit यस्मात् 15. A.B. °जं 16. A.H.V. Omit महर्जनतपो 17. A.B. Omit सत्ये 18. A.H.V. Omit दुष्टेषु 19. W. अत्र 20. A.B. Omit पदत्रयव्याजेन 21. A.B. Omit जगृहे 22. A.B. add जगृहे 23. W. Omits अपि 24. W. °त्याह 25. W. प्रक्षा 26. W. Omits 'सुप्सुपा' इति समासः यद्वा

हंसावतारमाह - **तुभ्यमिति**। [1]हे नारद! भृशं विवृद्धभावेन प्रवृद्धस्नेहेन त्वया [2]साधु परिपृष्टः साकल्येन पृष्टो भगवान् हंसरूपेणेति शेषः। योगम् अनभिसंहितफलकर्मयोगं, ज्ञानं भागवतं साधन-सप्तकानुगृहीतभगवदुपासनात्मकं[3] ज्ञानम्। आत्मसु प्रकृतिविविक्तात्मसु यत्तत्त्वं याथात्म्यं तस्य दीपवत् प्रकाशकं ज्ञानयोगं च साधु यथा तथा तुभ्यमुवाच, एतदाख्यानमेकादशे स्फुटम्। यदेव हंसोक्त[4]मेव योगादिकं वासुदेवशरणाः "बहूनां जन्मनामन्ते" (भा.गी.) इत्युक्तरीत्या उपायत्वेन [5]उपेयत्वेन वासुदेवं शरणं गताः, अञ्जसा सुखेन विदुः हंसोक्तमेव ज्ञात्वाऽनुतिष्ठन्तीत्यर्थः।।१९।।

तत्तन्मन्वन्तरावतारमाह - **चक्रम्** इति। मनुवंशधरः मनुवंशपालकस्सन् मन्वन्तरेषु दशसु दिक्ष्व[6]विहतमनभिभाव्यं स्वतेजः स्वप्रतापो[7]पबृंहितं चक्रम् आज्ञारूपं[8] चक्रं बिभर्ति, किञ्च दृप्तेषु गर्वितेषु राजसु दमं दण्डं व्यदधात् व्यधत्त। कथम्भूतः सन् त्रिपृष्ठे तृतीयस्यां दिवि सत्ये सत्यलोके चरित्रैः उशतीं कमनीयं स्वकीर्तिं प्रथयन् विस्तारयन् व्यदधादित्यर्थः।।२०।।

**विज०** वामनत्रिविक्रमावतारौ तत्कर्म चाऽऽह - **ज्यायानित्यादि** श्लोकद्वयेन। अत्र यत्तच्छब्दावध्याहार्यौ। तथाहि - योऽधियज्ञो भगवान् गुणैर्ज्यायानपि अदितेस्सुतानामवरजोऽभूत्। तेन भगवता दैत्यानां गर्वं वामयति उद्गारयतीति वामनः तेन वामनरूपेण त्रिपदच्छलेन क्ष्मां जगृहे इति यत्तदथो तस्मात् स एव वामन इमाँस्त्रीलोँकान् त्रिभिः पदैः विचक्रमे तस्मात् त्रिविक्रमश्चाभूदिति वाक्यशेष इत्यर्थः किमर्थमेवं हरिणा कृतमत्राऽऽह याच्ञामिति। मार्गवर्ती पुमान् प्रभुभिरप्युपायैर्विना न चाल्य इति न्यायदर्शनार्थमेवं कृतमिति भावः। यद्वा अधियज्ञः क्ष्मायामुर्व्यां वामनेन ह्रस्वतरेण रूपेण जगृहे त्रिलोकीमिति शेषः। कथं त्रिपदच्छलेन इमाँल्लोकान् विचक्रम इति यत् तस्मात् अदितेः सुतानां जन्मना अवरजोऽपि गुणैः ज्यायान् सममन्यत्।।१७।।

त्रिपदच्छलेन त्रैलोक्यं दत्तवतो बलेर्दानफलमिन्द्रपदावाप्तिरिति संगिरन्ते केचित्, तन्न - किन्तु हरितोषणद्वारा मुक्तावानन्दोद्रेकता एव "ऐन्द्रं पदं नान्तरीयं फलं तु हरितोषणम्" इत्यादेरित्याशये-नाऽऽह **नार्थ** इति। अङ्ग नारद! प्रतिश्रुतं पदत्रयं ऋतेऽपि चात्मानं स्वसम्बन्धि शीर्षमाणं शीर्षाख्यमानं मनसा मनःपूर्वकं हरयेऽभिमेने समर्पयामास तस्यास्योरुक्रमपादशौचमंभः शिवं शिरसा धृतवतो बलेर्यद्विबुधाधिपत्यलक्षणं फलम् अयमर्थो न। साक्षात् फलं न भवति तन्नान्तरीयकमेवेत्यन्वयः वा इत्यनेन अस्यार्थस्यानन्यथात्वं वक्ति।।१८।।

महिदासनाम्नो हरेरवतारस्य चरित्रमाह - **तुभ्यमिति**। विवृद्धभावेन समुद्रिक्तभक्त्या साधुपरितुष्टो

---

1. A.B. Omit हे नारद 2. A.B. Omit साधु 3. W. °कज्ञां 4. A.B. Omit °मेव 5. A.B. Omit उपेयत्वेन 6. A.B. °प्रतिह° 7. W. °पबृंहि° 8. W. °पचक्रं

नाम्ना महिदासो भगवांस्तुभ्यमस्मदादिभ्यश्च भगवद्विषयं कर्मयोगं ज्ञानयोगं च उवाचेत्यन्वयः। आत्मेत्यनेन भागवतत्वं स्पष्टयति। अत्र प्रमाणमाह यदिति। यद् ज्ञानं वासुदेवशरणाः ब्रह्मादयः अवैष्णवनिषेधार्थ एवशब्दः तदुक्तम् - "ऐतरेयो हरिः प्राह नारदाय स्वकां तनुम् यत्प्राहुर्वैष्णवा नान्ये तदृते न सुखं परम्" इति।।१९।।

राजराजेश्वरावतारं तच्चरितं चाऽऽह - **चक्रं** चेति। राजराजेश्वर इति नाम्नाऽवतीर्णो हरिः स्वायम्भुवादिमनुवंशधरस्सन् दुष्टेषु राजसु दमं विदधत् सत्ये धर्मे सत्यसन्धाने वा निविष्टः उशतीं कमनीयां स्वकीर्तिं चरित्रैः प्रथयन् प्रख्यापयन् मन्वन्तरेषु भगवान् प्रियव्रतादिचक्रवर्तिष्वप्यास्थितो दशसु दिक्षु अविहतमप्रतिहतं तेजः स्वरूपभूतप्रभावं चक्रमाज्ञालक्षणं बिभर्तीत्यन्वयः। "मन्वन्तरेषु-भगवांश्चक्रवर्तिषु संस्थितः" इत्यादिकमत्र मानम्।।२०।।

**रा०कृ०** याच्ञां ऋते याचनां विना पथि चरन् सन्मार्गगामी जनः प्रभुभिः समर्थैरपि स्वामिभिः न चाल्यः ऐश्वर्यात् - न भ्रंशनीयः इति हेतोः त्रिपदच्छलेन त्रिपदव्याजेन वामनेन वामनरूपेण क्ष्मां भूमिं जगृहे बलेः सकाशात् यो भगवान् गृहीतवान्। किञ्च यो वा यत् यस्मात् कारणात् अथ प्रतिश्रुत-समनन्तरमेव इमान् लोकान् विचक्रमे पादप्रक्षेपैः आक्रान्तवान् तस्मादधियज्ञः यज्ञेश्वरः स नारायणः अदितेः सुतानामादित्यानां मध्येऽवरजोऽपि कनीयानपि गुणैः पूर्वोक्तैरिति शेषः। ज्यायान् ज्येष्ठः।।१७।।

अङ्ग! हे नारद! यो वै बलिः गुरुणा शुक्रेण वारितोऽपि प्रतिश्रुतं ऋते प्रतिज्ञातार्थं विना अन्यत् न चिकीर्षत् कर्तुं नैच्छत् किञ्च तृतीयपाददानप्रतिज्ञां सत्यां विधातुं शिरसा आत्मानमपि हरयेऽभिमेने समर्पितवान् उरुक्रमपादशौचमपः उरुक्रमस्य भगवतः पादप्रक्षालनात्मकं जलं आ आदरेण शिखा शिखायां शिरसीति भावः धृतवतो बलेः बलिचक्रवर्तिनः विबुधाधिपत्यं स्वर्गाधिकारः भविष्यतीत्ययं नार्थः नैव पुरुषार्थ इति भावः।

वीर्यपराक्रमादिक्षात्रगुणसम्पत् विश्वश्रेयसे भवेत् नतु दुर्बलजनपीडन येति, धर्मसाधनेऽपेक्षणी-यापि भौतिकशक्तितः स्वसेवनमात्रपरिमितव्यापारमिन्द्रियप्रज्ञामयदिव्यगुणसमाहारं दुर्बलं विधाय स्वायत्ती-करोतीति, भोगमयजीवनानां तात्कालिकस्वर्गसुखप्राप्तिः त्यागमयजीवनानां तु शाश्वतवैष्णवपदप्राप्तिः भवेदित्येवं बहवो महार्थाः वामनावतारकथया निर्मलान्तःकरणैः साधुजनैः समुन्नेयाः।।१८।।

हे नारद भृशं अत्यन्तं विवृद्धभावेन प्रवृद्धेन प्रेम्णा साधु सम्यक् परितुष्टः भगवान् तुभ्यं च योगमुवाच उपदिदेश। किञ्च यद्भगवदुक्तं वासुदेवशरणाः वासुदेवभक्ताः अञ्जसैव सुखेनैव विदुः जानन्ति आत्मसतत्त्वदीपं जीवात्मपरमात्मयाथात्म्यप्रकाशकं, ज्ञानं ज्ञानसाधनं तत् भागवतमुवाच।

---

1. A.B. 'क्रं त्राणलं'

अत्र हंसावतारो निरूपितः हंसावतारो नाम उच्छ्वसनिःश्वासमुखेन जीवेषु भगवदतार एव। स च मातृगर्भात् भुवि पतिते जीवे अन्तर्यामी वर्तते। ततश्च परमात्मन एव जीवात्मतया वर्तमानत्वात् जीवेषु देवमवलोकमानेन साधकेन जीवसेवायां भगवद्भक्तिसाधनमेव भागवतमहापुराणरहस्यम्। प्राचीन-कल्पे दासीपुत्रो नारदोऽपि भागवतसेवापरः कल्पान्तरे सनक-सनन्दनादिभिः सह ब्रह्ममानसपुत्रत्वेन अवतीर्णः सर्वान्तर्यामिभावमुपगम्य ब्रह्ममुखेन नारायणात् भगवतोपदेशं प्रापदिति गम्यते।।१९।।

मनुवंशधरः मनुवंशरक्षकस्सन् भगवान् मन्वन्तरेषु अवतीर्येति शेषः। दशसु दिक्षु अविहतं अव्याहतम् स्वतेजः स्वतेजोरूपम् चक्रं बिभर्ति। किञ्च सः चरित्रैः स्वकीयैश्चरितैः त्रिपृष्ठे त्रयाणां लोकानां पृष्ठे उपरि वर्तमाने सत्ये सत्यलोकेऽपि उशतीं मनोरमां स्वकीर्तिं प्रथयन् विस्तारयन् दुष्टेषु राजसु दमं दण्डं व्यधात् प्रयुक्तवान्।

धर्ममार्गे प्रजानां प्रवर्तनमेवात्र तेजोमयं चक्रम्। तादृशचक्रं धृत्वा अधर्ममार्गगामिनं जनं यो दण्डयितुं प्रभवति स मनुवंशधरो भगवदवतार इति भाव्यते।।२०।।

**धन्वन्तरिश्च भगवान् स्वयमेव[1] कीर्तिः नाम्ना नृणां पुरुरुजां रुज आशु हन्ति।**
**यज्ञेरुच भागममृतायुरवा[2]वचन्ध आयुश्च[3] वेदमनुशास्त्यवतीर्य लोके।।२१।।**

**क्षत्रं क्षयाय विधिनोपभृतं[4] महात्मा[6] ब्रह्मध्रुगुज्झितपथं नरकार्तिलिप्सु।**
**उद्धं[5]न्त्यसाववनिकण्टकमुग्रवीर्यः त्रिःसप्तकृत्व उरुधारपरश्वधेन।।२२।।**

**[7]अस्मत्प्रसादसुमुखः कलया कलेश इक्ष्वाकुवंश अवतीर्य गुरोर्निदेशे।**
**तिष्ठन् वनं सदयितानुज आविवेश यस्मिन् विरुद्ध्य दशकन्धर आर्तिमार्च्छत्।।२३।।**

**[8]यस्मा अदादुदधिरूढभयाङ्गवेपो मार्गं सपद्यरिपुरं हरवद् दिधक्षोः।**
**दूरे सुहृन्मथितरोषसुशोण[9]दृष्ट्या तातप्यमानमकरोरगनक्रचक्रः।।२४।।**

**श्रीध०** धन्वन्तर्यवतारमाह - **धन्वन्तरिरिति**। लोकेऽवतीर्य धन्वन्तरिस्सन् पुरुरुजां महारो-गिणां [10]लोकानां स्वनाम्नैव रुजो रोगान् हन्ति। स्वयमेव कीर्तिरिति कीर्त्यतिशयोक्तिः। अमृतं मरणशून्यम्। आयुर्यस्मात् सः। अव अवसत्रं पूर्वं दैत्यैः प्रतिषिद्धं[11] यज्ञे भागं[12]मवरुन्धे[13]ऽलभत। 'अवाप **यद्धम्**' इति पाठेप्ययमेवार्थः। आयुर्विषयं वेदं च अनुशास्ति प्रवर्तयति।।२१।।

---

1. M.Ma. 'मास देवो 2. AF.GF. 'प दुःखमां'; M.Ma. 'प चाद्धां'; W. 'प रुद्धं 3. H.I.V. '' ष्यं' 4. M.Ma. 'हृतं 5. AF.GF. 'घ्नं' 6. B. 'य
7. M.Ma. कृत्स्नं' 8. M.Ma. तं' 9. M.Ma. 'ष' 10. A.H.V. Omit लोकानां 11. A. 'बद्धं; B. 'रुद्धं 12. H.V. गं चार्वं' 13. A.B. लभेते

परशुरामावतारमाह - **क्षत्रमिति**। जगतः क्षयाय विधिना दैवेनोपभृतं संवर्धितं मृत्यवे समर्पितमिति वा ब्राह्मणेभ्यो[1] द्रुह्यतीति तथा। अतः उज्झितः पन्थाः वेदमार्गो येन सः। अत एव नरकार्तिं लिप्सतीति तथा। एवम्भूतमवनेः कण्टकतुल्यं क्षत्रमसौ महात्मा हरिरुद्धन्त्युत्पाटयति। [2]दीर्घतीक्ष्णधारेण परशुना।।२२।।

श्रीरामावतारमाह - त्रिभिः **अस्मदिति**। अस्माकं ब्रह्मादीनां [3]प्रसादे सुमुखः कलया भरतादि-रूपया सह कला माया तस्या [4]ईशः। गुरोर्दशरथस्याज्ञायां तिष्ठन् सीतालक्ष्मणाभ्यां सहितो वनमाविवेश। यस्मिन् विरोधं कृत्वा रावणो नाशं प्राप्तः।।२३।।

**यस्मा** इति। यस्मै श्रीरामयोदधिर्मार्गं [5]अदात् ददौ। सपदि शीघ्रं हरो यथा त्रिपुरं दिधक्षुः तद्वदरिपुरं लङ्कां [6]दिधक्षोः दग्धुमिच्छोः। षष्ठी चतुर्थ्यर्थे यद्वा पञ्चमीयम् दिधक्षोः रामाद्भयं प्राप्तं तेन [7]अङ्गेषु कम्पो यस्येति, कथम्भूतः उदधिः ऊढं प्राप्तं यद्भयं तेनाङ्गेषु वेपः कम्पो यस्य, अत्र हेतुः। दूरे वर्तमाना सुहृत्सीता तया निमित्तभूतया मथितः क्षुभितो रोषः तेन सुशोणा अत्यरुणा दृष्टिः तयाऽत्यन्तं तप्यमानं मकराणामुरगाणां नक्राणां [8]च चक्रं यस्मिन्।।२४।।

**वीर०** धन्वन्तर्यवतारमाह - **धन्वन्तरिरिति**। भगवान् लोके धन्वन्तरिरूपेणावतीर्य पुरुरुजां भूरिदुःखानां महारोगिणां नृणां स्वनाम्नैव रुजः रोगान् हन्ति कथम्भूतः स्वयमेव कीर्तिरिति कीर्त्यतिशयोक्तिः अमृतं मरणशून्यमायुर्यस्मात् सः। रुद्धं पूर्वं [9]दैत्यैः प्रतिषिद्धं यज्ञे भागमवाप। लेभे आयुर्विषयं वेदं चानुशास्ति प्रवर्तयति।।२१।।

परशुरामावतारमाह - **क्षत्रमिति**। विधिना दैवेन क्षयाय मृत्यवे उपभृतं समर्पितं ब्रह्मधृग् ब्राह्मणेभ्यो द्रुह्यतीति तथा। अतः उज्झितस्त्यक्तः पन्था वेदमार्गो येन [10]तत्, अत एव नरकार्तिं नारकं दुःखं लिप्सु लब्धुमिच्छु, एवम्भूतमवनेः कण्टकं कण्टकतुल्यं क्षत्रं क्षत्रियकुलमसौ महात्मा भार्गवरामरूपो हरिरुरुधा-रपरश्वधेन दीर्घतीक्ष्णधारेण परशुना त्रिस्सप्तकृत्वः एकविंशतिवारम्। उग्रवीर्यः असह्यवीर्यः सन् उद्धन्ति उत्पाटयति।।२२।।

रामावतारमाह - **अस्मदिति** [11]त्रिभिः। अस्मदनुग्रहे सुमुखः अस्मद्दत्तवराविरोधेनावतीर्ण इति भावः। कलेशः प्रकृतिपुरुषयोराधिपतिः कलया [12]भरतादिरूपया सह त्रिभिः इक्ष्वाकुकुलेऽवतीर्य

---

1. B. adds अपि 2. B. Omits दीर्घ 3. H.V. प्रसादेन 4. V. Omits ईशः 5. A.B. Omit अदात् 6. A.B. Omit दिधक्षोः 7. A.H.V. अङ्गे 8. V. Omits च 9. W. दैतेयैः 10. A.B. Omit तत् 11. W. Omits त्रिभिः 12. A. adds 'क'

गुरोर्दशरथस्य पितुर्[1]निर्देशे आज्ञायां तिष्ठन्नाज्ञां पालयन्नित्यर्थः। सदयितानुजः सीतालक्ष्मणाभ्यां सहितः वनं दण्डकारण्यं[2] यः आविवेश यस्मिन् रामे विरूद्धय विरोधं कृत्वा दशकन्धरो रावणः आर्तिं नाशमार्च्छत् प्राप्तः।।२३।।

यस्मै श्रीरामाय उदधिः समुद्रः मार्गमदात् दत्तवान् कथम्भूतोऽदात् सपदि शीघ्रं हरो रुद्रः यथा त्रिपुरं दिधक्षुः दग्धुमिच्छुः तद्वदरिपुरं लङ्कां दिधक्षोः तस्मात्[3] श्रीरामात् हेतोः ऊढभयाङ्गवेपः ऊढं प्राप्तं यत् भयं तेनाङ्गवेपः कम्पो यस्य सः[4] हरिः दूरे[5] वर्तमाना सुहृत्सीता तया निमित्तभूतया मथितः क्षुभितः यो रोषः तेन सुशोणा दृष्टिः श्रीरामसम्बन्धिनी तया तातप्यमानं मकराणां उरगाणां नक्राणां च[6] चक्रं समूहो यस्मिन् स एवं भूतोऽब्धिः[7] मार्गमदादित्यर्थः।।२४।।

**विज०** देवो भगवान् स्वयमेव विशेषावेशमन्तरेण धन्वन्तरिश्चासौ अवतीर्णश्च पुरुरुजां बहुरोगाणां रुजो रोगान् नाम्नोच्चारितेन हन्ति। स एवामृतायुः नित्यमुक्तः सन्नद्धा यज्ञभागं चावाप आयुर्वेदं च वा हटं शास्त्रं चानुशास्ति कृत्वा लोके प्रवर्तयति।।२१।।

भार्गवरामावतारं तत्कर्म च संक्षिप्य आह - **क्षत्रमिति**। उं रुद्रं ग्रसतीति उग्रं वीर्यं यस्य स उग्रवीर्यं। आत्मभयः पुरुषेभ्यो महान् पुरुषोत्तमोऽसौ उर्वी धारा निशिताग्रं यस्य स उरुधारः स चाऽसौ परश्वधः परशुः तेन अवनिकण्टकम् अत एव नरकार्तिलिप्सु नरकदुःखलब्धुकामं उज्झितपथं त्यक्तसन्मार्गं ब्रह्मध्रुक् ब्राह्मणद्रोहि अतएव विधिना दैवेन क्षयाय उपहतं समर्पितं क्षत्रं क्षत्रियकुलं उद्धन्ति उन्मूलयतीत्यन्वयः। त्रिस्सप्तकृत्वः एकविंशतिवारम्[8]।।२२।।

रामावतारं तद्विक्रमं च श्लोकत्रयेणाऽऽह - **अस्मत्प्रसादेति**। दशकन्धरो रावणो यस्मिन् विरुद्धय आर्तिं मरणलक्षणामार्च्छत् प्राप सः क्लेशः प्राणः 'श्रद्धावायुः' इत्यादि श्रुत्युक्तानां कलानां स्वकार्यशक्तिप्रदः कृत्स्नः पूर्णः प्रसादः आनन्दो यस्य स तथा कार्येण कारणोपलक्षणं सु सुन्दरं मुखं यस्य स तथा कृत्स्न- प्रसादश्चायं सुमुखश्चेति समासः। इक्ष्वाकुवंशे कल्या स्वरूपांशेनावतीर्य गुरोर्दशरथस्य निदेशे नियोगे तिष्ठन् सदयितानुजः सीतालक्ष्मणाभ्यां सहितो रामो वनमाविवेशेत्यन्वयः।।२३।।

दूरे स्थिता सुहृत्सीता यस्य सः तस्य रामस्य उज्ज्वलितो रोष एव सुशोषोऽग्निः तेन युक्तया दृष्ट्या "अग्निः सुशोषः कक्षघ्नस्तिमिरारिर्हिरण्यद" इति मकराश्च उरगाश्च नक्राश्च मकरोरगनक्राः तातप्यमानानां पुनः पुनः पच्यमानानां मकरोरगनक्राणां चक्राणि यस्मिन् स तथा ऊढं भयं येन स तथा अङ्गे वेपः

1. W. Omits पितुः 2. W. Omits दण्डकारण्यं यः 3. W. Omits तस्मात् 4. W. Omits सः हरिः 5. A.B. Omit दूरे 6. W. Omits च 7. W. Omits 'ऽब्धिः 8. M.Ma. 'द्वार'

कम्पो यस्य स तथा ऊढभयश्च अङ्गवेपश्च एवंविधः उदधिस्त्रिपुरं हरवदरिपुरं लङ्कां दिधक्षोः दग्धुकामाय तस्मै रामाय सपदि मार्गमदादित्यन्वयः।।२४।।

**रा०कृ०** किञ्च भगवान् धन्वन्तरिः धन्वन्तरिरूपेण लोके जगति अवतिर्य स्वयमेव कीर्तिः अधिककीर्तिसहितः सन् नाम्ना स्वनाम्नैव पुरुरुजां बहुरोगिणां नृणां रुजः रोगान् आशु शीघ्रं हन्ति निवारयति। अमृतायुः सः अव पुरा दैत्यैः प्रतिषिद्धं यज्ञे भागं च अवरुन्धे लभते। अपि च आयुः आयुर्विषयकं वेदं अयुर्वेदमिति यावत् अनुशास्ति प्रपञ्चे प्रवर्तयति।।२१।।

असौ महात्मा भगवानुग्रवीर्यः असह्यपराक्रमः परशुरामावतारस्सन् उरुधारपरश्वधेन अतितीक्ष्ण-धारेण परशुना ब्रह्मध्रुक् ब्राह्मणद्रोहि उज्झितपथं परित्यक्तवेदमर्गं नरकार्तिलिप्सु नारकं दुःखं लब्धुमिच्छु अवनिकण्टकं अवनेः कण्टकतुल्यं भुवः पीडाकरमित्यर्थः, अत एव क्षयाय मृत्यवे, विधिना तत्प्रारब्धेन उपभृतं समर्पितं क्षत्रं क्षत्रियमात्रं त्रिस्सप्तकृत्वः एकविंशतिवारं उद्धन्ति उत्पाटयति।।२२।।

अस्मत्प्रसादसुमुखः अस्माकं बह्मादीनां प्रसादे अनुग्रहे सुमुखः अनुकूलः, कलेशः कलानां ऐश्वर्यादिगुणानां ईशः भगवान् कलया भरतादिरूपया सह इक्ष्वाकुवंशे अवतीर्य गुरोः पितुर्दशरथस्य निदेशे आज्ञायां तिष्ठन् वर्तमानः सदयितानुजः दयितया सीतया अनुजेन लक्ष्मणेन च सहितः वनमाविवेश। यस्मिन् श्रीरामे विरुद्ध्य विरोधं कृत्वा दशकन्धरः रावणः आर्तिं दुःखं विनाशमिति भावः आर्च्छत् प्रापत्।।२३।।

सपदि शीघ्रमेव हरवत् अरिपुरं अरेः रावणस्य पुरं लङ्कां दिधक्षोः दग्धुमिच्छोः श्रीरामाद्धेतोः ऊढभयाङ्गवेपः ऊढं प्राप्तं यद्भयं तेन जातः अङ्गे वेपः कम्पः यस्य तथाभूतः, दूरे, सुहृन्मथितरोषसुशो-णदृष्ट्या सुहृदा सौहार्दशलिन्या सीतया निमित्तभूतया मथितेन क्षुभितेन रोषेण सुशोणया आरक्तया दृष्ट्या श्रीरामस्य दृष्ट्या तातप्यमानमकरोरगनक्रचक्रः। अत्र मकरशब्देन स्थूला मत्स्यविशेषाः, उच्यन्ते उदधिः समुद्रः यस्मै श्रीरामाय मार्गं अदात् दत्तवान्।।२४।।

**वक्षःस्थलस्पर्शरुग्ण[2]महेन्द्रवाहदन्तैर्विडम्बि[3]तककुब्जुष[4] ऊढहासम्[5]।**
**सद्योऽसुभिस्सह विनेष्यति दारहर्तुर्विस्फूर्जितैर्धनुष उच्चरतो[6]ऽधि[7] सैन्ये[8]।।२५।।**

---

1. A.B. Omit अङ्ग वेपश्च 2. AF.GF. "भग्न" 3. M.Ma. "ल" 4. M.Ma.W. "ब्जयरू" 5. M.Ma. "सः 6. M.Ma. "रितैस्ससैन्यः 7. AF.GF. "रि" 8. W. "न्यम्

**भूमेः सुरेतरवरूथविमर्दितायाः क्लेशव्ययाय कलया सितकृष्णकेशः।**
**जातः करिष्यति जनानुपलक्ष्यमार्गः कर्माणि चाऽऽत्ममहिमोपनिबन्धनानि।।२६।।**

**तोकेन जीवहरणं यदुलूकिकाया[1]स्त्रैमासिकस्य च पदा शकटो[2]ऽ[3]पवृत्तः।**
**यद् रिङ्गतान्तरगतेन दिविस्पृशोर्वा[4] उन्मूलनं त्वितरथाऽर्जुनयोर्न भाव्यम्।।२७।।**

**यद् वै व्रजे व्रजपशून् विषतोयपीथान्[5] [6]पालांस्त्वजीवयदनुग्रहदृष्टिवृष्ट्या।**
**तच्छुद्धयेऽतिविषवीर्यं विलोलजिह्वमुच्चाटयिष्यदुरगं विहरन् ह्रदिन्याम्।।२८।।**

**श्रीध० वक्ष** इति। किञ्च युद्धे रावणस्य वक्षःस्थलस्पर्शेन ([7]अत्र छन्दो भङ्गः आर्षः) रुग्णाः भग्नाः [8]ये महेन्द्रवाहस्य ऐरावतस्य दन्ताः तैर्वि[9]डम्बिताः स्वधवलिम्ना धवलीकृताः तत्तद्दिक्षु पतितैः प्रकाशिता इत्यर्थः। या एवम्भूताः ककुभोः दिशः ताः जुषते सेवते पालयतीति वा [10]तथा तस्य दारहर्तुः रावणस्य। अहो मत्समः कोऽन्योस्तीति महागर्वेण ऊढं प्राप्तं हासम् असुभिः प्राणैः सह सद्यः शीघ्रं विनेष्यत्यपनेष्यति। कैः? धनुषो विस्फूर्जितैष्टङ्कारघोषैरेव। कथम्भूतस्य? अधिसैन्ये स्वपरसैन्यमध्ये उच्चरतः उत्कर्षेण विचरतः। ककुब्जयरूढहासमिति पाठे दन्तैः उज्ज्वलितानां ककुभां जयेन यो रूढहासः सञ्जा[11]तगर्वः तमपनेष्यतीत्यर्थः।।२५।।

श्रीकृष्णावतारमाह - **भूमेरिति** दशभिः। सुरेतराः असुरां[12]शसम्भूताः राजानः तेषां वरूथैः सैन्यैः विमर्दितायाः भारेण पीडितायाः कलया रामेण सह जात[13]स्सन्। ननु कोऽसौ जातः। सितकृ[14]ष्णौ केशौ यस्य भगवतः [15]स एव साक्षात्। सितकृष्णकेशत्वं शोभैव, नतु वयः परिणामकृतमविकारित्वात्। यत्तूक्तं विष्णुपुराणे - "उज्जहारात्मनः केशौ सितकृष्णौ महामुने" इति। य[16]च्च भारते "स चापिकेशौ हरिरु[17]ज्जहार शु[18]क्लमेकमपरं चापि कृष्णम्। तौ चापि के[19]शावाविशेतां यदूनां कुले स्त्रियौ रोहिणीं देवकीं च। तयोरेको बलभद्रो बभूव योऽसौ श्वेतस्तस्य देवस्य केशः। कृष्णो द्वितीयः केशवः सम्बभूव केशो योऽसौ [20]वर्णतः कृष्ण उक्तः।।" इति। तत्तु न केशमात्रावताराभिप्रायं, किन्तु [21]भूभारावतरणरूपं कार्यं कियदेतत् [22]मत्केशावेवैतत्कर्तुं शक्ताविति द्योतनार्थं रामकृ[23]ष्ण्योर्वर्णसूचनार्थं च केशोद्धरणमिति गम्यते, अन्यथा तत्रैव पूर्वापरविरोधापत्तेः। "कृष्णस्तु भगवान् स्वयम्" इत्येतद्विरोधाच्च। कथम्भूतः? परमेश्व[24]रतया जनैरनुपलक्ष्यो मार्गो यस्य। तर्हि ईश्वरत्वे किं प्रमाणम्? अति मानुषकर्मान्यथाऽनुपपत्तिरेवेत्याह - आत्मनो महिमा उपनिबद्ध्यते अभिव्यज्यते येषु तानि।।२६।।

---

1. M.Ma. °पि° 2. W. °टापवृत्तिः 3. C. °प्र; H.V. °वि° 4. W. °र्यत् 5. H.I.M.Ma.V.W. °तान् 6. M.Ma. गोपांस्तु जीव°; W. बालानजीव° 7. A.B. Omit अत्र......आर्षः 8. A. Omits ये 9. A. °द्राविताः 10. H.V. तदा 11. H.V. °तो ग° 12. H.V. Omit सं 13. H.V. Omit सन् ननु कोऽसौ जातः 14. V. °ष्णके° 15. H.V. स्वतः 16. H.V. भारतेऽपि 17. A. °ज्जहे; B. °द्धबर्हे 18. H.V. °क्लं चैक° 19. H.V. °शौ विशतां 20. H.V. वर्णितः कृष्णवर्गः 21. H.V. °भारावतरण° 22. H.V. °वपि तत्क° 23. H.V. °केशव° 24. H.V. °रः तथा

[1]एतदेव प्रपञ्चयति - **तोकेने**त्यादिना। [2]तोकेन बालेन [3]सता उलूकिकायाः पूतनाया जीवहरणं यत् रिङ्गता जानुभ्यां गच्छताऽन्तरगतेन मध्यं प्राप्तेन दिविस्पृशोरत्युच्चयोः [4]इतरथाऽनीश्वरत्वे तत्र भवितव्यम्।।२७।।

**यदिति**। विषतोयपी[5]थान् [6]विषमयतोयस्य पी[7]थं पानं येषां तान् पालान् गोपांश्च कृ[8]पादृष्टिसुधा-वृष्ट्या जीवयिष्यतीति यमुनायां [9]विहरन् [10]क्रीडन्नुरगं का[11]लियमुञ्चाटयिष्यदुञ्चाटयिष्यति। तच्छुद्धये तस्या ह्रादिन्या निर्विषत्वाय अतिविषवीर्येण विलो[12]लौ अति चञ्चला जिह्वा यस्य।।२८।।

**वीर०** किञ्च युद्धे रावणस्य वक्षस्थलःस्पर्शेन रुग्णाः भग्ना ये महेन्द्रवाहस्यैरावतस्य दन्ताः तैर्विडाम्बिताः स्वधवलिम्ना धवलीकृताः तत्तद्दिक्षु पतितैः वक्षश्चूर्णितसुरगजदन्तचूर्णैः प्रकाशिता इत्यर्थः। एवम्भूताः याः ककुभः दिशः तासां यो जयस्तेन रूढः उत्पन्नः यो हासः अहो मत्समः कोऽन्योऽस्तीति गर्वेण प्राप्तहासः तं सैन्यमध्ये उत्कर्षेण चरतो दारहर्तुः रावणस्यासुभिः प्राणैस्सह सद्यः शीघ्रं विनेष्यति अपनेष्यति कैः? धनुषो विस्फूर्जितैः [13]विशेषेण स्फूर्जितैः स्फुरितैः शरैरित्यर्थः।।२५।।

कृष्णावतारमाह - **भूमे**रिति। सुरेतरा [14]आसुरसम्पत्त्या जाताः राजानः तेषां वरूथैः सैन्यैः विमर्दिताया भारेण पीडिताया भूमेः क्लेश[15]व्ययाय [16]भरापहारायेत्यर्थः। सितकृष्णकेशः भगवान् कलया बलभद्रेण साकं जातः अवतीर्णः सितकृष्णौ केशौ यस्य सः [17]शोभार्थं हि भगवता सितकृष्णकेशौ धृतौ अविकारत्वेन वयः परिणामासम्भवात्। यत्तु विष्णुपुराणे - "उज्जहारात्मनः केशौ सितकृष्णौ तथा मुने" इति। भारतेऽपि "स चापि केशौ हरिरुच्चजह्रे युक्तं चैकमपरं चापि कृष्णम्, तौ चापि केशौ विशतां यदूनां कुले स्त्रियौ रोहिणीं देवकीं च। तयोरेको बलभद्रो बभूव योऽसौ श्वेतस्तस्य देवस्य केशः। कृष्णो द्वितीयः केशवः सम्बभूव केशौ योऽसौ [18]वर्णतः कृष्ण उक्तः" इति। तत्तु न केशमात्रावताराभिप्रायं किन्तु भूभारावताररूपं कार्यं कियदेतन्मत्केशावपि [19]तत्कर्तुं शक्ताविति द्योतनार्थम्। रामकेशवयोर्वर्णस्तवनार्थं च केशोद्धरणमिति गम्यते, अन्यथा तत्रैव पूर्वापरविरोधापत्तेः। 'कृष्णस्तु भगवान् स्वयम्' इत्येतद्विरोधाच्च। जातश्च भगवान् जनैरनुपलक्ष्यः मार्गो गतिर्यस्य सः तथाभूतः आत्मनः स्वस्य महिमा उपनिबध्यते अभिव्यज्यते येषु तानि स्वमाहात्म्यप्रकाशकानीत्यर्थः। [20]कर्माणि चेष्टितानि करिष्यति।।२६।।

कर्मणां परमेश्वरत्वप्रकाशकत्वमेव प्रपञ्चयति - **तोकेने**त्या[21]दिनवभिः। तोकेन बालेन सता उलूकिकायाः पूतनायाः जीवहरणं यत् पूतना उलूकरूपेण आगतेति पुराणान्तरप्रसिद्धिः। त्रैमासिकस्य

1. H.V. तदेव 2. A.B. Omit तोकेन 3. A.B. Omit सत उलूकिकायाः 4. H.V. अन्यथा° 5. H.V. °तान् 6. H.V. विषमयं तोयं तस्य 7. H.V. °तं 8. B. °ष्णं° 9. A.B. Omit विहरन् 10. H.V. Omit क्रीडन् 11. H.V. °ली° 12. H.V. °लाश्च° 13. W. Omits विशेषेण स्फूर्जितैः 14. W. अ° 15. W. °नाशाय 16. W. भारापहरणार्थमित्यर्थः 17. W. adds सितकृष्णकेशः 18. W. वर्णितः कृष्णवर्णः 19. A.B. Omit तत् 20. A.B. कार्याणि: 21. W. Omits आदि नवभिः।

त्रिमासवयस्कस्य पदा पादेन [1]शकटस्य शकटरूपेणागतस्यासुरस्य [2]अपवृत्तिः परावृत्तिरिति यत् रिङ्गता [3]जानुभ्यां गच्छता [4]उलूखलमाकर्षता दिविस्पृशोः [5]अत्युच्चयोः अर्जुनयोः अर्जुना[6]ख्यवृक्षयोः अन्तरगतेन मध्यं प्राप्तेन तयोरुन्मूलनं[7]मुत्पाटनं[8] इति यत् तत्सर्वं कर्म दिव्यमित्युत्तरत्रान्वयः इतरथा दिव्यं न चेत् न भाव्यं न भवितव्यम् अनीश्वरत्वे तत्सर्वमनुपपन्नमित्यर्थः।।२७।।

किञ्च व्रजे वसन् विषतोयपीतान् विषजलस्य पीतं पानं येषां तान् [9]व्रजपशून् [10]तत्पालांश्च अनुग्रहदृष्टिः कृपादृष्टिः तस्याः वृष्ट्या सुधावर्षेणाजीवयदिति यत् ह्रदिन्यां यमुनायां विहरन् तच्छुद्धये ह्रदिन्याः निर्विषत्वाय अतिविषवीर्येण विलोला चञ्चला जिह्वा यस्य तं उरगं कालियाख्यं सर्पमुच्याटयिष्यत् पलाययिषयती[11]ति यत्।।२८।।

**विज०** वक्षःस्थलस्पर्शेन रुग्णाः भग्नाः महेन्द्रवाहस्य ऐरावतस्य दन्ताः वक्षःस्थलस्पर्शरुग्णमहेन्द्रवाहदन्ताः तैर्विलम्बितः ककुभां जयः विलम्बितककुब्जयः तेन रूढः उत्पन्नो हासोऽट्टहासो यस्य स तथा सैन्येन सहितो रावणः तस्य दारहर्तुः दारान् सीतामाहर्तुकामस्य रामस्य धनुषः उच्चरितैः निर्गतैः विस्फूर्जितैः असुभिस्सह विनेष्यति विनयं मदविनाशमेष्यति पुनः सद्यः तत्क्षण एव राममुक्तैः शरै विनेष्यति विनाशं प्राप्नोतीत्यन्वयः। "धनुर्विस्फूर्जितैः नष्टो रावणः पूर्वमेव तु। पुनः शरैः राममुक्तैः सानुबन्धो विनेष्यती" त्यनेन धनुर्विस्फूर्जितैर्विनाशः कथमभूत्? इतीयमाशङ्का निरस्तेति। ससैन्य इत्यस्य विवरणं सानुबन्ध इति।।२५।।

कृष्णावतारमनन्यसाध्यं तत्कर्म च संङ्गृह्य कथयति - **भूमेरित्यादि** श्लोकदशकेन। स हरिः सितकृष्णकेश इति नाम कलया जातः कर्माणि करिष्यतीत्यन्वयः। कर्मणा तत्त्वज्ञानं कस्मन्नोदेति अत उक्तं जनेति। प्राकृतज्ञेयमार्गत्वादित्यर्थः। अवतारप्रयोजनमाह - सुरेतरेषामसुराणां वरूथेन समूहेन सेनया वा विमर्दितायाः पीडितायाः भूमेः क्लेशव्ययायेति। कीदृशाशनि कर्माणि? आत्ममहिमोपनिबन्धनानि स्वमहिमनिमित्तानि पूतनवधादीनि हरेः कर्माणि परकर्मनिबन्धनानि न भवन्ति अन्येषां कर्माणि तन्महिमनिबन्धनानीति चार्थः। तदुक्तं "विष्णो र्नान्येन कर्माणि परेषां तन्निबन्धनम्" इति अत्रानन्तांशे रौहिणेये रामे शुक्लेशात्मकरामाभिधानेन हरिस्तिष्ठन् जगद्रक्षयतीत्येतत् "राम एको ह्यनन्तांशस्तत्र रामाभिधो हरिः" इत्यादिनोक्तम् अत एव ग्राह्यमिति भावः।।२६।।

तोकेनेत्यणुना बालेनानिर्देशेनेत्यर्थ शरीरोत्थानादिप्रवृत्तिहेतुत्वाज्जीवः प्राणाः तान् लुम्पतीति

---

1. A.B. Omit शकटस्य 2. A.B. उपवृत्तिः विपरिवर्तनं 3. A.B. Omit जानुभ्यां गच्छता 4. W. Omits उलूखलमाकर्षता 5. W. Omits अत्युच्चयोः 6. W. 'नवृक्ष' 7 W. Omits उत्पाटनं 8. A. तत्, तदितरथा न भाव्यं; B. यत्, तदितरथा न क्षाव्यं 9. W. Omits व्रज 10. A B. Omit तत् 11. A.B. 'दिति

उलूपिका तस्याः स्तनपानेन जीवहरणं यत्कर्म त्रैमासिकस्य त्रयो मासा वयोलक्षणा निवृत्ता यस्य स तथा तस्य कृष्णस्योत्क्षिप्तेन पादेन शकटोऽपवृत्तः व्यत्यस्ताक्षेण शकटेन शकटाख्यो हत इति यच्च उलूखलबद्धेन रिङ्गता क्रीडताऽन्तरं गतेन मध्यगतेन बालेन दीविस्पृशोः सहस्रधनुर्मात्रोर्ध्वदेशं स्पृशतोः तावदुच्छ्रययोरित्यर्थः। यमलार्जुनयोर्वृक्षयोरून्मूलनं च यत्सर्वं कर्म इतरथा विष्णुर्न चेत् स्वमहिमोपनिबन्धनत्वेन न[1] भाव्यम्। "सहस्रधनुषस्तूर्ध्वं द्युशब्देनापि भण्यत" इति च ।।२७।।

विषतोयपीतान् विषमिश्रजलं पीतवतः जीवयत् अजीवयत् अनुग्रहलक्षणदृष्टिवृष्ट्या तच्छुद्धये यमुनाह्रदजलशुद्धये ह्रदिन्यां यमुनानद्यां विहरन् कालीयनागमुच्चारयिष्यन् उच्चारितं करिष्यति च विषजले विहरणं दुर्गस्थानह्रदादुच्चाटनं च नान्यसाध्यं तदनेन कृतमितरथा न भाव्यमित्यर्थः।।२८।।

**रा०कृ०** अधिसैन्ये सैन्यमध्ये उच्चरतः उत्कर्षेण चरतः वक्षःस्थलस्पर्शरुग्णमहेन्द्रवाहदन्तैः युद्धे स्ववक्षस्थलस्य स्पर्शेन रुग्णाः भग्नाः महेन्द्रवाहस्य ऐरावतस्य दन्ताः तैः विडम्बितककुब्जुषः विडम्बिताः धवलीकृताः ककुभः दिशः ताः जुषति पालयतीति तथाभूतस्य दारहर्तुः सीतापहारिणो रावणस्य ऊढहासं आत्मतुल्यो नास्तीतिगर्वेण दृढमुत्पन्नं हासं असुभिः प्राणैः सह धनुषः विस्फूर्जितैः टङ्कारनादैरेव सद्यः शीघ्रं सः श्रीरामो विनेष्यति विनाशयिष्यति।।।२५।।

सुरेतरवरूथविमर्दितायाः सुरेतराः असुराः आसुरगुणोपेताः राजानः इत्यर्थः, तेषां वरूथैः सैन्यैः विमर्दितायाः पीडितायाः भूमेः क्लेशव्ययाय भारापनोदनेन क्लेशनाशाय कलया अंशभूतेन बलरामेण सह जातः अवतीर्णः सितकृष्णकेशः धवलकृष्णकेशः। अत्र 'सित' पदेन तेजोमयं दिनं कृष्णपदेन तिमिरमयी रात्रिश्च सूच्यते। तदुभयात्मककेशपदेन दिवानिशात्मकः कालः सूच्यते। तथा च कालस्वरूपः श्रीकृष्णः युगसन्ध्यासञ्जातान् असुरानुन्मूल्य भुवो भारमहरदिति व्यज्यते। भगवान् हरिः जनानुपलक्ष्यमार्गः जनैः अनुपलक्ष्यः अज्ञातः मार्गः गतिः यस्य तथाभूतस्सन् आत्ममहिमोपनिबन्धनानि स्वमाहात्म्यप्रकाशकानि कर्माणि च करिष्यति। अनेन श्रीकृष्णावतारः कथितः।।२६।।

तोकेन बालेन सता भगवता उलूकिकायाः पूतनायाः यत् जीवहरणम् त्रैमासिकस्य त्रिमासवयस्कस्य भगवतः पदा यच्च शकटः शकटासुरः अपवृतः विपर्यस्ततया पातितः मध्यगतेन रिङ्गता हस्ताभ्यां पादाभ्यां च गच्छता भगवता दिविस्पृशोः अभ्रंलिहयोः अर्जुनयोः अर्जुनवृक्षयोः यदुन्मूलनं वा उत्पाटनं वा तदेतत् सर्वं इतरथा तु, श्रीकृष्णस्य अनीश्वरत्वे, न भाव्यं न उपपन्नं भव...ति शेषः।।२७।।

---

1. A.B. Omit न भाव्यम्

किञ्च स भगवान् व्रजे विषतोयपीथान् विषपूरितजलपायिनः व्रजपशून् गोवृषभादीन् पालांस्तु तत्पालकांश्च अनुग्रहदृष्टिवृष्ट्या यद्वै अजीवयत् अपि च ह्रदिन्यां यमुनानद्यां विहरन् सः तच्छुद्धये तस्याः यमुनायाः शुद्धये अतिविषवीर्यविलोलजिह्वं अतिविषबलेन चञ्चलजिह्वं उरगं कालीयाख्यं यत् उच्चाटयिष्यत् निष्कासितवान् तच्च इतरथा न भाव्यं इति पूर्वेणान्वयः।।२८।।

**तत्कर्म दिव्यमिव यन्निशि निःशयानं दावाग्निना[1] शुचिवने परिदह्यमाने।**
**उन्नेष्यति व्रजमतो[2]ऽवसितान्तकाले[3] नेत्रे पिधाप्य[4] सबलोऽनधिगम्यवीर्यः।।२९।।**

**गृह्णीत यद् यदुपबन्धममुष्य[5] माता शुल्बं सुतस्य न तु तत् तदमुष्य माति।**
**यज्जृम्भतोऽस्य वदने भुवनानि गोपी संवीक्ष्य[6] शङ्कितमनाः प्रतिबोधिताऽऽसीत्[7]।।३०।।**

**नन्दं च मोक्ष्यति भयाद् वरूणस्य पाशात् गोपान् बिलेषु पिहितान् मयसूनुना च।**
**अह्न्या[8]पृतं[9] निशि शयानमतिश्रमेण लोकं[10] विकुण्ठ[11] मुपनेष्यति[12] गोकुलं स्म।।३१।।**

**गोपैर्मखे प्रतिहते व्रज[13]विप्लवाय देवेऽभिवर्षति पशून् कृपया रिरक्षुः।**
**धर्तोच्छिलीन्ध्रमिव सप्त दिनानि सप्तवर्षो महीध्रमनघैककरे सलीलम्।।३२।।**

**श्रीध० तदिति**। दिव्यमलौकिकमि[14]वेति लोकोक्तिः। उन्नेष्यत्युद्धरिष्यति। शुचिः ग्रीष्मः तत्सम्बन्धिनि वने शुष्क इत्यर्थः। अतो दावा[15]ग्रेर्हेतोरवसितो निश्चितोऽन्तकालो यस्य तम्। सबलः स रामः अनधिगम्यं दुर्ज्ञेयं वीर्यं यस्य सः। तत्र निशि निःशयानमिति कालियदमने रात्र्यां[16] यमुनातीरे नेत्रे पिधाप्य पिहिते कारयित्वेति मुञ्जाटव्यामिति ज्ञेयम्।।२९।।

**गृह्णीतेति**। उपबद्ध्यते अनेनेति उपबन्धं[17] तत्साधनम्। शुल्बं दाम अमुष्य माता यशोदा गृहीत[18] गृहीतवती[19]। अकारलोपस्त्वार्षः[20]। तत्तदमुष्य[21] उदरे[22] न माति बन्धनसम्मितं न भवति। न पूर्यते नालम्[23] इत्यर्थः। गोपी यशोदा संवीक्ष्य[24] दृष्ट्वा प्रतिबोधिता निजैश्वर्यं ज्ञापिता असीदिति यत्[25] तच्च[26] कर्म दिव्यमिवेति[27] सर्वत्र पूर्वेणैवान्वयः।।३०।।

**नन्दमिति**। वरूणस्य पाशात् यद्भयं तस्मात् मोचयिष्यति। मयसूनुना व्योमनाम्ना[28] अह्नि[29] दिवसे[30]

---

1. M.Ma. °नाऽऽशु विपिने 2. M.Ma. °मि° 3. AF.GF. °ले° 4. I. °प्य; N.W. °य 5. M.Ma. °द्ध° 6. H.V. °च°; W. °ल° 7. M.Ma. °तस्य 8. M.Ma. जल्प्यावृत्तं 9.H.V.W. °वृ° 10. B.C.M.Ma.N. °के 11. B.C.M.Ma.N. °ण्ठ उप° 12. M.Ma. °धास्यति 13. W. मख° 14. H.V. °मे° 15. H.V. दवा° 16. H.V. रात्रे 17. B. °न्धः 18. A. Omits गृहीत 19. A. अग्रहीत्; B. Omits गृहीतवती। 20. A. Omit अकारलोपस्त्वार्षः 21. A.H.V. Omit तत्तत् 22. B. Omits उदरे 23. A.B. Omit नालम् 24. H.V. °च° 25. B. तत् 26. H.V. Omit च 27. H.V. °मिति पूर्वेणान्वयः 28. B. व्योमेन; H.V. व्योमसूनुना 29. H.V. Omit अह्नि 30. A. Omits दिवसे

आपृतं[1] व्यापृतं[2] व्यापारयुक्तम्[3], अत[4] एव अतिश्रमेण निशि शयानमिति च[5] वैकुण्ठप्राप्तिसाधनानुष्ठानभावो दर्शितः। उपनेष्यति प्रापयिष्यति गोकुलं[6] गोकुलवासिनं जनम्। स्म इत्याश्चर्ये।।३१।।

**गोपैरिति**। देवे[7] इन्द्रे पशून् रिरक्षुः रिरक्षिषुः[8] इत्यर्थः[9]। अनघे श्रमरहिते एकस्मिन्नेव करे सलीलं यथा स्यात्[10] तथा महीध्रं गोवर्धनं धर्त्ता धारयिष्यति[11]। उच्छिलीन्ध्रं उद्गतं छत्राकमिव। सप्तवर्षाणि वयो यस्य सः।।३२।।

**वीर०** तदपि कर्म दिव्यमिव अमानुषमिव इति लौकिकोक्तिः; किञ्च दावाग्निना शुचि वने शुष्कवने परिदह्यमाने सति अतो देवाग्नेः हेतोः अवसितः निश्चितोऽन्तकालो यस्य तम् निशि रात्रौ निःशयानं नितरां स्वपन्तं व्रजं उन्नेष्यति[12] उद्धरिष्यति। नेत्रे पिधाय्य पिहिते कारयित्वा अनेन व्रजस्य पश्चात् जागरणं सूचितम्। संबलः[13] बलभद्रेण सहितः अनधिगम्यवीर्यः अनधिगम्यं दुर्विज्ञेयं वीर्यं यस्य। तथाभूतः उन्नेष्यति[14] अग्निं पीत्वा व्रजमुद्धरिष्यतीत्यर्थः।।२९।।

किञ्च **गृह्णीतेति**। अमुष्य श्रीकृष्णस्य माता यशोदा यद्यत् उपबन्धं बन्धनसाधनं शुल्बं मुञ्जादिनिर्मितरज्जुं गृह्णीत ग्रहीष्यति। तत्तच्छुल्बं अमुष्य श्रीकृष्णस्य[15] उदरे न माति न[16] व्याप्नोति न पर्याप्तमित्यर्थः। किञ्च जृम्भतोऽस्य भगवतो वदने मुखे भुवनानि चतुर्दश भुवनानि संवीक्ष्य[17] दृष्ट्वा गोपी यशोदा शङ्कितमनाः किमिदमिति[18] शङ्कितचित्ता सती पश्चात्प्रतिबोधिता ज्ञापितैश्वर्या आसीदिति यत् तच्च कर्म दिव्यमिवेति पूर्वेणान्वयः।।३०।।

अपि च वरुणस्य पाशात् यद्वयं तस्मात् नन्दं स्वपितरं मोचयिष्यति[19] मयसूनुना व्योमासुरेण बिलेषु पिहितान् तिरोधापितान् गोपांश्च मोक्ष्यतीत्यर्थः। किञ्चाह्नि दिवसे अतिश्रमेणापृतं[20] व्यापारग्रस्तं निशि शयानं गोकुलं गोकुलवासिजनं दृष्ट्वा तेषु स्वानुवृत्तिजनितकृपया विकुण्ठं नित्यं[21] लोकं निरतिशयानन्द-लोकमुपनेष्यति प्रापयिष्यतीत्यर्थः। स्म इति आश्चर्ये।।३१।।

गोपैः[22] मखे इन्द्रयागे प्रतिहते विहते[23] सति मखविप्लवाय गोवर्धनपर्वतयागनाशार्थं[24] देवे इन्द्रे अभिवर्षति सति पशून् कृपया रिरक्षुः रक्षितुमिच्छुः सप्तवर्षः सप्तवर्षाणि वयो यस्य तथाभूतः अनघैककरे अनघे श्रमरहिते[25] एकस्मिन्नेव करे अनघेतिनारदसम्बोधनं वा सलीलं यथा तथा महीध्रं गोवर्धनाख्यं अद्रिं सप्तदिनानि उच्छिलीन्ध्रमिव धर्त्ता धरिष्यति। उच्छिलीन्ध्रं उद्गतच्छत्राकमिव इत्यर्थः।।३२।।

---

1. H.V. 'वृ' 2. H.V. Omit व्यापृतं; B. Omits व्यापृतं व्यापारयुक्तं 3. H.V. ग्रस्तं 4. A.B. Omit अत एव अतिश्रमेण 5. H.V. Omit च 6. A.B. Omit गोकुलं 7. H.V. देवेन्द्रे 8. V. Omits रिरक्षिषुरित्यर्थः 9. H. Omits इत्यर्थः 10. A.H.V. Omit स्यात् 11. H.V. धरिष्यति 12. A.B. Omit उन्नेष्यति उद्धरिष्यति 13. A.B. Omit सबलः 14. A.B. Omit उन्नेष्यति 15. W. Omits श्रीकृष्णस्य 16. W. Omits न व्याप्नोति 17. W. 'ल' 18. W. Omits किमिदमिति शङ्कितचित्ता 19. W. adds नन्दं 20. W. 'वृ' 21. W. 'त्यक्तो' 22. A.B. Omit गोपैः 23. A.B. Omit विहते 24. W. Omits गोवर्धन 25. A.B. अयं

**विज०** आशु आशुना विष्वग्व्यापिना दावाग्निना विपिने दन्दह्यमाने सति निशि सर्वात्मनाऽज्ञाने "यत्तु सर्वात्मनाऽज्ञानं निशा सा परिकीर्तिता" इति वचनात्। निःशयानं नितरां शयानं कर्तव्यमूढं तर्हि अचेतनं किं नेत्याह - अवसितान्तकालं निश्चितमरणकालं व्रजं तेषां नेत्रे पिधाय्य पिहिते कारयित्वा इतो दावाग्नेरुन्नेष्यतीति यत्कर्म तदन्येषां दिव्यमेव स्तुत्यमेव कुत इति तत्राऽऽह - अनधिगम्येति। नित्यसमाहितैः ब्रह्मादिभिरप्यविज्ञेयमाहात्म्यत्वादित्यर्थः। सबल इत्यनेन बलस्याप्येतादृशी शक्तिर्नास्तीति लक्ष्यते।।२९।।

अमुष्य कृष्णस्य माता सुतमुपबद्धं यच्छुल्बं दाम गृह्णीत, गृह्णीति तत्तु दाम अमुष्य सुतस्य न माति न पूर्यते इत्यमयलक्षणं माहात्म्यं यद्गोपीप्रतिबोधितस्य निद्रायोः उत्थितस्य जृम्भतो मुखं व्यादायाऽऽलस्यं परिहरतोऽस्य कृष्णस्य वदने चतुर्दशभुवनानि सम्यग्वीक्ष्य शङ्कितमनाः भीतमनाः अभवदिति[1] यच्च तदपि।।३०।।

पाशात् भयात् निशि अविद्यायां शयानं जल्प्या अन्यथाज्ञानहेतुवाचावृतं "अन्यथा ज्ञानहेतुर्या वाक् सा जल्पिः प्रकीर्तिता" इति च अत एव अतिश्रमेण संसारक्लेशेन पीडितं गोकुलं विकुण्ठे लोके उपधास्यतीति यत्तदपि।।३१।।

मखे आत्मोद्देशे यज्ञे देवे इन्द्रे व्रजविप्लवाय जलौघेन गोष्ठनाशाय। "गोष्ठाध्वनिवहा व्रजा" इति। रिरक्षुः रक्षितुकामः महीध्रं गोवर्धनगिरिम्। सलीलं धर्ता धारयिष्यतीति उच्छिलीन्ध्रं छत्राकम्।।३२।।

**रा०कृ०** शुचि वने शुचिः ग्रीष्मः तत्सम्बन्धिनि शुष्के इति भावः वने मुञ्जवने दावाग्निना परिदह्यमाने सति निशि रात्रौ निश्शयानं नितरां निद्राणं अतः अत एव अवसितान्तं अवसितो निर्णीतः अन्तकालः मरणसमयो यस्य तं व्रजं व्रजस्थितजनं नेत्रे पिधाय्य अक्षिनिमीलनं कारयित्वा अनधिगम्यवीर्यः अपरिज्ञेयपराक्रमः स भगवान् सबलः बलरामसहितस्सन् यत् उन्नेष्यति उद्धरिष्यतीति यत् तत् कर्म दिव्यमिव अलौकिकमेव।।२९।।

अमुष्य श्रीकृष्णस्य माता यशोदा उपबन्धं बन्धनसाधनं यद्यत् शुल्बं रज्जुं गृह्णीत गृह्णीयात् तत्तत् शुल्बं अमुष्य सुतस्य श्रीकृष्णस्य तु न माति बन्धनाय पर्याप्तं न भवति। किञ्च जृम्भतः जृम्भां कुर्वतः अस्य कृष्णस्य वदने भुवनानि चतुर्दशभुवनानि गोपी यशोदा संवीक्ष्य शङ्कितमनाः

1. B.M.Ma. °भूदिति

सन्दिग्धचित्ता सती यत् प्रतिबोधिता आसीत् सुतेन कृष्णेन निजैश्वर्यं ज्ञापिता अभूत्। तत्सर्वं कर्म दिव्यमेवेति पूर्वेणान्वयः।।३०।।

किञ्चायं कृष्णः वरुणस्य पाशात् तन्निमित्तकात् भयात् नन्दं च पितरं मोक्ष्यति मोचयिष्यति। अपि च मयसूनुना मायाविना मयपुत्रेण बिलेषु पिहितान् आच्छादितान् गोपान् मोचयिष्यति अह्नि दिने आपृतं कृतव्यापारं, अत एव अतिश्रमेण निशि शयानं गोकुलं गोकुलनिवासिनं जनं विकुण्ठं लोकं स्वीयं वैकुण्ठलोकं उपनेष्यति स्म प्रापयिष्यति अहो।।३१।।

गोपैः नन्दादिभिः गोपालैः मखे इन्द्रयागे प्रतिहते निवर्तिते सति व्रजविप्लवाय व्रजस्य विनाशाय देवे इन्द्रे अभिवर्षति कृपया पशून् रिरक्षुः रक्षितमिच्छुः सप्तवर्षः सप्तवत्सरवयस्कोऽपि श्रीकृष्ण इति शेषः। अनघैककरे श्रमविरहिते एकस्मिन्नेव करे सलीलं सविलासं महीध्रं गोवर्धनगिरिं उच्छिलीन्ध्रमिव वर्षाकालोत्पन्नं छत्राकमिव (like a mushroome) सप्तदिनानि धर्ता धारयिष्यति।।३२।।

**क्रीडन् वने निशि निशाकररश्मिगौर्यां रासोन्[1]मुखः कलपदायतमूर्च्छितेन।**
**उद्दीपितस्मररुजां व्रज[2]भृद्वधूनां हर्तुर्हरिष्यति शिरो धनदानुगस्य ।।३३।।**

**ये च प्रलम्बखरदर्दुरकेश्यरिष्टमल्लेभकंसयवनाः कुजपौण्ड्रकाद्याः।**
**अन्[3]ये च शा[4]ल्वकपिब[5]ल्वलदन्तवक्त्र सप्तोक्षशम्बरवि[6]दूरथरुक्मिमुख्याः।।३४।।**

**ये वा मृधे समितिशालिन आत्तचापाः काम्बो[7]जमत्स्यकुरुकै[8]कयसृ[9]ञ्जयाद्याः।**
**यास्यन्त्यदर्शनम[10]लं ब[11]लपार्थभीमव्याजाह्वयेन हरिणा निलयं तदीयम्।।३५।।**

**कालेन मीलि[12]तधियामवमृश्य नृणां स्तोकायुषां स्वनिगमो बत दूरपारः।**
**आविर्हितस्त्वनुयुगं स हि सत्यवत्यां वेदद्रुमं विटपशो विभजिष्य[13]ति स्म।।३६।।**

**श्रीध० क्रीडन्निति।** निशि रात्रौ निशाकररश्मिभिः गौर्यां धवलायाम्। वने क्रीडन् कलानि मञ्जुलानि पदानि यस्मिन् तच्च तदायतं दीर्घं मूर्च्छितमालापविशेषयुक्तं य[14]त् गीतं तेनोद्दीपितः स्मर एव रुक् (रो[15]गो) यासां तासां गोपीनां हर्तुः ध[16]नदानुगस्य कुबेरानुचरस्य शङ्खचूडस्य शिरो हरिष्यति।।३३।।

---

1. H.V. °त्सवः 2. H.V. °भुव°; M.Ma. °सद्द° 3. B.M.Ma. °न्येऽपि 4. B.H.V.W. सा° 5. H.V.W. °प° 6. H.V.W. °दु° 7. H.V. °म्भो° 8. H.V.W. °के° 9. W. °स° 10. M.Ma. °मिता° 11. AF.GF. युधि 12. M.Ma. °दृशा° 13. W. °तीति 14. A.H.V. Omit यत् 15. A.H.V. Omit (रोगो) 16. A.B. Omit धनदा......चरस्य

**ये चेति**। ये च प्रलम्बादयः ते सर्वे हरिणा हेतुभूतेन तदीयं अदर्शनं दर्शनायोग्यं निलयं वैकुण्ठमलं यास्यन्तीत्युत्तरेणान्वयः। खरो धेनुकः। दर्दुर[1] इव दर्दुरो बकः। इभः कुवलयापीडः। कुजो नरकः कपिर्द्विविदः।।३४।।

**ये वेति**। ये च मृधे आत्तचापाः समितौ संग्रामे शालन्ते श्लाघन्ते इति[2] समितिशालिनः। ननु प्रलम्बखरकपिबल्वल[3]रुक्मिप्रमुखा बलभद्रेण निहताः। काम्बो[4]जादयश्च भीमार्जुनादिभिः शम्बरः प्रद्युम्नेन यवनो मुचुकुन्देन न तु हरिणा। तत्राऽऽह। बलो[5] भीमः पार्थ इत्यादयो व्याजाह्वयाः कपटनामानि यस्य स[6] तेन खल[7]निग्रहार्थं तत्तदभिनिवेष्टेनेत्यर्थः सप्तोक्षाणस्तु तेन[8] दमिताः कालान्तरे यास्यन्ती[9]ति भावः। एतच्च सर्वमपि कर्म दिव्य[10]मिव तच्चा[11]न्यथा न भाव्यमिति पूर्वेणैव[12] सम्बन्धः।।३५।।

व्यासावतारमाह - **कालेनेति**। अनुयुगं प्रति[13]युगं मीलिता सङ्कुचिता धीर्येषाम्। स्तोकमल्पमायुः येषां तेषां स्वनिगमः स्वकृतः स्वेन[14] संवर्धितो वा वेदराशिः बताहो सागरवत्[15] दूरे पारं यस्येति[16] दुर्गम इत्यवमृश्य विचार्य[17] सत्यवत्यामा[18]विर्हितः प्रादुर्भूतस्सन् स[19] एव श्रीहरिः विटपशः शाखाभेदेन।।३६।।

**वीर०** निशाकरश्चन्द्रः तस्य रश्मिभिः गौर्यां धवलायां रात्रौ वने कीडन् विहरन् कलानि मधुराणि पदानि यस्मिन् तच्च[20] तदायतं दीर्घं मूर्च्छितमालापविशेषयुक्तं गीतं तेन उद्दीपितः स्मरः काम एव रुक् रोगो यासां तासां व्रज[21]भृद्वधूनां व्रजं बिभ्रतीति व्रजभृतः गोपाः तेषां वधूनां गोपीनां हर्तुः गोपीः[22] चोरयतो धनदानुगस्य कुबेरभृत्यस्य शङ्खचूडाख्यस्य शिरो हरिष्यति।।३३।।

ये च प्रलम्बादयः ते सर्वे हरिणा हेतुभूतेन तदीयं हरिसम्बन्धि अदर्शनं प्राकृतेन्द्रियाविषयं वैकुण्ठं[23] निलयं लोकं यास्यन्ति। अलं तद्वर्णनेन तच्चेष्टितानामनन्तत्वान्न तद्वर्णने मम सामर्थ्यम[24]स्तीति भावः। खरो धेनुकः। दर्दुरो बकः। इभः कुवलयापीडः। कुजो नरकः। कपिर्द्विविदः। सप्तोक्षाणः बलीवर्दाः।।३४।।

मृधे युद्धे ये वा आत्तचापाः धृतधन्वानो राजानः समितिशालिनः समितौ संग्रामे शालन्ते श्लाघन्ते इति समितिशालिनः काम्[25]बोजादिदेशाधिपतयः। ननु प्रलम्बादयो बलभद्रेण हताः, काम्[26]बोजादयो भीमार्जुनादिभिश्च, शम्बरः प्रद्युम्नेन, यवनो मुचुकुन्देन, न तु हरिणा। तत्राऽऽह - बलभीमपार्था इति

---

1. H.V. Omit दर्दुरइव 2. A.B. ते 3. H.V. "प" 4. H.V. "म्भो" 5. B. बलपार्थभीमेत्यादयः; H.V. बलभीमपार्थादयो 6. H.V. Omit स 7. A.B. Omit खल......त्यर्थः। 8. A. Omits तेन 9. B. "न्तीत्यर्थः 10. H.V. दिव्यं त" 11. B. तत्त्वितरथा 12. H.V. "णान्वयः 13. A.B. Omit प्रतियुगं 14. A.B. Omit स्वेन......वा 15. A.B. Omit सागरवत् 16. H.V. यस्य सः 17. A.B. Omit विचार्य 18. B.H.V. "माविर्भूतस्सन् 19. H.V. एवं 20. A.B. Omit तच्च 21. A.B. Omit व्रजभृद्वधूनां 22. A.B. Omits गोपीः 23. A.B. "ण्ठनि" 24. W. "मिति 25. W. "म्भो" 26. W. "म्भो"

व्याजाः कपटा आह्वयाः नामानि यस्य तेन बलभीमादिरूपेण च[1] स एव हरिः सर्वसंहर्तेत्यर्थः। सप्तोक्षाणस्तु तेन दमिताः कालान्तरे यास्यन्तीति भावः। एतच्च सर्वमपि कर्म दिव्यमेव[2] तच्चान्यथा न भाव्यमिति पूर्वेणान्वयः।।३५।।

व्यासावतारमाह - **कालेनेति**। कालेन मीलितधियां सङ्कुचितबुद्धीनां स्तोकं अल्पं आयुर्येषां तेषां नृणां स्वनिगमः स्वकृतो वेदः बत अहो! दूरपारः दूरे[3] पारं यस्य दूरपारः। दुर्गम इत्यवमृश्य विचार्य सत्यवत्यामाविर्हितः आविर्भूतः स हरिरनुयुगं युगानुरूपं वेदद्रुमं विटपशः शाखाभेदेन विभजिष्यति विभक्तं करिष्यति।।३६।।

**विज०** निशाकरस्य रश्मिभिः गौर्या धवलत्वं प्राप्तायां निशि रात्रौ। रासक्रीडाभिमुखश्रीकृष्णः वने क्रीडन् सन् कलपदं च आयतं च मूर्च्छितं च कलपदायतमूर्च्छितं[4] तेन सप्तस्वरसमाहारवता गानेन "सप्तस्वरसमाहारो मूर्च्छितेति प्रकीर्तितः" इति उद्दीपितः उज्ज्वलितः स्मराख्यो रुक् रोगे यासां ताः उद्दीपितस्मररुजः तासां व्रजसदां व्रजनिलयानां वधूनां स्त्रीणां हर्तुर्नेतुः धनदानुगस्य शङ्खचूडाख्यस्य शिरो हरिष्यतीति इदमपि विष्णुत्वे घटते नान्यथेति।।३३।।

ये प्रलम्बादयः कृष्णाख्येन हरिणाऽदर्शनमिताः ये चान्ये मैन्दादयः[5] तथा जरासन्धादयः ये च कुरुपाण्डवसेनागताः काम्बोजादयः बलपार्थभीमद्रोणद्रौण्यादिव्याजाह्वयेन हरिणा मरणं प्रापिताः, ते सर्वे तदीयं निलयं यान्तीत्यन्वयः। द्वेषिणः उदासीनाः भक्ता इति त्रिविधाः जीवाः। तत्र द्वेषिणो नितरां लीयते सुखं यस्मिन् तत् अन्धं तमो यान्ति, उदासीना निरयं नरकं, भक्ताः निष्कामस्य अभीष्टानन्दस्य प्राप्तिः यस्मिन् तं वैकुण्ठादिकं यान्तीत्यर्थः। सर्वं च स्थानं हरेर्विद्यमानम्। तदुक्तम् "विद्वेषिणोऽप्युदासीना भक्ता अपि न संशयः। हरेर्हि सदनं यान्ति व्यक्तं भक्तैस्तु गम्यते।। आरभ्यतम आमुक्तेः कृष्णस्य सदनं यतः। अव्यक्तहरिलोकत्वात् अन्येषामन्यलोकता।।" इति रामभीमादिनामानि हरेरेव मुख्यानि रमणशक्त्यभयवर्णादीनां शक्तिवृत्तिहेतूनां हरेर्मुख्यत्वात् अन्यत्रामुख्यत्वात् व्यवहारार्थः सङ्केतितत्त्वाद्व्याजानि। तदप्युक्तम् - "रामभीमार्जुनादीनि विष्णोर्नामानि सर्वशः। रमणाभयवर्णाद्याः शब्दवृत्तेर्हि हेतवः" इत्यादि 'रय गतौ' इति धातोः रलयोरभेदः "न्यक्भावं निरयं नीचगतिं तम" इति वा "निर्न्यग्भावनिकामयोः" इति।।३४,३५।।

कालबलेन मीलितदृशां उत्सन्नज्ञानानां स्तोकायुषां अल्पायुषां नृणां स्वनिगमः स्वविषयो वेदो दूरपार इत्यवमृश्य स विष्णुर्बत कृपया सत्यवत्यामाविर्हितोऽवतीर्णो वेदद्रुमं विटपशः शाखोपशाखा-

---

1. W. अयमेव 2. W. 'मि' 3. A.B. दूरःपारः 4. A.B. Om.: कलपदायतमूर्च्छितं 5. A.B. Omits मैन्दादयः तथा

भेदेन विभजिष्यतीत्यन्वयः। कस्मिन् युगे इत्यत उक्तम् अनुयुगमिति। एतदुक्तं भवति तृतीये सप्तमे षोडशे पञ्चविंशे अष्टाविंशे च द्वापरे पूर्वेषु चान्यैर्व्यासनामभिः विभजिष्यतीत्यष्टाविंशे स्वयमेव विभजिष्यतीति। "तृतीये सप्तमे चैव षोडशे" इत्यादि वचनं च विशेषवाचिना 'तु'-शब्देन गृहीतम्। कृष्णावतारादुपरि व्यासावतारकथनं तदुपरितनमन्वन्तरेष्वपि व्यासावतारसद्भावात् अविरुद्धमित्यस्मिन्नर्थे 'हि'-शब्दः पुराणप्रसिद्धेरिति।।३६।।

**रा०कृ०** निशाकररश्मिगौर्यां निशाकरस्य चन्द्रस्य रश्मिभिः किरणैः गौर्यां धवलायां निशि रात्रौ वने रासोन्मुखः रासक्रीडां कर्तुमुद्यतः क्रीडन् कृष्ण इति शेषः कलपदायतमूर्च्छितेन कलपदैः मधुरपदैः आयतेन दीर्घेण मूर्च्छितेन आरोहणावरोहणक्रमविशिष्टेन गीतेन उद्दीपितस्मररुजां प्रवर्धितमदनवेदनानां व्रजभृद्वधूनां गोपवधूनां हर्तुः अपहारकस्य धनदानुगस्य शङ्खचूडाभिधस्य कुबेरानुचरस्य शिरः हरिष्यति संहरिष्यति। अत्र रासक्रीडायां भगवत्कलगानाकृष्टचित्ताः गोप्यः समुद्दीपितभगवत्स्मरणव्यवहितान्यस्मृतयः सञ्जाताः, तदा ताः परवशचित्ताः शङ्खचूडो नाम कुबेरानुचरोऽपाहरत्। ततश्च तद्गोपीहृदयगतः स भगवान् तासामवस्थामभिज्ञाय शङ्खचूडमवधीत्।।३३।।

अपि च ये प्रलम्बखरदर्दुरकेश्यरिष्टमल्लेभकंसयवनाः - खरो धेनुकासुरः, दर्दुरो बकासुरः, अरिष्टो वृषभासुरः, मल्लाः चाणूरादयः, इभः कुवलयापीडो नाम गजः, यवनः कालयवनः, कुजपौण्ड्रकाद्याः कुजो नरकासुरः, पौण्ड्रकः वासुदेववेषनामधारी राजा एतदाद्या, अन्ये च ये शाल्वकपिबल्वलदन्तवक्त्रसप्तोक्षशम्बरविदूरथरुक्मिमुख्याः कपिः द्विविदः सप्तोक्षाणः बलीवर्दाः, विदूरथो दन्तवक्त्रसोदरः, रुक्मी रुक्मिण्यग्रजः - एतन्मुख्याः वर्तन्ते ये वा मृधे युद्धे आत्तचापाः गृहीतशरासनाः अत एव समितिशालिनः युद्धश्लाघिनः योधाग्रेसरा इति भावः। काम्बोजमत्स्यकुरुकेकयसृञ्जयाद्याः वर्तन्ते ते सर्वेऽपि बलभीमपार्थव्याजाह्वयेन - बलरामः भीमसेनः पार्थ इत्यादिकपटनामवता हरिणा कारणभूतेन अदर्शनं दर्शनायोग्यं निलयं तदीयं वैकुण्ठं अलं यास्यन्ति। अत्र हरेः बलभीमपार्थव्याजाह्वयत्वकथनात् प्रलम्बादीनां संहारे बलरामादयो निमित्तमात्राः वस्तुतस्तु तत्संहारकर्ता श्रीकृष्ण एवेत्युक्तं भवति।।३४,३५।।

कालेन मीलितधियां सङ्कुचितबुद्धीनां स्तोकायुषां अल्पायुषां नृणां स्वनिगमः स्वकृतः वेदसमुच्चयः बत अहो दूरपारः अतिदुर्गम इति अवमृश्य विचार्य सत्यवत्यामाविर्हितः आविर्भूतस्सन् स हि हरिः अनुयुगं युगानुरूपं वेदद्रुमं वेदवृक्षं विटपशः शखाभेदेन विभजिष्यति स्म विभक्तं करिष्यति। अत्र वेदव्यासावतारः कथितः।।३६।।

देवद्विषां[1] निगमवर्त्मनि निष्ठितानां[2] पूर्भिर्मयेन विहिताभि[3]रदृश्यतूर्भिः[4]।
लोकान् घ्नतां मतिविमोहमतिप्रलोभं[5] वेषं विधाय बहु[6] भाष्यत औपधर्म्यम्।।३७।।

यर्ह्यालयेष्वपि सतां न हरेः कथाः स्युः पाखण्डिनो[7] द्विजजना वृषला नृदेवाः।
स्वाहास्वधावषडिति स्म गिरो न यत्र शास्ता भविष्यति कलेर्भगवान् युगान्ते।।३८।।

सर्गे तपो[8]ऽहमृषयो नव ये प्रजेशाः स्थाने च[9] धर्ममखमन्वमरावनीशाः।
अन्ते त्वधर्महरमन्युवशा[10]सुराद्या मायाविभूतय इमाः पुरुशक्तिभाजः।।३९।।

विष्णोर्नु वीर्यगणनां कतमोऽर्हतीह यः पार्थिवान्यपि कविर्विममे रजांसि।
चस्कम्भ यः स्वर[11]ंसास्खल[12]ता त्रिपृष्ठं यस्मात्[13] त्रिसाम्य[14]सदनादुरुकम्पया[15]नम्।।४०।।

**श्रीध०** बुद्धावतारमाह - **देवद्विषामिति**। देवद्विषां दैत्यानां[16] निगमवर्त्मनि वेदमार्गे सत्कर्मानुष्ठा[17]नादौ निष्ठितानां नितरां स्थितानाम्। तद्बलेन च पूर्भिः पुरीभिः[18] अदृश्यतूर्भिः देवादिभिरपि[19] अलक्ष्यवेगाभिः किञ्च[20] अयोरजतताम्रमयीभिः लोकान् घ्नतां मतेर्विमोहो योग्यतात्यागो यस्मात् मतेः प्रलोभश्च अयुक्तस्वीकारो यस्मात् तं पाषण्ड[21]वेषं विधाय तेन[22] औपधर्म्यं धर्मवद्भासमानमधर्मं[23] पाषण्ड[24]धर्मम्। स्वार्थे ष्यञ्। बहु भाष्यते[25] बहुभाषिष्यते[26] इत्यर्थः।।३७।।

कल्क्यवतारमाह - **यर्हीति**। यर्हि यदा सतामप्यालयेषु गृहेषु[27] हरेः कथाः न स्युः द्विजजनाः[28] त्रैवर्णिकाः पाषण्डिनः[29] भगवद्विरोधिनः[30] असत्यवादरताः अधर्मशीलाश्च स्युः वृषलाः[31] शूद्राः[32] नृदेवाः[33] राजानः स्युः शूद्रा[34] एव राजानो न क्षत्रियवंश्याः इति भावः। यदा स्वाहास्वधावषडिति गिरो न स्युः यज्ञाद्यनुष्ठानाभावात् तदा कल्किरूपेण कलेः शास्ता[35] शासिता[36] भविष्यति। अत्र च[37] ब्रह्मनारदसंवादात् प्राग्भाविनो वराहादयः, मन्वन्तरावतारास्तु भूता भाविनश्च। धन्वन्तरिपरशुरामौ तदा वर्तेते। श्रीरामादयस्तु भाविनः तत्र च[38] क्वचिद्भूतादिनिर्देशश्छान्दस इति द्रष्टव्यम्।।३८।।

---

1. N. वेद° 2. M.Ma. विष्ठि° 3. H.V.W. रचिता° 4. M.Ma. °मूर्तिः 5. H.V. °भ° 6. M.Ma. यदभाषत 7. H.I. M.Ma.V.W. °ष° 8. M.Ma. तु योऽह°; W. ततोऽह° 9. H.I.M.Ma.V. °ऽथ 10. M.Ma. °शाः 11. A.B.G.N. °रंहसा°; C.I. °रहसा° 12. M.Ma. °लितं 13. M.Ma. °न्मां 14. M.Ma.W. निशाम्य 15. M.Ma. °मानम्; W. मानात् 16. A. Omits दैत्यानां 17. A.B. Omit सत्कर्मानुष्ठानादौ 18. H.V. त्रिपुरैः 19. A.B. Omit देवादिभिरपि 20. A.B. Omit किञ्च......घ्नतां 21. A. °ख° 22. H.V. Omit तेन 23. A.B. Omit धर्मवद्भासमानमधर्मं 24. A. °ख° 25. A.B. Omit बहुभाष्यते 26. A. Omits बहुभाषिष्यते 27. H.V. Omit गृहेषु 28. A.B. Omit द्विजजनाः 29. A. °ख° 30. A.B. Omit भगवद्वि......शीलाश्च 31. A.B. Omit वृषलाः 32. A.B. °द्राश्च 33. A.B. Omit नृदेवाः 34. A.B. Omit शूद्रा......द्यनुष्ठानाभावात् 35. H.V. Omit शास्ता 36. A.B. Omit शासिता 37. H.V. Omit च 38. A.B. तु

सृष्ट्यादिकार्यभेदेन मायागुणावतारविभूतीराह - **सर्ग** इति। [1]सर्गे सृष्टौ सर्गविषयकतपश्शालित्वात् तपोऽहम्। स्थाने स्थितौ मखः श्रीविष्णुः "[2]यज्ञो वै विष्णुः" इति श्रुतेः। धर्मश्च मखश्च मनवश्च अमराश्च अवनीशाः [3]पृथ्व्यादयश्च, अन्ते संहारे हरो रुद्रः मन्युवशाः सर्पाः बहुशक्तिधारिणो भगवतः [4]इमा [5]मायाविभूतयः ।।३९।।

[6]इदं मया संक्षेपेणोक्तं विस्तरेण वक्तुं[7] न कोऽपि समर्थ इत्याह - **विष्णो**-रिति। पृथिव्याः परमाणूनपि यो विममे [8]गणितवांस्तादृशोऽपि को[9] नु विष्णोर्वीर्यगणनां कर्तुमर्हति। कथम्भूतस्य यो विष्णुस्त्रिपृष्ठं सत्यलोकं चस्कम्भ धृतवान्। [10]किमिति चस्कम्भ। यस्मा त्तैविक्रमे अस्खलता प्रतिघात-शून्येन स्व[11]रंभसा स्वपादवेगेन त्रिसाम्यरूपं सदनमधिष्ठानं प्रधानं तस्मात् [12]त्रिसाम्यसदनात् [13]आरभ्य उरु अधिकं कम्पयानं कम्पमानम्। कम्पेन यानं यस्येति वा। अतः कारणाच्चस्कम्भ आ त्रिपृष्ठमिति वा छेदः। सत्यलोकमभिव्याप्य यः सर्वं धृतवानित्यर्थः। तथा च मन्त्रः[14] "विष्णोर्नु कं [15]वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि योऽस्कभायदुत्तरं संस्थं विचक्रमाणस्त्रेधोरुगाद" इति अस्यार्थः विष्णोर्नु वीर्याणि कं प्रवोचं कः प्रवोचदित्यर्थः। यः पार्थिवानि रजांस्यपि विममे सोऽपि यो विष्णुस्त्रेधा विचक्रमाणो [16]विक्रमं कुर्वन्नुत्तरं लोकमस्कभायदवष्टब्धवान्। कथम्भूतम्? सधस्थम्। सहस्य सधादेशः। तिष्ठन्तीति स्थाः तत्र[17]स्थैर्देवैस्सहवर्तमानमित्यर्थः।।४०।।

**वीर०** बुद्धावतारमाह - **देवद्विषामिति**। निगमवर्त्मनि वैदिकमार्गे, निष्ठितानां नितरां स्थितानाम् लोकान् मयेन रचिताभिः कल्पिताभिः अदृश्यतूर्भिः अलक्ष्यवेगाभिः पूर्भिः पुरीभिः, घ्नतां नाशयतां, देवद्विषां दैत्यानां मतिविमोहमतिप्रलोभम् - मतेर्विमोहो यस्मात् तत् मतेः विमोहं मतेः प्रलोभः यस्मात् तत् मतिप्रलोभम् मतिविमोहं च तत् मतिप्रलोभं च मतिविमोहकं मतिप्रलोभकं चेत्यर्थः। एवम्भूतं वेषं पाषण्डवेषं, विधाय विरचय्य, औपधर्म्यं धर्माभासं पाषण्डधर्मं, स्वार्थे ष्यञ् बहु अधिकं भाष्यते भाषिष्यते इत्यर्थः।।३७।।

कल्क्यवतारमाह - **यर्हीति**। सतामप्यालयेषु गृहेषु यर्हि यदा हरेः कथा न स्युः द्विजजनाः त्रैवर्णिकाः पा[18]षण्डिनः स्युः नृदेवाः राजानः वृषलाः शूद्राः स्युः तथा यत्र त्रैवर्णिकालयेषु स्वहास्वधावषडितिगिर[19]श्च न स्युः स्वाहावषडित्य[20]नेन दैवं कर्मोपलक्ष्यते स्वधेति पित्र्यम् तदा युगान्ते कलियुगान्ते भगवान् कलेः शास्ता भविष्यती[21]त्यर्थः। कल्क्यवतारेणेति शेषः।।३८।।

---

1. A.B. Omit सर्गे......तपोऽहम् 2. A.B. Omit यज्ञो......श्रुतेः 3. A.B. Omit पृथ्व्यादयः 4. H.V. Omit इमा 5. B. Omits माया 6. H.V. Omit इदं 7. B. adds हि 8. B. विर्ग 9. B. adds अपि 10. H.V. Omit किमिति चस्कम्भ 11. A.B. 'रह' 12. A.B. Omit त्रिसाम्यसदनात् 13. H.V. Omit आरभ्य 14. H.V. श्रुतिः 15. A.B. Omits वीर्याणि......धोरुगाय 16. A.B. त्रिवि 17. H.V. 'त्यै' 18. A. 'ख' 19. W. Omits च 20. W. Omits अनेन 21. W. Omits इत्यर्थः......शेषः

अत्र च ब्रह्मनारदसंवादात् प्राञ्चो वराहादयो[1]ऽवताराः मन्वन्तरावताराश्च भूतभाविनः। धन्वन्तरि परशुरामौ तत्कालिकौ। श्रीरामादयस्तु भाविनः तत्र तु क्वचिद्भूतादिनिर्देशः आर्ष इति द्रष्टव्यम्। अत्रेदं तत्त्वम् - भगवतोऽवतारा द्विविधाः अनुप्रवेशावताराः स्वेन रूपेणावताराश्चेति। अकर्महेतुत्वाविशेषादुभयत्रावतारशब्दप्रयोगः। तथा तस्य रूपमपि द्विविधम् [2]प्रकृतिप्राकृतवस्तुजातमेकं, शुद्धसत्त्वमयमपरञ्चेति। तत्र षोडशकल[3]महदहङ्कारसूक्ष्मभूतेन्द्रियाभिमानिदेवताश्रयं पौरुषं रूपं तदनिरुद्धरूपं तदेव "सहस्रोर्वङ्घ्रिबाह्वक्ष" "आद्योऽवतारः पुरुषः परस्ये"-त्यादिषूच्यते, अनुप्रवेशावतारो नाम जीवेषु स्वस्यानुप्रवेशेन स्वीयज्ञानशक्त्यादीनां अन्यतमाभिव्यञ्जनं स एवांशावतार इति[4] कथ्यते। स च गौणः शाक्तः, आवेशश्[5]चे[6]त्यनेकधा उक्तेष्वेवावतारेषु श्रीवराहनारायण ध्रुवानुग्राहकहयग्रीवमत्स्यकूर्मनृसिंह[7]हरिवामन[8]हंसवैकुण्ठाजितश्रीरामश्रीकृष्णकल्क्यवताराः स्वेन रूपेणावतारः इतरे तु अनुप्रवेशावतारा इति [9]ज्ञातव्यम्। किञ्च सृष्ट्यादिकार्यभेदेन भगवतो विभूतीराह सर्ग इति। तपः पूर्वजगत्पर्यालोचनम्। अहं ब्रह्मा प्रजेशाः प्रजापतयो नव ऋषयः मरीच्यादयः, मायाविभूतयः विस्मयनीयी[10]ः भगवन्नियाम्यवर्गा[11]ः, स्थाने पालने धर्मश्च मखश्च विष्णुः विष्णोरनन्यत्वात् तद्व्रतं[12]पालनानुरूपं सामर्थ्यं मखशब्देन विवक्षितम्। मनवश्च अमराश्चेन्द्रादयः अवनीशाश्च [13]भूपा एते स्थाने भगवन्नियाम्यवर्गाः अन्ते संहारे अधर्मश्च [14]हरश्च रुद्रः मन्युवशाश्च सर्पाः असुराद्याश्च पुरुशक्तिभाजः अपरिमिताश्चर्यशक्तिधारिणो भगवतः इमाः मायाविभूतयः आश्चर्यविभूतय इत्यर्थः।।३९।।

भगवदवतारास्तच्चेष्टितानि [15]च साकल्येनाभिधातुं न कोऽप्यलमित्याह **विष्णोरिति**। यः कविः बुद्धिमान् पुरुषः पार्थिवानि पृथिवीसम्बन्धीनि रजांसि विममे गणितवांस्तादृशोऽपि को नु विष्णोवीर्यगणनां कर्तुमर्हति? [16]नार्हतीत्यर्थः। यो भगवान् यस्मादस्खलता प्रतिहतिशून्येन स्वरभसा स्वपादविन्यासवेगेन [17]हेतुना उर्वधिकं कम्पमानात् [18]कम्प्यमानात् सदनात् तत्तत्स्वनिवासस्थानात् स्खलितः[19] प्राणिनो निशाम्य दृष्ट्वेत्यर्थः। त्रिपृष्ठं सत्यलोकं चस्कम्भ स्तम्भयामास। श्रुतावपि "[20]विष्णोर्नुकं वीर्य्याणि प्रवोचं यः पार्थिवानि विममे रजांसि यो अस्कभायदुत्तरं सधस्थं विचक्रमाण[21]स्त्रेधोरुगायः" इत्यस्यायमर्थः त्रेधा त्रिप्रकारेण विचक्रमाणः पादविन्यासं कुर्वाणः य उरुगायो भगवान् तिष्ठन्तीति स्थाः देवाः। सहस्य सधादेशः। देवैः सहितमुत्तरं सत्यलोकं अस्कभायदवष्टब्धवानित्यर्थः। [22]कं कः प्रवोचं [23]प्रावोचदित्यर्थः एवंविधसर्वशक्तेरपरिच्छिन्नस्वरूपस्वभावस्य वीर्याणि साकल्येन वर्णयितुं कः प्रभवेदित्यर्थः।।४०।।

---

1. W. Omits अवताराः 2. A. Omits प्रकृति 3. W. Omits महदहङ्कारसूक्ष्म 4. W. adds अपि 5. W. Omits च 6. W. Omits एव 7. W. Omits हरि 8. W. Omits हंसवैकुण्ठाजित 9. W. Omits ज्ञातव्यम् 10. W. °यं 11. W. °र्गः 12. W. °तं 13. W. °पाला. 14. W. Omits हरश्च 15. W. Omits च 16. W. Omits नार्हतीत्यर्थः 17. W. Omits हेतुना 18. W. Omits कम्प्यमानात् 19. A.B. °लिनः 20. W. Omits विष्णोर्नु......रजांसि 21. W. Omits त्रेधोरुगायः 22. W. Omits कं कः 23. W. प्रवच्यादि

**विज०** देवद्विषां मतिविमोहं बुद्धिमोहजनकं मतिप्रलोभं मतिवञ्चकं बालवेषं विधाय यदौपधर्म्यं उपधर्माणां पाषण्डधर्माणां प्रतिपादकं शास्त्रं तदभाषतेत्यन्वयः। नारायण इति शेषः। एते असुराः के इत्याशंक्य पूर्वजन्मकर्मपूर्वकं तान्विशिनष्टि निगमेत्यादिना। प्राग्जन्मनियमेन विहिताभिः त्रिसृभिः पूर्भिः पुरीभिः लोकान् घ्नतां नाशयतां रुद्रेण हतानां पुनर्विप्रजन्म लब्ध्वा निगमेन विहिताभिः क्रियाभिः निगमवर्त्मनि विष्ठितानां वेदमार्गे प्रतिष्ठाय यज्ञादिविशिष्ठकर्मानुष्ठाने स्थिराणामदृश्या मूर्तिर्यस्य सः तथा। दैत्यैरज्ञेयस्वरूप इत्यनेन ततो वेदमार्गाञ्चलनाय देवैः प्रत्यक्षीकृत्य प्रार्थित इति ज्ञातव्यम्। बुद्धोक्तशास्त्रस्य वेदबाह्यधर्मप्रतिपादकत्वमज्ञजनदृष्ट्या "वेदोऽप्रमाणम्" इत्यादिरूपस्य तस्यैव विष्णोः प्रमाणमित्यादि वेदप्रतिपाद्यार्थत्वेन देवेभ्यः प्रशान्तसहितायां हरिणोक्तत्वादिति द्योतनायाभाषतेत्युक्तम्। स्वसूत्राणां भाष्यं च कृतवानित्यर्थः।।३७।।

यर्हि यस्मिन् युगे सतां आलयेष्वपि हरेः कथाः न स्युः द्विजजनाश्च पाषण्डिनः[2] पाषण्डवर्तिनः[3] स्युः नृदेवाः वृषलाः धर्मविनाशकाः। यत्र यस्मिन् च युगे स्वाहादिगिरो न सन्ति स्म। वचनाभावे स्मरणमपि नास्ति। इतिशब्दः आद्यर्थे। तदा तस्य कलेः युगस्यान्ते अवसाने भगवान् शास्ता भविष्यति। दुष्टानामिति शेष इत्यन्वयः। इतिशब्दः स्वरूपावतारकथनसमाप्तिवचनो वा इति।।३८।।

मायाविभूतीराह - **सर्ग** इति। योऽहं चतुर्मुखः ये च कर्दमाख्याः ऋषयः, ये च मरीच्याद्या नव प्रजापतयः ये सर्वे सर्गे सृष्टिसमये प्राप्ते पुरुशक्तिभाजः पूर्णशक्तिभाजः हरेर्मायाविभूतयः। अथ यो धर्मः यो मखः ये चतुर्दश मनवो, ये च अमरेशाः चतुर्दशेन्द्राः, ये च अवनीशाः प्रियव्रतादयः ते सर्वे स्थाने स्थितिकाले प्राप्ते पालनाय विष्णोः मायाविभूतयः, योऽधर्मो यश्च हरो रुद्रो ये च मन्युवशाः सुराद्याः क्रोधवशाः सुरपुरस्सराः ते सर्वे अन्ते तु संहारकाले च प्राप्ते संहाराय हरेः मायाविभूतयः इत्यन्वयः। सृष्टिपालनसंहारकालेषु मायया स्वेच्छया विविधो भूत्वा अस्मदादिषु स्थित्वा सृष्टिपालनसंहारान् करोति। यद्वा मायया भगवदिच्छया अस्मदादीनां सदा विभूतयः भवन्तीति, अतः अस्मदादयः हरेः मायाविभूतयः नतु स्वस्वरूपविभूतयः इत्ययं विशेषः 'तु'-शब्दसूचितया "हरीच्छया विभूतीतिर्यत् ब्रह्मादीनां सदा भवेत्। इच्छया वा बहुविधः तेषु विष्णुः स्वयं स्थितः, अतो मायाविभूतित्वं तेषां मत्स्यादयः स्वयम्" इति स्मृत्या गृहीतः इति।।३९।।

ननु स्वरूपमायया विभूतीनां एतावत्त्वं चेत् इदं सर्वसुलभं ज्ञानं इत्याशंक्य अनन्तायुषाऽपि विभूतीनां गणनं न सुशकं इत्याह - **विष्णोर्नु** इति। यः त्रिपृष्ठस्य सदनात् विशरणात् नाशात् उरु कम्पमानं मां निशाम्य स्वरभसा त्रिविक्रमक्रमणवेगेन स्खलितं चलितं आसन्नपतनं त्रिपृष्ठं[4] सत्यलोकं

1. A. 'ख' 2. A. 'ख' 3. A. 'ख' 4. A. Omits त्रिपृष्ठं

चस्कम्भ स्तम्भितवान्। तस्य विष्णोः वीर्यगणनां विभूतिलक्षणमाहात्म्यप्रसंख्यानं प्रति कवीनां कतमो अर्हति न कोऽपीत्यन्वयः। आदिकविरपि न समर्थः इत्याह पार्थिवानीति। यः कविः प्रतिभाविशेष-सम्पन्नोऽपि ब्रह्मा पार्थिवानि रजांसि भूमिपरमाणून् विममे गणितवान् सोऽपि न शक्नोतीति शेषान्वयः। यदिति हेत्वर्थे। अनन्तानि यत् यस्मात् तस्मात्[1] इति।।४०।।

**रा०कृ०** निगमवर्त्मनि सत्कर्माचरणादिवेदमार्गे निष्ठितानां नितरां स्थितानां मयेन राक्षस-शिल्पिना विहिताभिः रचिताभिः अदृश्यतूर्भिः अलक्ष्यरयाभिः पूर्भिः अयोरजतताम्रमयीभिः तिसृभिः पुरीभिः लोकान् प्राणिनः घ्नतां नाशयतां देवद्विषां मतिविमोहमतिप्रलोभं मतिविमोहः वेदमार्गे अपकर्षबुद्धिः मतिप्रलोभः अन्यमार्गे प्रवृत्तिश्च यस्मात् तथाभूतं वेषं पाषण्डवेषं विधाय स भगवान् औपधर्म्यं धर्माभासं पाषण्डधर्मं बहु अधिकं भाष्यते भाषिष्यते। अनेन बुद्धावतारः उक्तः। अयं च बुद्धो भगवदवतारोऽन्य एव नतु ऐतिहासिकैः अभ्यूहितो गौतमबुद्धः।

ननु यद्यपि सन्तु देवद्विषोऽसुराः लोकघ्नाः वेदमार्गानुगामिनश्च लोके रावणादितुल्याः। किन्तु वेदवेद्येन परमपुरुषेण तेषां मतिविमोहप्रलोभजनको वेषः समाद्रियत इति, धर्माभासः पाषण्डधर्मो भाष्यत इति च न श्रद्धेयमेतत् अत्रोच्यते - वेदस्तावत् सर्वकारणकारणभूतभगवत्तत्त्वप्रतिपादको विश्वविज्ञानराशिश्च यत्र भौतिकाध्यात्मिकादिप्रयोजनसाधनानि विविधानि कर्माणि प्रतिपादितानि। तानि च यथायोगमाचरता प्राज्ञेन जनेन आत्यन्तिकदुःखनिवृत्तिरूपमोक्षसाधने सावधानेन भवितव्यम्। किन्तु केचन कामात्मानः वेदोक्तकर्मसु त्रैगुण्यविषयमेव कर्मजालमनुतिष्ठन्तः स्वार्थसम्पादनेच्छया स्वेतर-प्राणिप्रपञ्चस्य बाधामप्यापादयन्तः अहिंसाभूतदयात्यागादिदिव्यगुणसम्पदं नाद्रियन्ते।

अत्र मयविहितास्तिस्रः पुरः कामहेतुकानां त्रिगुणानां सङ्केताः। ते च त्रिगुणाः कामप्रवृत्तत्वात् लोकक्षेमनिरपेक्षा एव। वेदमार्गनिष्ठया च सन्दर्भानुरोधात् काम्यकर्मानुष्ठानमेव सूच्यते। एतादृशकाम्य-कर्मानुष्ठानपरायणाः स्वार्थदूषितचित्तत्वात् प्रागुक्तहिंसाभूतदयादिदिव्यगुणविरहिताः देवद्विष इति कथ्यन्ते। एत एव जनाः भगवता श्रीकृष्णेन "अविपश्चितः। वेदवादरताः पार्थ! नान्यदस्तीतिवादिनः"।। (भ.गी.2-42) इत्यभिशस्ताः। अपि चात्रैव भागवते "यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम्। हित्वाऽर्चां भजते मौढ्यात् भस्मन्येव जुहोति सः।।" (भाग.3-29-23) "द्विषतः परकाये मां मानिनो भिन्नदर्शिनः। भूतेषु बद्धवैरस्य न मनश्शान्तिमृच्छति।।" (भाग.3-29-24) इत्यादिभिः श्लोकैः सर्व-भूतान्तर्यामिणं देवमविगणय्य नानाविधैः द्रव्यैः मानवेन अर्चादिकरणं व्यर्थं इति च सूचितम्। ईदृशानां सर्वान्तर्यामिसन्दर्शनविमुखानां कर्मठजनानाम् उद्धरणार्थमेव बुद्धावतारेण भगवता मतिविमोहमति-प्रलोभं वेषं विधाय त्रैगुण्यवेदनिरसात्मकं औपधर्म्यं बह्वभिभाष्यते'ति कृतं विस्तरेण।।३७।।

---

1. A.B. Omit तस्मात्

यर्हि यदा सतां आलयेष्वपि निवासेष्वपि हरेः कथाः न स्युः न भवेयुः द्विजजनाः ब्राह्मणक्षत्रियवैश्याः पाखण्डिनः वेदमार्गविरोधिनो वेदार्थनिन्दकाश्च स्युः नृदेवाः प्रजापालकाः वृषलाः म्लेच्छधर्मिणः स्युः म्लेच्छधर्मश्च जीविकार्थकप्रजापालनादिकर्माचरणरूपः। यत्र यदा स्वाहा, स्वधा वषट् इति गिरः स्वाहावषडिति पदाभ्यां दैवकर्माणि, स्वधापदेन पितृकर्माणि च सूच्यन्ते - न स्युः न श्रूयन्ते देवपितृपूजा लुप्ता भवतीति भावः। तदा युगान्ते कलियुगान्ते भगवान् नारायणः कलेः शास्ता कल्क्यवतारस्सन् शासको भविष्यति।।३८।।

पुरुशक्तिभाजः अचिन्त्यानन्तशक्तिमतो भगवतः सर्गे जगत्सृष्टौ तपः अहं ब्रह्म, नवऋषयः मरीच्यादयः, ये च अन्ये प्रजेशाः दक्षादिप्रजापतयः सन्ति ते सर्वे इमाः मायाविभूतयः भगवदिच्छा-विरचितविभूतिस्वरूपाः, तस्य भगवतः स्थाने च पालने च धर्ममखमन्वमरावनीशाः धर्ममखो विष्णुः मनवः अमराः देवाः अवनीशाः राजानश्च - एते सर्वेऽपि भगवतो मायाविभूतयः, अन्ते तु जगत्संहारे तु अधर्महरमन्युवशासुराद्याः अधर्मो, हरो रुद्रश्च मन्युवशाः सर्पाश्च असुराश्च आद्यपदेन भूतप्रेतादयो गृह्यन्ते। एते सर्वे च मायाविभूतय एव।

भगवतः परमेश्वरस्य सृष्टिस्थितिलयेषु यथाक्रमं उपयुज्यमानाः तपोब्रह्मादयः धर्ममखादयः अधर्महरादयश्च तदीयमायाविभूतिस्वरूपा इति भावः। एतेन भगवन्मायावतारविभूतिरुक्ता।।३९।।

यो भगवान्। त्रिविक्रमः अस्खलता प्रतिघातरहितेन स्वरंहसा स्वचरणरयेन त्रिसाम्यसदनात् गुणत्रयसाम्यरूपं सदनं प्रधानं तस्मादारभ्य उरु अधिकं कम्पयानं कम्पेन यानं पतनं यस्य तथाभूतं आत्रिपृष्ठं सत्यलोकमभिव्याप्य सर्वमपि यस्मात् कारणात् चस्कम्भ धृतवान् तस्य विष्णोः वीर्यगणनां वीर्याणां पराक्रमाणां गणनां कर्तुमिति शेषः। इह संसारे पार्थिवानि पृथिवीसम्बन्धीनि रजांस्यपि परमाणूनपि यः कविः बुद्धिशाली पुमान् विममे गणयामास तादृशः कतमो नु को वा अर्हति? न कोऽपीति भावः।

यो भगवान् त्रिविक्रमः अस्खलितेन स्वपादवेगेन गुणत्रयसाम्यरूपप्रधानादारभ्य नितरां कम्पमानं सत्यलोकपर्यन्तं सर्वमपि विश्वं अदीधरत् तस्य विष्णोः पराक्रमान् गणयितुं पार्थिवपरमाणु-गणनाचतुरोऽपि न समर्थो भवतीति भावः।

अत्र 'विष्णुवीर्य' पदेन नानाविधभगवदवताराद्भुतकर्माणि सूच्यन्ते। तथाहि यदा यदा मानव-समाजः धर्मभ्रष्टः कष्टपीडितो भवति तदा तदा भगवद्गुणविभूतिमन्तो महान्तो भुवि समवतीर्य स्वकीयाद्भुतकर्मभिः तं समाजं धर्मानुगामिनं विधाय रक्षन्ति। महतां भगवदंशसम्भवत्वे च भगवद्गीता-वचनं प्रमाणम् - "यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा। तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम्" (भ.गी.10-41) इति श्रूयन्ते च अधुनाऽऽपि श्रीरामकृष्णपरमहंसश्रीरमणमहर्षिप्रभृतयो नैकविधा

भगवदवतारविभूतयः। अतो भागवतैः स्वसमकालीनमहानुभावव्यक्तिविशेषेषु भगवद्विभूतिसन्दर्शन-बुद्धिः संवर्धनीयेति, तादृशबुद्धिप्रवर्धनेनैव भागवताध्ययनमन्वर्थं भवतीति च विज्ञेयम्।।४०।।

**नान्तं विदाम्यहममी मुनयो[1]ऽग्रजास्ते मायाबलस्य पुरुषस्य कुतो[2]ऽपरे ये।**
**गायन् गुणान् दशशतानन आदिदेवः शेषोऽधुनापि समवस्यति नास्य पारम्।।४१।।**

**येषां स एवं[3] भगवान् दययेद[4]नन्तः सर्वात्मनाऽऽश्रितपदो यदि निर्व्यलीकम्।**
**ते दु[5]स्तरामतितरन्ति च देवमायां नैषां ममाहमिति धीः श्वशृगालभक्ष्ये।।४२।।**

**वेदाहमङ्ग परमस्य हि योगमायां यूयं भवश्च भगवानथ दैत्यवर्यः।**
**पत्नी मनोः स च मनुश्च[6] तदात्मजाश्च प्राचीनबर्हि[7]र्ऋभुरङ्ग उत ध्रुवश्च।।४३।।**

**इक्ष्वाकु[8]रैलमुचुकुन्दविदेहगाधिरघ्वम्बरीषसगरा गयनाहुषाद्याः।**
**मान्धात्रलर्कशतधन्व[9]नुरन्तिदेवौ[10] देवव्रतो बलिरमूर्त्त[11]रयो दिलीपः।।४४।।**

**सौभर्यु[12]तङ्कशिबिदेवलपिप्पलाद[13] सारस्वतो[14]द्धवपराशरभूरिषेणाः।**
**येऽन्ये विभीषणहनूमदुपेन्द्रद[15]त्तपार्थार्ष्टि[16]षेणविदुरश्रुतदेव[17] वर्याः।।४५।।**

**श्रीध०** एतत्प्रपञ्चयति। **नान्तमिति**। पुरुषस्य यन्मायाबलं तस्य अन्तं न विदामि न वेद्मि दशशतानि आननानि यस्य स शेषोऽपि अ[18]स्य गुणान् गायन् गायन् अ[19]धुनाऽपि पा[20]रं न समवस्यति [21]सम्यगवस्थानं न गच्छति इत्यर्थः।।४१।।

[22]यदि न केऽपि विद[23]न्ति तर्हि कथं मु[24]च्येरन् तत्कृपयैवेत्याह - **येषामिति**। दययेत् दयां कुर्यात् [25]स च यदि निष्कपटम् आश्रितचरणो भवति ते दुस्तरामपि देवस्य[26] विष्णोः मायां अ[27]तितरन्ति चकारात् मायावैभवं वि[28]दन्ति च अथेति वा पाठः। प्रत्यक्षमेव तेषां मायातितरण[29]मित्याह। नैषामिति। श्वशृगालानां भक्ष्ये देहे।।४२।।

---

1. M.Ma. °यः प्रजेशाः 2. I. °ऽवरा 3. H.I.V.W. °ष 4. AF.GF. °याह्यनन्तः 5. M.Ma. वै विदन्त्यति° 6. M.Ma. °स्तदपत्यभूताः 7. A.C.I. °ऋ° 8. W. °रङ्ग° 9. M.Ma.W. °न° 10. M.Ma. °वदेवव्रताः 11. H.V. °धृ° 12. H.M.Ma.V.W. °द° 13. H.M.Ma.V.W. °दाः 14. W. °द्ध° 15. AF.GF. °त्ताः 16. H.V.W. °र्ष्णि° 17. M.Ma. °मुख्याः; AF.GF. °भूपाः 18. H.V. यस्य 19. A.H.V. Omit अधुनाऽपि 20. H.V. Omit पारं 21. A.B. न प्राप्नोति 22. H.V. add ननु 23. V. °न्द° 24. H.V. विमु° 25. A.B. ते च यदि निष्कपटमाश्रितचरणा भवन्ति ते 26. A.B. Omit °स्य विष्णोः 27. H.V. Omit अति 28. H.V. °न्द° 29. H.V °मेवेत्या°

अन्तर्ज्ञानाभावेऽपि माया इयमिति ज्ञानं तत्कृपया बहूनां अस्तीत्याह - **वेदाहमिति** त्रिभिः। यूयमिति सनकादी[1]नामन्तर्भावात् बहुवचनम्। दैत्यवर्यः प्रह्लादः, मनुः स्वायम्भुवः तस्य पत्नी शतरूपा च तदात्मजाः [2]प्रियव्रतोत्तानपादौ पुत्रौ [3]तिस्रः कन्याश्च प्राचीनब[4]र्हिषो विसर्गलोपश्छान्दसः [5]अङ्गो वेनपिता।।४३।।

**इक्ष्वाकुरिति**। शतधनुः अनुश्च। सन्धिरार्षः। रन्तिदेवा इति [6]वा पाठः सुगमः। ऐकपद्ये एतैः सहितो देवव्रत इत्यर्थः।।४४।।

**सौभरीति**। उपेन्द्रदत्तः शुकः। विभीषणादयो [7]राक्षसाश्च, हनुमदादयः कपयश्च वर्या मुख्याः येषां ते [8]अपि विदन्तीत्यर्थः।।४५।।

**वीर०** एवमवतारगुणप्रयोजनानि उक्त्वा "नाहं न यूयम्" इति पूर्वप्रस्तुतमुपसंहरति **नेति**। मायाबलस्य अद्भुतबलस्य बलं सेना प्रकृत्याख्यपरिकर इति वा पुरुषस्य परमपुरुषस्य अन्तं स्वरूप-स्वभावयोः अवधिं अहं चतुर्मुखः न विदामि। तेऽग्रजाः सनकादयः न विदन्ति अन्ये कुतो जानीयुः? किं बहुना? दशशतानि आननानि यस्य स दशशताननः सहस्रमुखः आदिदेवः शेषः द्विसहस्रजिह्वश्च अन[9]न्तगुणान् गायन् अधुनाऽपि अस्य भगवतः पारं न समवस्यति नाध्यवस्यति।।४१।।

ननु कैर[10]प्यविज्ञातस्वरूपस्वभावावधित्वे कथं तद्भजनेन मुच्येरन् इत्याशङ्क्यापरिच्छि[11]न्नस्य वस्तुनोऽपरिच्छिन्नत्वेनैव ज्ञानं मुक्तिसाधनं न तु परिच्छिन्नत्वेन तस्यान्यथाज्ञानरूपत्वात्, अतः परमात्मस्वरूपम् अपरिच्छिन्नत्वेन जानन्तो भजमाना मुच्यन्ते एव इत्याह **येषामिति**। निर्व्यलीकं निरपराधं यथा तथा येषां सर्वात्मना उपायोपेयत्वबुद्ध्या आश्रितपदः संश्रितपदो यदि भवेत् स एष भगवान् [12]तान् दययेत् [13]ते भगवद्द[14]याविषयाः दुस्तरां [15]तरितुमशक्यां देवस्य विष्णोः मायाम् अतितरन्ति निःशेषं तरिष्यन्ति। चकारात् तत्स्वरूपस्वभावादिकमपि यथावस्थिततत्वेन जानन्ति। एवं सर्वात्मना भगवत्प्रपन्नानाम् "आत्मसमं विचक्ष्महे" इत्युक्तदेहात्मभ्रमो[16]ऽपि निवर्त्तत इत्याह **नैषामिति**। एषां सर्वात्मना भगवन्तमाश्रितानां श्वशृगा[17]लानां भक्षणयोग्ये कलेबरे ममाहमिति धीः "अनात्मनि आत्मबुद्धिर्या अस्वे स्वमिति या मतिः" इति स्थानोक्तधीः नास्तीत्यर्थः।।४२।।

किमेवंविधाः भगवत्प्रपन्ना [18]अपि सन्तीत्यत आह वेदेति। अङ्ग हे नारद! अहं वेद जानामि भगवन्तमिति शेषः। परमस्य भगवतो योगमायां "दैवी ह्येषा गुणमयी" इत्युक्तप्रकारां स्वदेहेन्द्रियादि-

---

1. A.B. 'नन्तर्भाव्यबहुत्वं 2. H.V. Omit प्रियव्रतो......तिस्रः; B. Omits प्रियव्रतोत्तानपादौ 3. B. Omits तिस्रः 4. H.V. 'र्हिः 5. A. Omits अङ्गो वेनपिता 6. H.V. Omit वा 7. A.B. Omit राक्ष.....कपयश्च 8. A.H.V. Omit अपिविदन्तीत्यर्थः 9. W. 'न्तः 10. W. 'प्यज्ञा' 11. W.'न्नवस्तु' 12. W. Omits तान् 13. A.B. Omit ते 14. W. 'यया दुस्त' 15. A.B. तर्तुं' 16. W. विनिव' 17. W. 'लादीनां 18. W. Omits अपि

रूपेण संयुज्यमानां विचित्रसर्गकरीं प्रकृतिं तरिष्यामि इति शेषः। यूयं इत्यादीनां विदन्ति अतितरन्ति च इत्युपरितनेन अन्वयः। यूयमिति सनकाद्यभिप्रायेण बहुवचननिर्देशः। भवो रुद्रः भगवानिति रुद्रविशेषणम्। दैत्यवर्यः प्रह्लादः मनोः पत्नी शतरूपा, स च स्वायम्भुवो मनुश्च [1]तदात्मजाः मन्वात्मजाः पुत्रौ दुहितरश्च। पुत्रौ उत्तानपादः प्रियव्रतश्च। देवहूत्यादयो दुहितरश्च। प्राचीनबर्हिः विसर्गलोप आर्षः। अङ्गो वेनस्य उत अपि च।।४३।।

**इक्ष्वाकुरीति** [2]ऐलः पुरूरवाः। [3]गयनाहुषौ आद्यौ येषां ते। [4]नाहुषः ययातिः। [5]शतधन्वनश्चासन्धि-रार्षः। देवव्रतो भीष्मः।।४४।।

**सौभरीति**। विभीषणादयश्च वर्या मुख्या येषां ते।।४५।।

**विज०** अनन्तत्वम् उपपादयति - **नान्तमिति**। विदामीति विकरणव्यत्ययेन। चतुर्मुखाद्ब्रह्मणः शेषस्य सहस्रमुखत्वकथनात् ज्ञानाधिक्यमस्तीत्यज्ञशङ्कां निवारयति न समवस्यति न निश्चिनोति "माल्याक्षतादिदाने स्त्रीशेष" इति वैजयन्तीकोशात् अक्षताद्याशीर्वचनवान् शेषः कश्चित्पुमानिति संशयं निरस्यति दशशतानन इत्यनेन। अयमपि नागेष्वन्यतमः कश्चिदित्यतआह - आदिदेव इति। अपरे अर्वाचीना अनेन श्लोकद्वयेन "विष्णोर्नुकं वीर्याणि प्रवोचम्" "न ते विष्णो जायमान" इति ऋगर्थमुदाहरन्ति।।४१।।

नन्वेवं चेत्, न कस्यापि [6]ज्ञानाभावेन पुरुषार्थप्राप्तिरित्याशङ्क्य तत्प्रसादेन सर्वं सुलभम् इत्याह- **येषामिति**। सोऽनन्तो भगवान् स्वयमेव येषां दययेत् दयां करोति ते देवरूपमायां स्वरूपशालिं विदन्ति, संसारहेतुं शैवलीं मायां तरन्ति, तत्साधनमन्तरेण दययेच्चेत्तस्य वैषम्यनैर्घृण्ये च स्याताम् इत्यत्राऽऽह सर्वात्मनेति। तत्र इत्थंभावमाह - नैषामिति। येषां सेवकानां श्वशृगालभक्षणयोग्ये देहे ममाहमिति धीः नास्ति देहाद्यभिमानशून्यत्वेन भाव्यमिति भावः। तत्तद्योग्यतानुसारेण तत्प्रसादोऽपि बहुविध इत्यस्मिन्नर्थे वैशब्दः।।४२।।

ननु तर्हि तत्प्रसादयोग्याः के इति तानाह - **वेदाहमिति**। ऋतस्य तन्तुविततं निवृत्त्य "तदपश्य-दभवत्प्रजासु" इति श्रुतिद्योतको हिशब्दः प्रथमप्रक्रान्तत्वात् चतुर्मुखः सर्वस्मादधिकं वेत्ति तदन्ये यथायोग्यता वेत्तार इत्यर्थस्मारको वा भगवानिति विशेषणात् भवस्य नारदादेः ज्ञानातिशयोऽस्तीति सूचयति। अथ इत्यनेन दैत्येषु प्रह्लादस्य ज्ञाननैर्मल्यं सूचयति, अङ्गो वेनस्य पिता।।४३।।

---

1. A.B. Omit तदात्मजाः......अपि च 2. W. Omits ऐलः पुरूरवाः 3. A.B. Omit गय......ते 4. W. Omits नाहुषः ययातिः 5. A.B. Omit शतधन्वनश्चासन्धिरार्षः 6. A.B. त्राणां

ऐलः इलायाः पुत्रः परूरवाः नाहुषो ययातिः ।।४४।।

हरेः स्वरूपांशानाम् उपेन्द्रदत्तादीनां नित्यबद्धगुणेषु सहयोगो दुष्टजनमोहनार्थः।।४५।।

**रा०कृ०** पुरुषस्य परमपुरुषस्य मायाबलस्य अन्तं अहं न विदामि न जानामि, ते अग्रजाः अमी मुनयः सनकादयः, न विदुः इति शेषः। अपरे उक्तपुरुषव्यतिरिक्ताः ये सन्ति ते कुतः। कथं विदुः इति भावः। किञ्च दशशताननः सहस्रमुखः आदिदेवः शेषः अस्य भगवतो गुणान् गायन् अधुनाऽपि पारं तद्गुणगणनायाः अन्तं न समवस्यति न प्राप्नोति।

अत्र ब्रह्मादयोऽपि भगवन्मायाबलान्तं प्राप्तुं न प्रभवन्तीति कथनेन भगवत्तत्त्वज्ञाने न केवलजिज्ञासा प्रयोजिका इति, किन्तु तस्मिन् तदनुग्रहजन्यसर्वसमर्पणबुद्धिः एकैवेति व्यज्यते। तदेवाग्रे वक्ष्यते।।४१।।

अनन्तः स भगवान् येषां दययेत् येषु दयां कुर्यात्, स एव च तैः निर्व्यलीकं निष्कपटं सर्वात्मना यदि आश्रितपदः भवेत् तर्हि ते भगवद्दयापात्रभूताः धन्याः दुस्तरां देवमायां अतितरन्ति सामग्र्येण तरन्ति। किञ्च एषां भगवद्भक्तानां श्वशृगालभक्ष्ये शुनकजम्बुकादिभिः भक्षणीये नश्वरे कलेबरे ममाहमिति धीः आत्मीयता बुद्धिः आत्मबुद्धिश्च न भवति।

भगवदनुग्रहपात्रभूताः साधवः सर्वात्मना भगवत्समर्पितमतयः तन्मायां तर्तुं प्रभवन्ति। अपि च सर्वत्र सर्वान्तर्यामिसन्दर्शनेन परायणास्ते देहादिषु स्वीयभावनां परित्यज्य मृत्युभीतिविरहिताः मुक्ताः भवन्ति।।४२।।

अङ्ग! हे नारद! परमस्य भगवतः परमपुरुषस्य योगमायां अहं वेद हि। यूयं नारदसनकाद्याः जानीथ। किञ्च भगवान् भवः रुद्रः, अथ दैत्यवर्यः प्रह्लादः, मनोः स्वायम्भुवस्य पत्नी शतरूपाख्या स च मनुः, तदात्मजाश्च मनोः पुत्राः प्रियव्रतोत्तानपादादयः पुत्री देवहूतिश्च, प्राचीनबर्हिः ऋभुः, अङ्गः वेनस्य पिता, उत ध्रुवश्च अपि च ध्रुवः - एते सर्वेऽपि भगवतो योगमायां विदन्ति, अतितरन्ति इति च उत्तरेणान्वयः।।४३।।

किञ्च इक्ष्वाकुः ऐलः इलात्मजः पुरूरवाः, मुचुकुन्दः विदेहो जनकः गाधिः विश्वामित्रस्य पिता, रघुः अम्बरीषः सगरः, गयः, नाहुषो ययातिः - एतदाद्याः मान्धाता अलर्कः, शतधन्वा, अनुः रन्तिदेवः देवव्रतो भीष्मः, बलिः अमूर्तस्यः, दिलीपः - एते सर्वेऽपि भगवतो योगमायां विदन्ति अतितरन्तीति उत्तरेणान्वयः।।४४।।

अपि च सौभरिः, उतङ्कः शिबिः, देवलः, पिप्पलादः, सारस्वतः, उद्धवः पराशरः भूरिषेणः,

विभीषणः हनुमान् उपेन्द्रदत्तः शुकः पार्थः अर्जुनः आर्ष्टिषेणः विदुरः श्रुतदेववर्यः श्रुतदेवाख्यो महानुभावः - एतत्प्रभृतयो ये च अन्ये वर्तन्ते ते वै विदन्ति अतितरन्तीति उत्तरेणान्वयः।

अत्र उदाहृतानां महात्मनां मध्ये केचन रामायणान्तरकालिकाः, केचित्तु भारतप्राक्कालिकाः। किञ्च नारदाय ब्रह्मकृतोऽयं भागवतोपदेशः रामावतारात् प्रागेव संवृत्तः तस्मादेते श्लोकाः प्रक्षिप्ताः इति केचन कथयन्ति। अपरे तु ते महात्मानः पूर्वकल्पजीविन एवेति वदन्ति। किन्तु एते सर्वेऽपि तीर्णमायाः परमभागवतोत्तमा इत्यत्र न काऽपि विप्रतिपत्तिः।।४५।।

**ते वै विदन्त्यतितरन्ति च देवमायां स्त्रीशूद्रहूणशबरा अपि पापजीवाः।**
**यद्यद्भुतक्रमपरायणशील[1]शिक्षास्तिर्यग्[2]जना अपि किमु श्रुतधारणा ये।।४६।।**

**शश्वत् प्रशान्तमभयं प्रतिबोधमात्रं शुद्धं समं सदसतः परमात्मतत्त्वम्।**
**शब्दो न यत्र पुरुकारकवान् क्रियार्थो माया परैत्यभिमुखे च विलज्जमाना।।४७।।**

**तद्वै पदं भगवतः परमस्य पुंसो ब्रह्मेति यद्विदुरजस्रसुखं विशोकम्।**
**सध्र्य[3]ङ् नियम्य यतयो यमकर्त[4]हेतिं जह्युः स्वरा[5]डिव निपानखनित्रमिन्द्रः।।४८।।**

**स श्रेयसामपि विभुर्भगवान् यतोऽस्य भावस्वभावविहितस्य सतः[6] प्रसिद्धिः[7]।**
**देहे स्वधातुविगमे[8]ऽनुविशीर्यमाणे व्योमेव तत्र पुरुषो न विशीर्यतेऽजः[9]।।४९।।**

**सोऽयं तेऽभिहितास्तात! भगवान् विश्वभावनः।**
**समासेन हरेर्नान्यदन्यस्मात्[10] सदसच्च यत्।।५०।।**

**श्रीध०** किं बहुना? सत्सङ्गेन तु सर्वेऽपि विदन्तीत्याह - **ते वा** इति। अद्भुताः क्रमाः पादन्यासा यस्य हरेः तत्परायणाः तद्भक्ताः तेषां शीले शिक्षा येषां ते। तथा यदि भवन्ति तर्हि ये[11] [12]स्त्रीशूद्रादयः पापजीवाः ते[13]ऽपि विदन्ती[14]त्यर्थः। तत्र श्रुते भगवतो रूपे धारणा मनोनियमनं येषां ते विदन्तीति किमु वक्तव्यम्?।।४६।।

किं तद्भगवतः स्वरूपम्? यस्मिन् मनोधारणां विधाय मायां तरन्ति चेत्यपेक्षायामाह

---

1. A.W. °शी° 2. W. °गणा° 3. M.Ma. °म्यङ्निशाम्य 4. M.Ma. °लोकहेतुम्; W. कर्तृहेतुम् 5. M.Ma. सुधामिव 6. W. ततः 7. M.Ma. °द्धः 8. M.Ma. °मेतु 9. AF.GF. °तः 10.W. °त्तत् 11. A. ते; H.V. Omit ये 12. H.V. Omit स्त्रीशूद्रा......जीवाः 13. H.V. सर्वेऽपि 14. H.V. Omit इत्यर्थः। तत्र

**शश्वदिति** [1]द्वाभ्याम्। यद्ब्रह्मेति विदुः मुनयः तद्वै भगवतः पदं स्वरूपम्। किं तद्ब्रह्म? तदाह। **अजस्रं** नित्यं च तत् सुखं च, विशोकं चेति अजस्रसुखत्वे हेतुः। शश्वत् सदा प्रशान्तमतो नित्यसुखरूपम्। विशोकत्वे हेतुः अभयम्। [2]तत्कुतः? यतः समं भेदशून्यमतोऽभयम् "द्वितीयाद्वै भयं भवति" इति श्रुतेः। तत्कुतः? यतः प्रतिबोधमात्रं ज्ञानैकरसम् ननु ज्ञानस्यापि नीलपीताद्याकारेण चक्षुरादिकरणभेदेन च भेदो दृश्यते। न शुद्धं निर्मलम्। ननु दर्शितो विषयकरणोपरागरूपो मल इत्यत आह। सदसतः परं विषयकरणसङ्गशून्यम्। वृत्तेरेव तदुपरागो न ज्ञानस्येति भावः। ननु तथाऽपि ज्ञात्रा सह भेदः स्यात्। न आत्मतत्त्वमात्मनो ज्ञातुः स्वरूपमेव [3]तन्न ततो भिन्नम्। ननु च "तं त्वौपनिषदं पुरुषं पृच्छामि" इति शब्दबोध्यत्वप्रतीतेः कुतो बोधरूपत्वं तत्राऽऽह। शब्दो न यत्र इति। आरोपित[4]निवृत्तावेव शब्दस्य व्यापारो न [5]तु तद्बोध इत्यर्थः। ननु [6]च भवतु नाम निरस्तभेदज्ञानरूपत्वाद्विशोकत्वं सुखस्य तु नानाकारकसाध्यक्रियाफलत्वात् कथम् अजस्रसुखत्वं तस्येत्यत आह। यत्र बहुकारकसाध्यः क्रियार्थः [7]उत्पत्त्यादिचतुर्वि[8]धक्रियाफलं च नास्ति इन्द्रियैः ज्ञानां[9]शाभिव्यक्तिरिव क्रियाभिः आनन्दां[10]शाभि व्यक्तिमात्रं क्रियते न उत्पत्त्यादिकमिति भावः। ननु उत्पत्त्याद्यभावे अपि मायामलो[11]पकरणेन विकार्यत्वमेव स्यात् व्रीहीणामिव तुषो[12]पकरणेन इत्याशङ्क्याऽऽह। माया अभिमुखे स्थातुं विलज्जमानेव यस्मात् परैति दूरतोऽपसरति।।४७।।

तस्मादेवम्भूते भगवति नियमितमनसां कृतार्थानां न किमपि कृत्यम् अस्तीत्याह **तदिति**। सहांचतीति सध्र्यङ् सहचरं मनो यं प्रति नियम्य यस्मिन् स्थिरीकृत्य यतयो यत्नशीलाः कर्तः [13]छेदः तन्निरासोऽकर्तः तत्र हेतिं साधनं जह्युः त्यजेयुः अनुपयोगात् तत् नाद्रियन्त इत्यर्थः। उपयोगाभावेन साधनानादरे दृष्टान्तः। निपीयतेऽस्मिन्निति निपानं कूपः तस्य खनित्रं खननसाधनम्। यथा स्वराट् स्वयमेव पर्जन्यरूपेण विरजमानः इन्द्रो नादत्ते तद्वत् इति। यद्वा स्वेनैव राजत इति स्वराट्। दरिद्रः स यथा इन्द्रः समृद्धः सन् कर्म[14]कारदशायां गृहीतं निपानखनित्रं जहाति तद्वदित्यर्थः।।४८।।

एवं तावत् अजस्रसुखं विशोकं ब्रह्मैव भगवतः स्वरूपं तत्प्राप्तानां [15]च न प्राप्यं कृत्यं वा किञ्चिदस्तीत्युक्तम्, इदानीं ततः प्राक् स एव सर्व[16]फलदाता सर्वकर्मप्रवर्तकश्चेत्याह **स इति**। स एव श्रेयसां फलानां विभुः दाताऽपि। तत्र हेतुः। भावानां ब्राह्मणादीनां स्वभावैः शमदमादिभिः विशेषणैः विहितस्या[17]स्य सतः शुभस्य कर्मणो यतः प्रवर्तकात्प्रसिद्धिः, यद्वा भावानां महदादीनां स्वभावेन परिणामेन विहितस्य सतः कार्यस्य प्रसिद्धिः। स एव स्वर्गादीनां दाता इत्यर्थः। ननु कर्मकर्तुर्मृतस्य कथं स्वर्गादिफलं स्यात्? तत्राऽऽह - स्वारम्भकधातूनां भूतानां विगमे वियोगे सति, अनु [18]पश्चात्

1. B सार्धेन 2. B. Omits तत् 3. B. तत्तु न ततो; H.V. नत्वतो 4. B. adds भ्रम 5. H.V. Omit तु 6. H.V. Omit च 7. A. उत्पाद्याप्य-विकार्यसंस्कार्यरूपं 8. A.B. "ध 9 B. "शस्याभि" 10. B. "शस्याभि" 11. A.B. "लापाकर" 12. A.B. "षापाकर" 13. A.B. भेदः 14. H.V. "करण" 15. H.V. Omit च 16. H V. "कर्मफलप्र" 17. B.H.V. Omit अस्य 18. A.B. Omit पश्चात्

विशीर्यमाणेऽपि[1] देहे तत्रस्थं व्योमेव यः तेन सह न विशीर्यते यतोऽजस्तेन सह न जातः तस्य पुरुषस्य श्रेयसां प्रभुः इत्यर्थः।।४९।।

अध्यायत्रयस्य अर्थमुपसंहरति - **सोऽयमिति**। सोऽयं ते[2] समासेन संक्षेपेणाभिहितः। तमेवाऽऽह - सदसत् कार्यं कारणं च हरेः अन्यत् न भवति। ननु हरेः तदव्यतिरेके तद्गतविकारप्रसङ्गः स्यात्। न अन्यस्मात्तत्कारणभूतो हरिः कार्याद्यतिरिक्तः इत्यर्थः।।५०।।

**वीर०** भवदादयो ये ते सर्वे विदन्ति परमात्मानं देवमायां देवस्य विष्णोः नियाम्यां मायां[4] अतितरन्ति च[5]। किम् बहुना? भागवतसङ्गेन तिर्यञ्चोऽपि[6] तरिष्यन्तीत्याह[7] - अद्भुताः क्रमाः पादविन्यासाः यस्य स अद्भुतक्रमो भगवान् त्रिविक्रमः। स एव परायणं उत्कृष्टं प्राप्यं प्रापकमाधारश्च येषां तेषां भागवतानां शीले शिक्षा वासना येषां ते तथाभूता यदि भवेयुः तर्हि तिर्यग्जना अपि तरन्तीति अनुषङ्गः। श्रुतेऽर्थे धारणा येषां ते मनुष्या ब्राह्मणादयः तिरश्चां श्रुतार्थधारणाऽपि[8] नास्तीति ज्ञापनार्थम् इदम्। ब्राह्मणादयः तरन्तीति तत्र[9] किमु वक्तव्यमित्यर्थः।।४६।।

ननु कीदृशं तत्स्वरूपं यद्भवदादयो जानन्तीत्यपेक्षायाम् - तत्स्वरूपं चिदचिद्विलक्षणत्वेन विशोध्य तत्स्वरूपानुचिन्तनपराणां स्वर्गाद्यर्थानुष्ठानोपकरणत्याग आर्थिक इत्याह श्लोक[10]द्वयेन **शश्वदिति**। विशोकं दुःखासम्भिन्नम्। अजस्रसुखं नित्यानन्दमयं यद्ब्रह्मेति विदुः "सत्यं ज्ञानमनन्तं" "विज्ञानमानन्दं" "विशोको विजर" इत्यादयो वेदान्ता आमनन्ति। तदेव परमस्य पुंसः परमपुरुषस्य भगवतः पदं स्वरूपम् इत्यर्थः। ननु किं विशेषेण वेदान्तवेद्यत्वमुच्यते न प्रमाणान्तरविषयत्वम् इत्यत आह-माया[11] जडात्मिका माया अभिमुखे, अवस्थातुं इति शेषः। विलज्जमाना सती परैति तिरो धत्ते मायाकार्याणि मन आदीन्द्रियाणि तत्स्वरूपमवगन्तुं असमर्थानि इत्यभिप्रायः। न केवलं लौकिकप्रमाणविषयत्वमेवालौकिकप्रमाणभूतवैदिकदेशपूर्वभागाविषयत्वमपि इत्याह शब्द इति। पुरुकारकः साध्यसाधनाद्यनेककारकान्वितः क्रियार्थः क्रियाप्रतिपादकः शब्दः वेदपूर्वभागोऽपि यत्र स्वरूपे न साक्षान्न बोधक इत्यर्थः। "सर्वे वेदा यत्पदमामनन्ती"-ति तु सर्वकर्माराध्यब्रह्मरूपमपर्यवसानवृत्त्या आमनन्तीति एतत्तात्पर्यकम्। अतएव[12] "तपांसि सर्वाणि च यद्वदन्ती" त्युक्तं तपांसि तपःप्रधाना उपनिषद्भागा वदन्ति साक्षाद्बोधयन्तीत्यर्थः। ननु जीवस्यापि स्वरूपम् अजस्रसुखमेव इत्यत आह-परमात्मतत्त्वमिति। "सत्यं ज्ञानमनन्तं ब्रह्म", "विज्ञानमानन्दं ब्रह्म" इति वाक्यप्रत्यभिज्ञानेन अजस्रसुखस्य अनन्तत्वेन विशेषितत्त्वात् अपरिच्छिन्नदुःखासम्भिन्ननित्यसुखस्वरूपत्वं परमात्मन एव

---

1. H.V. Omit अपि 2. H.V. Omit ते 3. A.B. Omit तत् 4. A.B. Omit मायां 5. W. Omits च 6 A.B. °ञ्चपि 7. A.B. °ती° 8. W. Omits अपि 9. W. Omits तत्र 10. W. Omits श्लोक 11. A.B. Omit माया 12. A.B. Omit अत एव

स्वरूपमित्यर्थः। ननु जीववत् अस्यापि कर्माधीनसुखदुःखसम्बन्धः स्यात् इति शङ्कां वारयति शुद्धमिति। अकर्मवश्यमित्यर्थः। अत एव सदसतोः चिदचितोः परं विलक्षणम्। अकर्मवश्यता कुत इत्यत आह सममिति, एकरूपमित्यर्थः। चिदचिदन्तर्यामित्वेन अवस्थितस्यापि तत्तद्वस्तुगतदोषासंस्पर्शात् अकर्मवश्यता उपपन्ना इति भावः। ननु आम्रादिफलानां तत्तत्प्रदेशभेदेन आम्लमधुरादिरसवत् सुखापरपर्यायानुकूलज्ञानस्वरूपस्य ब्रह्मणः प्रदेशभेदेन जडरूपता स्यात् इत्याशङ्कां वारयति प्रतिबोधमात्रमिति। प्रतिबोध एव प्रतिबोधमात्रं मात्रया क्वापि जडत्वव्यावृत्तिः विज्ञानघनएव प्रज्ञानघन एव इति श्रुतेः[1], मोक्षप्रदत्वमप्यस्[2]यासाधारणो[3] धर्म इत्याह अभयम् न विद्यते भयं यस्मात्तदभयं संसारनिवर्तकम् इत्यर्थः। तत्कुतः? शश्वत्प्रशान्तं शश्वत्सदा प्रशान्तमशनापिपासाद्यूर्मिषट्करहितमतः तदुपासकानामपि शान्तिसम्पादकमिति भावः "परमं साम्यमुपैति", "मम साधर्म्यमागता" इति हि[4] श्रुतिस्मृती।।४७।।

किञ्च[5] यतः एवम्भूतभगवत्स्वरूपचिन्तने प्रयतमानाः सध्र्यङ् सहांचतीति सध्र्यङ् सहस्य सध्र्यादेशः जीवसहचरंमनः नियम्य यद्यत्र उक्त[6]रूपे[7] नियतं कृत्वाऽकर्तृहेतुं कृत्यन्ते[8] छिद्यन्तेऽनेन संशया इति कर्तृ[9] ज्ञानं "छिद्यन्ते सर्वसंशया" इति श्रुतेः। कृती छेदेन तदितरत् अकर्तृ[10] स्वर्गादिफलसाधनं कर्म इत्यर्थः। तस्य हेतुम्[11] उपकरणं जह्युः। तत्र दृष्टान्तः-स्वराट् वर्षप्रदः इन्द्रः निपानखनित्रमिव नितरां पिबन्ति अस्मि[12]न्निति निपानं कूपः तस्य खनित्रं खननसाधनमिव स्वर्गाद्यर्थानुष्ठानोपकरणम्, अर्थादेव त्यजन्तीत्यर्थः।।४८।।

ननु स्वर्गादिफलेप्सूनां तत्साधनोपकरणोपादानम् आवश्यकम् इत्यत आह - **स श्रेयसां** इति। भावस्वभावविहितस्य भावाः ब्राह्मणादिवर्णाश्रमादयः तेषां स्वभावेनानुगुण्येन विहितस्य सतः[13] कर्मणः प्रसिद्धिः फलप्र[14]सिद्धिः यतः स भगवान् श्रेयसां स्वर्गादिफलानामपि विभुः प्रभुः तत्फलप्रदाता इत्यर्थः। अन्तरात्मतयाऽवस्थितस्य परमात्मन एव स्वर्गाद्यर्थकर्मस्वपि प्रवर्तकत्वात् तदाराध्यत्वात् तत्फलदत्वाच्च तद्भजनेनैव ईप्सितस्वर्गादि फलस्यापि सिद्धेः कामि[15]भिरपि स एव भजनीय इत्यर्थः। भगवतः सर्वान्तर्यामित्वे शरीरभूतचेतनाचेतनगतदोषसं[16]स्पर्शम् आशङ्क्याऽऽह देह इति। स्वधातुविगमे स्वधातूनां स्वदेहारम्भकभूतसूक्ष्माणां विगमे[17] वियोगे सति अनु पश्चात् विशीर्यमाणेऽपि[18] देहे तत्रस्थः पुरुषः परमपुरुषः गगनमिव न शीर्यते। कुतः? अजः कर्माधीनोत्पत्त्यादिशून्यः। अत्र देहशब्दः चेतनस्यापि प्रदर्शनार्थः चिदचिद्गतदोषस्पृष्ट इत्यर्थः। अस्य उत्तरार्धस्य जीवपरत्ववर्णनं तु अशोभनं कृत्स्नस्यास्य[19] प्रकरणस्य परमात्मपरत्वेन मध्ये जीवप्रसक्त्यभावात् जीवस्यापि शरीरद्वारा उत्पत्तिविनाशयोः "विज्ञानघन एव एतेभ्यो भूतेभ्यः समुत्थाय तान्येव अनुविनश्यती"ति श्रुत्यैव अभिधानाच्च।।४९।।

---

1. A.B. °ति· 2. A.B. Omit स्या 3. W. °णधर्म 4. A.B. Omit हि 5. W. Omits किञ्च 6. A. °ञ 7. A. स्वरूपं; B. स्वरूपे 8. A.B. °तेहेनि 9. A.B. °र्तं 10. A.B. °र्तं 11. A.B. °ति 12. A.B. °य° 13. W. Omits सतः 14. W. Omits °प्र° 15. W. कर्म° 16. A.B. Omit सं° 17. A.B. Omit विगमे 18. A.B. Omit °ऽपि 19. W. °पि

अध्यायत्रयार्थमुपसंहरति **सोऽयम्** इति। हे तात!नारद! सोऽयं पूर्वप्रतिपादिताकारः विश्व-भावनः[1] विश्वकारणभूतः भगवान् ज्ञानशक्तिबलैश्वर्यादिसम्पन्नो वासुदेवः समासेन सङ्ग्रहेण ते तुभ्यम् अभिहितः, मया इति शेषः। सङ्ग्रहमेवाह यत्सदसत् चिदचिदात्मकं वस्त्वन्यत् अतदात्मकं स्वनिष्ठ-मिव भाति। तद्धरेर्नान्यत् तदात्मकमेव इत्यर्थः। "हरेः नान्यदन्यत् तत्सदसच्च यदि"ति पाठः। नान्यदन्यस्मात् सदसच्च यदिति पाठे तु अन्यस्मात् सदसद्विलक्षणादपि हरेः सदसदात्मकं नान्यत् किन्तु तदात्मकमेव इत्यर्थः।।५०।।

**विज०** अत्र कैमुत्यन्यायमाह - **ते** इति। ये स्त्रीशूद्रहूणशबराः पापजीवाः तेऽपि देवस्य मायां विदन्ति संसारमतितरन्ति च किमुत अस्मदादयः इत्यन्वयः। तर्हि किमिति सर्वे निस्तीर्णाः संसारत्राभूवन् इति तत्राह यदीति। अद्भुतक्रमो विष्णुः स एव परायणं तस्य शीलं तस्य शिक्षा च येषां ते तथोक्ताः अद्भुतं जगत्क्रमतीति अद्भुतक्रमः अत्रापि कैमुत्यन्यायमाह तिर्यगिति। बृन्दावनगताः पशुपक्ष्यादयः तिर्यग्जना अपि देवमायां विदन्ति तरन्ति च ये श्रुतधारणाः ते विदन्तीति किमु वक्तव्यमिति अन्वयः।।४६।।

अद्भुतक्रमः किं लक्षणकः इति तत्राऽह **शश्वदिति**। यत् शश्वत् सदैकप्रकारं प्रशान्तं प्रकृष्ट-पूर्णसुखम् अद्वितीयत्वात् अभयं "द्वितीयाद्वै भयं भवति" इति श्रुतेः। यच्च प्रतिबोधमात्रं निर्दोषज्ञान-स्वरूपम्। मात्रशब्दोऽवधारणार्थः प्रतिशब्दो मुख्यार्थः। अत एव शुद्धं रागादिदोषरहितं यच्च समं परमाण्वादिपरममहदन्तेषु पदार्थेषु नातिरेकेण गुणविधुरं वैषम्यादिरहितं वा सदसतः परं व्यक्ताव्यक्तजगतो विलक्षणम् आत्मतत्वम् अव्यक्तादिसर्वप्रपञ्चाहंभावरहितं पुरूणि बहूनि कारकपदानि कर्तृकर्मक्रियावाचीनि यस्मिन् सन्ति स तथा अग्निष्ठोमाद्यनेकक्रियार्थः। शब्दो वाक्यलक्षणानन्त वेदाख्यो यत्र यस्मिन् साकल्येन वाचकत्वेन न वर्तते तदुक्तम् "अव्यक्ताद्यनहंमानात् आत्मतत्त्वं हरिः स्मृतः। अशब्दश्च अप्रसिद्धत्वात् शान्तः पूर्णसुखत्वतः" इति। हरिः स्वयं मायाधीनश्चेत् तदुपासकाः कथं तां तरन्तीति तत्राऽह मायेति। मायासंसारकारणं प्रकृतिः यस्य अभिमुखे स्थातुं विलज्जमाना यस्मात् उपासकेभ्यश्च परैति अपसरति दृष्टिमार्गं विहाय वर्तत इति।।४७।।

यच्च सर्वगुणपूर्णत्वात् ब्रह्मेति अजस्रसुखं निरन्तरसुखमिति विदुः अतीतानागतवर्तमानाः ब्रह्मादयः श्रवणादिभिः यतमानत्वात् यतः साधनपरिपाकेन यत्सम्यक् निशाम्य इन्द्रः सुधां प्राप्य निपानखनित्रं कूपखननसाधनकुद्दालादीव यमेनाधिकृतो लोको नरकाख्यः तस्य हेतुं संसारं जह्युः त्यजन्ति। परमस्य पुंसो नारायणस्य पदं स्वरूपं तद्वै तादृग्लक्षणं हि इत्यन्वयः। इन्द्र ईश्वरो धनवान् सुधां अमृतं जलं प्राप्य इति वा।।४८।।

---

1. A.B. Omit विश्वभावनः

इदानीं एवंविधभगवज्ज्ञानाधिकारी सत्पुरुष इत्याह - **स** इति। न केवलं धर्मादिसर्वश्रेयसां विभुः अपि तु फलदाता च अधर्मादिसर्वाश्रेयसामपि इति वा भगवान् अनादिकालमारभ्य हरिप्रसादेन परिवृद्धेन भावस्वभावेन भक्तिस्वभावेन विहितस्य निर्मितस्यास्य सतो जीवराशेः प्रसिद्धः करतलामलकवत् प्रत्यक्षः स्यादिति यतोऽतोऽत्र सात्त्विकप्रकृतिजीवराशिः तादृशो ज्ञानाधिकारी एतेनोक्तार्थे ज्ञानिप्रत्यक्षं प्रमाणमुक्तं भवति। "भावो भक्तिः प्रमाणश्च प्रावण्यमपि च आदरः" इति उत्पत्तिमतोऽस्यानित्यत्वेन कथं तस्य परमात्मा प्रसिद्ध्येत इति तत्राऽह देह इति। स्वारम्भकाणां पृथिव्यादिधातूनां विगमे विनाशलक्षणविश्लेषे सति, देहे तु विशीर्यमाणे स्वकारणेषु विलीयमाने सति तत्र देहस्थः पुरुषः स्वकर्माद्यनुसारेण पुराणि सरन् स्वतोऽजो जननविधुरोऽपि केवले[2] देहाभिमानेन जायमानो यथा देहस्थितं व्योम न शीर्यते तथा जीवो न विशीर्यते अतो देहस्यैव उत्पत्तिमरणधर्मवत्वात् चेतनस्य नित्यत्वात् उचितस्य प्रसिद्धः परम इति। अनेन परमात्मापि व्याख्यातः तत्र जीववत् अभिमाननिमित्तजन्मादिमानपि न भवतीति विशेषः। अत एव दृष्टान्तेन हरेः शश्वत्प्रतिबोधादिरूपत्वं न विघटनीयमिति भावः।।४९।।

"देवदेव नमस्तुभ्यम्" इत्यारभ्य प्रश्नप्रतिवचनाभ्याम् उक्तमर्थमुपसंहरति - **सोऽयम्** इति। समासेन संक्षेपेण एतावज्ज्ञानं सर्वथा न विस्मर्तव्यमिति भावेन आह हरेरिति। चशब्दः एवार्थे। यत्सदसत् कार्यकारणात्मकं जगत्सर्वम् अस्मादन्यस्मात् विलक्षणात् हरेः नान्यत् भिन्नं न एतदुक्तं भवति स्वतो हरेः भिन्नमपि तदात्मत्वेन[3] स्वातन्त्र्याभावेनाभिन्नमिव उच्यते। न स्वतो भेदाभावात् तस्मात् स हरिः स्वतन्त्रो अन्यत् अस्मदादिकं सर्वं तदधीनमिति विजानीहि इति तदधीनसत्तादिमत्वात् तदित्युच्यते तत्र किं मानमित्येतत् चोद्यं "सत्तादिः यत् स्वतो विष्णोः तस्मादन्यः स सर्वत" इत्यादिना परिहर्तव्यम्।।५०।।

**रा०कृ०** स्त्रीशूद्रहूणशबरा अपि पापजीवाः तिर्यग्जना अपि परस्परहिंसाजीविनः गजवानरपक्ष्यादयोऽपि अद्भुतक्रमपरायणशीलशिक्षाः अद्भुतक्रमः परमाश्चर्यचेष्टितो भगवान् परायणं परमप्राप्यं वस्तु येषां तेषां भगवद्भक्तानां शीलस्य शिक्षा अभ्यासो येषां ते तथाभूताः यदि भवन्तीति शेषः। ते वै तेऽपि देवमायां विदन्ति अतितरन्ति च। अस्यां स्थितौ ये जनाः श्रुतधारणाः वेदादिविद्यामुखेन श्रुते भगवत्तत्त्वे धारणावन्तः भवन्ति तेऽपि देवमायां विदन्ति अतितरन्ति इति किमु वक्तव्यमिति भावः।

ननु 'ते वै विदन्त्यतितरन्ति च देवमायाम्' इत्यत्र देवमायापदस्य देवसम्बन्धिनी माया इत्यर्थः। तथा च भगवान् परमेश्वरो मायावान् वञ्चक इत्यर्थः सिध्यति। एवं वैषम्यपर्यवसायिवञ्चकत्वयोगात् तस्मिन् भगवति "समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः" (भ.गी.9-29) इत्युक्तिः कथं

1. M.Ma. "मान्" 2. M.Ma. "ले" 3. A. तत्त्वेन

सङ्गच्छते? उच्यते - "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा"(भ.गी.7-6) ये चैव सात्त्विका भावा राजसास्तामसाश्च ये। "मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि" (भ.गी.7-12) इत्यादिभगवद्गीतावचनानुसारेण सकलजगदुत्पत्तिहेतुभूतात् भगवत एव सत्वरजस्तमोगुणात्मिका प्रकृतिः जायते। एतद्गुणमय्येव दैवी माया पूर्वोक्ता। 'देवमाया'। मायायाः प्रभुरपि भगवान् स्वयं न तया कमपि जनं प्रतारयितुमिच्छति। प्रत्युत संसारबद्धो जन एव मायातत्त्वमनभिज्ञाय तया प्रतार्यते। तथाहि - या मा तद्रूपा आत्मरूपा न भवति सा 'माया' गुणत्रयात्मिका प्रकृतिः। तस्याः प्रकृतेः गुणैः क्रियमाणानां कर्मणां कर्तृत्वम् आत्मन्यारोप्य जीवो बद्धो भवति। अर्थात् मायाबद्धो भवति। मायातत्त्ववेत्ता तु न बध्यते। तदुक्तं गीतासु "तत्त्ववित्तु महाभागो! गुणकर्मविभागयोः। गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते" (भ.गी.3-28) इति एवं भगवान् मायावानपि न जीवान् वञ्चयति। किन्तु जीवा एव अज्ञानवशात् प्रकृतिगुणान् आत्मन्यारोप्य बद्धाः भवन्तीति भगवति न कोऽपि दोषलेशः।

अपि च मायायाः प्रकृतिमयत्वात् प्रकृतिकारणस्य च ईश्वरत्वात् मायातरणमपि ईश्वराश्रयणायत्तमेव। उक्तं च गीतासु - "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते"(भ.गी.7-14) इति एतद्भगवत्प्रपत्तिसाधन मेव श्रीमद्भागवतम्।

किञ्च भगवत्प्रपन्नाः स्त्रीशूद्रादयोऽपि मायां तरन्तीति कथनेन मोक्षप्राप्तौ जातिलिङ्गादयो न प्रतिबन्धका इति केवलप्रपत्तिरेव प्रयोजिकेति च ज्ञायते। श्रूयते च देवालयादिषु भ्रमतां खगशुनकगवादीनां सत्कथाश्रवणासक्तिः। श्रीकालहस्तीश्वरसन्निधौ ऊर्णनाभिप्रभृतीनां भगवदाश्रितानां मोक्षप्राप्तिरपि लोकप्रसिद्धा हि। तथा च भक्तिज्ञानादिमद्भिः भगवत्प्रपन्नेषु सर्वेषु प्राणिषु सावधानैः भवितव्यमिति तत्त्वम्।।४६।।

विशोकं स्वयं शोकरहितं स्वभक्तानां च शोकनाशकम्, अत एव अजस्रसुखं सदानन्दरूपं शश्वत् सदा प्रशान्तं सुखदुःखादिद्वन्द्वविरहितम् अत एव अभयं स्वयं भयरहितं स्वाश्रितानां च भयनिवर्तकम्, प्रतिबोधमात्रं प्रज्ञानघनं, शुद्धं पुण्यपापादि मलविरहितम् समं सर्वसमम्, सदसतः स्थूलसूक्ष्मरूपात् प्रकृतिकार्यात् परं भिन्नं, आत्मतत्त्वं आत्मनो ज्ञातुस्तत्त्वं स्वरूपं यद्ब्रह्मेति विदुः वेदविदो जानन्ति, यत्र पुरुकारकवान् कर्तृकर्मादिविविधकारकवान् क्रियार्थः यज्ञादिक्रियाप्रयोजनकः शब्दः न, न प्रवर्तते ब्रह्मप्रतिपादनसमर्थो न भवति। माया यस्य अभिमुखे विलज्जमाना सती परैति यस्मात् दूरतो याति तद्वै तदेव भगवतः परमस्य पुंसः परमपुरुषस्य पदं स्वरूपं भवतीति शेषः। इदानीं तत्परमपुरुषाश्रितानां कृतार्थतोच्यते सध्र्यङ् सहचरं मन इति शेषः। यं परमपुरुषं प्रति नियम्य यस्मिन् स्थिरं विधाय यतयः यत्नशालिनः अकर्तहेतिं कर्तो भेदः अकर्तोऽभेदः तस्य हेतिं उपकरणं स्वराट् स्वयं राजमानो दरिद्रः इन्द्रः सन् निपानखनित्रमिव कूपादिखननसाधनमिव जह्युः त्यजेयुः। विशोकत्वाजस्रसुखत्वशश्वत्प्रशान्तत्वादिलक्षणलक्षितं यत् ब्रह्मेत्युच्यते तदेव भगवतः परमपुरुषस्य

स्वरूपम्। तस्मिन् परमपुरुषे च नियमितमनस्काः यतयः, दरिद्रः इन्द्रवैभवप्राप्त्यनन्तरं कुपादिखननसाधनमिव भेदनिरासस्साधनं त्यजन्तीति भावः।।४७,४८।।

भावस्वभावविहितस्य भावानां महदादीनां स्वभावेन परिणामेन विहितस्य कृतस्य अस्य सतः नामरूपात्मकसकलप्रपञ्चस्य प्रसिद्धिः प्रवृत्तिः यतो यस्मात् भवति सः भगवान् श्रेयसामपि धर्मादि-पुरुषार्थानामपि विभुः सर्वव्यापकत्वात् सर्वात्मकत्वाच्च दातुं समर्थः। स्वधातुविगमे स्वधातूनां स्वारम्भकधातूनां पृथिव्यादिभूतानामिति भावः। विगमे वियोगे सति अनु तदनन्तरं देहे विशीर्यमाणे नाशं प्राप्तेऽपि तत्र तत्रत्यः अजः पुरुषः जीवः तत्रत्यं व्योमेव आकाशमिव न विशीर्यते न नश्यति। तादृशस्य पुरुषस्य श्रेयो विधातुं पूर्वोक्तो भगवान् समर्थ इति भावः।।४९।।

तात! हे नारद! सोऽयं विश्वभावनः सर्वजगत्कारणभूतः भगवान् वासुदेवः ते तुभ्यं समासेन सङ्ग्रहेण अभिहितः मया कथितः। सदसत् स्थूलसूक्ष्मरूपं कार्यकारणात्मकं यत् वर्तते तत्सर्वं हरेः वासुदेवादेव भवति नान्यस्मात् अन्यस्मात् न भवति, अतोऽन्यच्च ततो भगवतो भिन्नं च किमपि नास्तीति शेषः।।५०।।

**इदं भागवतं नाम यन्मे भगवतोदितम्।**
**सङ्ग्रहोऽयं विभूतीनां [1]त्वमे[2]तद् विपुलीकुरु।।५१।।**

**राजोवाच**

**यथा हरौ भगवति नृणां भक्तिर्भविष्यति।**
**सर्वात्मन्यखिलाधार इति सङ्कल्प्य [3]वर्णय।।५२।।**

***नृजन्मनि न तुष्येत [4]कृतेन भगवान् यदि।**
**[5]धर्मार्थकामैः किं तर्हि कार्यं सिद्ध्यति नश्वरैः।।५३।।**

**कृष्णे [6]यद्यपवर्गेशे भक्तिस्स्यादनपायिनी।**
**किं स्याद्व[7]र्णसमा[8]चारैः किं दानैः किं तपःश्रुतैः।**
**[9]सर्वाघ[10]होत्तमश्लोके [11]नो चेद्भक्तिरधोक्षजे।।५४।।**

---

1. M.Ma. तदेतत् 2. H. °तं; V. °वं 3. AF.GF. वर्ण्यताम् *A.C.G.I.N. Omit VV 53&54 and also not comamented by Sridhara 4. H.V. किं कायमनुनश्वरैः; M.Ma. किं फलंयमनश्वरे 5. H.M.Ma. V. Omit धर्मार्थ......नश्वरैः 6. B. नचोत्तमश्लोके चेद्भक्तिरनपायिनी 7. B.H.M.Ma.V. °र्णाश्रमा° 8. B. °चारदानहोमादिभिःकृतैः 9. B. Omits सर्वाघ......रधोक्षजे 10. H.M.Ma.V. °घ्नों° 11. H.M.Ma.V. न

**मायां[1] वर्णयतोऽमुष्य ईश्वरस्यानुमोदतः[2]।**
**शृण्वतः श्रद्धया नित्यं माययाऽऽत्मा न मुह्यति।।५५।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
द्वितियस्कन्धे ब्रह्मनारदसंवादो नाम सप्तमोऽध्यायः।।७।।

**श्रीध० इदमिति**। अयं च विभूतीनां सङ्ग्रहः उदितः[3]।।५१।।

**यथेति**। यथा वर्णितेन नृणां भक्तिः भविष्यतीत्येवं सङ्कल्प्य संचिन्त्य तथा हरिलीलाप्राधान्येन श्रीभागवतं वर्णय न तु भक्तिरस[4]विघातेन केवलं तत्त्वमित्यर्थः।।५२।।

ननु श्रीहरि[5]लीला मायाश्रया[6] किम् तद्वर्णनेन? इत्यत आह **मायामिति[7]**।।५३।।

इति श्रीमद्भागवते द्वितीयस्कन्धे
श्रीश्रीधरस्वमिविरचितायां भावार्थदीपिकायां
व्याख्यायां सप्तमोऽध्यायः।।७।।

**वीर०** स्वोक्तस्य[8] सङ्ग्रहस्य प्रामाणिकत्वं कथयन् त्वमप्येतत्प्रवर्तयेत्याह **इदमिति**। भगवद्विभूतीनाम् अयं संङ्ग्रह इति यत् इदं भागवतं भगवद्विषयत्वात् भगवता प्रोक्तत्वात् भागवतनामकं मे मह्यं भगवतोदितं एतत् इदं भागवतं त्वं विपुलीकुरु।।५१।।

वैपुल्यप्रकारमेवाह[9] - **यथेति**। सर्वात्मनि सर्वान्तरात्मनि अत एव सर्वाधारे भगवति नृणां भक्तिर्यथा भविष्यति यादृश वर्णनेन भविष्यति[10] तथा सङ्कल्प्य वर्णय इत्यर्थः।।५२।।

ननु त्रिवर्गे यथा भवेत् तथा वर्णयेति किं नोच्यते इत्यत[11] आह - **नृजन्मनीति**। मनुष्यजन्मनि कृतेन साधनकलापेन भगवान् न तुष्येत यदि तर्हि नश्वरैः धर्मादिभिः किं कार्यम्? किं प्रयोजनम्? न किमपि इत्यर्थः।।५३।।

"धर्मस्य ह्यापवर्ग्यस्य[12]" (भाग.1-2-9) इति पूर्वोक्तरीत्या परस्परभगवद्भक्तौ उपयुज्यमानानामेव साफल्यं केवलानां तु वैफल्यमन्वयव्यतिरेकाभ्यामाह - **कृष्ण** इति। किं स्यादिति ग्रन्थः पूर्वोत्तरार्द्धाभ्यां

1. H.V. लीलां 2. H.V. दितुः 3. H.V. उक्तः 4. H.V. Omit 'रस' 5. A.B. Omit श्रीहरि' 6. H.V. Omit 'आश्रया 7. H.V. लीला' 8. A.B. Omit 'स्य' 9. A.B. 'माह 10. A. Omits भविष्यति 11. A.B. Omit इत्यत 12. W. ह्यपवर्गस्य

सम्बध्यते। अनपायिन्यव्यभिचारिणी समस्तदुरितनिवर्तके उत्तमः श्लोकः स्तवः यस्य सः तस्मिन् उत्तमश्लोके[1] अधोक्षजे भक्तिः न चेत् वर्णाश्रमाचारादिभिः किं स्यात् न किमपि इत्यर्थः।।५४।।

भगद्विभूतिवर्णनादीनां फलमाह - **मायामिति**। अमुष्य ईश्वरस्य मायां प्रकृतिं जगत्सृष्ट्यादि-प्रकारं इत्यर्थः। वर्णयतः अनुमोदतः श्रद्धया नित्यं शृण्वतश्च आत्मान्तःकरणं मायया मायागुणैस्तम-आदिभिः न मुह्यतीत्यर्थः।।५५।।

इति श्रीमद्भागवते द्वितीयस्कन्धे
श्रीवीरराघवविदुषा लिखितायां श्रीभगवतचन्द्रचन्दिकायां
व्याख्यायां सप्तमोऽध्यायः।।७।।

**विज०** भगविद्विभूतिसङ्ग्रहरूपमिदं भागवतं पुराणं नृलोके प्रवर्तनाय त्वया व्यासाय विज्ञापनीय-मिति अभिप्रायवानाह - **इदमिति**। सर्गादौ यद्भगवतामे मम उदितं तदिदं भागवतं नाम प्रकाश्यो पदिश इति शेषः। कस्माद्भागवतमिति प्रकाश्यमिति तत्राऽह सङ्ग्रह इति। यत्रोद्यत इत्युक्तविभूतीनां सर्गे तु योऽहमित्याद्युक्तमायाविभूतीनां च सङ्ग्रहः क्रोडीकार इति हेतुगर्भः संक्षिप्योक्तमिति न श्रद्धेय-मिति तत्राह तदेतदिति। तदेतत् नृलोके ज्ञानप्रदानाय अवतीर्णव्यासरूपनारायणाय विज्ञाप्य विपुलीकुरु एतदर्थं विस्ताररूपं भागवतं पुराणं कुरु इति विज्ञापय इत्यर्थः "नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने" इति।।५१।।

एतदेवविशदयति - **यथेति**। यथा सात्त्विकप्रकृतीनां नृणां सर्वात्मनि सर्वस्वामिनि[2] अत एव अखिलाधारे भगवति सर्वोत्तमत्त्वज्ञानपूर्वकप्रेमलक्षणा भक्तिः भविष्यति इत्येवं हेतुपूर्वकं सङ्कल्प्य समर्थ्य समाधिभाषया सम्यक् कृत्वा शुकादिशिष्येभ्यो वर्णय इति विज्ञापय इत्यन्वयः।।५२।।

इतोऽपि हरिभक्तिजनकपुराणरचनमेव तव अवतारप्रयोजनं नान्यदिति अभिप्रेत्याह - **नृजन्मनीति**। भक्तिविषयोऽन्यस्तत्फलदोऽन्य इत्यत उक्तम् अपवर्गे शेति कृष्णे पूर्णबलप्राणात्मनि हरौ यद्यनपायिनी नित्या भक्तिः न चेत् न जायते चेत् नृजन्मा पुमान् यमनश्वरे यमात् अन्तकान्नाशं गच्छति नृजन्मनि न तुष्येत अलम्पुरुषार्थसाधनां बुद्धिं नाप्नुयात्। धर्मादि फलमस्तीत्यत्र आह किं फलमिति। धर्मादेः अनित्यस्वर्गादिफलं किं नैव फलमल्पफलत्वादित्यर्थः। तस्मात् कृष्णभक्तेरेव नृजन्मफलत्वात् तत्प्रतिपादकपुराणकरणे विज्ञापनं युक्तमिति भावः।।५३।।

---

1. W. Omits उत्तमश्लोके 2. Ma. 'स्यात्म'

किं फलमित्युक्तं विवृणोति - **किं स्यादिति**। किंस्यादिति आक्षेपः। तदुक्तं "आक्षिप्यते" किमित्येतत् यत्राल्पफलता भवेदिति "प्रश्ने क्षेपे विकल्पे कि" मिति यादवः।।५४।।

भागवतपुराणोक्तप्रकारेण भगवति भक्तिं कुर्वतः पुंसः पुत्रकलत्रादिलक्षणा माया संसारहेतुः न स्यात्। अतः एतत् पुराणकरणं विज्ञापनीयमिति भावेन आह - **मायामिति**। अमुष्येश्वरस्य जगत्स्रष्टृत्वादिलक्षणं मायां माहात्म्यं सद्गुरुमुखात् श्रुत्वा मननपूर्वकं सच्छिष्येभ्यो वर्णयतः तथा तां मायां श्रद्धया अनुमोदतः अनुमोदमानस्य तथा व्याख्यानाद्यशक्तया श्रृण्वतो यावज्जीवं श्रवणैकपरायणस्य पुंसः आत्मा मनो मायया बन्धकशक्तया न मुह्यति। अहङ्कारममकाराभ्यां न भ्रमतीत्यतः सर्वसज्जनपुरुषार्थकारणं भागवतकरणविज्ञापनमिति भावः अमुष्य ईश्वरस्येति सन्ध्यकरणेन अस्य भागवतस्य वेदसाम्यं सूचयति। यद्वा ईश्वरशब्देन शिवो नोच्यते तद्विलक्षणशीला ई लक्ष्मीः तस्या ईश्वरो नारायण इति द्योतयति, अत्र सवर्णदीर्घत्वम् अनुसंन्धेयमिति।।५५।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
द्वितीयस्कन्धे सप्तमोऽध्यायः।।७।।

**रा०कृ०** यत् मे मह्यं भगवता उदितं पुरा कथितं तदिदं भागवतं नाम भागवतमिति प्रसिद्धम्। अयं विभूतीनां भगवद्विभूतीनां सङ्ग्रहः संक्षेपः अत्र कथितः इति शेषः। त्वं एतत् भागवतं विपुलीकुरु वैपुल्येन वर्णय।।५१।।

सर्वात्मनि अखिलाधारे भगवति हरौ नृणां यथा येन प्रकारेण भक्तिः भविष्यति तथेति सङ्कल्य्य वर्णय भगवल्लीलाप्राधान्येन भागवतं वर्णय।।५२।।

अपवर्गेशे कैवल्यदायके कृष्णे अनपायिनी अचञ्चला भक्तिः स्याद्यदि भवेद्यदि तादृशभक्तिमान् नृजन्मनि मनुष्यजन्मनि न तुष्येत तुष्टिं न प्राप्नुयात् सः नरजन्मनि नानुरज्यत इति भावः। तर्हि तस्य कायं अनु शरीरमनुस्मृत्य नश्वरैः शरीरानुबन्धिभिः क्षयिष्णुभिः कलत्रपुत्रादिभिः धर्मादिभिः वा किम्? किं प्रयोजनम्?।।५३।।

सर्वाघघ्नोत्तमश्लोके सकलकलुषनिवारकपुण्ययशश्शालिनि भगवति अधोक्षजे वासुदेवे भक्तिः न चेत् न स्याद्यदि वर्णाश्रमाचारैः किं स्यात्? दानैः किम्? तपश्श्रुतैः तपोविद्यादिभिश्च किम्? न किमपि प्रयोजनमिति भावः।

सर्वत्र सर्वान्तर्यामिसन्दर्शनपरो जनो नरजन्मनि वा तदनुबन्धिषु कलत्रादिषु, धर्मादिषु वा बन्धहेतुं रागं न करोति। एवमेव वासुदेवभक्तिविमुखोऽपि सर्वान्तर्यामिणं विस्मृत्य केवलवर्णाश्रमाचारादिषु अनुरक्तश्चेत् तैः बध्यते न तु मुच्यते। अतः सर्वात्मना सर्वान्तर्यामिणि वासुदेवे भगवति अनन्या भक्तिरेव साधनीया इति भावः।।५४।।

अमुष्य पूर्वोक्तस्य ईश्वरस्य मायां लीलां वर्णयतः, अथवा अनुमोदतः अङ्गीकुर्वतः अथवा श्रद्धया नित्यं श्रृण्वतः पुरुषस्य आत्मा अन्तःकरणं मायया बन्धकशक्त्या न मुह्यति न मोहं प्राप्नोति। विश्वस्य विष्णुमयत्वात् तन्मायां विश्वस्मिन्ननुमोदमानोऽनुसन्दधानश्च जनो न तया बध्यत इति तत्त्वम्।।४५।।

इति श्रीमद्भागवते द्वितीयस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां
व्याख्यायां सप्तमोऽध्यायः।।७।।

oooOooo

# अष्टमोऽध्यायः

**राजोवाच**

**ब्रह्मणा चोदितो ब्रह्मन् गुणाख्यानेऽगुणस्य च।**
**यस्मै यस्मै यथा प्राह नारदो देवदर्शनः।।१।।**

**एतत् वेदितुमिच्छामि तत्त्वं[1] वेदविदां वर!**
**हरेरद्भुतवीर्यस्य कथा लोकसुमङ्गलाः[2]।।२।।**

**[3]कथयस्व महाभाग! यथाऽहमखिलात्मनि।**
**कृष्णे निवेश्य निस्सङ्गं मनस्त्यक्ष्ये कलेबरम्।।३।।**

**शृण्वतः श्रध्दया नित्यं गृणतश्च स्वचेष्टितम्।**
**कालेन[4] नातिदीर्घेण भगवान् विशते हृदि।।४।।**

**प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम्।**
**धुनोति शमलं कृष्णः सलिलस्य यथा शरत्।।५।।**

## श्रीश्रीधरस्वमिविरचिता भावार्थदीपिका

अष्टमे देहसम्बन्धमाक्षिपन्नीशजीवयोः। बहून्परीक्षिदापृच्छत्पुराणार्थान् बुभुत्सितान्।।

त्वमेतद्विपुलीकुर्वित्युक्तम्, तदेव विपुलीकरणं पृच्छति **ब्रह्मणेति** त्रिभिः। अगुणस्य च[5] गुणातीतस्याऽपि। देववद्दर्शनं यस्य सः।।१,२।।

**कथयस्वेति**। निस्सङ्गं [6]विषयसङ्गरहितं मनः श्रीकृष्णे निवेश्येति स्वप्रयत्नो दर्शितः।।३।।

सोऽपि श्रद्धया शृण्वतो नाऽवश्यक इत्याह - **शृण्वत** इति। [7]स्वचेष्टितं स्वीयदिव्यचेष्टितं शृण्वतः गृणतश्च कथयतश्च स्वप्रयत्नं विनाऽपि भगवान् स्वयमेव हृदि विशति।।४।।

**प्रविष्ट** इति। [8]स्वानां स्वीयभक्तानां भावसरोरुहं हृदयकमलं [9]कर्णरन्ध्रेण प्रविष्टः[10] तद्गतं सर्वं शमलं [11]पापं धुनोति [12]क्षालयति। सलिलस्येति द्रव्यान्तरव्यामिश्रणादिना कुम्भस्थे जले शोधिते तदेव

---

1 B.H.I.V.W. तत्त्वं 2. AF.GF. योगे सु 3 M.Ma. प्र 4 M Ma. नानति 5. B.H.V. Omit च 6. A B. Omit विषयसङ्गरहितं 7. A.B. Omit स्वचेष्टि......कथयतश्च 8. A.B. Omit स्वानां स्वीयभक्तानां 9. A.B. Omit कर्णरन्ध्रद्वारेण 10. B. adds च 11. A.B. Omit पापं 12. A.B. Omit क्षालयति

केवलं शुध्यति, न तु नदीतटा[1]कादिगतम्। स च मलः कुम्भस्यान्तः तिष्ठत्येव, न तु सर्वथा विलीयते। अत एव किञ्चि[2]च्चलने[3]न पुनः क्षुभ्यति च। एवं तपोदानादिप्रायश्चित्तं न सर्वथा सर्वेषां स[4]र्वं पापं धु[5]नोति, किन्तु सावशेषम्, त[6]दपि कस्यचिदेव किञ्चिदेव। हृदि प्रविष्टमात्रस्तु श्रीकृष्णः सर्वेषां सर्वं पापं निश्शेषं हरतीत्यनेन दृष्टान्तेनोक्तं सलिलस्य म[7]लं यथा शरदिति।।५।।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

त्वमेतद्विपुलीकुर्वित्युक्तं विपुली[8]करणं राजा पृच्छति **ब्रह्मणेति**। हे ब्रह्मन्! शुक! देवदर्शनः परमात्मदर्शी नारदः ब्रह्मणा चतुर्मुखेन अगुणस्य सत्त्वादिप्राकृतगुणरहितस्य भगवतः गुणाख्याने गुणानुकथने चोदितः प्रवर्तितः यस्मै यस्मै प्रश्नायेति शेषः। यद्वा पृच्छते इति। यथा प्राह, यादृश-मित्यर्थः।।१।।

एतन्नारदेन विस्तरेण वर्णितं वेदितुमहमिच्छामीति तत्तस्मात् हे वेदविदां वर! त्व मद्भुतवीर्यस्य हरेः लो[9]कसुमङ्गलाः लोक[10]स्य मङ्गलकराः कथाः।।२।।

कथयस्व, हे महाभाग! बुद्धिमन्! सर्वान्तरात्मनि कृष्णे निस्सङ्गं मनो निवेश्य कलेबरं त्यक्ष्ये भगवत्कथाः शृण्वन् तमेवावसाने स्मरन् देहं त्यक्ष्यामि अतः कथयस्वेत्यर्थः।।३।।

अल्पकालकथाश्रवणेन कथमवसाने स्मृतिः सम्पद्यते इत्यत आह - **शृण्वत** इति। भगवान् स्वचेष्टितं नित्यं श्रद्धया शृण्वतो गृणतः क[11]थयतश्च पुंसः हृदये नातिदीर्घेणाल्पेन कालेन विशति शृण्वतो गृणतश्च चित्तं तत्स्मरणप्रवणमेव भवतीत्यर्थः।।४।।

भगवतो हृदयप्रवेशफलमाह - **प्रविष्ट** इति। कर्णरन्ध्रेण कथाश्रवणद्वारा स्वानां भक्तानां भावसरोरुहं हृदयकमलं प्रविष्टः श्रीकृष्णः हृदयगतं शमलं रागादिरूपं मलं धुनोति निरस्यति यथा श[12]रत् शरत्कालः सलिलस्य श[13]मलं धुनोति तद्वदित्यर्थः।।५।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अस्मिन्नध्याये परीक्षित् भागवतपुराणप्रतिपाद्यं शुकं पृच्छति। तत्र प्रथमं नारदेन विरिञ्चाज्ञापालनं कथमकारीति भावेन पृच्छति **ब्रह्मणेति**। अगुणस्य नित्यनिर्मुक्तसत्त्वादिगुणस्य सर्वत्र प्रधानस्येति वा गुणाख्यान इति तादर्थ्ये सप्तमी। व्यासादन्यस्मै यस्मै।।१।।

---

1. A.B. "डागा" 2. B. "ञ्चा" 3. H.V. Omit न 4. H.V. Omit सर्वं 5. H.V. विधु" 6. A.B. तञ्च 7. H.V. Omit मलं 8. A. "लं"
9. A.B. Omit लोकसुमङ्गलाः 10. A.B. "सु" 11. W. Omits कथयतश्च पुंसः 12. A.B. Omit शरत् 13. W. मलं

नारदव्याससंवादानन्तरं व्यासमुखविगलितभागवतोक्तहरिकथाप्रथनमेवं मदभीष्टमितीदमेव तत्त्वं वेदितुमिच्छामीत्युक्तमिति भावेनाऽऽह हरेरिति।।२।।

यथा प्रथितश्रुतगुणोपसंहारपूर्वकं निस्सङ्गं मनः कृष्णे निवेश्याऽहमिदं कलेवरं त्यक्ष्ये तथा प्रथयस्वेत्यन्वयः।।३।।

श्रवणादिनेदं फलं स्यादित्याह - **शृण्वत** इति।।४।।

ततः किम्, तत्राऽऽह - **प्रविष्ट** इति।।५।।

## श्रीराधाकृष्णप्रणीता सुधीसुधा

हे ब्रह्मन्! शुकयोगिन्! अगुणस्य प्राकृतगुणातीतस्य भगवतः गुणाख्याने दिव्यगुणवर्णने ब्रह्मणा चोदितः प्रेरितः देवदर्शनः सर्वत्र परमात्मदर्शी नारदः यस्मै यस्मै पृच्छकाय यथा येन येन प्रकारेण प्राह अब्रवीत् तदेतत् वेदितुं ज्ञातुं इच्छामि। हे वेदविदां वर! महाभाग! अखिलात्मनि कृष्णे यथा अहं निस्सङ्गं कलत्रपुत्राद्यासक्तिरहितं मनः निवेश्य कलेबरं त्यक्ष्ये विसर्जयिष्यामि। तथा अद्भुतवीर्यस्य अचिन्त्यपराक्रमस्य हरेः लोकसुमङ्गलाः लोकानां परमश्रेयोहेतुभूताः कथाः कथयस्व, मह्यं कथय।।१-३।।

स्वचेष्टितं स्वस्य लीलां श्रद्धया नित्यं शृण्वतः गृणतश्च वर्णयतश्च पुरुषस्य हृदि मनसि नातिदीर्घेण स्वल्पेनैव कालेन भगवान् विशते।।४।।

कर्णरन्ध्रेण स्वकथाऽऽकर्णनावसरे श्रवणेन्द्रियद्वारा स्वानां स्वभक्तानां भावसरोरुहं हृदयपद्मं प्रविष्टः कृष्णः शमलं स्वभक्तहृदयगतं पापं शरत् शरत्कालः सलिलस्य नद्यादिगतस्य जलस्य शमलं यथा मालिन्यमिव धुनोति निरस्यति।।५।।

**धौतात्मा पुरुषः कृष्णपादमूलं न मुञ्चति।**
**मुक्तसर्वपरिक्लेशः[1] पान्थः स्वशरणं यथा।।६।।**

**यदधातुमतो ब्रह्मन् देहारम्भोऽस्य धातुभिः।**
**यदृच्छया हेतुना वा भवन्तो जानते यथा।।७।।**

1. AF.GF. मुक्त स्सर्वपरिक्लेशैः

**आसीद्यदुदरात् पद्मं लोकसंस्थानलक्षणम्।**
**यावानयं वै पुरुष इयत्तावयवैः[1] पृथक्।**
**[2]तावानसाविति प्रोक्तः [3]संस्थावयववानिव।।८।।**

**अजः सृजति भूतानि भूतात्मा यदनुग्रहात्।**
**ददृशे येन तद्रूपं नाभिपद्मसमुद्भवः।।९।।**

**श्रीध०** ततश्च कृतार्थो भवतीत्याह - **धौतात्मेति**। धौतात्मा निष्पापः मुक्ताः सर्वे रागद्वेषादयः परिक्लेशाः येन सः पान्थः प्रवासादागतः स्वशरणं [4]स्वगृहं यथा न मुञ्चति तद्वत्।।६।।

तदे[5]वं श्रवणौत्सुक्यमाविष्कृत्य सन्धिग्धानर्थान् पृच्छति **यदिति**। अधातुमतः धातवो महाभूतानि तत्सम्बन्धशून्यस्या[6]प्य[7]लौकिकस्यात्मनो [8]जीवस्य धातुभिः देहारम्भ इति य[9]देतत् किं यदृच्छया निर्निमि[10]त्तेन वा हेतुना कर्मादिना वा? भवन्तो यथावत् जानते, अतः कथयन्तु इति शेषः।।७।।

यश्चासौ ईश्वरः सोऽपि एतत् तुल्यदे[11]हवान् प्रोक्तः, अतः तस्य को विशेषः इत्याशयेन पृच्छति **आसीदिति** सार्धेन। लोकानां संस्थानं रचना तदेव लक्षणं [12]स्वरूपं यस्य तत् त्रैलोक्यात्मकं पद्मं यस्य उदरात् आसीत्। असौ ईश्वरः इयत्तायुक्तैः स्वपरिमि[13]तैरवयवैः अयं लौकिकः पुरुषः यावान् यत्सङ्ख्याकावयवयुक्तः तावान् संस्थावान् प्रोक्तः, अवयववा[14]निव च प्रोक्तः। [15]संस्था आकारः अवयवाश्च विद्यन्ते यस्य इति संस्थावयववानिव, न परमार्थत इति शेषः।।८।।

अतः को विशेषः तस्य? इति अवश्यं च विशेषो वाच्य इत्याह - **अज** इति। अजो ब्रह्मा-भूतानां [16]व्यष्ट्युपाधीनामात्मा नियन्ता समष्ट्युपाधित्वात् येन च अनुगृह्णता तस्य [17]रूपं ददृशे दृष्टवान्। एतञ्च "त[18]स्याऽपि द्रष्टुरीशस्य कूटस्थस्याखिलात्मनः। [19]सृज्यं सृजामि सृष्टोऽहमीक्षयैवाभिचोदितः।।" इत्यादिना उक्तमनूद्यते। अग्रे तु स्पष्टं भविष्यति।।९।।

**वीर०** ततश्च कृतार्थो भवतीत्याह - **धौतात्मेति**। धौतात्मा शुद्धमनाः पुरुषः कृष्णस्य पादमूलं न मुञ्चति? तदेव स्मरतीति भावः। कथम्भूतो न मुञ्चति? मुक्तसर्वपरिक्लेशः मुक्ताः सर्वे रागद्वेषादयः परिक्लेशाः येन सः। यथा पान्थः प्रवासादागतः स्वशरणं स्वगृहं न मुञ्चति तथा इत्यर्थः।।६।।

---

1. W. °वान् 2. W. Omits तावा......वानिव 3. M.Ma. तथाऽ° 4. A.B. Omit स्व 5. H.V. °व 6. H.V. add °भौतिकस्या° 7. B. °भौतिक° 8. B.H.V. Omit जीवस्य 9. H.V. °त् 10. A.B. °त्त हेतुना 11. H.V. °ह. प्रो° 12. H.V. Omit स्व 13. H.V. °ताव° 14. H.V. °निति प्रो° 15. A.B. Omit संस्था......शेषः 16. V. सृ° 17. B. स्वरू° 18. H.V. °ह्या° 19. B. °सृष्टं

एवं श्रवणौत्सुक्यमाविष्कृत्य अज्ञातानर्थान् प्रष्टव्यान् क्रमेण प्र[1]वक्ष्यमाणः तावत् सन्दि[2]ग्धानर्थान् पृच्छति - **यदिति**। हे ब्रह्मन्! अधातुमतः स्वरूपतः भौतिकदोषहीनस्य अस्य जीवस्य देहारम्भश्च धातुभिरेव स्यादिति तु ज्ञातमित्यर्थः। इदन्तु संशयविषयमित्याह स च देहारम्भः किं यदृच्छयाऽ[3]हैतुकः, हेतुना वा सहेतुको [4]वा इत्यर्थः। एतद्भवन्तो यथावत् जानते। अतः कथयन्तु इति शेषः।।७।।

योऽसा वीश्वरः सोऽपि जीवदेहतुल्यदेहवान् प्रोक्तः, अतः तस्य को विशेषः? यतस्तद्भजनात् पदे पदे मोक्ष इत्युच्यते, इत्याशयेन पृच्छति **आसीदिति** सार्धद्वयेन। लोकानां संस्थानं विन्यासो यस्मिन् तत्। तदेव लक्षणं स्वरूपं यस्य तत् जगदाकारं पद्ममित्यर्थः। [5]त्रिलोक्यात्मकं पद्मं यस्य उदरात् आसीत् पृथग्विभक्तैः इयत्[6]तायुक्तावयवैः अयं पुरुषः लौकिकः पुरुषः यावान् यावत्प्रमाणः ताव त्परिमाण एवाऽसौ ईश्वरः प्रोक्तः स्यात् परिच्छिन्नत्वेन प्रोक्त इति भावः *'स्वसंस्थावयवा[7]निव, "तज्जलान्" इतिवदयं निर्देशः, स्वसंस्थानभूतैः अवयवैः अन् जीवन् संसारी परिच्छिन्नः तद्वदित्यर्थः। अतो जीवपरयोर्विशेषः कथनीयः इत्यर्थः।।८।।

अन्यदपि पृच्छति **अज** इति। [8]भूतात्मा भूतानां व्यष्टिभूतानामात्मा नियन्ता, यद्वा स्वयं भूतारब्धदेहः नाभिपद्मसमुद्भवः अजो ब्रह्मा यदनुग्रहात् यस्य अनिरुद्धस्य अनुग्रहात् भूतानि व्यष्टिभूतानि सृजति येन चतुर्मुखेन तद्रूपं तदनिरुद्धरूपं [9]ददृशे दृष्टम्।।९।।

**विज०** तत्फलमाह **धौतात्मेति**। पान्थः पथिकः स्वशरणं स्वगृहम्। "शरणं गृहरक्षित्रोः" इत्यभिधानम्।।६।।

इत्थं भागवतार्थकथनश्रवणादेः पुरुषार्थहेतुत्वमुक्त्वा स्वतश्चिद्रूपस्यादेहस्य देहसम्बन्धहेतुं पृच्छति - **यदिति**। अधातुमतः स्वतः प्रकृत्यादिधातुसम्बन्धरहितस्य नित्यस्य जीवस्याऽस्य धातुभिः प्रकृत्यादिभिः उपादानकारणैः देहारम्भोऽस्तीति यत्, तत् किं यदृच्छया? केवलेश्वरेच्छया निमित्तभूतया, उत अन्येन हेतुना कर्मणाऽत्र हरीच्छैव हेतुः, तां विना हेत्वन्तरमप्यस्तीति प्रश्नतात्पर्यम्। भवन्तः तदेतत् यथा यथावत् जानते तदस्माकं वदन्तु इति शेषः। धातुभिः नित्ययोगो नास्तीति अधातुमतः इति उक्तम् - "धातुर्वातादिशब्दादिगैरिकादित्वगादिषु। महाभूतेष्विन्द्रियेषु शब्दयोनिस्वभावयोः" इत्याभिधानम्।।७।।

पुराणाधिकारिलब्धये जीवानां बन्धहेतुं पृष्ट्वा श्रुतार्थमनुवदति **आसीदिति**। आदौ महाप्रलये श्रीसहायतया शयानस्य तस्य नारायणस्य सिसृक्षोः परमपुरुषतयाऽवतीर्य तत्त्वसृष्टिपूर्वकमण्डं सृष्ट्वा तैः

---

1. A.B. Omit प्र॰ 2. W. ॰ग्धार्थान् 3. A.B. ॰हे॰ 4. W. ॰ऽपि 5. W. त्रै॰ 6. A.B. ॰त्ताव॰ *श्रीविरराघवीय व्याख्यानानुसारेण 'स्वसंस्थावयवानिव' इति तदादृतः पाठ इति मन्यते। 7. W. ॰निति च 8. W. Omits भूतात्मा 9. A.B. Omit ददृशे

*सत्त्वैः सह अण्डोदं प्रविश्य अण्डोदेऽपि शेषपर्यङ्के शयानस्य तस्य उदरात् लोकसंस्थानलक्षणं* चतुर्दशभुवनसन्निवेशरूपं पद्ममासीत्। स एवाण्डान्तः वैराजाख्योऽवतीर्ण इति यावत्। अयं पुरुषोऽण्डकोशः पुरुषाकारभगवद्रूपेण अधिष्ठितत्वात् पुरुष इत्युच्यते। पातालादिभिः इयत्तावयवैः इयत्तावच्छिन्नावयवैः यावान् यावत्परिमाणः असावपि वैराजो विष्ण्वाख्यस्तावान् तावत्परिमाण इति प्रोक्तः। तथाऽवयववानिव तदन्तःस्थितत्वात् तद्भिन्नत्वेऽपि तथा तादृशावयववानिव प्रोक्त[1] इत्यन्वयः। वै इत्यनेन प्रोक्तार्थस्य प्रमाणसिद्धिं अयमाध्यात्मिकः शिरःपाण्यादिमान्। अस्मदादिदेहः पृथगियत्तावयवैः यावत्परिमाणोऽसौ अधिदैविको विराट् देहोऽपि तावत्परिमाण इति अपव्याख्यानस्य पापहेतुत्वञ्च सूचयति "समुच्चये वै च पापे वाक्यारम्भप्रसिद्धयोः" इति।।८।।

आसीद्यदुरादित्युक्तभगवद्रूपदर्शनप्रकारं तदवस्थितिप्रदेशं च पृच्छति **अज** इति। भूतात्मा स्वसृष्टतत्तत्कार्यव्यापी सर्वविलक्षणाद्विष्णोः जातत्वादजो ब्रह्मा भूतान्यहङ्कारादिजीवान् तदभिमन्यमानानि च तत्त्वानि सृजति। सृष्टिरपि न स्वातन्त्र्यादित्युक्तम् यदनुग्रहादिति। पाद्मकल्पे च नाभिपद्मभवो विरिञ्चः स्वकारणं पद्मनाभं दिदृक्षुः येन प्रकारेण तद्रूपं ददृशे तस्योत्तरत्रान्वयः।।९।।

**रा०कृ०** धौतात्मा निर्मलीकृतान्तःकरणः, अत एव मुक्तसर्वपरिक्लेशः मुक्तसर्वविधरागादिपरिक्लेशः पुरुषः मुक्तसर्वपरिक्लेशः पान्थः स्वशरणं यथा स्वगृहमिव कृष्णपादमूलं न मुञ्चति।।६।।

हे ब्रह्मन्! अधातुमतः धातवः त्वङ्मांसरुधिरादिरूपेण परिणताः पृथिव्यादिपञ्चभूतरूपाः तत्सम्बन्धरहितस्य अस्य पुरुषस्य देहारम्भः धातुभिः शरीरनिर्माणमिति यत् तत् किं यदृच्छया निर्निमित्तमेव वा? उत हेतुना वा, अविद्याकर्मादिना वा? भवन्तो यथा जानते अवगच्छन्ति तथा कथयन्तु इति शेषः।।७।।

पृथक् पृथग्विधैः इयत्तावयवैः, इयत्ता परिच्छेदः। तेन युक्तैः परिमितैरित्यर्थः। करचरणादिभिः अवयवैः अयं प्राकृतः पुरुषः यावान् यावत्सङ्ख्याकावयवः प्रोक्तः लोकसंस्थानलक्षणं लोकविन्यास स्वरूपं पद्मं यदुदरात् यस्य नारायणस्य उदरात् आसीत्, असौ सोऽयमीश्वरोऽपि तावान् वै तावत्परिणाम एव संस्थावयववानिव शरीरावयववानिव इति प्रोक्तः कथितः।।८।।

भूतात्मा भूतानां व्यष्टिभूतानां व्यष्ट्युपाधीनामिति यावत्। आत्मनियामकः अजो ब्रह्मा यस्य नारायणस्य नाभिपद्मसमुद्भवस्सन् येन अनुगृह्णता भगवता तद्रूपं तस्य भगवतो रूपं ददृशे ददर्श।

1. A. Omits प्रोक्तः

किञ्च यदनुग्रहात् यस्य अनुग्रहात् भूतानि व्यष्टिप्राणिनः सृजति। एतदादिपञ्चदशश्लोकानां "सर्वमेतच्च भगवन् पृच्छते मेऽनुपूर्वशः। तत्त्वतोऽर्हस्युदाहर्तुम्" इति वक्ष्यमाणचतुर्विंशतितमश्लोकेनान्वयः।

नाभिर्नाम केन्द्रस्थानम्। तदेवावर्तसदृशं सर्वान्तर्यामिणो नारायणस्य स्वरूपे वर्तमानं सत् ब्रह्मोत्पत्तिनिदानं भवति, यद्धि कमले नोपमीयते। तन्नाभिकमलस्य पत्राणि लोका एव। विकसनशीलमुकुल एव बृंहणशीलो ब्रह्मा। ब्रह्ममुकुलस्य विश्वत्वेन विकासः सृष्टिरिति व्यपदिश्यते। सैषा वैविध्यं प्राप्नुवन्त्या केवलप्रज्ञया भवति।

एवमत्र "यदधातुमतो ब्रह्मन् देहारम्भोऽस्य धातुभिः। यदृच्छया हेतुना वा भवन्तो जानते यथा"। इति पूर्वश्लोके परीक्षिता कृतस्य प्रश्नस्य तेनैव समाधानमुक्तप्रायमित्यवगम्यते। तथाहि - यथा मुकुलस्य विकासे तत्स्वभावो निदानं भवति तथा पञ्चमहाभूतसंसर्गशून्यस्य आत्मनोऽपि जीवदेहारम्भे तत्स्वभाव एव मूलकारणम्। एवञ्च सृष्टेः कारणं किमिति प्रश्ने भगवतः स्वभावः अथवा इच्छा अथवा लीला इति सिध्यति। तदिदमेव सृष्टिकारणं भगवदनुग्रहत्वेन ब्रह्मणाऽपि व्यपदिष्टम्।।९।।

**स चाऽपि यत्र पुरुषो विश्वस्थित्युद्भवाप्ययः।**
**मुक्त्वाऽऽत्ममायां मायेशः शेते सर्वगु[1]हाशयः।।१०।।**

**पुरुषावयवैर्लोकाः सपालाः पूर्वकल्पिताः।**
**लोकैरमुष्यावयवाः सपालैरिति शुश्रुम।।११।।**

**यावा[2]न् कल्पो वि[3]कल्पो वा यथा कालोऽनुमीयते।**
**भूतभव्यभवच्छब्द आयुर्मानञ्च यत् सतः।।१२।।**

**कालस्यानुग[4]तिर्या तु लक्ष्यतेऽण्वी बृ[5]हत्यपि।**
**यावत्य[6]ः कर्मगतयो यादृशी द्विजसत्तम!।।१३।।**

**श्रीध०** प्रश्नान्तरमाह - **स चापि** इति। यत्र शेते येन रूपेणावतिष्ठते। विश्वस्य स्थित्यादयो यस्मात् एवमादिप्रश्नानां "तत्त्वतोऽर्हस्युदाहर्तुम्" इति स[7]र्वेषामन्ते क्रियासम्बन्धः।।१०।।

प्रश्नान्तरमाह - **पुरुषेति**। 'पुरुषस्यावयवैः पूर्वं कल्पिता' 'यस्येहावयवैः लोकान् कल्पयन्ति' इत्यादौ "लोकाश्चामुष्यावयवाः" इति "पातालमेतस्य हि पादमूलम्" इत्यादौ च त्वन्मुखाच्छ्रु[8]तवन्तो वयम्।।११।।

1. H.M.Ma.V.W. °गुणाश्रयः 2. AF.GF. °वत्क° 3. M.Ma. कृतम् 4. AF.GF. °मतिर्यावत् 5. M.Ma. म° 6. M.Ma. °ती: 7. A. सर्वान्ते क्रियायाः स °; B. सर्वान्तक्रियायाः स ° 8. B. °देव श्रु°

एवं सन्देहविपर्ययाभ्यां पृष्टम्। इदनीम[2]ज्ञातान् बहूनर्थान् पृच्छति **यावानित्यादिना**। **कल्पो** महान्, विकल्पोऽवान्तरः भूता[3]दिशब्दो यस्मात् यस्य वाचक इति वा। सतः स्थूल देहा[4]भिमानिनो मनु[5]ष्यपितृदेवादेरायुषः प्रमाणम्।।१२।।

*अनुमानप्रकारः पृष्टः, विशेषं[6]प्रकारं पृच्छति -* ***कालस्येति****। अनुगतिः प्रवृत्तिः कर्मगतयः कर्म-प्राप्यानि स्थानानि। यादृशीः यादृश्यः।* [7]*अत्र आर्षत्वान्प्रथमार्थे द्वितीया। यादृश्य इति पाठे न काऽपि क्षतिः।।१३।।*

**वीर०** स भगवान् विश्वस्थित्युद्भवाप्ययः विश्वस्य स्थित्युद्भवाप्यया यस्मात्तथाभूतः मायाया नियन्ता आत्ममायां मुक्त्वा प्रकृतिमतीत्य जगद्व्यापारादुपरतः सर्वगुणाश्रयः पूर्णषाड्गुण्यः यत्र शेते, वसति तं देशं कथयस्वेत्यन्वयः।।१०।।

"यस्येहावयवैर्लोकान् कल्पयन्ति", "पाताल मेतस्य हि पादमूलम्" इत्युभयथा श्रवणात्तस्य कल्पभेदेनोपपत्तिं मन्वानः आशङ्कते पुरुषेत्यादिना। पुरुषावयवैः अनिरुद्धादुत्पन्नचतुर्मुखाख्यपुरुषा-वयवैः सपालाः सेशाः[8] लोकाः पूर्वकल्पिताः पूर्वस्मिन् कल्पे कल्पिताः इदानीं त्वितरथेति[9] शुश्रुम इत्याह - सपालैरिति। सपालैर्लोकैरमुष्य पुरुषस्यावयवाः कल्पिताः इति शुश्रुम, एवञ्च "धाता यथापूर्वमकल्पयत्" इति श्रुतिविरोधः इत्यभिप्रायः।।११।।

अथ अज्ञातान् अर्थान् बहून् पृच्छति **यावानित्यादिना**। कल्पो महाकल्पः यावान् यावत्परिमाण[10]कः विकल्पः अवान्तरकल्पकालभागः यावान् भूतभव्यभवदादिशब्दवाच्यः कालः यथाऽनुमीयते ग्रहसञ्चारादिनेति भावः। सतः कार्यस्य देवपितृमनुष्यादेरायुर्मानं आयुः परिमाणञ्च यत् तदप्युदाहर्तुमर्हसीत्यन्वयः।।१२।।

कालस्य या अण्वी सूक्ष्मा निमेषादिरूपा बृहती संवत्सरादिरूपा याऽनुगतिः प्रवृत्तिः लक्ष्यते साऽपि कथनीयेत्यर्थः। कर्मगतयः कर्मणः प्राप्यानि फलानि यावत्यः यावत्सङ्ख्याकाः यादृश्यः यत्प्रकारकाः। हे द्विजसत्तम!।।१३।।

**विज०** विश्वस्य स्थित्युद्भवाप्ययाः यस्मात्स तथोक्तः लक्ष्म्या ईशः ज्ञानानन्दादिसर्वगुणाना-

---

1. H.V. एतत् 2 H.V. °मविज्ञा° 3. A. °दिः 4. H.V. °हाद्यभि° 5. H.V. °ष्यस्य 6. A.H.V. °षं पृ° 7. A.B. Omit अत्र......क्षतिः। 8. W. Omits सेशाः 9. W. त्वतथे° 10. W. °णः

माश्रयः सृष्ट्यादौ गुणभूतानां ब्रह्मादीनामाश्रयो वा पुरुषः पुरुषाकारवान् स पद्मनाभः आत्ममायां स्वेच्छाधीनां बन्धकशक्तिं मुक्त्वा तत्प्रवर्तकत्वं विरम्य मुक्तप्रवर्तकत्वेन यत्र यस्मिन् लोके शेते।।१०।।

अधुना पुनरपि श्रुतार्थमनुवदति - **पुरुषेति**। अण्डस्थितस्य वैराजाख्यस्य पुरुषस्य हरेर्निजावयवैः सपाला इन्द्रादिलोकपालैस्सहिताः पातालादयो लोकाः पूर्वकल्पिताः प्रथमं सृष्टाः। पातालादिलोकैरमुष्य वैराजस्य हरेर्बाह्यावयवाः कल्पिताः प्रतिमात्मकब्रह्माण्डावयवैः क्लृप्ता इत्यन्वयः। सपालैर्लोकैरमुष्यावयवाः प्रतिमावत्सङ्कल्पिता इति वा।।११।।

श्रुतार्थमनूद्याधुना प्रस्तुतपुराणार्थं पृच्छति -**यावान्** इत्यादिना। कल्पो ब्रह्मकल्पः द्विपरार्धाख्यः ब्रह्मणो दिनं वा यावान् यावत्परिमितः। विकल्पो मन्वादिकालो वाराहादिर्वा। भूतो भव्यो भवन्निति शब्दो यस्मिन् स तथोक्तः, अतीतानागतवर्तमानाख्य इत्यर्थः। यथा यथार्थतयाऽनुमीयते ज्ञायते कथं वाऽऽयुषो मानं प्रमाणञ्च येन कालेन कृतं सकालः।।१२।।

अण्वी परमाणुलक्षणा। महती परममहत्परिमिता। कालस्य गतिः साऽपि कथं लक्ष्यते। कर्मगतयः कर्मफलानि यावतीः कतिसङ्ख्यानि, यादृशीः कीदृशानि?।।१३।।

**रा०कृ०** विश्वस्थित्युद्भवाप्ययः विश्वस्य स्थितिजन्मलयानां कारणभूतः मायेशः अचिन्त्यशक्तिरूपमायायाः ईशो नियन्ता। सर्वगुहाशयः सर्वान्तर्यामी स चाऽपि पुरुषः परमपुरुषः आत्ममायां स्वमायाशक्तिं मुक्त्वा यत्र शेते, जगत्सर्गादिव्यापारात् उपरतः कुत्र वर्तते।।१०।।

पुरुषावयवैः पुरुषस्य विराट्पुरुषस्य अवयवैः सपालाः सेश्वराः लोकाः पूर्वकल्पिताः पूर्वं कल्पिता इति। सपालैः लोकैः अमुष्य पुरुषस्य अवयवाः कल्पिता इति च शुश्रुम त्वत्त एव वयं श्रुतवन्तः।।११।।

कल्पः महाकल्पः विकल्पो वा अवान्तरकल्पो वा यावान् यावत्परिमाणकः? भूतभव्यभवच्छब्दः भूतभविष्यद्वर्तमानव्यपदेश्यः कालः यथा येन प्रकारेण अनुमीयते? सतः कार्यभूतस्य देवपितृमनुष्यादिदेहस्य आयुर्मानञ्च आयुः प्रमाणञ्च यावत्परिमाणं इति शेषः।।१२।।

हे द्विजसत्तम! शुकयोगिन्! अण्वी निमेषादिरूपा सूक्ष्मा, बृहत्यपि संवत्सरयुगादिरूपा दीर्घा च या तु कालस्य अनुगतिः प्रवृत्तिः लक्ष्यते? कर्मगतयः कर्मभिः प्राप्याः गतयः स्थानानीति यावत्। यावत्यः यावत्सङ्ख्याकाः यादृशीः यादृश्यः यत्प्रकारकाः।।१३।।

**यस्मिन् कर्मसमावायो[1] यथा येनोपगृह्यते।**
**गुणानां गुणिनाञ्चैव परिणाम[2]मभीप्सताम्।।१४।।**

**भूपातालककुब्व्योमग्रहनक्षत्रभूभृताम्।**
**सरित्समुद्रद्वीपानां सम्भव[3]श्चैतदोकसाम्।।१५।।**

**प्रमाणमण्डकोशस्य बाह्याभ्यन्तरभेदतः[4]।**
**महताञ्चा[5]नुचरितं वर्णाश्रमविनिश्चय[6]ः।।१६।।**

**युगानि युगमानञ्च धर्मो यश्च युगे युगे।**
**अवतारानुचरितं यदाश्चर्य[7]तमं हरेः।।१७।।**

**श्रीध० यस्मिन्निति**। गुणानां सत्त्वादीनां परिणामं देवादिरूपमिच्छतां गुणिनां जीवानां मध्ये यस्मिन् परिणामे कर्मणां पुण्यपापानां समवायः समुदायः केन कथं कृतेन कर्मसमुदायेन कोऽधिकारी देवादिभावं प्राप्नोतीत्यर्थः।।१४।।

**भूपातालेति**। भूपातालादीनां सम्भवः। एतानि ओकांसि येषां तेषां प्राणिनां च सम्भवः। यथेति सर्वत्रानुषङ्गः।।१५।।

**प्रमाणमिति**। वर्णानामाश्रमाणाञ्च विनिश्चयः तत्तत्स्वभावैः निर्धार[8]णम्।।१६।।

**युगानि** इति। युगे युगे प्रतियुगं नृ[9]णां यो धर्मो यश्च हरेरवतारानुचरितम्।।१७।।

**वीर०** यस्मिन् देशे कर्मसमा[10]वापः कर्मणां फलनिष्पादनं येन देवादिभूतेन यथा उपगृह्यते यादृशं कर्मफलं प्राप्यते, तच्च कथयेत्यर्थः। गुणानां सत्त्वादीनां गुणिनां जीवानां[11] च परिणामं परिणामहेतुं गुणिनां परिणामो[12] देवादिशरीरपरिग्रहहेतुः सविस्तरं परिणामं[13] वक्तुमर्हसि[14]।।१४।।

ककुभः दिशः, भूभृतः पर्वताः भूपातालादीनां सम्भवः एतानि भ्वा[15]दीनि ओकांसि येषां तेषां प्राणिनां च सम्भवः। यथेति सर्वत्रानुषङ्गः।।१५।।

---

1. H.M.Ma.V. °मवायो; W. °मावापो 2. M.Ma. °माणं सुविस्तरम्; W. °णामं सविस्तरम् 3. M.Ma. °वश्चै° 4. M.Ma.W. °वस्तुनः 5. AF.GF. °रु° 6. M.Ma. °र्णयम् 7. AF.GF. °मयं 8. A.H.V. °रः 9. A.B. Omit नृणां 10. A. °मवायः; B. °मावाय: 11. A.B. Omit जीवानां 12. A.B. मे......ग्रहे हेतुं 13. A.B. Omit परिणामं 14. A.B. °सीति 15. A. भूम्या°

अण्डकोशस्य तद्बाह्याभ्यन्तरवस्तुनश्च प्रमाणम् अण्डात् बाह्यवस्त्वावरणं महतां भागवताना मनुचरितं चरित्रं वर्णानामाश्रमाणाञ्च विनिश्चयः तत्स्वभावेन[1] निर्धारः।।१६।।

हरेराश्चर्यतममवतारानुचरितञ्च यत्तदपि युगानि युगस्वरूपं युगपरिमाणं युगे युगे प्रतियुगम् यो धर्मः[2]।।१७।।

**विज०** यस्मिन् कस्मिन् जीवे किं कर्मसमवायः यथा कथं येन केन स कर्मसमवायः उपगृह्यते। कर्मसमवायकर्ता कः? सत्त्वादिगुणानां परिमाणं गुणिनां महदादिजीवानां सामर्थ्यपरिमाणं गुणानां शब्दादीनाम्। गुणिनामाकाशादीनामिति व्याख्यानं न युक्तम्, परिमाणानुक्तेः। "देवासुरेभ्यो मघवान्" इत्यादिनोक्तेश्चान्यत्र।।१४।।

भूपातालादीनाञ्च परिमाणम् एतानि भूम्यादीनि ओकांसि येषां ते तथा तेषां सम्भवं उत्पत्तिञ्च।।१५।।

ब्रह्माभ्यन्तरे च वर्तमानस्य वस्तुनो हरेः परमाण्वादि परममहदन्तानां रूपाणाञ्च परिमाणं 'सत एव' इत्यादिना वक्ष्यमाणत्वात् महतां मरीचिकर्दमादीनाम् अनुचरितं वर्णानामाश्रमाणां विशेषतो निर्णयम्।।१६।।

यदाश्चर्यतममन्येषामिति शेषः। हरेरवतारानुचरितं तञ्च कति युगानि युगमानम्। वर्षैरियत्तया परिच्छेदः। अनुयुगं यो यो धर्मः तं तं च।।१७।।

**रा०कृ०** गुणानां सत्त्वादीनां परिणामं देवादिस्वरूपमभीप्सतां न प्राप्तुमिच्छतां गुणिनां चैव जीवानां मध्येऽपि येन अधिकारिणा यस्मिन् देवादिरूपे परिणामे निमित्ते सति कर्मसमुदायः यादृशः पुण्यपापकर्मसमुदायः यथा येन प्रकारेण उपगृह्यते स्वीक्रियते।।१४।।

भूपातालककुब्व्योमग्रहनक्षत्रभूभृताम्, भूः, पातालं, ककुभो दिशः, व्योम आकाशः ग्रहाः नक्षत्राणि, भूभृतः पर्वताः एतेषां सरित्समुद्रद्वीपानां च सम्भवः। तदोकसां भूपातालादिनिवासिनां सम्भवश्च यथा भवति।।१५।।

बाह्याभ्यन्तरभेदतः अण्डकोशस्य ब्रह्माण्ड्कोशस्य प्रमाणं कियत्? महतां महात्मनां भागवतानां अनुचरितं चरित्रं च कीदृशम्? वर्णाश्रमविनिश्चयश्च कीदृशः।।१६।।

---

1. A. तु तत्स्वरूपभावेन; B. तत्तत्स्वरूपभावेन 2. A.B. Omit यो धर्मः

युगानि कानि? युगमानञ्च युगानां परिमाणञ्च कियत्? युगे युगे प्रतियुगं, यो धर्मः प्रवर्तत इति शेषः। हरेराश्चर्यतमं अवतारानुचरितञ्च यत् यादृशम्।।१७।।

**नृणां[1] साधारणो धर्मः सविशेषश्च यादृशः।**
**श्रेणीनां राजर्षीणाञ्च धर्मः कृच्छ्रेषु जीवताम्।।१८।।**

**तत्त्वानां परिसङ्ख्यानं लक्षणं हेतुलक्षणम्।**
**पुरुषाराधनविधिर्योगस्याध्यात्मिकस्य च।।१९।।**

**योगेश्वरैश्वर्यगतिर्[2]लिङ्गभङ्ग[3]स्तु योगिनाम्।**
**वेदोपवेदधर्माणामितिहासपुराणयोः।।२०।।**

**सम्प्लव[4]स्सर्वभूतानां विक्रमः प्रतिसङ्क्रमः।**
**इष्टापूर्तस्य काम्या[5]नां त्रिवर्गस्य च यो विधिः।।२१।।**

**श्रीध० नृणामिति[6]।** सविशेषो वर्णाश्रमनिबन्धनः श्रेणीनां तत्तद्व्यवसायोपजीविनां व्यवहार नियमलक्षणो धर्मः राजर्षीणां च[7] प्रजापालनाधिकारिणां कृच्छ्रेषु आपत्सु जीवतां सर्वेषाम्।।१८।।

**तत्त्वानाम्** इति। सर्वेषां[8] तत्त्वानां प्रकृत्यादीनां परिसंख्यानं संख्या लक्षणं[9] स्वरूपं हेतु[10]लक्षणं तत्तत्कार्यहेतुत्वेन च लक्षणमित्यर्थः। पुरुषाराधनस्य विधिर्देवपूजा[11]याः प्रकारः अष्टाङ्गयोगस्य च विधिः।।१९।।

**योगेश्वरेति।** योगेश्वराणां योगाभ्यासशालिनाम्[12] ऐश्वर्येण अणिमादिना गतिः[13] अर्चिरादिगतिः। लिङ्गशरीरस्य भङ्गः प्रलयः[14]। वेदाः ऋग्वेदादयः, उपवेदाः आयुर्वेदादयः, धर्माः धर्मशास्त्राणि, तेषा मितिहासपुराणयोश्च [15]इतिहासः पुरावृत्तः सकलार्थप्रतिपादकः। पुराणं दशपञ्चलक्षणविशिष्टम्। गतिः[16] तयोः[17] स्वरूपम्।।२०।।

**सम्प्लव** इति। सम्प्लवोऽवान्तरप्रलयः। यद्वा सम्यक् प्लवनं उद्भवः। विक्रमः स्थितिः,

---

1. V. नृणां 2. M.Ma. °तिं लिं° 3. M.Ma. °ङ्गं च; W. °ङ्ग श्च 4. M.Ma. °प्लव: 5. W. °मा° 6. V. नृ° 7. A.B. Omit च 8. B.H.V. Omit सर्वेषां 9. V. Omits लक्षणं 10. A.B. °तु तो° 11. A.H.V. °जा° 12. A.B. Omit योगाभ्यासशालिनां 13. A.B. Omit गतिः 14. B. लयः; H.V. प्रविलयः 15. A.B. Omit इतिहासः......विशिष्टम्। 16. A.B. Omit तयोः 17. B. Omits स्वरूपम्

प्रतिसङ्क्रमो महाप्रलयः, इष्टं यागादिरूपं[1] वैदिकं कर्म, पूर्तं तटाकवाप्यालयादिनिर्माणरूपं[2] स्मार्तं कर्म[3]। "वापीकूपतटाकादिदेवतायतनानि[4] च। अन्नप्रदानमारामः पूर्तमित्यभिधीयते" इति। तत्र च[5] काम्यानामग्निहोत्रादीनां विधिः[6] त्रिवर्गस्य धर्मार्थकामानां[7] विधिरविरोधप्रकारः[8]।।२१।।

**वीर०**[9] साधारणः मनुष्यमात्रसाधारणः सविशेषः वर्णाश्रमविशेषनिबन्धनरूपविशेषयुक्तः श्रेणीनां तत्तद्व्यवहारोपजीविनां धर्मः व्यवहारनियमलक्षणः धर्मः राजर्षीणां प्रजापालनाधिकारिणां कृच्छ्रेषु आपत्सु जीवतां[10] यो धर्मः।।१८।।

तत्त्वानां महदादीनां परिसङ्ख्यानं सङ्ख्यालक्षणं स्वरूपं हेतुलक्षणं तत्त्वकाराणलक्षणं पुरुषाराधनविधिः परमपुरुषाराधनप्रकारः आध्यात्मिकस्य प्रकृतिविविक्तात्मस्वरूपविषयस्य योगस्य ज्ञान योगस्य प्रकारः।।१९।।

योगेश्वराणामैश्वर्याणि[11] अणिमादीनि तेषां गतिः स्वरूपं योगिनां लिङ्गभङ्गः शरीरपातः। वेदाः ऋग्वेदादयः। उपवेदाः धनुर्वेदादयः, तदुक्तधर्माश्च[12] तेषामितिहासपुराणयोश्च गतिः।।२०।।

सर्वभूतानां सम्प्लवः अवान्तरप्रलयः उत्पत्तिर्वा, विविधः[13] क्रमः विक्रमः स्थितिः प्रतिसङ्क्रमः संहारः महाप्रलयः। इष्टं वैदिकं कर्म, पूर्तम् स्मार्तम्[14] त्रिवर्गस्य धर्मार्थकामानां विधिः प्रकारः।।२१।।

**विज०** साधारणो धर्मो जातिमात्रप्रयुक्तः, अहिंसादिलक्षणो यो धर्मो विशेषसहितः यादृशः कीदृशः श्रेणीनां अङ्गरक्षकाणां धर्मो युद्धेषूच्यते, राजर्षीणां प्रियव्रतादीनां कृच्छ्रेषु आपत्सु जीवताम्।।१८।।

तत्त्वानां महदादीनां परिसंख्यानं सामान्यविशेषसङ्ख्या तेषां लक्षणं व्यावर्तकं धर्मं हेतोः कारणस्य ब्रह्मणो लक्षणं स्वरूपं पुरुषस्य विष्णोः आध्यात्मिकस्य परमात्मसम्बन्धिनो यमादियोगस्य भक्तियोगस्य च विधिः, तञ्च।।१९।।

योगेश्वरैश्वर्यगतिं योगेश्वराणां अणिमाद्यष्टैश्वर्यप्राप्तिम्, तेषां स्वरूपञ्च योगिनां यमादियोगाभ्याससिद्धानां वेदान्तदिशास्त्राभ्याससिद्धानाञ्च योगतो लिङ्गभङ्गं सूक्ष्मशरीरनाशकप्रकारं "स्थिरं सुखञ्च" इत्यादिनोक्तोऽयं "पानेन ते देवकथासुधायाः" इत्यादि पश्चाञ्च। ऋगादिवेदानां, आयुर्वेदाद्युपवेदानां,

---

1. A.B. Omit यागादिरूपं 2. A.B. Omit तटाक......रूपं 3. A.B. Omit कर्म 4. A.B. 'डागा' 5. H.V. Omit च 6. H.V. Omit विधः 7. A. धर्मार्थकामस्य; H.V. धर्म कामार्थरूपस्य 8. H.V. 'नुष्ठान' 9. A.B. add योधर्मः 10. A.B. 'विनां' 11. 'गी' 12. W. 'क्ताः धि' 13. W. 'धमु' 14. A.B. Omit स्मार्तम्

वेदादिविहित वर्णाश्रमधर्माणाञ्च यः सम्भवः उद्धारादिः। तञ्च इतिहासपुराणयोः सम्भवः उत्पत्तिः।।२०।।

विक्रमो विविधचरित्रलक्षणः प्रतिसङ्क्रमः संहारः इष्टस्य यागादेः पूर्तस्य वापीकूपादेः काम्यानां कारीर्यादीनां त्रिवर्गस्य धर्मार्थकामलक्षणस्य।।२१।।

**रा०कृ०** नृणां साधारणः मानवमात्रेण अनुष्ठेयः धर्मो यादृशः? सविशेषः वर्णाश्रमाचाररूपो धर्मश्च यादृशः? श्रेणीनां विभिन्नव्यवहारोपजीविनां धर्मः यादृशः? राजर्षीणां राजानश्च ते ऋषयः राजर्षयः, राजानो भूत्वाऽपि ये ऋषिवद्वर्तमानाः तेषां धर्मो यादृशः? कृच्छ्रेषु आपत्सु जीवतां जीवनं नयतां धर्मो यादृशः?।।१८।।

तत्त्वानां महदादीनां चतुर्विंशतितत्त्वानां परिसंख्यानं परिगणना लक्षणं तेषां लक्षणं हेतुलक्षणं तत्तत्कार्यहेतूनां लक्षणं पुरुषाराधनविधिः परमपुरुषाराधनप्रकारः आध्यात्मिकस्य प्रकृतिविविक्तात्म-विषयस्य योगस्य विधिश्च कथं वर्तते? इति शेषः।।१९।।

योगेश्वरैश्वर्यगतिः योगेश्वराणां ऐश्वर्याणि अणिमादीनि तेषां गतिः, स्वरूपं योगिनान्तु, चार्थे तुः। लिङ्गभङ्गः लिङ्गशरीरत्यागप्रकारः। वेदोपवेदधर्माणां, वेदानां ऋगादीनां, उपवेदानां आयुर्वेदादीनां, धर्मशास्त्राणां च इतिहासपुराणयोरपि च गतिः स्वरूपं कथं वर्तते?।।२०।।

सर्वभूतानां कार्यकारणरूपेण स्थितानां पञ्चभूतानां सम्प्लवः उत्पत्तिः विक्रमः स्थितिः प्रतिस-ङ्क्रमः प्रलयः, इष्टापूर्तस्य, इष्टस्य यागादेः पूर्तस्य वापीकूपतटाकादेश्च, काम्यानां तत्तत्फलकामनया विहितानां कर्मणां च, त्रिवर्गस्य, त्रयाणां धर्मार्थकामानां वर्गस्य च यो विधिः कथं विद्यते?।।२१।।

**य[1]श्चानुशायिनां सर्गः पा[2]षण्डस्य च सम्भवः।**
**आत्मनो बन्धमोक्षौ च व्यवस्थानं स्वरूपतः।।२२।।**

**यथाऽऽत्मतन्त्रो भगवान् विक्रीडत्यात्ममायया।**
**विसृज्य वा[3] यथा मायामुदास्ते साक्षिवद्विभुः।।२३।।**

1. I.M.Ma.W. योवा 2. A.C.G.M.Ma.N. 'ख' 3. M.Ma. च

**सर्वमेतच्च भगवन् पृच्छते मेऽनुपूर्वशः।**
**तत्त्वतोऽर्हस्युदाहर्तुं प्रपन्नाय महामुने[1]।।२४।।**

**अत्र प्रमाणं हि[2] भवान् परमेष्ठी यथाऽऽत्मभूः।**
**परे[3] चेहानुतिष्ठन्ति पूर्वेषां पूर्वजैः[4] कृतम्।।२५।।**

**न मेऽसवः परायन्ति ब्रह्मन्ननशनादमी।**
**पिबतोऽच्युतपीयूषं[5] अन्यत्र[6] कुपितादि्द्वजात्।।२६।।**

**श्रीध० य इति**। अनुशायिनां लीनोपाधीनां[7] जीवानाम्। आत्मनो जीवस्य व्यवस्थानं बन्धमोक्षातिरिक्तस्वरूपेणावस्थानम्।।२२।।

**यथा** इति। उदास्ते प्रलये।।२३।।

**सर्वम्** इति। चशब्दादपृष्टमपि।।२४।।

**अत्र** इति। प्रमाणं सम्यक् ज्ञाता यतस्तव ब्रह्मनारदव्यासक्रमेण सम्प्रदायोऽस्तीति सामान्यन्यायेनाऽऽह-परे[8] चेति। यद्वा त्वदन्ये प्रायशो गतानुगतिका एव न तत्त्वविद[9] इत्याह - परे[10] चेति।।२५।।

ननु तव अनशनाद्विजकोपाभ्यां व्याकुलस्य कुतः श्रवणं तत्राऽह - **नेति**। न परायन्ति नापगच्छन्ति न व्याकुलीभवन्तीत्यर्थः। अच्युतकीर्तिपीयूषं पिबतः[11]।।२६।।

**वीर०** अनुशायिनां भुक्तशेषकर्मणा सह परलोकभ्रष्टानां सर्गः उत्पत्तिप्रकारः पाषण्डस्य[12] पाषण्ड[13]-धर्मस्य सम्भवः उत्पत्तिः आत्मनो जीवस्य बन्धमोक्षप्रकारः स्वरूपतो व्यवस्थानं[14] मुक्तिदशायामवस्थानं तत्प्रकार इत्यर्थः।।२२।।

आत्मतन्त्रः स्वतन्त्रः विभुः सर्वान्तरो भगवान् आत्ममायया स्वनियाम्यमायया यथा विक्रीडति पुनश्च मायां विसृज्य यथा येन प्रकारेण साक्षिवत् साक्षाद्द्रष्टृवत् उदास्ते प्रलये उदासीन आस्ते।।२३।।

एतत्सर्वं चकारादपृष्टमपि गुह्यं यत् तच्च पृच्छते प्रपन्नाय च मे मह्यं हे भगवन्! हे महामते!

---

1. W. °मते 2. AF.GF. भगवान् पर °3. H.I.V. अपरे चानु°; M.Ma.W. अपरे ह्यनु° 4. W. °कैः 5. H.V. त्वन्मुखाब्जविनिसृतम्:, I. तद्वाक्याब्धिविनिस्सृतम्; M.Ma. त्वद्वाक्याद्धि विनिस्सृतम् 6. W. °प्य° 7. H.V. मलिनो° 8. H.V. अपरे 9. H.V. तद्विद 10. H.V. अपरे 11. A. Omits पिबतः 12. A.B. °ख° 13. A.B. °ख° 14. W. अव°

तत्त्वतः उदाहर्तुं उत्तरं वक्तुं त्वमर्हसि। अर्हताद्योतकमिदं विशेषणद्वयं भगवन्, महामते इति च। "उत्पत्तिं प्रलयञ्चैव[1] भूतानामागतिं गतिम्। वेत्ति विद्यामविद्याञ्च स वाच्यो भगवान्" इति हि स्मर्यते। महामतित्वञ्च त्रैकालिकवस्तुविषय[2]याथात्म्यज्ञानवत्त्वम्।।२४।।

योग्यतामेव उपपादयति **अत्र** इति। अत्र पृष्टेष्वर्थेषु भवान् प्रमाणं सम्यक् ज्ञाता। तत्र दृष्टान्तः - आत्मनः परमात्मनः भूः जातः[3] परमेष्ठी ब्रह्मा यथा प्रमाणं तद्वत्। ब्रह्मनारदव्यासक्रमेण सम्प्रदायोऽप्यस्तीत्याह - पूर्वेषामपि पूर्वजैः कृतं परेऽर्वाञ्चः अनुतिष्ठन्ति।।२५।।

ननु तव अनशनद्विजकोपा[4]भ्यां व्याकुलस्य कुतः श्रवणं तत्राऽऽह - **न मे** इति। अत्र त्वत्सन्निधौ अच्युतपीयूषमच्युतकीर्तन[5]रूपममृतं पिबतो मेऽमी[6] असवः प्राणाः कुपितात् द्विजात्, अनशनादपि हेतोः न परायन्ति नापगच्छन्ति न व्याकुलीभवन्तीत्यर्थः।।२६।।

**विज०** प्रकृतावनुशयनात् अनुशायिनः संसारिणः तेषां सर्गादिः परिभ्रष्टानां स्वभावं वा आत्मनो जीवस्य मोक्षं विशिनष्टि व्यवस्थानमिति। यद्वा तारतम्येनावस्थानम्।।२२।।

आत्मतन्त्रे भगवानात्ममायया स्वेच्छया चित्प्रकृत्या च जगत्सृष्ट्यादिना यथा येन प्रकारेण विक्रीडति द्विविधात्ममायाऽस्ति स्वरूपभूता तद्वशा च इति। तत्र तद्वशया जीवं संसारयन् स्वरूपभूतया भक्त्यादिसाधनसम्पन्नं साधयन् संसारात् विमोचयन् सुखेन रमयन् पुनः तद्वशबन्धकशक्तिं विसृज्य साक्षिरूपपुरुषवत् निर्लेपो यथोदास्ते प्रकृतिं मुक्त्वा तिष्ठति - "द्वेधा चाऽऽत्ममाया तद्रूपा तद्वशा चेति, तद्वशया संसारयति स्वरूपया विमोचयत्युदास्ते" इत्यादि श्रुतेर्नानिर्वाच्या मायाऽत्रोच्यते।।२३।।

प्रश्नराशिमुपसंहरति **सर्वम्** इति। चशब्दात् अन्यददृष्टञ्च यदनुपूर्वशः पूर्वं वक्तव्यमिति प्रतीयते तत् क्रमेण उदाहर्तुमर्हसीति प्रपन्नाय इत्यनेन "आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम्। रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा। आत्मतर्पणकार्पण्ये षड्विधा शरणागतिः।।(पाञ्चरात्रे) इत्युक्तमर्थमात्मनः सूचयति। महामुने! इत्यनेन शुकस्य स्वप्रतिवचनसामर्थ्यसद्भावं सूचयति।।२४।।

सर्वज्ञस्याऽपि केनचिन्निमित्तेन अन्यथा वचनं सम्भाव्यत इति मन्दमत्याशङ्कां परिहरति **अत्रेति**। यथाऽऽत्मभूः परमात्मन उत्पन्नः परमेष्ठी सर्वजीवोत्तमो ब्रह्मा सर्वजनानां सर्वशास्त्रेषु प्रमाणं सम्यग्वक्तव्यत्वेन आप्ततमः तथा व्यासपुत्रो भवानपि अत्र अस्मदर्थे प्रमाणं हि यस्मात् तस्मात् उक्तं युक्तमिति

1. W. च विनाशं च भूं 2. A.B. Omit विषय 3. W. "कैः 4. A.B. "सर्पा" 5. W. "तिरू" 6. A.B. Omit अमी

एतदेवोपपादयति अपर इति। अपरे अन्ये पूर्वेषां मरीच्यादीना मपि पूर्वजैः ब्रह्मभवादिभिः कृतं शास्त्रार्थम् अनुतिष्ठन्ति हि प्रसिद्धम् "यद्यदाचरति श्रेष्ठः" (भ.गी.3-21) इत्यादौ। अनेनापरेऽनुतिष्ठन्तीति यस्मात् तस्मात्[1] परमेष्ठी प्रमाणम् अतो भवानप्यत्र प्रमाणमिति वाक्यार्थः उक्तो भवतीति।।२५।।

अनश्नतस्तव मनआदीन्द्रियदौर्बल्यात् अस्मदुक्तावधारणाशक्तेः अरण्यरोदनवत् व्यर्थमापद्यत इति तत्राऽऽह - **न मे** इति। न परायन्ति न मृतप्राया भवन्ति अशनादपि अतिबलहेतुरसायनपानात् इत्याह पिबत इति। अच्युतकथापीयूषम्।।२६।।

**रा०कृ०** अनुशायिनां भुक्तशेषपुण्यपापकर्मवासनावतां यः सर्गः सम्भवप्रकारश्च पाखण्डस्य वेदव्यतिरिक्तमार्गस्य सम्भवश्च प्रवृत्तिश्च आत्मनः जीवात्मनः बन्धमोक्षौ च स्वरूपतो व्यवस्थानञ्च मोक्षदशायां स्वरूपेणावस्थानप्रकारश्च कथं वर्तते।।२२।।

आत्मतन्त्रः स्वतन्त्रः भगवान् आत्ममायया स्वस्य शक्तिरूपया मायया यथा, विक्रीडति। यथा वा विभुः सर्वव्यापकः स भगवान् मायां विसृज्य साक्षिवत् केवलद्रष्टेव उदास्ते उदासीनः आस्ते।।२३।।

हे भगवन्! महामुने! शुकयोगिन्! प्रपन्नाय शरणागताय पृच्छते मे मह्यं एतच्च सर्वं मया यत्पृष्टं तत् सर्वमपि, तत्त्वतः याथार्थ्येन अनुपूर्वशः यथाक्रमं, उदाहर्तुं वक्तुमर्हसि।।२४।।

अत्र पृष्टेष्वर्थेषु आत्मभूः परमेष्ठी यथा ब्रह्मेव भवान् प्रमाणं हि सम्यक् विज्ञाता खलु। कुत इति चेत्। इह सभायां परे च येऽन्ये सन्ति ते पूर्वेषां व्यासादीनां पूर्वजैः पूर्वजातैः कृतं विहितमेव अनुतिष्ठन्ति आचरन्ति। त्वन्तु तद्व्यतिरेकेण ब्रह्मनारदव्यासक्रमागतसम्प्रदायेन तत्त्ववेत्तेति भावः। अथवा गतानुगतिकप्राचीनसम्प्रदायानुसारिब्रह्मवादिवैलक्षण्येन भवान् आत्मभूर्ब्रह्मेव परमेश्वरप्रसादात् स्वतस्सिद्धज्ञानवत्त्वात् अत्र प्रमाणमस्तीति भावः।।२५।।

हे ब्रह्मन्! अच्युत! पीयूषं अच्युतस्य भगवतः पीयूषं कथामयममृतं पिबतः मे मम अमी असवः प्राणाः कुपितात् द्विजात् अन्यत्र कुपितब्राह्मणहेतुकं मरणं विनेति भावः। अनशनात् भोजनाभावात् न परायन्ति नोत्क्रामन्ति। "त्वन्मुखाब्जविनिस्सृतम्" इति पाठे त्वन्मुखतः कथितं अच्युतपीयूषमित्यर्थः।।२६।।

---

1. A. Omits तस्मात्

श्रीसूत उवाच

स उपामन्त्रितो राज्ञा कथायामिति[1] सत्पतेः।
ब्रह्मरातो भृशं प्रीतो विष्णुरातेन संसदि।।२७।।

प्राह[2] भागवतं नाम पुराणं ब्रह्मसम्मितम्।
ब्रह्मणे भगवत्प्रोक्तं[3] ब्रह्मकल्प उपागते[4]।।२८।।

यद्यत् परीक्षिदृषभः पाण्डूनामनुपृच्छति।
आनुपूर्व्येण तत्सर्वमाख्यातुमुपचक्रमे।।२९।।

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
द्वितीयस्कन्धे प्रश्नविधिर्नाम अष्टमोऽध्यायः।।८।।

**श्रीध० स** इति। उपामन्त्रितः पृष्टः सन् चाऽसौ पतिश्च तस्य।।२७।।

**प्राह**[5] इति। ब्रह्मकल्पे सृष्ट्युपक्रमे[6]कल्पे भागवताख्यानेनैव प्रश्नानामुत्तरं दातुं उपक्रान्तवा[7]-नित्यर्थः।।२८।।

**यत्** इति। पाण्डूनामृषभः श्रेष्ठः आनुपूर्व्येणेति प्रस्तावक्रमोऽत्र विवक्षितो न तु[8] प्रश्नक्रमः।।२९।।

इति श्रीमद्भागवते द्वितीयस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां अष्टमोऽध्यायः।।८।।

**वीर०** सूत[9]वाक्यमाह **स** इति। इतीत्थं सत्पतेः[10] सतां पत्युः भगवतः कथायां राज्ञा विष्णुरातेन विष्णुना[11] रक्षितेन परीक्षिता उपामन्त्रितः प्रवर्तितः ब्रह्मरातो ब्रह्म[12] ब्रह्मविषयकज्ञानं राति ददातीति[13] ब्रह्मरातः श्रीशुकः[14] सभायाम्।।२७।।

भागवतं नाम पुराणं प्राह - कथम्भूतं पुराणम्[15] ? ब्रह्मसम्मितं वेदतुल्यं परब्रह्मप्रमापकं[16] वा। ब्रह्मकल्पे सृष्ट्युपक्रमे उपागते प्राप्ते सति ब्रह्मणे चतुर्मुखाय भगवता प्रोक्तञ्चेत्यर्थः।।२८।।

पाण्डूनां ऋषभः श्रेष्ठः परीक्षित् यद्यत् अनुपृच्छति अन्वपृच्छत् तत्सर्वमनुपृष्टं सर्वमानु-

---

1. H.V. 'थया मीति 2. H.M.Ma.V.W. आह 3. AF.GF. 'ता प्रोक्तं 4. W. 'पास्थि 5. H.V. आ' 6. B.H.V. 'मे भा' 7. H.V. प्रक्रा' 8. A.H.V. Omit तु 9. W. Omits सूत......इति। 10. A.B. Omit सत्पतेः 11. W. Omits विष्णुना रक्षितेन 12. W. Omits ब्रह्म 13. A.B. Omit ददाति 14. W. Omits श्रीशुकः 15. A.B. Omit पुराणम् 16. A.B. प्रापकं

पूर्व्येण प्रस्तावक्रमेण न प्रश्नक्रमेण आख्यातुं भागवताख्यानेनैव प्रश्नानामुत्तरं वक्तुमुपचक्रमे उपक्रान्तवान्।।२९।।

इति श्रीमद्भागवते द्वितीयस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां अष्टमोऽध्यायः।।८।।

**विज०** सूतस्तावत् मुनिसंसदि राज्ञा पृष्टः शुकः किं प्रावोचत् इति शौनकादिमुनीनां मानसीं शङ्कां परिहरति **स** इति। मुनिसंसदि विष्णुरातेन विष्णुदत्तेन परीक्षिता सतां ब्रह्मादीनां पत्युर्हरेः कथाया मित्युपामन्त्रितः सत्कृत्य व्याख्यातुं व्यापारितोऽत एव भृशं प्रीतो ब्रह्मरातः शुको भागवतं नाम पुराणं तत्प्रश्नोत्तरत्वेनाऽऽहेत्यन्वयः। "बालोऽपि स गुरुत्वेन मुनिभ्यो ब्रह्मणा यतः। दत्तोऽतो ब्रह्मरातेति नाम वैयासकेरभूत्" इति वचनात् शुकस्य ब्रह्मरातत्वं नान्यस्येति।।२७।।

आप्तिमूलत्वमाह ब्रह्मण इति। अतीतब्रह्मप्रलयानन्तरं ब्रह्मकल्पे ब्रह्मान्तरोत्पत्तिनिमित्ते प्राप्ते सति स्वपुत्राय ब्रह्मणे भगवता नारायणेन प्रोक्तमाहेति शेषः।।२८।।

परीक्षित्प्रश्नप्रतिवचनतया शुकेनोक्तम् उत अन्यद्यत्किञ्चिदिति शङ्कां परिहर्तुमाह -**यद्यत्** इति ।।२९।।

इति श्रीमद्भागवते महापुराणे पारमहंस्या संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
द्वितीयस्कन्धे अष्टमोऽध्यायः।।८।।

**रा०कृ०** इति पूर्वोक्तप्रकारेण सत्पतेः सतामीश्वरस्य भगवतः कथायां विष्णुरातेन भगवता विष्णुना रक्षितेन राज्ञा परीक्षिता उपामन्त्रितः प्रार्थनापूर्वकं पृष्टः सः ब्रह्मरातः भगवता ब्रह्मणा सुतत्वेन व्यासाय दत्तः शुकयोगी भृशं प्रीतस्सन् संसदि सभायां ब्रह्मसम्मितं वेदतुल्यं, ब्रह्मकल्पे सृष्टिप्रारम्भे उपागते पुरा ब्रह्मणे चतुर्मुखब्रह्मणे भगवत्प्रोक्तं भगवता उपदिष्टञ्च भागवतं नाम पुराणं प्राह प्रोक्तवान्।।२७,२८।।

पाण्डूनां पाण्डुवंश्यानां राज्ञां मध्ये ऋषभः श्रेष्ठः परीक्षित् यद्यत् अनुपृच्छति अनुपृष्टवान् तत् सर्वं तत्पृष्टं सर्वमपि आनुपूर्व्येण प्रस्तावक्रमानुसारेण आख्यातुं वक्तुं उपचक्रमे प्रारेभे।।२९।।

इति श्रीमद्भागवते द्वितीयस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां
व्याख्यायां अष्टमोऽध्यायः।।८।।

oooOooo

# नवमोऽध्यायः

**श्रीशुक उवाच**

**आत्ममायामृते राजन् परस्यानुभवात्मनः।**
**न घटेतार्थसम्बन्धः स्वप्न[1]द्रष्टु[2]रिवाञ्जसा॥१॥**

**बहुरूप इवाभाति मायया बहुरूपया।**
**रममाणो गुणेष्व[3]स्या ममाहमिति मन्यते॥२॥**

**यर्हि [4]वाव महिम्नि[5] स्वे परस्मिन् कालमाययोः।**
**[6]रमेत गतसम्मोहस्त्यक्त्वोदास्ते तदोभयम्॥३॥**

**आत्मतत्त्वविशुद्ध्यर्थं यदाह भगवानृतम्।**
**[7]ब्रह्मणे दर्शयन् रूपमव्यलीकव्रतादृतः॥४॥**

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

राजप्रश्नोत्तरं [8]वक्तुं ब्रह्मणे हरिणोदितम्। कथयामास नवमे शुको भागवतं पुनः॥१॥

तत्र यत्तावदुक्तं "यदधातुमत" इत्यनेन जीवस्य कथं देहसम्बन्धः? इति तत्रोत्तरमाह - **आत्ममायामिति**। आत्मनो हरेर्मायामन्तरेण अनुभवरूपस्यात्मनोऽर्थेन दृश्येन देहादिना सम्बन्धः अञ्जसा तत्त्वतो न घटेत। [9]तत्र हेतुः - परस्येति। स्वप्नद्रष्टुर्यथा स्वप्नदे[10]हसम्बन्धो न घटते तद्वत्॥१॥

[11]तस्मात् संसारोऽपि माययैवेत्य[12]र्थः। [13]अत एव अनेकरूपत्वं भजतीत्याह - **बहुरूप** इति। बहुरूपो बालयुवादिरूपो देवनरादिरूपश्चाभाति गुणेषु देहादिषु॥२॥

अत एव भक्तियोगेन तन्निरासे सति मोक्षोऽपि घटत इत्याह - **यर्हीति**। वाव शब्दः एवार्थे। स्वे एव महिम्नि यदा रमेत त[14]देवाऽऽह। कालमाययोः पुरुषप्रकृत्योः परस्मिन् तदा उभयम् "अहं मम" इति च त्यक्त्वा उदास्ते [15]पूर्णरूपेणावतिष्ठते। तदुक्तम्- "यया सम्मोहितो जीव आत्मानं त्रिगुणात्मकम्। परोऽपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते॥ अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे। लोकस्याजानतो [16]विद्वांश्चक्रे सात्वातसंहिताम्" इति॥३॥

---

1 M.Ma.°प्रे 2. H.V. °यंथाञ्ज° 3. C N. °स्यां 4. M.Ma. चायं, W. वाऽयं 5. M.Ma. °त्वे स्वे 6. M.Ma. रमते 7. M.Ma. °णेऽदर्शयद्° 8. A.B. वक्ष्यन् 9. A. अत्र 10. °हादिना स° 11. A B. Omit तस्मात् 12. A.B. °त्याह 13. A.B. Omit अत एव......रूप इति। 14. H.V. °मे° 15. B. परिपूर्ण रू° ; H.V. पूर्णस्वरू° 16. H.V. व्यासश्च°

यच्चोक्तम् - परमेश्वरस्यापि देहसम्बन्धाविशेषात् कथं तद्भक्त्या[1] मोक्षःस्यात्? इति "आसीद्यदुदरात् पद्मम्" इत्यादिना तत्राऽऽह - **आत्मेति**। आत्मनो जीवस्य तत्त्वविशुद्ध्यर्थं तत्त्वज्ञानार्थं[2] तद्भवत्येव। किं तत्? यत्तप इत्यादिना[3] स्वभजनं[4] भगवान् ब्रह्मणे आह। किं कुर्वन्? ऋतं सत्यं चिद्घनं रूपं दर्शयन्, दर्शने हेतुः - अव्यलीकेन व्रतेन तपसा आदृतः सेवितस्सन्। भगवान्[5] उत्पत्तिविनाशादिषड्गुणैश्वर्यशाली यदाह तद्वक्ष्यामीति शेषः। अयं भावः - जीवस्य अविद्यया मिथ्यारूपदेहसम्बन्धः। ईश्वरस्य तु योगमायया चिद्घनलीलाविग्रहाविर्भाव इति महान् विशेषः। अतः तद्भजनात् मोक्षोपपत्तिरिति।।४।।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ राज्ञः प्रश्नानामुत्तरं वक्तुं भागवताख्यानमारप्स्यमाणः तावत् जीवस्य देहारम्भः सहेतुको निर्हेतुको वेति प्रश्नस्य जीवदेहतुल्यपरिणामावयवत्त्वेन जीवतुल्यत्वप्रयुक्ताभजनीयत्वामोक्षप्रदत्वप्रश्नस्य मुक्त्वा आत्ममायां यत्र शेते तं च देशं कथयस्वेति प्रश्नस्य चोत्तरं नवमेनाध्यायेनोच्यते - तत्र सहेतुकत्वनिर्हेतुकत्वप्रश्नस्योत्तरं वदन् त्रिपाद्विभूतिविशिष्टस्य भगवतः कालमायावश्यत्वाभावं वक्तुं संसारिचेतनानां कालमायावश्यत्वमाह **आत्मेति**। अनुभवात्मनः अनुभवो ज्ञानं, तदात्मा स्वरूपम् यस्य तस्य अत एव परस्य देहादिभ्यो विलक्षणस्य जीवस्यार्थसम्बन्धः। भोग्यभूतशब्दादिविषयेषु भोक्तृतया सम्बन्धः। आत्ममायां परमात्मनियाम्यां मायां प्रकृतिं ऋते विना अञ्जसा सामीचीन्येन न घटेत न सङ्गच्छेत। तत्र दृष्टान्तः - स्वप्नद्रष्टुरिवेति। यथा स्वप्नद्रष्टुः "न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथःसृजते, कामं कामं पुरुषो निर्मिमाणः" इति श्रुत्युक्तरथादिपदार्थसम्बन्धः तदर्थं भगवन्मायामृते नोपपद्यते तद्वदित्यर्थः। प्रकृतितिरोहितस्वपररूपत्वात् प्राकृतेषु भोग्यबुद्धिरित्युक्तं[6] भवति। एवं च प्रकृत्या तिरोहितस्वरूपत्वमेव[7] देहारम्भे हेतुरित्यहेतुकत्वं निरस्तं भवति[8]।।१।।

उक्तं विवृणोति **बह्विति**। बहुरूपया विचित्रपरिणामिन्या भगवन्मायया तिरोहितज्ञानानन्दस्वरूपो जीवः देवमनुष्याद्याकारमात्मन्यारोप्य, बहुरूप इव आभातीत्यर्थः[9]। अस्या मायाया गुणेषु सत्त्वादिगुणकार्येषु शब्दादिषु रममाणः शब्दादीन् भुञ्जानो ममाहमिति मन्यते। अहङ्कारममकाराभ्यां बद्धो भवतीत्यर्थः।।२।।

जीवप्रस्तावाद्यवस्थानं स्वरूपत इति जीवविषयप्रश्नान्तरस्योत्तरं वदन् सन्[10] स्वरूपसाक्षात्कारे सति शब्दादिप्रावण्यनिवृत्तिरित्याह - **यर्हीति**। यर्हि यदा मुक्ता वित्यर्थः। स्वे स्वाभाविके कालमाययोः

---

1. B. Omits तत् 2. A. Omits तत्त्वज्ञानार्थं 3. A.B. Omit इति 4. A. adds भजते 5. A.B. Omit भगवान्.. ..शेषः। 6. A B. Omit उक्तं
7. A.B. "स्वपररूप" 8. W. Omits भवति 9. A.B. Omit आ 10. W. Omits सन्

परस्मिन् कालमायाकार्यासंसृष्ट[1] महिम्नि अपहतपाप्मत्वादि सत्यसङ्कल्पत्व[2]पर्यन्तगुणाष्टकलक्षणे परमात्मशेषतैकरसस्य स्वात्मनो महिम्नि; यद्वा कालमाययोः परस्मिन्नियन्तरि महिम्नि उक्तविधपरमात्म महिम्नि। महिम्नो नियन्तृत्वं महिमवद्द्वारा। रमेत [3]कथं रमेत? गतसम्मोहः निवृत्ताहङ्कारममकारः तदोभयं प्रकृतिकालवश्यत्वं त्यक्त्वा हित्वा उदास्ते शब्दादिषु भोग्यसिद्धार्थप्रवृत्तिशून्यो भवतीत्यर्थः। अनेन आविर्भूतगुणाष्टकविशिष्टत्वेन अवस्थितिरेव स्वरूपतो व्यवस्थानं तादृशस्वरूपस्यापि स्वात्मनः आत्मभूतनिरतिशयानन्दपरब्रह्मानुभवः परब्रह्मशरीरभूतत्वेन स्वात्मानुभवो वा शब्दादिप्रावण्यनिवर्तक इति चोक्तं भवति।।३।।

यच्चोक्तं भगवतो[4]ऽपि जीववत् देहसम्बन्धाविशेषात् कथं तद्भजनेन मुक्तिरिति तस्योत्तरम्। कालमायावश्[5]यस्य जीवस्य कर्माधीनः प्राकृतो देहः, ईश्वरस्य तु अप्राकृतस्वेच्छोपात्तदिव्य[6]मङ्गलविग्रहवत्वमित्येवं [7]रूपं वक्ष्यन् कालमायावश्यजीव[8]विलक्षण भगवत्स्वरूपविशोधनं कथं ज्ञायत इत्यत्राऽऽह - **आत्मतत्त्वेति**। अव्यलीकव्रतादृतः निर्दिष्टव्रतेन आदृतः आराधितः भगवान् ब्रह्मणे चतुर्मुखाय रूपमप्राकृतं स्वीयं रूपं दर्शयन्नात्मतत्त्वविशुद्ध्यर्थं जीवविलक्षण परमात्म याथात्म्य विशोधनार्थं ऋतं सत्यं यद्वचनमाह, तद्वक्ष्यामीति शेषः। अदर्शयद्रूपमिति पाठे यथा अदर्शयत् तथा आहेत्यर्थः।।४।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

चतुर्मुखस्य भगवदनुग्रहेण तल्लोकदर्शनं तेन विनाभूतं तत्स्वरूपदर्शनं प्रकृतिजीवयो स्तदधीनत्वमित्यादिमाहात्म्यवर्णनेन हरेः हृदयद्रवीभावहेतुः भक्तिरेवेत्यतः सा हरौ कर्तव्या इत्यस्मिन्नध्याये प्रतिपाद्यते, तत्राऽऽदौ 'यदधातुमत' इत्यस्योत्तरं वक्ति **आत्ममायामिति**। परस्य धातुशब्दवाच्यार्थेभ्यः प्रकृत्यादिभ्यो व्यतिरिक्तस्यानुभवात्मनो ज्ञानात्मनोऽत एव स्वतोऽशरीरस्य जीवस्यात्ममायां हरेरिच्छां तदधीनां सत्त्वादिगुणरूपां प्रकृतिं च ऋते विना अर्थसम्बन्धो देहादिसम्बन्धो न घटेत। तथा स्वप्ने करितुरगादिपदार्थानां द्रष्टुः जीवस्य भगवदिच्छानियतैः वासनोद्बोधकैः रजस्तमोभावैः ऋते स्वाप्नपदार्थसम्बन्धः करितुरगादिदर्शनं न युज्यते। तस्माददेहस्य जीवस्य देहसम्बन्धे भगवदिच्छा प्रथमहेतुः, द्वितीया स्वगुणैस्सह प्रकृतिरित्युत्तरम्। अञ्जसा इत्यनेन "अशरीरस्य जीवस्य शरीरोत्पत्तिकारणम्, ईश्वरेच्छा प्राथमिकी तां विना न हि किञ्चन" इत्यादिप्रमाणं सूचयति। यद्वा अञ्जसा इदमेव तत्त्वं स्वप्नस्यार्थक्रियाकारित्वेन सत्यत्वात् असत्यस्य तदयोगात् नात्र अघटितघटनापटीयसी अनिर्वाच्यलक्षणा मायोच्यते किन्त्वीश्वरेच्छैव "सूचकश्च हि श्रुतेराचक्षते च तद्विदः"(ब्र.सू.3-2-4) इति सूत्राच्चेति। "अञ्जसा त्वरिते तत्त्वे" (वै.को.8-7-31) इति यादवः।।१।।

---

1. A.B. "स्पृष्टे न" 2. W. Omits "त्व" 3. A.B. Omit कथं रमेत? 4. W. "तः जी" 5. A.B. "श्यजी" 6. A.B. Omit "मङ्गल" 7. A.B. Omit "रूपं 8. W. Omits "वि"

नन्वशरीरस्य जीवस्य भगवदिच्छानियतैः प्रकृतेः गुणैः देहारम्भः कथमत्राऽऽह- **बहुरूप** इति। ईशेच्छया अनादित एवास्याः प्रकृतेर्गुणेषु मृद्धट इतिवत् गुणकार्येषु देहेन्द्रियेषु च रममाणः सत्त्वादि गुणात्मकलिङ्गशरीरबद्धतया वर्तमानः सृष्टिकाले महदहङ्कारादिपञ्चभूतोपादानकत्वेन मानुषदेवासुर-शरीरादिबहुरूपत्वेन बहुरूपतया विकृततया प्रकृत्या सह स्वयमविकृतोऽपि तदभिमानाद्विकृतत्वेन आत्मानं च मन्यमानो बहुरूप इव मानुषादिरूप इवाभाति "अहं मनुष्योऽहं देव" इत्यात्मानं मन्यते, देहे दैहिकेषु त्रिगुणसम्पातजया अहंमत्या 'अहं मम' इति मन्यते चेत्यर्थः। तदुक्तम् - "तेषां सम्पातजो भावो ममाहमिति या मतिः" इति, "तस्मात् प्रकृत्यैव पुमान् मानुषादिविकारया। मानुष्यादिरिवाभाति नित्यं चैतन्यरूपवान्" इति च। तस्मादीशेच्छया नियतत्रिगुणात्मकलिङ्गशरीरेऽहंमानात् तन्मूलतया धातुभिर्देहारम्भो युक्त इति भावः।।२।।

एवं बन्धप्रकारमुक्त्वा ततोऽधुना जीवस्य मुक्तिप्रकारमाह - **यर्हीति**। चशब्दः एवार्थे। यर्हि यदाऽयं जीवो वैराग्यादिसाधनसामग्र्या समुत्पन्नभगवज्ज्ञानेनापरोक्षितनिजस्वरूपः कालमाययोः काल-प्रकृत्योः परस्मिन् विलक्षणे तच्छक्तिसंसर्गरहिते स्वे महित्वे सच्चिदानन्दलक्षणस्वरूपे रमते चाव्यवधा-नेन रमत्येव। स्वस्वरूपे तदागतसम्मोहो निरस्ताविद्यातत्कार्ये। उभयं वार्धक्याद्यापादकां मायां देहार-म्भहेतुभूतां च तन्मूलं संसारं त्यक्त्वेति यावत्। उदास्ते उत्कृष्टो वर्तते, नीचत्वापादकात् संसारात् मुक्तो भवतीत्यर्थः। तदुक्तम् - "यदा स्वरूपं जानाति कालप्रकृतिवर्जितम्। वासुदेवप्रसादेन तदा मुक्तो भव-त्यसौ।।" इति। अनेन सागुण्यं त्यक्त्वा नैर्गुण्यमाप्नोतीत्यपव्याख्यानमपास्तं तत्र प्रमाणाभावादिति।।३।।

अत्रापि किं प्रमाणमित्याशङ्क्य भगवदुक्तं भागवतमेवैतादृशमोक्षप्रमाणामित्याह - **आत्मेति**। आत्मनः परमात्मनो जीवस्य वा यत्तत्वमनारोपितं सच्चिदानन्दलक्षणरूपं तस्य विशुद्ध्यर्थं निर्दोषत्वेन निश्चयार्थमनुभवार्थं वा व्यासो भवान् यद्भागवतं पुराणमाह तदेतम्। यथोक्तं मुक्तिसाधनं ज्ञानसाधनं शास्त्रम्। न व्यामोहकमतो भगवदुक्तत्वेनोक्तमुक्तौ प्रमाणत्वात् त्वत्प्रश्नानामुत्तरत्वेन वदिष्यामीति शेष इत्यर्थः। प्रथमं तावत् पाद्मकल्पं विवक्षुः "ददृशे येन तद्रूपम्" इति प्रश्नं प्रतिवक्ति ब्रह्मण इति। अव्यलीकेन प्रियत्वेन प्रसन्नताहेतुना व्रतेन भक्तिलक्षणेनादृतोऽर्चितः स हरिः स्वनाभिपद्मात् उत्पन्नाय ब्रह्मणे चतुर्मुखाय रूपमदर्शयन्निजमिति शेष इत्यन्वयः।।४।।

## श्रीराधाकृष्णप्रणीता सुधीसुधा

हे राजन्! आत्ममायां परमात्मनो मायां सङ्कल्पात्मिकां ऋते विना परस्य शरीरादि विलक्षणस्य अनुभवात्मनः ज्ञानस्वरूपस्य जीवस्य स्वप्नद्रष्टुरिव स्वप्नद्रष्टुः पुरुषस्येव अर्थसम्बन्धः अर्थेन दृश्येन शरीरादिना सम्बन्धः अञ्जसा याथार्थ्येन न घटेत न सङ्गच्छेत।।१।।

बहुरूपया देवमानवादिरूपेण बालतरुणादिरूपेण च परिवर्तमानया मायया हेतुना तत्प्रविष्टो जीवोऽपि बहुरूप इव आभाति। अपि चास्याः मायायाः गुणेषु गुणकार्येषु शब्दस्पर्शादिविषयेषु रममाणः आसक्तिमान् स जीवः मम मदीयोऽयं देहादिः अहं देहादिरिति च मन्यते।।२।।

यर्हि वाव यदैव जीवः कालमाययोःपरस्मिन् नियामके स्वे महिम्नि स्वपरमार्थस्वरूपे ब्रह्मभावे रमेत तदेकरूपतया सर्वेन्द्रियव्यापारं तन्मयं कुरुते तदा गतसम्मोहः उभयम् अहङ्कारममकारद्वयं त्यक्त्वा उदास्ते उदासीनो भवति। पूर्णस्वरूपेणावस्थिततत्वात् संसारविमुक्तो भवतीति भावः।।३।।

अव्यलीकव्रतादृतः अव्यलीकेन निष्कपटेन व्रतेन तपोरूपेण व्रतेन आदृतः आराधितः, ऋतं सत्यं परमार्थभूतं रूपं सच्चिदानन्दस्वरूपं दर्शयन् भगवान् आत्मतत्त्वविशुद्ध्यर्थं आत्मतत्त्वज्ञानार्थं ब्रह्मणे यत्साधनमाह तद्वक्ष्यामीति शेषः।।४।।

**स आदिदेवो जगतां[1] परो गुरुः स्वधिष्ण्यमास्थाय सिसृक्षयैक्षत।**
**तां नाध्यगच्छद्दृशमत्र सम्मताम् प्रपञ्चनिर्माणविधिर्यया भवेत्।।५।।**

**स[2] चिन्तयन् द्व्यक्षरमेकदाम्भस्युपाशृणोत् द्विर्गदितं वचो विभुः।**
**स्पर्शेषु यत्षोडशमेकविंशं निष्किञ्चनानां नृप यद्धनं विदुः।।६।।**

**निशम्य तद्वक्तृ[3]दिदृक्षया दिशो विलोक्य तत्रान्यदपश्यमानः।**
**स्वधिष्ण्यमास्थाय विमृश्य तद्धितं तपस्युपादिष्ट इवादधे मनः।।७।।**

**दिव्यं सहस्राब्दममोघदर्शनो जितानिलात्मा विजितोभयेन्द्रियः।**
**अतप्यत स्माखिललोकतापनं तपस्तपीयांस्तपतां समाहितः।।८।।**

**श्रीध०** भगवद्भजनादेव तत्त्वज्ञानमित्येतत्प्रपञ्चयिष्यन् ब्रह्मणोऽपि तत्त्वज्ञानं[4] तत्प्रसादादेवेति दर्शयितुमितिहासमाह **स** इत्यादिना। परो गुरुः भक्ति[5]रहस्योपदेष्टा स्वधिष्ण्यम् पद्ममास्थाय[6] अधिष्ठाय[7] तस्य अधिष्ठानान्वेषणाय पूर्वं जले निमग्नः पश्चात्[8] परावृत्य स्वधिष्ण्ये[9] स्थित्वा इत्यर्थः। ऐक्षत तत्कथम्[10] स्रष्टव्यमित्यालोचितवान्। तां दृशं प्रज्ञाम्। अत्र सृष्टिविषये सम्मतामव्यभिचारिणीम्। यया[11] दृशा विधिः प्रकारः।।५।।

---

1. H.M.Ma.V. भजतां 2. M.Ma.W. संचि° 3. C.N. °वक्त्र° 4. H.V. Omit तत्त्वज्ञानं 5. H.V. °क्तेः र° 6. B. Omits आस्थाय 7. V. Omits अधिष्ठाय तस्य 8. A. Omits पश्चात् 9. B. स्वाधिशये 10. H.V. °एतत्क° 11. A. Omits यया दृशा

**स** इति। सृष्टिं चिन्तयन् कदाचित् द्व्यक्षरं वचोऽम्भसि उपाश्रुणोत् उप समीपे श्रुतवान्। ते अक्षरे दर्शयति। कादयो मावसानाः स्पर्शाः तेषु यत् षोडशं तकारो यश्चैकविंशं पकारः वचसो निर्देशार्थं तदर्थमाह। हे नृप! निष्किञ्चनानां त्यक्तधनानां धनं यद्विदुः येन तपोधना इति प्रसिद्धाः। तच्च द्विर्गदितं तपतपेति लोण्[1]मध्यमपुरुषैकवचनम्। तस्य वीप्सां [2]आदरेण साधनविधिरूपां अशृणोदित्यर्थः।।६।।

**निशम्येति**। एवं निशम्य तस्य वचसो वक्तुर्दिदृक्षया ततःप्रचलितस्सन् दिशो विलोक्य पुनः स्वधिष्ण्यमास्थाय केनचित् प्रत्यक्षं नियुक्त इव तच्चात्मनो हितं [3]विहितं विमृश्य तपसि मनो धृतवानित्यर्थः।।७।।

**दिव्यमिति**। ततश्च[4] स ब्रह्मा[5]ऽखिलानां लोकानां तापनं प्रकाशकं तपोऽतप्यतस्म[6] कृतवान्। तपतपेत्ये[7]तस्य वचसोऽर्थे अमोघं दर्शनं यस्य। जितोऽनिलः आत्मा मनश्च येन विजितान्युभयेन्द्रियाणि ज्ञानकर्मा[8]त्मकानि येन। तपतां तपश्चरतां मध्ये तपीयान् अतिशयेन तपस्वी।।८।।

**वीर०** आत्मतत्त्वविशोधकं भगवदुक्तमेव उपपादयितुं इतिहासमाह **स** इति। जगतां व्यष्टिभूतानां परः प्रभुः गुरुः धर्मोपदेष्टा च आदिदेवः चतुर्मुखः स्वधिष्ण्यं भगवन्नाभिपद्मरूपं स्थानमास्थाय [9]अधिष्ठाय तस्य अधिष्ठानस्यान्वेषणाय पूर्वं जले निमग्नः पश्चात् परावृत्य स्वधिष्ण्ये स्थित्वेत्यर्थः। सिसृक्षया स्रष्टुमिच्छया ऐक्षत कथं स्रष्टव्यमित्यालोचितवान्। एवमीक्षमाणे ब्रह्मा यया दृष्ट्या प्रपञ्चनिर्माणविधिः जगद्रचनाप्रकारः भवेत् ज्ञातो भवेत्। अत्र सृष्टिविषये सम्मतां तां दृशं प्रज्ञां नाध्यगच्छत् न प्राप्तवान्।।५।।

**सञ्चिन्तयन्निति**। [10]सञ्चिन्तयन् प्रज्ञाप्राप्त्युपायं चिन्तयन्नेकदा कदाचित् द्विर्गदितं द्विरुक्तं द्व्यक्षरं वचः अम्भसि जले उपाशृणोत् उप समीपे श्रुतवान्। ते अक्षरे दर्शयति - "कादयो मावसानाः स्पर्शाः" तेषु यत् षोडशं तकारः यश्चैकविंशं पकारः व[11]चसो निर्देशार्थं तदर्थमाह - हे नृप! निष्किञ्चनानां त्यक्तधनानां धनं यद्विदुः येन तपोधना इति प्रसिद्धाः, तच्च द्विर्गदितं तपतपेति लोण्मध्यमपुरुषैकवचनम्। तस्य वीप्सां सादरविधिरूपामश्रुणोदित्यर्थः।।६।।

**निशम्येति**। तप तपेति वचो निशम्य श्रुत्वा तस्य वचसो यो वक्ता [12]तस्य दिदृक्षया द्रष्टुमिच्छया ततः प्रचलितस्सन् दिशो विलोक्य तत्र दिक्षु अन्यत् वस्त्वन्तरं अपश्यमानः पुनः स्वधिषण्यमास्थाय उपदिष्ट इव केनचित् प्रत्यक्षं नियुक्त इव तच्चात्मनो हितं विमृश्य तपसि मनः चित्तमादधे धृतवान्।।७।।

---

1. B. °टो म° 2. A.B. आदर° 3. A.B. Omit विहितं 4. B. Omits च 5. B. Omits ब्रह्मा 6. B. Omits स्म 7. B.H.V. °त्यस्य 8. H.V. °र्माणी 9. A.B. Omit अधिष्ठाय तस्य 10. A.B. Omit संचिन्तयन् 11. W. °चो निर्दे° 12. W. तद्दिद°

ततश्च स ब्रह्मा अखिललोकानां तापनं प्रकाशनं यस्मात्, तथाभूतं तपःदिव्यं सहस्राब्दं[1] देवमानेन सहस्रवर्षपर्यन्तं अतप्यतस्म[2] तपःकृतवान्[3]। कथं भूतोऽतप्यत? तपतां तपश्चरतां मध्ये तपीयान् अत्यन्ततपस्संयुक्तः अमोघदृष्टिः स्वचरितव्ये तपसि अव्यर्था दृष्टिः। सङ्कल्परूपज्ञानं यस्य सः। जितः अनिलः प्राणवायुः[4] आत्मा मनश्च येन सः। विजितान्युभयेन्द्रियाणि ज्ञानकर्मात्मकानि येन सः। एवम्भूतोऽतप्यतेत्यर्थः[5]। स्मेति[6] प्रसिद्धौ।।८।।

**विज०** एतदेव विवृणोति **स** इति। भजतां सनकादीनां स्वधिष्ण्यं नाभिकर्णिकास्थानमैक्षत अचिन्तयत्। यया दृशा अत्र प्रपञ्चनिर्माणे।।५।।

ततः किम्? अत्राऽऽह - **संचिन्तयन्निति**। कथं नु सृष्टिविषया दृष्टिः स्यादिति सञ्चिन्तयन् विभुर्ब्रह्मा द्वे अक्षरे यस्मिंस्तत् द्व्यक्षरं वचः अक्षरयोः स्वरूपं लक्षयति - स्पर्शेष्विति। ककारादि मकारान्तेषु स्पर्शेषु यत् षोडशमक्षरं तकारः, एकविंशं पकारः तद्रूपं वच इति यावत् तद्वाच्यं स्पष्टं लक्षयति - निष्किञ्चनानामिति। निष्किञ्चनानां परमहंसानां यद्धनं विदुः तद्वाच्यं वचनं तपोलक्षण-मित्यर्थः। "कादयो मावसानाः स्पर्शाः"।।६।।

किमनेन निरणायि इति तत्राऽऽह - **निशम्येति**। ब्रह्मा तद्वचो निशम्य श्रुत्वा येन एतद्वच उक्तं, तद्वक्तृदिदृक्षया दशदिशो विलोक्य तत्र तासु दिक्षु अन्यदपश्यमानः पद्मनालनाडीभिराविश्य अन्विष्य दृष्ट्वा स्वधिष्ण्यं पद्ममेव आस्थाय अध्यास्य तद्वचः तच्छ्रुतम् वचः आत्मनो हितं हितसाधनं विमृश्य अहं मज्जनकेन प्रपञ्चनिर्माणोपाये तव तपो न पूर्यते, तस्मात् पुनस्त्वया तपः कर्तव्यम्। तपेति वा तपस्युपादिष्ट आज्ञप्तोऽस्मीति वा आलोच्य तपसीव तपस्येव मन आदधे इत्यन्वयः।।७।।

विमर्शफलमाह - **दिव्यमिति**। अखिललोकतापनमखिललोकप्रकाशनं तपो ज्ञानरूपं ब्रह्मातप्यत आलोचयामास दध्याविति यावत्। "तपोरूपं परं ब्रह्म ब्रह्माचिन्तयदञ्जसा"। इति जितमनस्कत्वादि सर्वसाधरणमित्यतो विशिनष्टि - तपीयानिति। तपतां तपीयान् अत्युत्तमोत्तमः "द्विवचन विभज्योपपदे तरबीयसुनौ" इत्युत्तमार्थत्वे ईयसुन्। किं प्रमाणमित्यत उक्तं स्मेति। "स्मृतौ वृत्तौ निषेधे स्म" इत्यभि-धानात्। अनेन "महान् महीयसामादिं ब्रूयादत्युत्तमोत्तमम्" इत्येतत्सूचयति। विजितोभयेन्द्रियत्वाद्यपि तपद्ध इतरेभ्यः आधिक्यसूचनाय उक्तमिति ज्ञातव्यम्। "यत्राधिकं वदेत् किञ्चित् ज्ञेयोऽर्थस्तत्र चाधिकः" इति वचनात्। अन्यथा तपोऽतप्यत इत्येतावदेवालम्। अतः उभयेन्द्रियजयोऽपि ब्रह्मणः औत्पत्तिको गुणः "पराञ्चि खानि व्यतृणत्स्वयम्भूः" (कठ.उ.2-1-1) इति श्रुतेः। हरिमन्तरेण अमोघदर्शनत्वं चास्यैवाधिकं - "प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव" इति श्रुतेः।।८।।

---

1. W. 'स्राब्दप' 2. A.B. Omit स्म 3. A.B. Omit तपः......ऽतप्यत 4. W. Omits प्राण्वायुः 5. W. 'त स्मेत्यर्थः 6. W. Omits स्मेति प्रसिद्धौ

**रा०कृ०** जगतामादिदेवः आद्यः स्रष्टा परो गुरुः सर्वज्ञानोपदेशकः सः ब्रह्मा स्वधिष्ण्यं भगवन्नाभिकमलरूपं स्वस्थानम् आस्थाय प्राप्य यद्यपि भगवन्नाभिकमलरूपस्थानस्थित एव ब्रह्मा, तथाऽपि 'स्वधिष्ण्यमास्थाय' इत्युक्त्या ब्रह्मा पुरा स्वाधिष्ठानगवेषणार्थं जले निमग्नः, तत्र तदधिष्ठानमलब्ध्वा ततः परावृत्य तन्नाभिकमलरूपं स्वधिष्ण्यं प्राप्तवानिति पूर्वेतिहासोऽत्र अनुसन्धेयः। सिसृक्षया जगत्स्रष्टुमिच्छया ऐक्षत कथं वा सृष्टिः कर्तव्या - इत्यचिन्तयत्। तथाऽपि यया दृशा प्रपञ्चनिर्माणविधिः जगत्सृष्टिप्रकारो भवेत्। अत्र प्रपञ्चनिर्मणविषये सम्मतां योग्यां तां दृशं प्रज्ञां नाध्यगच्छत् न प्राप्तवान्। अनन्ता सत्ता एवात्र जलपदेन व्यपदिश्यते। तत्र स्वाधिष्ठानमन्विष्यतो ब्रह्मणः तदलभ्यमेव, सत्तायाः आदिमध्यान्तशून्यत्वात्। ततश्च तदन्वेषणप्रयत्नमपहाय ब्रह्मा स्वस्थानाय प्रतिनिवृत्तः आत्मानं सकल- सङ्कल्पनिलयभगवन्नाभिकमलस्थमेवापश्यत्। इयमेव सर्वज्ञानोपदेशकस्य ब्रह्मणः स्वधिष्ण्यप्राप्तिः इत्युच्यते।।५।।

हे नृप! यत् द्यक्षरं वचः निष्किञ्चनानां तपस्विनां धनं विदुः जानन्ति कथयन्तीति भावः। किञ्च यद्वचः स्पर्शेषु कादिषु मावसानेषु स्वर्शाक्षरेषु षोडशं तंरूपं, एकविंशं परूपं च तप इति लोण्मध्यमपुरुषैकवचनान्तं पदं भवतीति भावः। तत् द्विर्गदितं द्विरुक्तं द्यक्षरं तप रूपं वचः सः विभुः ब्रह्मा चिन्तयन् प्रपञ्चनिर्माणावश्यकप्रज्ञाप्राप्त्युपायमालोचयन्, एकदा अम्भसि जले उपाशृणोत् समीपे श्रुतवान्।

ब्रह्मणः प्रपञ्चनिर्माणावश्यकप्रज्ञाप्राप्त्युपायचिन्तनमेव तपोरूपेण परिणतमभूदिति भावः।।६।।

निशम्य तप तपेति वचनमाकर्ण्य। तद्वक्तृदिदृक्षया तस्य वचसो यो वक्ता तस्य दर्शनेच्छया दिशः विलोक्य तत्र दिक्षु अन्यद्वस्तु अपश्यमानः अपश्यन् स्वधिष्ण्यमास्थाय तद्वचनं हितमात्मनो हितं विमृश्य मत्वा उपादिष्ट इव केनचिदादिष्ट इव तपसि मनः आदधे कृतवान् तपः कर्तुं निरणैषीदिति भावः।।७।।

जितानिलात्मा जितप्राणवायुमानसः विजितोभयेन्द्रियः विजितानि वशीकृतनि उभयेन्द्रियाणि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च येन तथाभूतः तपतां तपः कुर्वतां मध्ये तपीयान् श्रेष्ठः तपस्वी। अमोघदर्शनो ब्रह्मा समाहितः सावधानस्सन् अखिललोकतापनं सर्वलोकानां प्रकाशकम् आविर्भावनिदानमित्यर्थः। तपो दिव्यं सहस्राब्दं दिव्यसहस्रसंवत्सरपर्यन्तं अतप्यतस्म कृतवान्।

प्राणायामसाहाय्येन इन्द्रियवृत्तीः वशीकृत्य अवस्थानं तपः। द्वात्रिंशदुत्तरचतुश्शतकोटि मानवसंवत्सरपरिमितकालो ब्रह्मणः एकं दिनं भवति। तादृशदिनैः षष्ट्युत्तरत्रिशतपरिमितैः ब्रह्मणः संवत्सरः एकः सम्पद्यते। तादृशसंवत्सरसहस्रपर्यन्तं ब्रह्मा तपश्चक्रे।।८।।

**तस्मै स्व[1]लोकं भगवान् सभाजितस्सन्दर्शयामास परं न यत्परम्।**
**व्यपेतसं[2]क्लेशविमोहसाध्वसं स्वदृ[3]ष्टवद्भिर्वि[4]बुधैरभिष्टुतम्।।९।।**

**[5]प्रवर्तते यत्र रजस्तमस्तयोः सत्त्वं [6]च मिश्रं न च कालवि[7]क्रमः।**
**न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः।।१०।।**

**श्यामावदाताश्शतपत्रलोचनाः पिशङ्गवस्त्रास्सुरुचस्सुपेशसः।**
**सर्वे चतुर्बाहव उन्मिषन्मणिप्रवेकनिष्काभरणास्सुवर्चसः**
**प्रवालवै[8]दूर्यमृणालवर्च[9]सः परिस्फुरत्कुण्डलमौलिमालि[10]नः।।११।।**

**भ्राजिष्णुभिर्यः परितो विराजते लसद्विमानावलिभिर्महात्मनाम्।**
**विद्योतमानः प्रमदोत्त[11]माद्युभिः सविद्युदभ्रावलिभिर्यथा नभः।।१२।।**

**श्रीध० तस्मै** इति। तस्मै ब्रह्मणे स्वलोकं वैकुण्ठाख्यं परं श्रेष्ठम्। न यत्परं यतः परं उत्कृष्टं अन्यत् नास्ति। तमेव लोकमनुवर्णयति पञ्चभिः। व्यपेताः संक्लेशादयो यस्मात्। स्वदृष्टवद्भिः [12]सत्पुण्यवद्भिः। यद्वा स्वस्य दृष्टं दर्शनमस्ति येषां [13]तैः। आत्म[14]विद्भिरित्यर्थः।।९।।

**प्रवर्तत** [15]इति। तयोरिति ताभ्यां मिश्रं सत्त्वं च न प्रवर्तते। किन्तु शुद्धमेव सत्त्वम्। कालविक्रमो नाशः, अपरे रागलोभादयो न सन्तीति [16]किमु वक्तव्यम्। अनुव्रताः पार्षदाः।।१०।।

**श्यामेति**। श्यामाश्च ते अवदाताः उज्ज्वलाश्च पद्मनेत्राश्च[17]। पीताम्बराः सुरुचः अतिकमनीयाः सुपेशसोऽतिसुकुमाराः। उन्मिषन्त इव प्रभावन्तो मणिप्रवेका मण्युत्तमा येषु तानि निष्काणि [18]पदकान्याभरणानि च येषां ते। सुवर्चसोऽतितेजस्विनः। प्रवालादिवद्वर्चो वर्णो येषां ते। [19]परितः स्फुरन्ति कुण्डलानि मौलयो मालाश्च सन्ति येषां ते।।११।।

पार्षदाननुवर्ण्य पुनरपि लोकमनुवर्णयति **भ्राजिष्णुभिरिति**। भ्राजिष्णुभिः देदीप्यमानाभिः। प्रमदोत्तमानां दिवः कान्तयः ताभिः विद्योतमानः सह विद्युद्भिः वर्तमानाः सविद्युतः ताभिरभ्रावलिभिः तत्र विद्युत इव स्त्रियः अभ्रपङ्क्तयः इव विमाना[20]वलयः। नभ इव लोकः।।१२।।

---

1 W न्ऱृ॰ 2. M.Ma. संद॰ 3. I. ॰द्भिः पुरुषै॰ 4. W. ॰धिष्ठितं 5. M.Ma. न वर्तं॰ 6. W. न 7. AF.GF. ॰भ्र॰ 8. H.V. ॰दू॰ 9. M.Ma. ॰सां 10 M.Ma. ॰णाम् 11. M.Ma. ॰माभि 12. B. Omits सत्पुण्यवद्भिः 13. H.V. Omit तैः 14. H.V. ॰वे॰ 15. A.B. Omit इति 16. B. किमुत 17. A.B. Omit च 18. H.V. पद्मानि पताकान्याभ॰ 19. B.H.V. परिस्फु॰ 20. B.H.V. ॰नानि

**वीर०** सभाजितः तपसा सम्यगाराधितो भगवान् परमन्यत् यद्यस्मात् परमुत्कृष्टं नास्ति तथाभूतं लोकं तस्मै चतुर्मुखाय सन्दर्शयामास। तमेव लोकं वर्णयति पञ्चभिः। व्यपेतसंक्लेशविमोहसाध्वसं संक्लेशाः अविद्यादयः साध्वसं भयम्। व्यपेताः संक्लेशादयो यस्मात् तम्। स्वदृष्टवद्भिः स्वशरीरकपरमात्मानमनुभवद्भिः विबुधैर्विशेषेण बुद्ध्यन्ते इति विबुधाः ज्ञानाधिकाः नित्यमुक्ताश्च तैरधिष्ठितम्।।९।।

क्लेशमोहाद्यभावहेतुमाह - **प्रवर्तत** इति। रजस्तमसी तयोस्ताभ्यां मिश्रं सत्वं च यत्र वैकुण्ठाख्ये लोके न प्रवर्तते अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः रजस्तमोविरहात् रागद्वेषादिकं मोहनं च नास्ति तन्मिश्रसत्वाभावात् कादाचित्कप्रकाशश्च नास्ति तस्मात् शुद्धसत्त्वमय इत्यर्थः। कालविक्रमः कालस्य यो विक्रमः परिणामहेतुत्वं तच्च नेत्यर्थः। माया सत्त्वरजस्तम आश्रया प्रकृतिः। यत्र न अप्राकृत इत्यर्थः। अनेन लोकस्य मायाकल्पितत्वशङ्का च निरस्ता। यत्र लोके सुरासुरैरर्चिताः हरेरनुव्रताः उपासकाः दृश्यन्ते इति शेषः।।१०।।

कथम्भूताः दृश्यन्ते इत्यपेक्षायां सारूप्यमाह - **श्यामेत्यादिना**। श्यामाश्च ते अवदाताः उज्ज्वलाश्च श्यामावदाताः, शतपत्रलोचनाः पद्मदलायतेक्षणाः पिशङ्गवस्त्राः पीताम्बरधराः, सुरुचः दीप्तिमन्तः, सुपेशसः अतिसुकुमाराः उन्मिषन्तः देदीप्यमानाः मणयो येषु तानि प्रवेकानि श्रेष्ठानि निष्काणि कनकमयानि आभरणानि येषां ते। सुवर्चसः अतिलावण्यवन्तः प्रवालादिवद्वर्चो वर्णो येषां ते परिस्फुरन्ति कुण्डलानि मौलयः मुकुटानि मालाश्च येषां सन्तीति तथाभूताः व्रीह्यादित्वात् इनिः। 'अत इनिः' इति तपरकरणात्।।११।।

भ्राजिष्णुभिः देदीप्यमानाभिः महात्मनां नित्यमुक्तानां प्रकाशमानविमानपङ्क्तिभिः यः लोकः परितो विराजते, यश्च प्रमदोत्तमानां दिवः कान्तयः ताभिर्विद्योतमानः तं सन्दर्शयामासेति पूर्वेणान्वयः। तत्र ददर्शेत्युत्तरेण वाऽन्वयः। तत्र दृष्टान्तः - विद्युद्भिः तडिद्भिः सह वर्तमानाः सविद्युतः अभ्राणां मेघानामावलयः पङ्क्तयः ताभिः नभो यथा विराजते तद्वदित्यर्थः। विद्युत इव स्त्रियः, अभ्रपङ्क्तय इव विमानानि, नभ इव लोकः।।१२।।

**विज०** इदानीं स चापि यत्र पुरुष इति प्रश्नं परिहरति - **तस्मै** इति। प्रीतिजनकतपसा सभाजितः पूजितः यद्यतो लोकात् परमधिकं पदं स्थानं न तस्मात् संदृष्टवद्भिः सम्यगपरोक्षज्ञानवद्भिः विबुधैः अभिष्टुतमभितो मुख्यत्वेन स्तुतम् अविद्याऽस्मिता रागद्वेषाभिनिवेशाः संक्लेशाः, मौढ्यं विमोहः, व्याकुलत्वं साध्वसं, व्यपेताः संक्लेशादयो यस्मात् स तथा तम्।।९।।

---

1. W. Omits तस्मै......लोकं 2. A.B. क्लेशाः 3. A.B. Omit तम् 4. W. हिक्लेशाः 5. A.B. कदाचित्प्र॰ 6. A.B. Omit च 7. W. अत इति तपर॰ 8. W. Omits अन्वयः 9. W. Omits तडिद्भिः

संक्लेशाद्यभावे कारणमाह - **नेति**। तयो रजस्तमसोर्मिश्रं सत्त्वं, सत्त्वरजसोर्मिश्रं तमः, सत्त्व तमसोर्मिश्रं रजः, केवलं चित्प्रकृतिमय एव कालविक्रमः कालकृतोत्पत्तिनाशवृद्धिक्षयादिलक्षणः। सत्त्वाद्यभावे कारणमाह - नेति। माया त्रिगुणात्मिका जडप्रकृतिः। अपरे मायाविकाराः तस्य लोकस्य मायातीतत्वात्। तर्ह्ययं शून्यागारतुल्य इति तत्राऽऽह - हरेरिति। "असनादसुर्हरिस्तस्मिन् रमन्त" इत्यसुराः। असुरत्वगुणोपेतैः सुरैरर्चितामहद्देवानामसुरत्वमेकम्" इति श्रुतेः। तं लोकमित्यन्वयः।।१०।।

श्यामवर्णाः अवदाताः निर्मलाश्च "अवदातस्सिते गौरे शुद्ध" (वैज.को.8-4-3) इति यादवः। अतस्ते इन्द्रनीलवन्निर्मलाः "दशदोषविनिर्मुक्तः श्याम इन्द्रमणिः स्मृतः" इति वा। शतपत्रं पद्मम्। सुष्ठु रुक् प्रभा येषां ते सुरुचः। सुष्ठु पेशः सौन्दर्यं येषां ते सुपेशसः। "मुदुपिण्डश्च पेशः स्यात्" इति वचनात्। सुकुमारतरशरीरा इति वा। उन्मिषन्तः चक्षुष्मन्तः मणिप्रवेकाः रत्नश्रेष्ठाः येषु ते तथा। ते च निष्कहेम निर्मिताः वक्षोऽलङ्काराः येषां ते तथा "निष्कोऽस्त्री हेम्नि दीनारे सार्ष्टे कर्षशते फले। वक्षोविभूषणे कर्षः" (वैज.को.6-5-45) इति, सुवर्चसः सुतेजसः। अनेन सारूप्यादि भाजो मुक्ता अपि सन्तीत्युक्तं भवति। पुनरपि तं लोकं विशिनष्टि - प्रवालेति। यो लोको महात्मनां भ्राजिष्णुभिः लसद्विमानावलिभिः सर्वतो विराजत इत्यन्वयः। प्रवालात् वैदूर्यवन्मृणालवद्वर्चः प्रभा येषां ते तथा, परिस्फुरन्तः कुण्डलमौ- लयः कुण्डलानि मौलयश्च कुण्डलमौलयः तेषां मालाः पङ्क्यो येषां सन्तीति परिस्फुरत्कुण्डलमौलि- मालिनः तेषाम्। परिस्फुरन्ति कुण्डलानि मौलयः किरीटानि मालाः स्रजश्च येषां सन्तीति ते तथा तेषामिति वा। तत्र दृष्टान्तमाह सविद्युदिति।।११,१२।।

**रा०कृ०** सभाजितः तपसा सम्यगाराधितः भगवान् वासुदेवः, यत् यस्मात् परमुत्कृष्टं नास्ति, तथाभूतं व्यपेतसंक्लेशविमोहसाध्वसं निरस्तक्लेशभ्रमभयं स्वदृष्टवद्भिः स्वदर्शनवद्भिः विबुधैः विज्ञानिभिः अभिष्टुतं अभिनुतं स्वलोकं स्वस्य वैकुण्ठनामकं लोकं तस्मै ब्रह्मणे सन्दर्शयामास सम्यग्दर्शयामास।।९।।

यत्र वैकुण्ठे रजः तमः ते द्वे न स्तः, तयोः ताभ्यां रजस्सत्त्वाभ्यां मिश्रं सत्त्वं च न प्रवर्तते। किं च यत्र कालविक्रमः कालस्य सामर्थ्यं न प्रवर्तते, यत्र च माया प्रकृत्याख्या न प्रवर्तते। ततश्च अपरे मायाकार्यभूताः रागद्वेषादयो न प्रवर्तन्ते इति किमुत? किमु वक्तव्यम्? अपि च यत्र सुरासुरार्चिताः हरेः अनुव्रताः भगवतः पार्षदाः सन्तीति शेषः। तं वैकुण्ठं दर्शयामासेति पूर्वेणान्वयः।

कुण्ठरहितो निर्मलज्ञानात्मको वैकुण्ठलोकः स च शुद्धसत्त्वमयत्वात् सर्वोत्कृष्टः। अत एव सः क्लेशभ्रमभयविरहितः। स्वज्ञानवद्भिरेवाभिनुतः। सच्चिदानन्दे स्वयंप्रकाशेऽस्मिन् लोके कालस्फुरणाभावेन कालविक्रमो न विद्यते। कालविक्रमाभावेन च कालाधीना माया, मायाकार्यभूताः रागद्वेषादयश्च न प्रवर्तन्ते। तथा च एतल्लोकवासिनो रजस्तमोभ्यामस्पृष्टत्वात् देवासुरशक्तिसमर्चिताः श्रीभगवत्पार्षदाः भवन्तीति भावः।।१०।।

हरेरनुव्रतान् विशिनष्टि - सर्वे ते हरिपार्षदाः श्यामावदाताः नीलवर्णाः निर्मलाश्च शतपत्रलोचनाः कमलायतनयनाः, पिशङ्गवस्त्राः पीताम्बरधारिणः, सुरुचः कान्तिमन्तः, सुपेशसः अतिकोमलाः, चतुर्बाहवः उन्मिषण्मणिप्रवेकनिष्काभरणाः, प्रभाशालिमणिश्रेष्ठवत् पदकभूषणवन्तः। सुवर्चसः अतितेजश्शालिनः, प्रवालवैदूर्यमृणालवर्चसः प्रवालादिवर्चस्सहिताः, परिस्फुरत्कुण्डलमौलिमालिनः भ्राजत्कुण्डलमकुटश्रेणीयुताः सन्तीति शेषः।।११।।

यो लोकः परितः सर्वतः भ्राजिष्णुभिः कान्तिमद्भिः महात्मनां भगवद्भक्तानां लसद्विमानावलिभिः लसतां प्रकाशमानानां विमानानां आवलिभिः श्रेणीभिः विराजते शोभते, यश्च प्रमदोत्तमाद्युभिः प्रमदोत्तमानां उत्तमस्त्रीणां द्युभिः सहितस्सन् सविद्युदभ्रावलिभिः विद्युत्संयुक्तमेघपङ्क्तिभिः सहितं नभो यथा आकाश इव विद्योतमानः वर्तते तं वैकुण्ठलोकं भगवान् तस्मै ब्रह्मणे सन्दर्शयामासेति पूर्वेणान्वयः।।१२।।

**श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं [1]बहुधा विभूतिभिः।**
**[2]प्रेङ्खं श्रिता या कुसुमाकरानुगैर्विगीयमाना प्रियकर्म गायती।।१३।।**

**ददर्श तत्राखिलसात्त्वतां पतिं श्रियःपतिं यज्ञपतिं जगत्पतिम्।**
**सुनन्दनन्द[3]प्रबलार्हणादिभि [4]स्स्वपा[5]र्षदमुख्यैः परि[6]सेवितं विभूम्।।१४।।**

**भृत्यप्रसादाभिमुखं दृगा[7]सवं प्रसन्नहासारुण[8]लोचनाननम्।**
**किरीटिनं कुण्डलिनं चतुर्भुजं [9]पीताम्बरं वक्षसि लक्षितं श्रिया।।१५।।**

**[10]अध्यर्हणीयासनमास्थितं [11]परं वृतं चतुष्षोडशपञ्चशक्तिभिः।**
**युक्तं भगैः स्वैरितरत्र चाध्रुवैः स्व एव धामन् रममाणमीश्वरम्।।१६।।**

**श्रीध० श्रीरिति**। श्रीश्च[12] सम्पत्। [13]यत्र रूपिणी मूर्तिमती। मानं पूजाम्। विभूतिभिः नानाविभवैः प्रेङ्खमान्दोलनं[14] [15]श्रिता कुसुमाकरो वसन्तः तस्यानुगाः भ्रमराः तैः [16]विगीयमाना [17]विविधं गीयमाना स्वयं [18]तु प्रियस्य हरेः कर्म गायन्तीव[19] भवति।।१३।।

**ददर्शेति**। य एवम्भूतो लोकः तत्र तस्मिन् [20]परिसेवितमादरेण पूज्यमानम्।।१४।।

---

1.W. विबुधा 2. H.V.W. प्रेङ्खश्रिता; M.Ma. प्रेङ्खं स्थिता 3. AF.GF. प्रमुखा॰ 4. AF.GF. Omit स्व 5. I. ॰दाग्रैः 6. B.W ॰षे॰ 7. M.Ma. ॰वैः 8. W. ॰चारुलोचनं 9. B.I.M.Ma. पीतांशुकं 10. H.V.W. ॰र्घ्य॰ 11. M Ma. विभुं 12 A.B. Omit च 13. A B. Omit यत्र 14. A. ॰लं 15. A. संश्रिता 16. A.B. Omit विगीयमाना 17. H.V. Omit विविधं गीयमाना 18. H V. Omit तु 19. B.H.V. Omit इव 20. A.B. Omit परि......मानम्

**भृत्येति**। भृत्यानां प्रसादे[1]नाभिमुखम्। दृगेव आसव इव द्रष्टॄणां हर्षकरी यस्य तं प्रसन्नहासम् अरुणालोचनं च आननं यस्य वक्षसि स्थितया च श्रिया लक्षितं अलङ्कृत[2]मित्यर्थः।।१५।।

**अध्यर्हणीयेति**। अध्य[3]र्हणीयं वरिष्ठं सिंहासनम्। चतस्रः प्रकृतिपुरुषमहदहङ्काररूपाः, षोडश एकादशेन्द्रिय[4]पञ्चमहाभूताख्याः, पञ्च तन्मात्ररूपाः[5] याः शक्तयः ताभिर्वृतम्। स्वैः भगैः स्वाभाविकैरैश्वर्यादिभिः इतरत्र योगिषु अध्रुवैः आगन्तुकैः असाधारणैरित्यर्थः। एवं सत्यपि स्वे एव धामन् स्वस्वरूपे एव रममाणम् अत एवेश्वरम्।।१६।।

**वीर०** श्रीः महालक्ष्मीर्यत्र लोके रूपिणी प्रशस्तमूर्तिमती उरुगायस्य भगवतः पादयोः मानं पूजां विभूतिभिः भूनीलादिभिः सह करोति। कथम्भूता करोति? याः श्रीः प्रेङ्खं दोलां श्रिता कुसुमाकरानुगैः शुककोकिलभृङ्गादिभिः विविधं गीयमाना स्वयं तु प्रियस्य भगवतः कर्म गायती भवति सा श्रीर्मानं करोतीत्यर्थः।।१३।।

एवंभूतो लोकः तत्र श्रियःपतिं ददर्शेत्यन्वयः। कथम्भूतम्? यज्ञपतिं तप आदियज्ञानां प्रवर्तकमाराध्यं फलप्रदं वा[6], जगत्पतिं चिदचिदात्मकजगतः शेषिणं अखिलानां सात्वतां[7] सात्वत[8]धर्मनिष्ठानां पतिं स्वलोकप्रापणेन रक्षकम्। सात्वतम् पञ्चरात्रम्। सुनन्दादिभिः स्वपार्षदश्रेष्ठैः परितः तं सेवितं विभुं सर्वो[9]त्तरम्।।१४।।

भृत्येषु यः प्रसादोऽनुग्रहः तस्मिन् अभिमुखं दृगासवं दृशि च[10]क्षुषि आसवोऽमृतं यस्य तम्। यद्वा दृक् आसवमिव यस्य, अमृतकल्पकटाक्षमित्यर्थः। प्र[11]सन्नहासम् अरुणलोचनं च आननं यस्य तम्। वक्षसि स्थितया श्रिया लक्षितमलङ्कृतमित्यर्थः।।१५।।

अभ्यर्हणीयमाराधनीयं परमुत्कृष्टमासनं अधिष्ठितं चतुष्षोडशपञ्चशक्तिभिः पञ्चविंशतितत्त्वाधिष्ठातृशक्तिभिः अस्त्रभूषणाध्यायोक्तप्रकारै[12]ः स्मारितः भगैरैश्वर्यवीर्ययशश्श्रीज्ञानवैराग्याधिष्ठातृदेवताविशेषैः स्वैः स्वभाविकैः [13]विशेषणभूतैः इत्यर्थः। इतरत्र संसारिषु कर्मतारतम्यानुगुणमध्रुवैः संसारिषु ऐश्वर्याद्यधिष्ठातॄणामधिष्ठेयद्वारा अध्रुवत्वं बोध्यम्। एवम्भूतैर्भगैर्युक्तं धामन् धामनि स्वे स्वकीये क्षेत्रज्ञे रममाणमत एवेश्वरं नियन्तारं ददर्शेत्यर्थः।।१६।।

**विज०** प्रेङ्खं स्थिता या रत्नदोलामास्थिता याः विभूतयस्ताभिः विभूतिभिः [14]स्वमूर्तिभिः सह।

---

1. A.B. °देऽभि° 2. B. Omits इत्यर्थः 3. H.V. °भ्य° 4. H.V. Omit °पञ्च° 5. B. adds च 6. W. च 7. W. Omits सात्वतां 8. A.B. सत्त्वं 9. A.B. °र्वान्तिरम् 10. W. Omits चक्षुषि 11. A.B. °सारुण° 12. A. °रस्मारितैः 13. A.B. शेषभूतैः 14. A.B. Omit स्वमूर्तिभिः

कुसुमाकरो वसन्तः तस्यानुगाः भृङ्गकोकिलादयः तदाकारमिताः ब्रह्मादयः तैः विगीयमाना प्रियस्य भर्तुः कर्माणि गायतीति।।१३।।

प्रयोजकपुरुषदर्शनं विना लोकमात्रदर्शनेन किमस्य प्रयोजनमत्राऽऽह - **ददर्शेति**। तत्रैवंविधे श्वेतद्वीपाभिधे लोके मुक्तसभामध्ये मुक्तैः सेव्यमानमात्मनो बन्धकशक्तिप्रवर्तनं विरम्य मुक्तप्रवर्तकत्वेन शयानं लक्ष्मीकान्तं ददर्शेत्यन्वयः। अनेन 'मुक्तात्ममायाम्' इत्यस्य परिहारोऽप्युक्तो भवति। "मुक्तैश्च पार्षदैः पूर्वैर्ब्रह्माद्यैश्चैव संयुतम्। ब्रह्मा ददर्श तपसा भगवन्तं हरिं प्रभुम्" इत्यनेन ब्रह्मा सगुणं ब्रह्म ददर्शेत्येतन्निरस्तम्। सतः शोभनस्य भावः सत्त्वं तेन युक्ताः सात्त्वतास्तेषां सात्त्वतां पतिं तदुक्तम् "सत्त्वं तु शोभनत्वं स्यात्तद्युक्ताः सात्त्वता मताः" इति विभुं सर्वगतमिति अनेन परिच्छिन्नरूपमत्रोच्यत इति निरस्तम्। "विभुस्सर्वगते पत्यौ चन्द्रे रविकुबेरयोः" इति।।१४।।

दृगासवैः नेत्राभ्यां यानि दर्शनानि तान्येवामृतानि तैः। "दृक् स्त्री स्याद्दर्शने बुद्धौ नेत्रे द्रष्टरि च त्रिषु" इति। प्रसन्नेन हासेन अरुणाभ्यां सहितमाननं यस्य स तथा तम्। किरीटिनं कुण्डलिनमित्यस्य इन् प्रत्ययस्य मतुबादित्वादयमिन्नित्ययोगार्थः। "भूमनिन्दाप्रशंसासुनित्ययोगेऽतिशायने। संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादयः" इति वचनात्। वक्षसि स्थितया लक्षितमित्येतल्लक्षणं हरेरेव इत्यभिप्रायेणोक्तम्।।१५।।

नारायणत्वनिर्णयाय लक्षणान्तरमाह **वृतमिति**। चतुष्षोडश पञ्च शक्तिभिः वृतं इच्छाज्ञानक्रिया बलाख्याभिः प्रह्वीसत्येशानानुग्रहाख्याभिः आत्माऽन्तरात्मा परमात्मा ज्ञानात्माख्याभिरिति चतुश्शक्तिभिर्वृतम्। मोचिका सूक्ष्मा सूक्ष्मामृता ज्ञानामृताप्यायिनी व्यापिनी व्योमरूपिणी अनन्ताणिमामहिमालघिमाप्राप्तिप्रकाशेशित्वप्राकाम्याख्याभिः षोडशशक्तिभिश्च वृतम्। वासुदेवादिदामोदरान्ताभिः षोडश शक्तिभिश्च तथा पञ्चाङ्गाभिधाभिः विमलोत्कर्षिणी ज्ञानक्रियायोगवशित्वाख्याभिः पञ्चशक्तिभिश्च परिवृतम्। "मोचिका चैव सूक्ष्मा च तथा सूक्ष्मा परामृता। ज्ञानामृताप्यायिनी च व्यापिनी व्योमरूपिणी। अनन्ता चैव सम्प्रोक्ता मोचिकाद्याश्च शक्तयः" इति वायुप्रोक्ते "इच्छाद्या मोचिकाद्याश्च अणिमाद्याश्च शक्तयः" इत्यादेः। युक्तमित्यनेन स्वरूपभूता न भवन्तीति नाशङ्कनीयम्, योगशब्दस्य सन्नहने वृत्तेः तत्स्वरूपाश्च शक्तय इति च। इतरत्र पुरुषान्तरेषु अध्रुवैरनित्यैः स्वैः स्वरूपैः भगैः ऐश्वर्यादिभिश्च युक्तम्। स्वे एव धामन् स्वरूपानन्दे एव रममाणं नान्यत्रेति एवशब्दार्थः। ब्रह्मा एवंविधमीश्वरं ददर्शेति पूर्वत्रान्वयः।।१६।।

**रा०कृ०** या श्रीः प्रेङ्खं डोलां श्रिता कुसुमाकरानुगैः कुसुमाकरस्य वसन्तस्यानुगैः शुकपिकभ्रमरादिभिः विगीयमाना स्वयं बहुधा प्रस्तूयमानाऽपि प्रियकर्म प्रियो भगवान् तस्य कर्म गायती वर्तते। सा श्रीः लक्ष्मीः रूपिणी मूर्तिमती सती यत्र लोके विभूतिभिः बहुविधविभवैः उरुगायपादयोः उरुगायस्य

भगवतो विष्णोः पादयोः बहुधा मानं पूजां करोति तत्र लोके ब्रह्मा विभुः? ददर्शेत्युत्तरेणान्वयः।।१३।।

तत्र पूर्वोक्तवैकुण्ठलोके अखिलसात्त्वातां निखिलभक्तानां पतिं पालकं श्रियो लक्ष्म्याः पतिं, यज्ञपतिं यज्ञप्रवर्तकं, जगत्पतिं सकलजगन्नियामकं सुनन्दनन्दप्रबलार्हणादिभिः सुनन्दादिनामकैः स्वपार्षदमुख्यैः द्वारपालकैरन्यैर्भक्तैश्च परिसेवितं परितस्सेवितं विभुं सर्वव्यापकं भगवन्तं ब्रह्मा ददर्श।।१४।।

भृत्यप्रसादाभिमुखं भृत्यानां किङ्कराणां प्रसादेऽनुग्रहे अभिमुखं दृगासवं दृशोः द्रष्टृनेत्रयोः आसवम् आसववत् मादकं प्रसन्नहासारुणलोचनाननं प्रसादपूर्वकहासं अरुणलोचनं च आननं यस्य तं किरीटिनं कुण्डलिनं चतुर्भुजं पीताम्बरं, वक्षसि श्रिया लक्षितं विभूषितं विभुं ददर्शेति पूर्वेणान्वयः।।१५।।

अध्यर्हणीयासनं अध्यर्हणीयम् अत्युत्कृष्टं आसनं सिंहासनम् आस्थितम् अधिष्ठितम्, परं सर्वाधिकं चतुष्षोडशपञ्चशक्तिभिः प्रकृतिपुरुषमहदहङ्काररूपाभिः चतसृभिः एकादशेन्द्रियपञ्चमहाभूताह्वयाभिः षोडशभिः पञ्चतन्मात्राकृतिभिः पञ्चभिश्च शक्तिभिर्मूर्तिमतीभिर्वृतं सेवितमितरत्र च ब्रह्मादिषु अध्रुवैः अनित्यैः स्वैः स्वाभाविकैः भगैः ऐश्वर्यवीर्ययशःश्रीज्ञानवैराग्याधिष्ठानदेवताविशेषैः युक्तं स्वे स्वकीये धामन् परमानन्दरूपे धाम्नि रममाणमीश्वरं सकलजगन्नियन्तारं विभुं ददर्शेति पूर्वेणान्वयः।।१६।।

**तद्दर्शनाह्लादपरिप्लुतान्तरो हृष्यत्तनुः प्रेमभराश्रुलोचनः।**
**ननाम पादाम्बुजमस्य विश्वसृग्[1] यत् पारमहंस्येन पथाऽ[2]धिगम्यते।।१७।।**

**तं प्रीयमाणं समुपस्थितं [3]तदा प्रजाविसर्गे निजशासनार्हणम्।**
**बभाष ईषत्स्मितशोचिषा गिरा प्रियः प्रियं प्रीतमनाः करे स्पृशन्।।१८।।**

*** [कृताञ्जलिं प्रश्रयनम्रकन्धरं विलोकयन् प्रेमदृशा समेधयन्।।]**

**श्रीभगवानुवाच**

**त्वयाऽहं तोषितस्स[4]म्यग्वेदगर्भसिसृक्षया।**
**चिरं [5]भृतेन तपसा दुस्तोषः कूटयोगिनाम्।।१९।।**

**वरं वरय भद्रं ते वरेशं माभिवाञ्छितम्।**
**[6]ब्रह्मञ्छ्रेयः परिश्रामः [7]पुंसां मद्दर्शनावधिः।।२०।।**

---

1. H.V.W. °सृड् 2. H.V. °भि° 3. H.I.M.Ma.V. कर्वि * An addtional half-versea is found in B. Edition 4. H.V. °स्सध्य° 5. H.V. धृ° 6. M.Ma. सर्वश्रेयः 7. A.C.G.I.N. पुंसो

**श्रीध० तदिति**। तस्य दर्शनेन यः आह्लादः तेन परिप्लुतं व्याप्तमान्तरमन्तःकरणं यस्य। हृष्यन्ती रोमाञ्चिता तनुर्यस्य। प्रेमभरेण अश्रूणि लोचनेषु यस्य। विश्वसृड् ब्रह्मा। पारमहंस्येन पथा ज्ञानमार्गेण। अत्र वर्णाधिक्यमार्षम्।।१७।।

**तमिति**। सः तं ब्रह्माणं [6]प्रियः श्रीभगवान् बभाषे। प्रजाविसर्गे कार्ये। निजशासनार्हणं स्वनियोगार्हम्। प्रजाविसर्गे समुपास्थितमिति वा अन्वयः। ईषत्स्मितेन शोचिः दीप्तिः शोभा यस्याः तया गिरा।।१८।।

**त्वयेति**। [8]हे वेदगर्भ! इति सम्बोधयन् वेदान् सञ्चारयति। सिसृक्षया हेतुना चिरं [9]भृतेन तपसाऽहं [10]सम्यक् तोषितः। दुस्तोषः तोषयितुमशक्यः।।१९।।

**वरमिति**। मा [11]इति माम्। [12]अभिवाञ्छितं वरं वरय प्रार्थय! श्रेयसां फलानां [13]परिश्रामः परिश्रमः साधनप्रयासः [14]मम दर्शन[15]मेवावधिर्यस्य स तथा। [16]अतः अधिकं [17]तु पुनः [18]श्रमफलं नास्तीत्यर्थः। [19]परिश्राम इत्यत्र दीर्घत्वं छान्दसम्।।२०।।

**वीर०** तस्य भगवतो दर्शनेन यः आह्लादः तेन [20]परिप्लुतं समन्ततो व्याप्त[21]मान्तरं यस्य सः। हृष्यत्तनुः पुलकिततनुः प्रेम्णो यो भरः [22]पूरः तेनाश्रूणि लोचनेषु यस्य सः आन[23]न्दाश्रुमन्नयनः। विश्वसृट् ब्रह्मा पारमहंस्येन परमं, हंसैरनुष्ठेयेन पथा भक्तिमार्गेण यत्पादाम्बुजमधिगम्यते प्राप्यते तदस्य भगवतः पादाम्बुजं ननाम नमस्कृतवान्।।१७।।

प्रजाविसर्गे प्रजासृष्टिरूपे कार्ये समुपस्थितं समुद्यतं निजशासनार्हणं स्वनियो[24]गार्हणं प्रीयमाणं स्वस्मिन्निरतिशयप्रीतिमन्तं [25]तं कविं ब्रह्माणं करे हस्ते स्पृशन् करं गृहीत्वेत्यर्थः। प्रीतमनाः तस्मिन्निरतिशयप्रीतियुक्तान्तःकरणः [26]प्रियो निरतिशयप्रीतिविषयो भगवान् ईषत्स्मितेन मन्दहासेन शोचिर्दीप्तिः शोभा यस्यास्तया गिरा प्रियं यथा तथा बभाषे भाषितवान्।।१८।।

**त्वयेति**। हे वेदगर्भ! सिसृक्षया हेतुना चिरं भृतेन चीर्णेन तपसा साधनभूतेन त्वया कर्त्राऽहं [27]सध्र्यक् सम्यक्तोषितः कूटयोगिनां दाम्भिकयोगिनां दुस्तोषः तोषयितुमशक्योऽहम्।।१९।।

---

1. H.V. Omit तस्य......लोचनेषु यस्य 2. B. °म° 3. A.B. °सृग् 4. A.B. Omit अत्र ....मार्षम् 5. A.B. Omit स 6. A.B. Omit प्रियः 7. H.V. Omit वा 8. A. Omits हे वेद......सञ्चारयति। 9. H.V. धृ° 10. H.V. सध्र्यक् 11. H.V. Omit इति 12. A.H.V. Omit अभि......प्रार्थय 13. H.V. Omit परिश्रमः 14. H.V. मद्दर्शनम् 15 A.B Omit एव 16. B ततः 17. B.H.V Omit तु पुनः 18. A. Omits श्रम 19. A.B. Omit परिश्राम......छान्दसम्। 20. A.B. °स्नु° 21. A.B. °म° 22. W Omits पूर. 23 A.B °न्दाश्रुनयन 24. W.A.B. °गार्हं 25. W. Omits तं कविं 26. W. Omits प्रियो.......विषयो 27. W. Omits सध्र्यक्

वरेशं वरप्रदं मां प्रत्यभिवाञ्छितमभीष्टं वरं वरय। ते तुभ्यं, भद्रं मङ्गलमस्त्विति शेषः। हे ब्रह्मन्! पुंसां श्रेयः परिश्रामः श्रेयसां फलानां परिश्रामः साधनप्रयासः। मद्दर्शनावधिः[1] मम दर्शन मवधिर्यस्य सः।।२०।।

**विज०** तस्य हरेः दर्शनात् उद्भूतेन आह्लादेन परिप्लुतमार्द्रीभूतमान्तरं यस्य सः तथा। हृष्यन्ती रोमाञ्चं कुर्वती तनुर्यस्य सः तथा। प्रेमभरेण अश्रुपूर्णे लोचने यस्य सः तथा। यत्पादाम्बुजं पारमहं-स्येन परमहंससम्बन्धिना पथा ज्ञानमार्गेण अहिंसादिधर्मजन्येनाधिगम्यते ज्ञायते।।१७।।

प्रीयमाणं हृष्यन्तं "कविं ब्रह्माणमादिकवय" इत्युक्तेः। "कविर्यः पुत्रः स इमाचिकेत" इति श्रुतेश्च। ईषद्बभाषे इत्यनेन शब्दतोऽल्पत्वमर्थतो गुरुत्वं द्योत्यते। "प्रकृत्या मितभाषिणः" इति वचनात्। करे स्पृशन् इत्यनेन प्रीतमनस्कत्वं प्रकाशयति।।१८।।

मनसि प्रसन्ने तदितरेन्द्रियाणां प्रसन्नत्वं किं वक्तव्यमित्यर्थः। आन्तरीमन्तःकरणप्रीतिं वाचो-द्गलयति **त्वयेति**। कि धनादिना इत्यत उक्तम् तपसा इति। किमर्थेन इत्यत उक्तं सिसृक्षयेति। अनुप-चिताङ्गोपाङ्गेन इत्यत उक्तं चिरमिति। अहं न तपोमात्रेण तुष्यामि, किन्तु त्वादृशानामधि-कारिणामेवेति भावेनाऽऽह दुस्तोष इति।।१९।।

स्वतुष्टिफलमाह - **वरमिति**। पुंसां सर्वश्रेयः परिश्रामः तप आदि सर्वकल्याणानां परिश्रामः परिपाकः मद्दर्शनावधिः मद्विषयावलोक एव अवधिः पर्यवसानं यस्य सः तथा। मद्दर्शनमेव सर्वश्रेयसां फलमिति यतः, अतो मद्दर्शनाख्यसर्वश्रेयःफलवान् त्वमिष्टं मां अपादानीकृत्य वाञ्छितं वरं वरयेत्य-न्वयः। ते तुभ्यं भद्रमस्त्विति वरेशमित्यनेन याचितं दातुं समर्थ इति द्योतयति।।२०।।

**रा०कृ०** तद्दर्शनाह्लादपरिप्लुतान्तरः तस्य भगवतो दर्शनेन यः आह्लादः आनन्दः तेन परिप्लुतं परिव्याप्तं अन्तरं अन्तःकरणं यस्य तथाभूतः हृष्यत्तनुः रोमाञ्चितगात्रः प्रेमभराश्रुलोचनः प्रेमातिरेक-सञ्जातबाष्पपूर्णनेत्रः विश्वसृ(ट्)क् ब्रह्मा पारमहंस्येन परमविवेकिभगवद्भक्तसमाश्रितेन पथा मार्गेण भक्तिमार्गेणेति यावत्। यत्पादाम्बुजमधिगम्यते सम्प्राप्यते अस्य भगवतः तत्पादाम्बुजं ननाम प्रणतवान्।।१७।।

तदा स्वदर्शनकाले प्रियो भक्तप्रियो भगवान् प्रीतमनाः सन्तुष्टान्तरङ्गस्सन् प्रजाविसर्गे प्रजासृष्टि-

---

1 A B मद्दर्श

कार्ये निजशासनार्हणं स्वकीयानुशासनयोग्यं, प्रीयमाणं स्वस्मिन् प्रीतियुक्तं समुपस्थितं आत्मानमुपस्थितं तं ब्रह्माणं करे स्पृशन् ईषत्स्मितरोचिषा दरहासकान्तिमता गिरा वाचा प्रियं यथा भवति तथा बभाषे भाषितवान्।।१८।।

हे वेदगर्भ! सिसृक्षया स्रष्टुमिच्छया कारणभूतया चिरं भृतेन सञ्चितेन तपसा साधनभूतेन त्वया कर्त्रा कूटयोगिनां कूटं छलं फलाभिसन्धिलक्षणं तेन योगो येषां तेषां कुयोगिभिरित्यर्थः। दुस्तोषः तोषयितुमशक्यः अहं सम्यक्तोषितः सन्तोषं प्रापितः। इदमुक्तं भवति - यद्यपि "समत्वं योग उच्यते" (भ.गी.2-48) इति भगवद्वचनानुसारेण सिद्ध्यसिद्धिसमत्वमेव योगः तथाऽपि स्वार्थसम्पादनधिया सन्दर्शितं समत्वं समत्वाभासत्वात् कूटयोग एव। तादृशकूटयोगिभिः कृतं तपः भगवदनुग्रहपात्रं न भवति। अत्र तु वेदगर्भेण ब्रह्मणा विश्वसृष्टिरूपयज्ञार्थकर्मणा कारणेन कृतं स्वार्थनिरपेक्षं तपः भगवदनुग्रहपात्रं सत् तत्परितोषकमभवदिति विवेकः।।१९।।

हे ब्रह्मन्! वरेशं वराणामीशं वरप्रदाने समर्थमित्यर्थः। मा मां प्रति अभिवाञ्छितं स्वाभिलषितं वरं वरय वृणीष्व। ते भद्रं शुभमस्तु। पुंसां श्रेयः परिश्रामः धर्मादिश्रेयस्साधनपरिश्रमः मद्दर्शनावधिः मद्दर्शनपर्यन्तः। मद्दर्शनानन्तरं साध्यश्रेयोऽन्तराभावात् तत्साधनपरिश्रमो न कर्तव्य इति भावः।।२०।।

**मनीषितानुभावोऽयं मम लोकावलोकनम्।**
**यदुपश्रुत्य रहसि चकर्थ परमं तपः।।२१।।**

*** प्रत्यादिष्टं मया तत्र त्वयि कर्मविमोहिते।**
**तपो मे हृदयं साक्षादात्माऽहं तपसो[1]ऽनघ!।।२२।।**

**सृजामि तपसैवेदं ग्रसामि तपसा पुनः।**
**बिभर्मि तपसा विश्वं वीर्यं मे दु[2]श्चरं तपः।।२३।।**

**श्रीध०** एतच्च मत्कृपयै[3]व त्वया प्राप्तमित्याह - **मनीषितेति**। मनीषितमिच्छा तुभ्यमिदं दातव्यमिति या ममेच्छा तस्यानुभावोऽयम्, कोऽसौ? तमाह। मम लोकस्यावलोकनं यत् त[4]त्। न चेदं मयैव तपोबलेन प्राप्तमिति स्वातन्त्र्यं मन्यस्व, तत्प्रवृत्तेरपि मत्कृतत्वादित्याह। रहसि तप तपेति यद्वचः उपश्रुत्य परमं तपश्चकर्थ कृतवानसि।।२१।।

---

* According to AF&GF two verses beginning with प्रत्यादिष्टं & सृजामि are not to be found in Ancient editions.
1. W. 'सा' 2. M.Ma. दुस्तरं 3. H.V. Omit एव 4. A.B. Omit तत्

**प्रत्यादिष्टमिति**। [1]तद्वचः तां प्रति मयैवादिष्टमुपदिष्टम्। कदा? तत्र तदा सृष्ट्यारम्भे त्वयि कर्मणि कार्ये[2]ऽर्थे विमोहिते सति। किञ्च तपो नाम ममैव शक्तिरित्याह। तपो मे हृदयमन्तरङ्गशक्तिः। आत्मा स्वरूपम्। "यस्य ज्ञानमयं तपः" इति श्रुतेः।।२२।।

**सृजामि** इति। ग्रसामि संहरामि। बिभर्मि पालयामि। वीर्यं शक्तिः।।२३।।

**वीर०** मल्लोकदर्शनं मत्प्रसादादेव अभूदित्याह - **मनीषितेति**। लोकस्य वैकुण्ठा[3]ख्यलोकस्य अवलोकनमित्ययं [4]ममैव मनीषितानुभावः मत्सङ्कल्पानुभाव इत्यर्थः। अनुभावः प्रभावः ममैव तपो-बलेन प्राप्तं लोकावलोकनं इत्याशङ्कायां [5]तपसः प्रवृत्तेरेव मत्कृतत्वान्न तव स्वातन्त्र्यमित्याह। रहसि यदुपश्रुत्य तप तपेति वचः उपश्रुत्य परमं [6]श्रेष्ठं तपश्चकर्थ।।२१।।

तदपि त्वयि कर्मणि [7]जगत्सर्गकर्मणि विमोहिते सति मयैव प्रत्यादिष्टं [8]त्वां प्रति आभिमुख्येन उपदिष्टमतो ममैवानुभाव इति भावः। तपः प्रशंसति तपो मे इत्यादिना।।२२।।

"तपसैव सोऽतप्यत", "यस्य ज्ञानमयं तपः" इत्यादि श्रुत्युक्तपूर्व जगदाकारपर्यालोचनज्ञा[9]न-रूपतपसैवेदं जगत् सृजामीति तेनैव तपसा ग्रसामि संहरामि बिभर्मि पालयामि विश्वं [10]दुश्चरं तपः मे वीर्यं प्रभावः।।२३।।

**विज०** तपसः कर्तव्यत्वं श्रद्धापयति **मनीषितेति**। यत् द्व्यक्षरं तप इति वचः उपश्रुत्य रहसि मद्गुणालोचनरूपं परमं तपस्त्वं चकर्थ कृतवान्, यन्मम लोकावलोकनं ममावलोकनं चायं मम मनीषि-तस्याभिप्रेतस्य तपसोऽनुभावो महिमेत्यन्वयः।।२१।।

तपसः स्वमनीषितत्वं कथयति - **प्रत्यादिष्टमिति**। तत्र तदा त्वयि कर्म विमोहिते इदं कर्तव्य-मित्यजानति सति मया तपः कुर्विति प्रत्यादिष्टं त्वामुद्दिश्योक्तं तस्मान्मनीषितं तप इत्यन्वयः। त्वत्प्र-सादजनकं तप एवेति कुतोऽन्यत् किं न स्यादिति - तत्राऽऽह - तप इति। हृदयं प्रियम्। "प्रियं हृदय-मुद्रिक्तं कान्तमित्यभिधीयते" इति। तदुपपादयति - साक्षादिति। अहं साक्षात् तपसः आत्मा ज्ञानात्मेति यस्मात्।।२२।।

तस्मादिदं तपसैव सृजामि। पदार्थविषयाशेषविशेषज्ञनाभावे तदनुपपत्तेः। उपसंहरति - वीर्यमिति।

---

1. A B तदपि 2. H.V. Omit अर्थे 3. A.B. Omit आख्य 4. W. मम मे 5. W. तपः प्र° 6. W. Omits श्रेष्ठं 7. W. Omits जगत्सर्गकर्मणि 8 W. Omits त्वां 9. A B. Omit "ज्ञान" 10. A B. Omit दुश्चरं

वीर्यं माहात्म्यम्। जडोपचितज्ञानत्वात् सुतरमितरेषाम्। इदं तु न तादृशम्, अतो दुस्तरमित्यर्थः। कायक्लेशसाध्येन तपसा सृष्ट्यादिकं चेत् हरेरपि क्लेशित्वमापद्यते इत्याशङ्का, "तपः प्रियं सदा विष्णोः तपसैवाप्यते हरिः" इत्यादिना परिहृतेति ज्ञातव्यम्। साक्षादात्मा वीर्यमिति कथनाच्च। न हि पूर्णानन्दस्य हरेः क्लेशात्मकत्वं युज्यते, तस्मात् तपश्शब्देन ज्ञानमेव उच्यते इत्यर्थः।।२३।।

**रा०कृ०** रहसि एकन्ते यत् तप तपेति मम यद्वचः उपश्रुत्य आकर्ण्य परममुत्कृष्टं तपः चकर्थ कृतवानसि तस्य मम लोकावलोकनं लोकस्य दर्शनं त्वया कृतमिति सोऽयं मम मनीषितानुभावः मनीषितस्य इच्छायाः प्रभावः।।२१।।

त्वयि तत्र सृष्ट्यारम्भसमये कर्मविमोहिते कर्मणि विश्वनिर्माणात्मके विमोहिते कर्तव्यज्ञानशून्ये सति मया प्रत्यादिष्टं त्वां प्रति तत्तपः उपदिष्टम्। ब्रह्मणः तपःकरणमपि भगवदिच्छायत्तमिति भावः। अतः तपःकरणावश्यकतां सूचयन् भगवान् स्वविद्याशक्तिवृत्तिमयं तपो वर्णयति - हे अनघ! तपो मे हृदयं; अहं तपसः साक्षादात्मा।।२२।।

तपसैव इदं विश्वं सृजामि, तपसा पुनः ग्रसामि संहरामि, तपसा च बिभर्मि रक्षामि अतो दुश्चरं तपो मे वीर्यं सर्वक्रियाकरणसामर्थ्यमिति यावत्।।२३।।

**ब्रह्मोवाच**

**भगवन्! सर्वभूतानामध्यक्षोऽवस्थितो गुहाम्।**
**वेद ह्यप्रतिरुद्धेन प्रज्ञानेन चिकीर्षितम्।।२४।।**

**तथाऽपि[1] नाथमानस्य[2] नाथ नाथय[3] नाथितम्।**
**परावरे[4] यथारूपे[5] जानीयां ते त्वरूपिणः।।२५।।**

**यथाऽऽत्ममायायोगेन नानाशक्त्युपबृंहितम्[6]।**
**विलुम्पन् विसृजन् गृह्णन् बिभ्रदात्मानमात्मना।।२६।।**

**क्रीडस्यमोघसङ्कल्प ऊर्णनाभिर्यथोर्णुते।**
**तथा तद्विषयां धेहि[7] मनीषां मयि[8] माधव!।।२७।।**

---

1. M.Ma. अ॰ 2. M.Ma. ॰नाय 3. AF.GF. ॰जनार्चित 4. H.V. ॰प॰ 5. W. ॰पं 6. M.Ma.W. ॰त. 7. H.V. देहि 8. AF.GF मम

**श्रीध०** [1]वरं वरयेत्युक्तं भगवता, तत्राऽऽह - **भगवन्निति**। अध्यक्षोऽधिष्ठाता। गुहां गुहायां बुद्धाववस्थितः [2]सन्। यद्यपि वेद तथाऽपीत्युत्तरेणान्वयः।।२४।।

**तथेति**। नाथमानस्य याचमानस्य उपतप्यमानस्येति वा। हे नाथ! नाथय! आशंसय प्रयच्छ नाथितं याचितम्। नाथृ नाधृ याच्ञोपतापैश्वर्याशीष्षु। नाथितमेवाऽऽह [3]परावरे इति। परं सूक्ष्मम[4]परं स्थूलं च ते रूपं यथा जानीयाम्।।२५।।

**यथेति**। यथा च त्वं क्रीडसि [5]तथा तद्विषयां मनीषां मयि [6]धेहीत्युत्तरेणान्वयः। नानाशक्त्युपबृंहितं [7]नानाशक्तिभिरुपचितं विश्वं विलुम्पन् संहरन् [8]विसृजन् विविधं सृजन् बिभ्रत् पालयन् आत्मना स्वयमेव आत्मानं ब्रह्मादिरूपं गृह्णन् [9]अनुगृह्णन्। **क्रीडसीति**। ऊर्णुते तन्तुभिरात्मानमाच्छादयति।।२६,२७।।

**वीर०** एवं भगवताऽनुगृहीतो ब्रह्मा स्वबुभुत्सितमर्थद्वयं तस्मै निवेदयति - **भगवन्निति**। हे भगवन्! सर्वभूतानां गुहां हृदयकुहरमवस्थितोऽधिष्ठितः अत एवाध्यक्षः सर्वेन्द्रियवृत्तिद्रष्टा अत एवाप्रतिरुद्धेन प्रतिहतिशून्येन प्रज्ञानेन चिकीर्षितं साक्षात् अस्मदादिपरम्परया वा कर्तुमिष्टं यद्यपि वेद जानासि, हीति प्रसिद्धौ।।२४।।

तथाऽपि नाथमानस्य याचमानस्य हि नाथ। नाथितं प्रार्थितं नाथय पूरय! नाथितमेवाऽऽह परावर इति। परं दिव्यात्मस्वरूपम् अवरं रूपं चिदचिदात्मकम् अरूपिणः कर्मायत्तप्राकृतरूपरहितस्य ते तव परावरे रूपे यथा जानीयां तथा मनीषां [10]बुद्धिं देहीत्यन्वयः।।२५।।

द्वितीयं नाथितमाह - **यथेति**। नानाशक्त्युपबृंहितः "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुत्युक्तज्ञानबलादिभिरुपबृंहितः युक्तः। द्वितीयान्तपाठे नानाशक्तिभिः पञ्चविंशतितत्त्वात्मकशक्तिभिः उपबृंहितमभिव्यञ्जितं विश्वमात्ममायायोगेन स्वात्मनः आश्चर्यशक्तियोगेनाऽऽत्मना निमित्तभूतेन आत्मना आत्मानं सूक्ष्मचिदचिद्विशिष्टं उपादानम् "तदात्मानं स्वयमकुरुत" इति श्रुत्या आत्मानमित्युपादानत्वस्य अकुरुतेति निमित्तत्वस्य चाभिधानात् विलुम्पन्निति सृष्टेः पूर्वसंहारः गृह्णन्निति पाश्चात्यसंहारः विसृजन्नस्मदादिरूपेण बिभ्रत् पुष्णन्।।२६।।

अमोघसङ्कल्पः सत्यसङ्कल्पस्त्वं ऊर्णनाभिर्यथा तन्तूनूर्णुते आच्छादयति सृजति इति यावत्।

1. A.B. Omit वर......तत्राऽऽह 2. B.H.V. Omit सन् 3. H.V. Omit परावरे इति 4. A.B. 'व' 5. A. Omits तथा 6. H.V. देहि 7. B.H.V. Omit नानाशक्तिभिरुपचितं 8. A.B. Omit विसृजन् 9. H.V. Omit अनुगृह्णन् 10. W. Omits बुद्धिं

तद्वद्यथा क्रीडसि तथा तद्विषयां सृष्टिविषयां मनीषां बुद्धिं हे माधव! लक्ष्मीनाथ[1] मयि धेहि निधेहि[2]।।२७।।

**विज०** वरमादास्यतो ब्रह्मणो हरिं प्रति विज्ञापनप्रकारमाह - **भगवन्निति**। भगवता वरं वरयेति मां प्रति यदादिष्टं तद्विडम्बनं मन्ये। तथा हि सर्वभूतानां हृदयगुहामध्यक्षोऽवस्थितो भगवान-प्रतिरुद्धेनाप्रतिहतेन ज्ञानेन सर्वेषां चिकीर्षितं वेद हि यस्मात् तस्मात् मच्चिकीर्षितमपि वेत्त्येव।।२४।।

तथाऽपि वरं वरयेति त्वदाज्ञाकर्तव्यतया वरं याचे इति विज्ञापयति - **अथापीति**। नाथमानाय याचमानाय नाथितं याचितं तं वरं नाथय समर्थय "नाथृ नाधृ याच्ञोपतापैश्वर्याशीष्षु" इति धातुः। कोऽसौ चित्तीकृतो वर इति तत्राऽऽह परावरेति। अरूपिणः प्राकृतरूपरहितस्य तव चिदानन्दाद्यात्मकवैराजाख्यं परं रूपं सनवावरणाण्डाख्यमवरमपरं रूपमिति द्वे परावरे रूपे यथा येन प्रकारेण जानीयां तथा तद्विषयां मनीषां मयि धेहि आधेहीत्यन्वयः। तु शब्देन ते च रूपे सत्ये इत्यवधारयति "द्वे वाव ब्रह्मणो रूपे" इति श्रुतिसिद्धत्वात्। अनेन कार्यकारणरूपे व्यावर्तयति।।२५।।

किञ्च यथा ऊर्णनाभिः लूताकीटः ऊर्णमूर्णुते सृजते बिभर्ति च ऊर्णामण्डलमध्ये क्रीडति अथवा आत्मन्येव लुम्पति तथा आत्ममायायोगेन स्वरूपेच्छायोगेन अवियोगिन्या श्रिया च जगत् सृजन्नात्मना स्वभावेन आत्मानमवतारं गृह्णन् बिभ्रत् पालयन् विलुम्पन् क्रीडसि च यथा तथा च तद्विषयां मनीषां धेहीति नानाशक्त्युपबृंहितोऽमोघसङ्कल्पः इत्याभ्यामूर्णनाभेः हरेर्वैशिष्ट्यं दर्शयति।।२६,२७।।

**रा०कृ०** हे भगवन्! त्वं सर्वभूतानां गुहां हृदयाकाशं अवस्थितः अधिष्ठितः अध्यक्षः सर्वेन्द्रि-याणां द्रष्टा नियामकश्च सन् अप्रतिरुद्धेन अविद्यादिप्रतिरोधरहितेन प्रज्ञानेन प्रकृष्टज्ञानेन चिकीर्षितं सर्वेषां कर्तुमिष्टमर्थं वेद हि जानासि खलु।।२४।।

तथाऽपि सर्वभूतहृदयं यद्यपि जानासि तथाऽपि त्वं हे नाथ! नाथमानस्य याचमानस्य मम नाथितं याचितं यथा तु यथा वा अहं अरूपिणः कर्माधीनरूपरहितस्य ते तव परावरे[3] स्थूलसूक्ष्मे रूपे जानीयां तथा - तादृशं मम नाथितमित्यर्थः। नाथय देहि।।२५।।।

हे माधव! अमोघसङ्कल्पः सत्यसङ्कल्पः त्वं यथा आत्ममायायोगेन आत्मनो मायायाः

---

1. W. Omits लक्ष्मीनाथ 2. A.B. देहि अर्पयेत्यर्थः।। 3. A B. "पर"

सङ्कल्पात्मिकायाः योगेन आत्मना स्वयमेव आत्मानं ब्रह्मादिरूपं गृह्णन् स्वीकुर्वन् नानाशक्त्युपबृंहितं द्रव्यज्ञानक्रियाशक्तिसहितं विश्वं विसृजन् उत्पादयन्। बिभ्रत् पालयन्। विलुम्पन् संहरन् क्रीडसि; यथा च ऊर्णनाभिः तन्तुवायः ऊर्णुते तन्तून् विस्तारयति तद्वत् यथा त्वं क्रीडसि तथा तद्विषयां सृष्ट्यादि-विषयां मनीषां यथार्थबुद्धिं मयि धेहि स्थापय।।२६,२७।।

**भगवच्छिक्षितमहं[1] करवाणि ह्यतन्द्रितः।**
**नेहमानः प्रजासर्गं बध्येयं यदनुग्रहात्[2]।।२८।।**

**यावत्सखा सख्युरिवेश ते कृतः प्रजाविसर्गे विभजामि भो![3] जनम्।**
**अविक्लबस्ते परिकर्मणि स्थितो मा मे समुन्नद्धमदोऽजमानिनः।।२९।।**

**श्रीभगवानुवाच**

**ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम्।**
**सरहस्यं तदङ्गं च गृहाण गदितं मया।।३०।।**

**श्रीध०** तत्किं[4] सृष्टेरुद्विग्न एव तत्त्वज्ञानं प्रार्थयसे नेत्याह **भगवदिति**। भगवता त्वया शिक्षित मनुशिष्टमतन्द्रितोऽनलसः सन् करिष्यामि। तर्हि किमनेन तत्त्वज्ञानेन तत्राऽऽह। यस्मादेवम्भूतात् तवानुग्रहात् प्रजासर्गमीहमानः कुर्वन्नप्यहङ्कारादिभिर्बद्धो न भवेयमिति।।२८।।

अवश्यं च मदो भविता। स तु[5] कञ्चित्कालं माभूदिति प्रार्थयते - **याव**दिति। भो! ईश! ते त्वया लौकिकस्य सख्युः सखेवाहं कृतः। करस्पर्शनादिना[6] समत्वेन[7] सम्मानितस्सन् प्रजासर्गरूपे तव परिकर्मणि सेवायां स्थितोऽविक्लबोऽव्याकुल एव। यावज्जनं विभजाम्युत्तममध्यमाधमभेदेन सृजामि तावत् त्वत्सम्माननादहमप्यजः स्वतन्त्र इति मानिनो मे समुन्नद्धः उत्कटः मदो माभूत्। यद्वा, मदो मा समुन्नद्ध मा समुन्नह्यताम्। कर्मणिलुङ्[8]। उद्रिक्तो न भवेदित्यर्थः।।२९।।

**ज्ञान**मिति। ज्ञानं शास्त्रोत्थम्[9]। विज्ञानमनुभवः। रहस्यं भक्तिः। सुगोप्यमपि वक्ष्यामीत्यादिनि-र्देशात्। तस्याङ्गं साधनम्।।३०।।

**वीर०** अन्यदपि प्रार्थयते **भगव**न्निति। हे भगवन्! शिक्षितं त्वया प्रदर्शितप्रकारं प्रजासर्गमतन्द्रितः

1. W. °वन् शि° 2. C. त्व° 3. M.Ma. भोजनम् 4. B. Omits तत्किं......किमनेन 5. H.V. च 6. H.V. °र्शादिना 7. A. म° 8. B.H.V. Omit कर्मणिलुङ् 9. A. °त्थम्

अनलसस्सन् करवाणि। एवमीहमानः कुर्वाणः यदनुग्रहाद्यस्य भगवतोऽनुग्रहात् न बध्येयं बद्धो न भवेयं तथाऽनुगृहीष्वेत्यर्थः।।२८।।

अवश्यं प्रजाः सृजतो मे मदो भविता। स माभूदिति प्रार्थयते - **याव**दिति। भो! हे भगवन्! ते त्वया लौकिकस्य सख्युः सखेवाहं कृतः। करस्पर्शादिना सम्मानितः सन्[1] प्रजाविसर्गे प्रजासर्गरूपे परिकर्मणि परिचर्यायां अविक्लबः धीरः अव्याकुल एव यावज्जनं विभजामि उत्तममध्यमादिभेदेन सृजामि, तावत् त्वत्परिचर्याविधिः[2] अजमानिनः जगत्स्रष्टारं मां मन्यमानस्य मे मम समुन्नद्धमदः प्रभूत-मदः मा[3] त्वत्प्रसादान्माभूदित्यर्थः।।२९।।

एवं प्रार्थितो भगवान् तमनुगृह्णन् परावररूपप्रकाशकं चतुश्श्लोक्यात्मकं भागवतमाह - **ज्ञान**मिति। ज्ञानं प्राधान्येन ज्ञातव्यं भगवत्स्वरूपविषयकं ज्ञानम्। तदङ्गमप्रधानतया ज्ञातव्यचिदचित्स्व-रूपविषयकं च ज्ञानं मया गदितम्। तत् मे मत्तः गृहाण कथम्भूतं ज्ञानम्? परमगुह्यमतिगोप्यम् विज्ञानसमन्वितम्। विज्ञायते अनेनेति विज्ञानं शास्त्रं तज्जन्यं[4] ज्ञानमपि विज्ञानम् योगश्च। ताभ्यां सहितं सरहस्यं समन्त्रकम्।।३०।।

**विज०** तादृशमनीषाप्रयोजनमाह - **भगवच्छिक्षित**मिति। यदनुग्रहात् यस्या मनीषाया आनु-कूल्येन ग्रहणादतन्द्रितोऽहं भगवता शिक्षितं करवाणि अथ यदनुग्रहात् च प्रजासर्गमीहमानः कुर्वाणो न बध्येयम्, तादृशीं मनीषां यस्य भगवतोऽनुग्रहाच्च न बध्येयं, तेन भगवता शिक्षितमेव करवाणीति वरान्तरप्रार्थनं वा।।२८।।

इदानीं बन्धमूलाहङ्कारनाशं प्रार्थयते इत्याह - **याव**दिति। ईश! यथा सखा राजादिः स्वोक्त-कारिणः सख्युर्जनपदाद्यधिकारं ददाति, तथा ते त्वया प्रजाविसर्गे कृतः अधिकृतोऽविक्लबः त्वत्प्रसादा-द्दैन्यहीनस्ते तव परिकर्मणि जगत्सृष्ट्यादिशुश्रूषाकर्मणि स्थितोऽहं यावद्रुद्रादिप्रजानां त्वदाज्ञया तवेदं पदं तवायं भोग इत्यादिरूपं भोजनं विभजामि विभज्य विभज्य ददामि तावत् मच्छतायुःपर्यन्तमजमानिनः आत् सर्वविलक्षणात् त्वज्जातोऽहं - इत्यभिमानवतो मे समुन्नद्धमदः समुत्पन्नोऽहङ्कारो जगतः स्रष्टाहमित्यादिलक्षणो माभूदित्यन्वयः। भोः स्वामिन्! यथा सख्युर्व्यापारेऽधिकृतस्सखा तात्पर्यात्तत्कार्यं करोति तथाऽहमपि त्वत्प्रजासर्गेऽधिकृतो यावज्जन्यत इति जनो जन्यपदार्थः तं विभजामि सुरनरतिर्य-गादिरूपेण उत्पादयामि। तावत्समुन्नद्धमदो मा भूदिति वा।।२९।।

यत्किञ्चित्पृष्टम्। यः कश्चित् परिहार इत्यतः परावरे इति प्रार्थितवरदानप्रकारं वक्ति - **ज्ञान**मिति।

1. A.B. Omit सन् 2. W. °वधेः 3. A.B. सः 4. A.B. Omit तज्जन्यं......विज्ञानम्

नियतमुक्तिप्रापकेण स्वबिम्बविषयेण विज्ञानेन समन्वितं मे स्वरूपविषयं सरहस्यं उपनिषत्संवाद-सहितं यत् ज्ञानं, तस्य ज्ञानस्य यदङ्गं च तन्मया गदितं गृहाणेत्यन्वयः। उपनिषदो बाह्यार्थरूपं चेदिदं अनुपादेयं स्यादिति अत उक्तं परमेति। ज्ञानं शास्त्रार्थविषयम्। विज्ञानं स्वानुभवः इत्यपव्याख्यानं, गदितमित्यनेन सूचितया "येन येन यथा ज्ञात्वा नियतं मुक्तिराप्यते। तद्विज्ञानमिति प्रोक्तं ज्ञानं साधारणं स्मृतम्।।" इति स्मृत्या निरस्तम्।।३०।।

**रा०कृ०** भगवच्छिक्षितं भगवता भवता शिक्षितं बोधितं प्रजासर्गरूपमर्थमतन्द्रितः अनलसस्सन् करवाणि करिष्यामि, तथाऽपि यत् यस्मात् मनीषादानलक्षणात् अनुग्रहात् तवानुग्रहात् प्रजासर्गमीहमानः कुर्वन्नपि न बध्येयं अहङ्कारादिभिः न बद्धो भवेयम् तद्विषयां मनीषां मयि धेहीति पूर्वेणान्वयः।।२८।।

हे ईश! सख्युः सखेव कृतः त्वया हस्तस्पर्शादिना तुल्यत्वेन सत्कृतोऽहं यावत् विसर्गे विविधविश्वसृष्टिरूपे ते तव परिकर्मणि सेवायां स्थितः अविक्लबः अव्याकुलः जागरूकस्सन्निति भावः। प्रजाः विभजामि उत्तममध्यमाधमभेदेन सृजामि तथा भोजनं तत्प्रजानुरूपं भोग्यसमुदायं च विभजामि। तावदजमानिनः जगत्स्रष्टा स्वतन्त्रो ब्रह्माहमस्मीत्यात्मानं मन्यमानस्य मे मम समुन्नद्धमदः जगत्स्रष्टृ-त्वाद्यधिकारप्रयुक्तः समुत्कटो मदः मा भगवदनुग्रहात् माभूदित्यर्थः। केचित् प्रजाविसर्गे इति समस्त-पदं कृत्वा भोःजनम् इति विभज्य च पठन्ति। तदा भो इति पदं ईश इति सम्बोधनान्तेनान्वेति, जनम् इति द्वितीयान्तं तु विभजामि इति क्रियायाः कर्म।।२९।।

परमगुह्यमतिगोप्यं श्रद्धया रक्षणीयमिति यावत्, विज्ञानसमन्वितमनुभवसहितं सरहस्यं भक्ति-योगसमेतं यत् वर्तते तन्मे ज्ञानं तदङ्गं च तस्य ज्ञानस्याङ्गं साधनं च मया गदितमुपदिष्टं गृहाण अवधानेन स्वीकुरुष्व।।३०।।

**यावानहं यथाभावो यद्रूपगुणकर्मकः।**
**तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात्।।३१।।**

**अहमेवासमे[1]कोऽग्रे नान्यद्यत्सदसत्परम्।**
**पश्चादहं [2]यदेतच्च योऽवशिष्येत सोऽ[3]स्म्यहम्।।३२।।**

1. A.B.C.G.I.M.Ma.N. 'मेवाग्रे 2. M.Ma. त्वमे' 3. W. 'प्य'

**श्रीध०** ननु त्वद्दर्शनेऽप्यसमर्थोऽहं कथं ज्ञानाधिकारी स्याम् तत्राऽऽह --**यावानिति**। यावान् स्वरूपतः [1]यथाप्रकारेण भवामीति यथाभावो [2]यादृक् सत्तावान् यानि रूपाणि गुणाः कर्माणि च यस्य।।३१।।

[3]एतदेव सम्यगुपदिशन् यावानित्यस्यार्थं स्फुटयति - **अहमिति**। अहमे[4]क एवाग्रे सृष्टेः पूर्वमासं स्थितः। नान्यत्किञ्चित्। यत् सत्, स्थूलम्, असत् सूक्ष्मं परं तयोः कारणं प्रधानम्। तस्याप्यन्तर्मुखतया तदा मय्येव लीनत्वात् अहं च तदा आसमेव केवलं; न चान्यदकरवम् पश्चात् सृष्टेरनन्तरमप्यहमेवास्मि, यदेतद्विश्वं तदप्यहमस्मि। प्रलये योऽवशिष्येत सोऽप्यहमेव। अनेन [5]चानाद्यन्तत्वात् अद्वितीयत्वाच्च परिपूर्णोऽहमित्युक्तं भवति।।३२।।

**वीर०** कार्त्स्न्येन त्वद्वदितग्रहणेनाहं प्रभुरित्याशङ्कमानं प्रत्याह - **यावानिति**। अहं "सत्यं ज्ञानं", "यःसर्वज्ञः" इत्यादिश्रुत्युक्तज्ञानस्वरूपज्ञानगुणकोऽहं यावान् यत्परिमाणकः अपरिच्छिन्नः यथाभावः यादृक्स्वभावः "स्वाभाविकी ज्ञानबलक्रिया च" इत्युक्तसार्वज्ञ्यादिगुणकः यद्रूपगुणकर्मकः रूपं चिदचिद्वस्तु गुणस्तयोर्गुणः स च सद्वारको भगवद्गुणः "काठिन्यवान् यो बिभर्ती"ति वत् कर्म जगद्व्यापारः यानि रूपगुणकर्माणि यस्य सः इति बहुव्रीहिः। तथैव तत्त्वविज्ञानं मत्स्वरूप[6]रूपगुणविभूतियाथात्म्यविज्ञानं मदनुग्रहात् मत्प्रसादाद्धेतोः ते तव अस्तु भवतु।।३१।।

यावानित्यस्यार्थमेव स्फुटयन् प्रधानतया ज्ञातव्यपरशब्दोक्तं भगवत्स्वरूपमाह - **अहमिति**। सदसत्परं चेतनाचेतनविलक्षणं यद्वस्तु तदहमेव आसमभवम्। अन्यत् चिदचिद्विलक्षणं न भवति अन्यत्सर्वं चिदचिदन्तर्गतमहमेव तद्विलक्षण इत्यर्थः। अग्रे सृष्टेः प्राक् [7]यद्वस्तु पश्चात्सृष्टिकाले जातः त्वमेतत्कार्यजातं च तदप्यहं [8]कारणचिदचिद्रूपः कार्यचिदचिद्रूपश्चाहमित्यर्थः। पुनस्संहारकाले योऽवशिष्येत संह्रियते सोऽप्यहमेवेत्यर्थः। प्रकृतिपुरुषविलक्षणः तच्छरीरकश्चाहमेक एव [9]य एव सर्वज्ञः सर्वशक्तिः सर्वेश्वरः सृष्टेः प्रागविभक्तनामरूपसूक्ष्मप्रकृतिपुरुषशरीरकः सृष्टिकाले विभक्तनामरूप प्रकृतिपुरुषशरीरकः स्वपर्यन्तनामरूपः आसम् संहारविषयोऽप्यहमेवेत्यर्थः। एवं कारणावस्थायामविभक्तनामरूपप्रकृतिशरीरकत्वेन कार्यावस्थायां विभक्तनामरूपप्रकृतिपुरुषशरीरकत्वेन अवस्थितस्यापि परमात्मनः स्वशरीरगतचेतनाचेतनगताज्ञत्वदुःखित्वकर्म[10]वशगत्वपरिणामित्वजडत्वादिभिः विकारैः जीवात्मनः तच्छरीरगतबालत्वयुवत्वस्थविरत्वादिभिरिवास्पर्शात् चेतनाचेतनवैलक्षण्यमविहतमेवावतिष्ठते। कार्यत्वं कारणत्वं च स्वशरीरभूतप्रकृतिपुरुष[11]द्वारकमुपपन्नमि[12]त्यत्र भाष्यादिषु विस्तरो द्रष्टव्यः।।३२।।

---

1. A.B. Omit यथा प्रकारेण भवामीति 2. H.V. Omit यादृक् सत्तावान् 3. H.V. Omit ए 4. A B. °मेवाग्रे 5 H.V. अनाद्यन्त° 6. W. Omits °रूप 7. W. यद्यद्वस्तु 8. W Omits कारणचिदचिद्रूपः 9.W. Omits य एव 10. B. °वशत्व°;W. वश्यत्व 11 W. °द्वारा उप° 12. W. °त्यन्यत्र

**विज०** यथाऽऽत्ममायायोगेनेति याचितवरप्रदानप्रकारमाह - **यावानिति**। देशकालव्याप्त्या यावाननन्तपरिमाणोपेतोऽहं यथाभावो यादृशसत्तावान् निरुपाधिकसत्तोपेतः यद्रूपगुणकर्मकः यादृशावतारः यादृशगुणः यादृशकर्मा चाहं मदनुग्रहात् ते तव तथैव तत्त्वविज्ञानमस्त्वित्यन्वयः। एवशब्देन सोपाधिकरूपं व्यावर्तयति।।३१।।

ज्ञानोपदेशप्रकारमाह - **अहमिति**। अग्रे सृष्टेः प्राक् अहमेवाऽऽसम्। च शब्दात् सदसदासीत् कालप्रकृत्यादिकमभूत् तथाऽपि प्रलये यत्कालकर्मादिकमन्यत् हरेः भिन्नमभूत् तत्परं स्वतन्त्रं नाऽऽस। किञ्च मायावृतत्वेन मदधीनमेवाभूत्। पश्चात् सृष्ट्यनन्तरं स्थितिकाले त्वम् अहं एतज्जगच्च, आसीः, आसम्, आसीत्। फलितमाह - य इति। स्थितिकाले भोक्ताऽहं कर्ताऽहं इति स्वातन्त्र्यप्रतीतेः सृष्टेः-प्राक् लयानन्तरं चास्य जगतः स्वातन्त्र्यं स्यादिति चेत्, न - तत्प्रतीतेः बुद्धिमोहमूलत्वात्। तदुक्तम् - "विष्णोरधीनं प्राक्सृष्टेः तथैव प्रलयादनु। अस्य सत्त्वप्रवृत्त्यादि विशेषेणाधिगम्यते।।। स्वातन्त्र्यं स्थितिकाले तु कथंचित् बुद्धिमोहतः। प्रतीयमानमपि तु तस्मान्नैवेति गम्यताम्" इत्यादि। अनेन कालत्रयेऽपि स्वतन्त्रोऽहम्, त्वदादिकं सर्वं मदधीनमेवेत्युक्तं भवति।।३२।।

**रा०कृ०** अहं यावत् यावान् यत्परिणामकः यथाभावः यादृक् सत्तावान् यद्रूपगुणकर्मकः यादृशरूपगुणकर्मसहितोऽस्मि। तथैव तेनैवप्रकारेण तत्त्वविज्ञानं याथार्थ्यानुभवः। मदनुग्रहात् ते तव अस्तु भवतु।।३१।।

अग्रे सृष्टेः प्राक् सदसत्परं सदसतोः स्थूलसूक्ष्मयोः कार्यकारणयोःपरं कारणभूतं यद्ब्रह्म तदहमेव। सोऽहमासमेव तदा केवलं सत्तारूपेणाहमासम्, नकिञ्चिदकरवमिति भावः। मद्भिन्नं अन्यत् किञ्चिदपि नास्ति। पश्चाच्च सृष्टेरनन्तरं च, यदेतत् सदसदात्मकं विश्वं तदप्यहमेव। यः अवशिष्येत प्रलये योऽवशिष्यते स ईश्वरोऽपि अहमस्मि। एवमत्र भगवतः परापररूपे त्रैकालिकसत्ता च समदर्शिषत ।।३२।।

**ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि।**
**तद्विद्यादात्मनो मायां यथाऽऽभासो[1] यथा तमः।।३३।।**

**यथा महान्ति भूतानि भूतेषूच्चावचेष्वनु[2]।**
**प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम्।।३४।।**

1. W. यथा भासो 2. M.Ma. °षु च ; W. °ष्वपि

**श्रीध०** 'यथात्ममायायोगेन' इत्यनेन मायाया अपि पृष्टत्वात् वक्ष्यमाणोपयोगित्वाच्च मायां निरूपयति **ऋत** इति। ऋते अर्थं विनाऽपि वास्तवमर्थम्। यद्यतः किमपि अनिरुक्तं आत्मन्यधिष्ठाने प्रतीयेत। सदपि च[1] न प्रतीयेत। तदात्मनो मम मायां विद्यात्। यथा आभासो द्विचन्द्रादिः इत्यर्थं विना प्रतीतौ दृष्टान्तः। यथा तम इति। सतोऽप्रतीतौ तमः[2] राहुर्यथा ग्रहमण्डले स्थितोऽपि न दृश्यते तथा[3]।।३३।।

यथाऽऽभास इत्येतत् स्पष्टयति - **यथेति**। यथा महाभूतानि भौतिकेष्वनुसृष्टेरनन्तरं प्रविष्टानि इव[4] तेषु उपलभ्यमानत्वात् अप्रविष्टानि च[5] प्रागेव कारणतया तेषु अविद्यमानत्वात्[6]। तथा तेषु भूतभौतिकेषु अहं न[7] च तेष्वहम्। एवम्भूता मम सतेत्यर्थः।।३४।।

**वीर०** एवं चिदचिद्विलक्षणस्य परमात्मनः स्वरूपमुक्तम्। अथावरशब्दोक्तं अङ्गतया ज्ञातव्यम्। चिदचिद्रूपमाह[8] - **ऋतेऽर्थमिति**। अर्थं निरतिशयपुरुषार्थभूतचित्तत्वं ऋते विना यदचिद्वस्तु प्रतीयेत प्रकृत्यनुसन्धानवेलायाम् आत्मस्वरूपं न यथावत् प्रकाशत इत्यर्थः। आत्मनि चेतनस्वरूपे प्रतीयमाने "सा निशा पश्यतो मुनेः" इति न्यायेन यदचेतनं न प्रतीयेत तदात्मनः परमात्मनः मायां विद्यादित्यर्थः। अन्यतरस्य प्रकाशे[9] अन्यतरस्याप्रकाशनं विरुद्धाकारत्वात् इत्यभिप्रेत्य तत्र दृष्टान्तमाह - "यथा[10] भासो यथा तम" इति। यथा "भासो भासनं" भाश्शब्दो बहुवचनान्तो वा। न हि तेजसि तमो भाति। न च तमसि तेजो भाति तद्वदित्यर्थः। स्थूलत्वसूक्ष्मत्वनित्यत्वानित्यत्वजडत्वाजडत्वादिविरुद्धाकारयोगोऽभिप्रेतः।।३३।।

एवं परस्परविलक्षणं चिदचित्स्वरूपमुक्तम्। अथ एतयोः[11] स्वस्य अनुप्रवेश[12]तत्प्रशासनरूपं पालनं तद्गतदोषास्पर्शनं च आह - **यथा** इति। महान्ति भूतानि आकाशवायुतेजांसि यथा उच्चावचेषु नानाविधेषु भूतेषु भौतिकेषु घटादिषु प्रविष्टान्यप्रविष्टानीव[13] घटादिगतभेदच्छेदनाद्यस्पृष्टत्वात् तथाऽहमपि तेषु चेतनाचेतनेषु आत्मतयाऽनुप्रविष्टोऽपि तेषु न प्रविष्टः। न[14] तद्गतदोषैः स्पृष्टः[15] इत्यर्थः। यद्वा परिच्छिन्नचेतनाचेतनवस्त्वनुप्रवेशेऽपि स्वस्यापरिच्छिन्नत्वं सदृष्टान्तमाह - यथेति। अप्रविष्टानि बहिरपि सन्ति, तथा - "अन्तर्बहिश्च तत्सर्वं व्याप्य" इति प्रकारेण तेषु प्रविष्टोऽहं न तेष्वेव बहिरपि व्याप्त इत्यर्थः। एवमपरिच्छिन्नत्वप्रतिपादनेन यावानहं इत्येतत् स्पष्टीकृतम्। अहमेवाऽऽसमित्यत्र जगत्कारणत्वतदाक्षिप्तचेतनाचेतनवैलक्षण्यव्यापादक[16]सार्वज्ञ्यसर्वशक्तित्वादिप्रतिपादनेन यथाभाव इत्येतत् स्पष्टीकृतम्। ऋतेऽर्थमित्यादिना परमात्मशरीरभूतपरस्परविलक्षणचेतनाचेतनस्वरूपप्रतिपादनेन यद्रूप इति स्पष्टीकृतम्। तथा तेषु इत्यनेन चेतनाचेतनयोः परमात्मशरीरत्वप्रतिपादनात् शरीरगता धर्मा जीवात्मनः, तच्छरीरगत-

---

1. H.V. Omit च 2. B. Omits तमः......तथा 3. H.V. Omit तथा 4. A.B. Omit इव 5. H.V. Omit च 6. A H.V. विद्यमानं 7. H.V. Omit न च तेष्वहम् 8. A.B. Omit चिद 9. A.B. 'शने नान्य' 10. A.B. Omit यथा भासो यथा तम' इति 11. W. तयो 12. A.B. 'वेशेन 13. A.B. 'न्येव 14. W. Omits न 15. W. अस्पृष्टः 16. A.B. 'न

बालत्वयुवत्वादयः इव मच्छरीरभूतचेतनाचेतनद्वारा ममैव धर्मा इति प्रतीतेः यद्गुणक इत्यभिव्यञ्जितम्। अहमेवाऽऽसमित्यनेन स्रष्टृत्वपालकत्वसंहर्तृत्वरूपजगद्व्यापाररूपकर्मप्रतिपादनेन यत्कर्मक इत्यभिव्यक्तीकृतम्।।३४।।

**विज०** अस्वतन्त्रस्य प्रकृत्यादेः स्वरूपमुपदिशतीत्याह - **ऋतेऽर्थमिति**। यद्वस्तु आप्तकामस्य ममार्थं प्रयोजनमृते सर्वत्र वेदादिषु प्रतीयेत यच्चाऽऽत्मनि मयि बाधकं न प्रतीयेत, नहि ईश्वरस्य जीवप्रकृतिभ्यां अर्थो बाधश्च स्तः। तत्प्रकृत्यादिवस्तु आत्मनः परमात्मनो मायां विद्यादित्यन्वयः। मायेति नेन्द्रजालमुच्यते किन्तु जीवप्रकृती एवेत्याह - यथेति। यथा यथार्थत्वेनैव सत्यत्वेनैव प्रतीयमानाभासो मम प्रतिबिम्बभूतो जीवो यथा यथार्थत्वेनैव तमो ग्लानिहेतुर्मूलप्रकृतिश्च मायेत्युच्यते "मुख्यतो विष्णुशक्तिर्हि मायाशब्देन भण्यते। उपचारतस्तु प्रकृतिर्जीवश्चैव हि भण्यते" इति वचनात्। एतदुक्तं भवति - यथा च्छत्रधराद्या रथस्था अपि रथिनो नोच्यन्ते, तथा जीवप्रकृतिकर्मकालाः सदा मयि वर्तमाना अपि जीवेन जीवनाभावत् प्रकृत्या बन्धाभावात् कर्मणा फलाभावात् कालतः परिणामाभावाच्च मयि स्थिता इति नोच्यन्ते, "सर्वं परे स्थितमपि नैव तत्रेति भण्यते" इत्यादेरिति।।३३।।

भगवान् स्वव्याप्तिं सोदाहरणमुपदिशतीत्याह - **यथा महान्तीति**। यथा महान्ति पञ्चभूतानि उच्चावचेषु भूतेषु स्वकार्यशरीरेषु प्रविष्टानि वर्तन्ते, ततोऽप्यधिकव्याप्तिसद्भावात् तेष्वप्रविष्टानि च तथाऽहमपि अनन्तदेशकालव्यापी तेषु भूतेषु प्रविष्टः, तेभ्यो बहिरपि स्थितत्वात् तेषु न प्रविष्टश्च, "यथा महान्ति भूतानि शरीरेषु बहिस्तथा" इत्यादेः।।३४।।

**रा०कृ०** आत्मनि अधिष्ठानभूते जीवे अर्थमृते कार्श्यकाणत्वादिदेहेन्द्रियादिधर्मरूपमर्थं विनाऽपि यत् यस्मात् कारणात् आभासो यथा द्विचन्द्रादिमिथ्याप्रतीतिरिव सः कार्श्यं काणत्वादिधर्मरूपोऽर्थः प्रतीयेत प्रतीयते; तथा विद्यमानोऽपि सच्चिदानन्दत्वरूपोऽर्थः यस्मात् यथा तमः ग्रहमण्डले विद्यमानो राहुरिव न प्रतीयेत। तत् तां प्रागुक्तप्रतीत्यप्रतीतिनिमित्तभूतामात्मनः परमात्मनो मम मायां विद्यात्।।३३।।

यथा महान्ति भूतानि आकाशादीनि उच्चावचेषु स्थूलसूक्ष्मादिनानाविधेषु भूतेषु स्वकार्यरूपेषु अनुप्रविष्टान्यपि अप्रविष्टानि महाभूतानां कार्यत्वप्राप्त्यनन्तरमपि उपलम्भात् भूतेष्वनुप्रविष्टत्वं, तेषु पूर्वमेव कारणत्वेनावस्थानात् पुनरप्रविष्टत्वमित्युभयमपि युज्यते। तथा तेषु कार्येषु प्रविष्टोऽप्यहं न तेषु प्रविष्ट एव। अयं भावः - यथा आकाशादिकं घटाद्युत्पत्तिविनाशनैरपेक्ष्येण विद्यमानं घटादिषु प्रविष्टमपि तन्नाशादिविकारैरस्पृष्टं वर्तते, तथा भगवानपि स्वसृष्टभूतानुप्रविष्टोऽपि तद्गतजरामरणादिविकारैः नैव स्पृष्टो भवति।।३४।।

**एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनाऽऽत्मनः।**
**अन्वयव्यतिरेकाभ्यां यत्स्यात् सर्वत्र सर्वदा।।३५।।**

**एतन्मतं समातिष्ठ[1] परमेण समाधिना।**
**भवान् कल्पविकल्पेषु न विमुह्यति कर्हिचित्।।३६।।**

**श्रीशुक उवाच**

**सम्प्रदिश्यैवमजनो[2] जनानां परमेष्ठिनम्[3]।**
**पश्यतस्तस्य तद्रूपमात्मनो न्यरुणद्धरिः।।३७।।**

**अन्तर्हितेन्द्रियार्थाय हरये विहिताञ्जलिः।**
**सर्वभूतमयो विश्वं ससर्जेदं स पूर्ववत्।।३८।।**

**प्रजापतिर्धर्मपतिरेकदा नियमान् यमान्।**
**भद्रं प्रजानामन्विच्छन् नातिष्ठत्स्वार्थकाम्यया।।३९।।**

**तं नारदः प्रियतमो रिक्थादानामनुव्रतः।**
**शुश्रूषमाणश्शीलेन प्रश्रयेण दमेन च।।४०।।**

**श्रीध०** साधनमाह - **एतावदिति**। आत्मनस्तत्त्वजिज्ञासुना एतावदेव जिज्ञास्यं विचार्यम्। तदेवाऽऽह - अन्वयः कार्येषु कारणत्वेनानुवृत्तिः, कारणावस्थायां च तेभ्यो व्यतिरेकः तथा जाग्रदाद्यवस्थासु तत्तत्साक्षितयाऽन्वयः[4]। व्यतिरेकश्च समाध्यादौ एवमन्वयव्यतिरेकाभ्यां यत् स्यात् सर्वत्र सर्वदा च। तदेवाऽऽत्मनः[5] स्वरूपमन्वयव्यतिरेकसाधनेन आत्मा जिज्ञास्य इत्यर्थः।।३५।।

यत्प्रार्थितं 'नेहमानः प्रजासर्गं' इति तत्प्रसादीकरोति - **एतदिति**। एतन्मम[6] मतं सम्यगनुतिष्ठ समाधिना चित्तैकाग्र्येण कल्पेषु ये विकल्पा विविधाः सृष्टयस्तेषु विमोहं कर्तृत्वाभिनिवेशं[7] न यास्यतीति।।३६।।

**सम्प्रदिश्येति**। एवं सम्प्रदिश्य उपदिश्य[8] जनानां परमेष्ठिनं परमे आधिपत्ये स्थितं ब्रह्माणम्। आत्मनस्तद्रूपं न्यरुणदन्तर्हितवान्।।३७।।

---

1. M.Ma. °म° 2. M.Ma. °ह° 3. M.Ma. °नः 4. H.V. °तत्सा° 5. A.B. °त्मेति।।३४।। 6. A.B. °न्मतं 7. B °त्वाद्यभि°
8. H.V. Omit उपदिश्य

**अन्तर्हितेति**। अन्तर्हित: इन्द्रियार्थ: प्रत्यक्षरूपं येन तस्मै बद्धाञ्जलिस्सन्।।३८।।

तदनन्तरं पूर्वोक्तो ब्रह्मनारदसंवाद: प्रवृत्त इत्याह - **प्रजापतिरि**रिति पञ्चभि:। प्रजानां भद्रमन्विच्छन् विमृशन् सैव[1] स्वार्थ[2]काम्या स्वप्रयोजनेच्छा तया यमनियमानन्व[3]तिष्ठत्।।३९।।

**तमिति**। रिक्थादानां पुत्राणां मध्ये प्रियतमस्तं पितरं सेवमान: शीलादिना परितोषयामास इत्युत्तरेणान्वय:[4]।।४०।।

**वीर॰** पुनश्च प्रकृतिपुरुषविलक्षणेश्वरस्वरूपं सङ्ग्रहेण वक्ष्यन् तस्यैव जिज्ञास्यत्वमाह - **एतावदिति**। आत्मन: परमात्मन: तत्त्वं स्वरूपं जिज्ञासुना ज्ञातुमिच्छु[5]ना एतावदेव परस्परविविक्तस्वभावचिदचिदन्तरात्मभूतभगवत्स्वरूपमेव अन्वयव्यतिरेकाभ्यां अयोगान्ययोगव्यवच्छेदाभ्यां जिज्ञास्यमित्यर्थ:। इदं[6] जिज्ञास्यमेवेत्यन्वय:। नान्यज्जिज्ञास्यमिति व्यतिरेक:। यद्वा अन्वयात्सद्भावात् चिदचिच्छरीरकपरमात्मन एव कार्यात्मना कारणात्मना च सद्भावाद्व्यतिरेकात् चिदचिच्छरीरकपरमात्मातिरिक्तवस्त्वंतराभावात् तदेवम्भूतपरमात्मविज्ञानेन सर्वविज्ञानात् ज्ञातव्यान्तराभावात् एतावदेव जिज्ञास्यमित्यर्थ:। प्राधान्येन ज्ञेयं भगवत्स्वरूपं चेतनमचेतनं च तद्विभूतिभूतमिति तज्ज्ञानस्य भगवज्ज्ञानेऽन्तर्भावात् आत्मन: तत्त्वमित्युक्तम्। सङ्ग्रहेण प्रकृतिपुरुषवैलक्षण्यमाह - यत्स्यादिति। यदात्मनस्तत्त्वं मत्स्वरूपं सर्वदा स्यादित्यचिद्व्यावृत्ति:। अचित: प्रतिक्षणपरिणामित्वेन पिण्डत्वघटत्वकपालत्वचूर्णत्वरजस्त्वाणुत्वाद्यवस्थासु पूर्वपूर्वावस्थानां मृद्द्रव्यस्य उत्तरोत्तरावस्थाप्राप्तावभावात् सर्वदा[7]ऽस्तिशब्दानर्हत्वात् सर्वत्रेति जीवव्यावृत्ति:। तस्याधिकृतत्वेन सर्वदा स्यादिति वक्तुं शक्यत्वेऽपि "बालाग्रशतभागस्य" इत्याद्युक्तप्रकारेण जीवस्वरूपस्याणुपरिमाणत्वेन सर्वत्र स्यादिति वक्तुमशक्यत्वात्। एवमविकारित्वानन्तत्वकथनेन "सत्यं ज्ञानमनन्तं ब्रह्म" इत्युक्तब्रह्मस्वरूपलक्षणमभिसं[8]हितं भवति।।३५।।

एवं "परावरे यथा रूपे जानीयां ते" इत्यस्योत्तरमुक्तम् "नेहमान: प्रजासर्गं बध्येयम्" इत्यस्योत्तरमाह - **एतदिति**। परमेण समाधिना चित्तैकाग्र्येण एतन्मतं सम्यगनुतिष्ठ भवानिति संहाराद्यधिकर्तृरुद्रादेरप्युपलक्षणम्। कल्पविकल्पेषु सृष्टिसंहारेषु कल्प: कल्पनं सृष्टि:[9] विकल्पो विपरीतकल्पनं संहार: कर्हिचित् कदाचिदपि न विमुह्यति अस्मदधीनत्वमनुसन्धाय समुन्नद्धमदो[10]पहतो न भविष्यसीत्यर्थ:। अनेनैव तद्विषयां धेहि मनीषां इत्यस्याप्युत्तरमुक्तं भवति।।३६।।

अजन: कर्मायत्तोत्पत्तिशून्य: हरिर्भगवान् जनानां व्यष्टिभूतानां परमे आधिपत्ये स्थितं प्रति

---

1. H.V. एव 2. A. "र्थे 3. B. "न्वा" 4. B. Omits इत्युत्तरेणान्वय: 5. W. "च्छता 6. A.B. एवं 7. W. "दा नास्तिशब्दर्हत्वात् 8. A.B. Omit "सं" 9. W. Omits सृष्टि: 10. A.B. "दा"

एवमुक्तप्रकारेण संप्रदिश्य तस्य परमेष्ठिनः पश्यतस्सतः तञ्च चतुर्मुखाय प्रदर्शितमात्मनः सम्बन्धिरूपं न्यरुणत्तिरोभावयामास।।३७।।

अन्तर्हितः तिरोधापितः इन्द्रियार्थः स्वचक्षुरिन्द्रियविषयः प्रत्यक्षरूपं येन तस्मै हरये विहितः रचितः अञ्जलिर्येन सः सर्वभूतमयः सर्वभूतप्रचुरः स्रक्ष्यमाणदेवादिभूतानां बुद्धिस्थत्वेन भूतविषयकर्मज्ञानप्रचुर इत्यर्थः। स ब्रह्मा इदं विश्वं पूर्ववत् पूर्वकल्पवत् ससर्ज।।३८।।

तदनन्तरं पूर्वोक्तो ब्रह्मनारदसंवादः प्रवृत्त इत्याह - **प्रजापति**रिति पञ्चभिः। धर्मपतिर्भागवतधर्माणां प्रवर्तनेन गोप्ता प्रजापतिः ब्रह्मा प्रजानां भद्रं मङ्गलमन्विच्छन् विमृशन् सैव स्वार्थे काम्यया स्वप्रयोजनेच्छा तया कदाचिद्यमान्नियमांश्च अन्वतिष्ठदनुष्ठितवान् इत्यर्थः।।३९।।

तमनुतिष्ठन्तं पितरं रिक्थादानां दायादानां मरीच्यादिपुत्राणां मध्ये प्रियतमो नारदः शीलादिभिः पर्यतोषयदित्युत्तरेणान्वयः। प्रियतमत्वमेवाह - अनुव्रतः पितरं सेवमानः शुश्रूषमाणः श्रोतुकामः शीलेन स्वभावेन प्रश्रयेण विनयेन दमेन बाह्येन्द्रियनियमेन चकाराच्छमेनान्तरिन्द्रियनिग्रहेण च।।४०।।

**विज०** उक्तव्याप्तिस्फुटीकरणपूर्वकं उपदेशमुपसंहरति - **एताव**दिति। यद्वस्तु सर्वत्र सर्वदेशे सर्वदा सर्वस्मिन् काले च अन्वयव्यतिरेकाभ्यां अन्यवस्त्वन्वितानन्वितदेशकालस्वरूपाभ्यां व्याप्तं स्यात्। एतावदेव मत्स्वरूपमात्मनः परमात्मनः तत्त्वजिज्ञासुना त्वया जिज्ञास्यं विचार्यं स्यादित्यन्वयः। अनेन वस्त्वन्तरसद्भावासद्भावरूपाभ्यां अन्वयव्यतिरेकाभ्यां सर्वदेशकालयोः एकप्रकारेण गुणक्रियाभि व्याप्तमिति विचार्यमित्युक्तं भवति।।३५।।

नेहमान इति प्रार्थितं वरं ददानीत्याह **एतन्मत**मिति।।३६।।

तिरोधानातिरोधानेऽपि स्वेच्छाधीने इति ज्ञापयन् हरिः स्वस्वरूपं तिरोधत्त इत्याशयेनाऽऽह - **संप्रदृश्येति**। अजनो जननरहितो जनविरुद्धलक्षणो वा हरिर्जनानां रुद्रादीनां सकाशात् परमेष्ठिन उत्तमस्य हिरण्यगर्भस्य यद्रूपं प्रादर्शयत् आत्मनस्तद्रूपं तस्य विरिञ्चस्य पश्यतस्सतो न्यरुणदित्यन्वयः।।३७।।

भगवति इन्द्रियविषयादन्तर्हिते सति विरिञ्चेन किं कृतम्? अत्राऽऽह - **अन्तर्हित** इति।

---

1. A.B. Omit स्व॰ 2. A.B. ॰म्या 3. W. ॰च्छया 4. W. Omits तया 5. A.B. Omits दायादानां 6. A.B. ॰दमनेन

इन्द्रियार्थः इन्द्रियविषयः तस्मादन्तर्हिताय बाह्येन्द्रियग्राह्यरूपरहितायेत्यर्थः। सर्वभूतमयः सर्वभूतप्रधानः। "सर्वस्यापि प्रधानत्वात् स सर्वमय ईर्यते" इति।।३८।।

सदा स्वेष्टदेवतां सेवमानोऽपि पुमान् विशेषप्रयोजनप्राप्तौ विशेषतः तदुपास्तिं कुर्यादिति न्यायं दर्शयितुं विरिञ्चस्य विशेषोपास्तिमाह - **प्रजापतिरिति**। धर्मपतिः सम्पदि विपदि वा तत्तद्विशेषकार्य-प्राप्तौ तत्तद्योग्यानुष्ठानं कर्तव्यमिति धर्मस्य पालकः प्रजानां भद्रान्वेषणं न स्वार्थ इत्यत उक्तं स्वार्थेति। तदपि स्वप्रयोजनमिति मनीषया मुक्तौ सुखोद्रेकार्थत्वादित्यर्थः। "अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयाऽऽ-र्जवम्। क्षमा धृतिर्मिताहारः शौचं चैते यमा दश।। तपस्सन्तोष आस्तिक्यं दानमीश्वरपूजनम्। सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो व्रतम्। एते तु नियमाः प्रोक्तास्तान् सर्वांश्च पृथक् श्रुणु।।" इत्यादि योगशास्त्रे।।३९।।

रिक्थं पित्र्यं धनमाददते इति रिक्थादाः पुत्ताः तेषां मध्ये नारदोऽतिशयेन प्रियः।।४०।।

**रा०कृ०** अन्वयव्यतिरेकाभ्यां स्वस्वरूपानुसन्धानात्मकभक्तेरन्वयव्यतिरेकाभ्यां यत् आत्मस्व-रूपं सर्वत्र सर्वदा स्यात्, तदेतावदेव आत्मनः तत्त्वजिज्ञासुना जिज्ञास्यं जिज्ञासाविषयीभूतं कार्यं ज्ञातव्यमित्यर्थः। अत्रायं विवेकः - यत्र स्वस्वरूपानुसन्धानात्मकभक्तिरस्ति, तत्र आत्मस्वरूपज्ञानं विद्यते इत्यन्वयः। यत्र पुनः सा भक्तिः नास्ति, तत्र आत्मस्वरूपज्ञानाभाव इति व्यतिरेकः।।३५।।

परमेण समाधिना चित्तैकाग्र्येण एतन्मतं मदुक्तमिति शेषः। समातिष्ठ निरन्तरमनुसन्धेहि। एवं चेत् भवान् कल्पविकल्पेषु महाकल्पेषु अवान्तरकल्पेषु च यद्वा सङ्कल्पविकल्पेषु कर्हिचित् न विमुह्यति अहङ्काराद्यभिभूतो न भविष्यति।

परमचित्तैकाग्र्येण निरन्तरस्वस्वरूपानुसन्धानात् कल्पविकल्पेष्वात्ममयेषु अहङ्कारादिविमोहो न भवतीति भावः।।३६।।

अजनः प्राकृतजनभिन्नः कर्माधीनजन्मरहित इति यावत्। हरिः भक्तशोकहर्ता भगवान् जनानां परमेष्ठिनं जायमानानां प्राणिनामुत्पादनाद्याधिपत्ये स्थितं ब्रह्माणं प्रत्येवं पूर्वोक्तप्रकारेण सम्प्रदिश्य उपदिश्य तस्य पश्यतः तस्मिन् ब्रह्मणि पश्यति सत्येव आत्मनः स्वस्य तत् तावत्पर्यन्तं प्रदर्शितं रूपं न्यरुणत् अन्तर्हितमकरोत्।।३७।।

अन्तर्हितेन्द्रियार्थाय अन्तर्हितः तिरोधापितः इन्द्रियार्थः चक्षुरादीन्द्रियगोचरस्वरूपात्मकोऽर्थः येन तस्मै हरये विहिताञ्जलिः कृताञ्जलिः सर्वभूतमयः भगवत्प्रबोधितार्थानुसन्धानेन समष्टिव्यष्टिभूतस्वरूपस्सः ब्रह्मा इदं विश्वं पूर्ववत् पुरातनकल्पवत् ससर्ज सृष्टवान्। "धाता यथा पूर्वमकल्पयत्" इति श्रुतेः।

ननु चक्षुरादीन्द्रियगोचरभगवद्रूपतिरोधानानन्तरं ब्रह्मा कथं कस्मै कथं विहिताञ्जलिरभवत्? उच्यते - प्रागुक्तभगवद्रूपतिरोधानानन्तरमपि यद्रूपं जगन्मयतयाऽवशिष्यते तस्मै भगवदनुग्रहवशात् निरन्तरभगवन्मयत्वानुसन्धानेन ब्रह्मा विहिताञ्जलिरभवदिति मन्तव्यम्। एतत्तत्त्वविदः प्राज्ञाश्च सन्तत सर्वभूतात्मभूतात्मताऽनुसन्धानपरायणाः सन्तो बन्धुमित्रादिभौतिकविरहावसरे न व्यथन्त इत्यवगन्तव्यम्। तदिदं श्रीमद्भागवताध्ययनजन्यफलानां प्रधानतमम्।।३८।।

एकदा धर्मपतिः धर्माणां प्रवृत्तिनिवृत्तिरूपाणां पतिः प्रवर्तकः प्रजापतिः ब्रह्मा प्रजानां भद्रं कल्याणं अन्विच्छन् स्वीयधर्माचरणसन्दर्शनेन प्रजा अपि तत्तत्कालोचितनानाधर्मेषु प्रवृत्तास्सन्तः भद्रं प्राप्नुवन्तु इति कामयमानः स्वार्थकाम्यया स्वस्य अर्थः प्रयोजनं प्रागुक्तप्रजाहितरूपमेव सर्वभूतमयस्य ब्रह्मणः प्रयोजनान्तराभावात् तस्य काम्यया इच्छया नियमान् स्नानादीन् यमान् अहिंसादींश्च आतिष्ठत् अनुष्ठितवान्।।३९।।

रिक्थादानां रिक्थं कर्मज्ञानयोगादिरूपं पैतृकं धनं तस्य आदानां स्वीकर्तॄणां पुत्रादीनां मरीच्यादीनां मध्ये प्रियतमः अनुव्रतः पितृभक्तिपरायणः शुश्रूषमाणः शासनादिश्रवणेन पितरं सेवितुकामः नारदः तं यमनियमाद्यनुष्ठानपरायणं पितरं ब्रह्माणं शीलेन सुस्वभावेन प्रश्रयेण विनयेन दमेन च बहिरिन्द्रियनिग्रहेण च पर्यतोषयदित्युत्तरेणान्वयः।।४०।।

**मायां विविदिष[1]न् विष्णोर्मायेशस्य महामुनिः।**
**महाभागवतो राजन्! पितरं पर्यतोषयत्।।४१।।**

**तुष्टं निशा[2]म्य पितरं लोकानां प्रपितामहम्।**
**देवर्षिः परिपप्रच्छ भवान् य[3]न्मानुपृच्छति।।४२।।**

**तस्मा इदं भागवतं पुराणं दशलक्षणम्।**
**प्रोक्तं भगवता प्राह प्रीतः पुत्राय भूतकृत्।।४३।।**

**नारदः प्राह मुनये सरस्वत्यास्तटे नृप!**
**ध्यायते ब्रह्म परमं व्यासायामिततेजसे।।४४।।**

---

1. H.M.Ma.V.W. °षुः 2. M.Ma. °शं 3. AF.GF. यदनु°

**यदुताहं त्वया पृष्टो वैराजात् पुरुषादिदम्।**
**यथाऽऽसीत्तदुपाख्यास्ये प्रश्नानन्यांश्च कृत्स्नशः।।४५।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
द्वितीयस्कन्धे पुरुषसंस्थानुवर्णनं नाम नवमोऽध्यायः।।९।।

**श्रीध० मायामिति**। किमिच्छन्। [1]विष्णोः मायां [2]विविदिषन् [3]वेदितुमिच्छन्।।४१।।

**तुष्टमिति**। [4]लोकानां प्रपितामहं पितृपितामहप्रभृतीनामपि कारणत्वात्। निशाम्य दृष्ट्वा ज्ञात्वेत्यर्थः मा माम्।।४२।।

भगवता चतुःश्लोक्या संक्षेपेण प्रोक्तं विस्तरेण प्राह - **तस्मा** इति। दशलक्षणानि लक्षणीया अर्थाः विद्यन्ते यस्मिंस्तत्।।४३।।

[5]सत्सम्प्रदायतो भागवतं [6]मया ज्ञातव्यमित्याशयेनाऽऽह - **नारद** इति।।४४।।

भागवतव्याख्यानेनैव [7]त्वत्प्रश्नानामुत्तरं दास्यामीत्याह - **यदुतेति**। "पुरुषावयवैर्लोकाः सपालाः पूर्वकल्पिताः" इत्यादिना वैराजात् पुरुषादिदं विश्वं कथमासीदिति यदहं त्वया पृष्टो [8]वै तद्यथावदुपाख्यास्यामि श्रृणु इति।।४५।।

इति श्रीमद्भागवते महापुराणे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
द्वितीयस्कन्धे नवमोऽध्यायः।।९।।

**वीर०** किमिच्छन् मायाधिपस्य विष्णोर्मायां तन्नियाम्याश्चर्यशक्तिं [9]विविदिषन् वेदितुमिच्छन्।।४१।।

लोकानां प्रपितामहं स्वस्य पितरं ब्रह्माणं तुष्टं स्वपरि[10]चर्यायां सन्तुष्टं निशाम्य ज्ञात्वा देवर्षिर्नारदः भवान् मां [11]सम्प्रति यदनुपृच्छति अनुपृष्टवांस्तदेव परिपप्रच्छ।।४२।।

---

1. H.V. Omit विष्णोः 2. H.V. Omit विविदिषन् 3. A.B. Omit वेदितुमिच्छन् 4. A.B. Omit लोका......कारणत्वात्। 5. A.B. तत्सं" 6. HV. Omit मया 7. H.V. तव प्र" 8. A.B. Omit 9. W. षुः 10. A.B. यांयां 11. A.B. प्रति

तस्मै पृष्टवते पुत्राय[1] नारदाय इदं भागवतं भगवता चतुःश्लोक्यात्मना संक्षेपेणोक्तं दशलक्षणं उपरितनाध्यायोक्तैः दशभिरर्थै[2]श्चिह्नितं पुराणं चतुःश्लोक्यामपि सर्गादयो दशार्थाः सङ्ग्रहेण सूचिताः। तथा हि 'अहमेवासम्' इति श्लोकेन भगवतः सृष्टिस्थितिसंहारकारणत्वोक्त्या आश्रयसर्गपोषणनिरोधानामुक्तिः अनेनैव सर्वकारणत्वरूपसर्वातिशायित्वोक्त्या वैकुण्ठविजयरूपस्थितिरप्युक्ता। "पश्चादहं यदेतच्च" इत्यनेन कार्यचिदचिद्रूपव्यष्टिसर्गस्यापि चतुर्मुखशरीरकस्वकारणकत्वोक्त्या विसर्गोऽपि सङ्गृहीतः। परस्परविविक्तत्वेन प्रकृतिपुरुषस्वरूपशोधके "ऋतेऽर्थम्" इति श्लोके आत्मस्वरूपाप्रतीतिदशायां मायास्वरूपप्रतीतिकथनात् आत्मस्वरूपाप्रतीतिमायाप्रतीत्यो[3] रनादिकर्मवासनायत्तत्वप्रतीतेः कर्मवासानारूपा ऊतयोऽपि सूचिताः। "यथा महान्ति भूतानि" इति श्लोके सर्वान्तरात्मतया प्रशासितृत्वरूपपालकत्वोक्त्यैव पालनाधिकृतभगवदवतारकथानां भगवदनुवर्तिमन्वादिककथानामपि सूचितत्वेन मन्वन्तरेशानुकथे अपि सूचिते। परमपुरुषशरीरप्रकृतिविलक्षणजीवस्वरूपशोधनेनैव प्रकृतिविनिर्मुक्ता आविर्भूतगुणाष्टकपरमात्मात्मकस्वरूपेणावस्थितिरूपा मुक्तिरित्यपि सूचितम्। एवं दशार्थाः सङ्ग्रहेण चतुःश्लोक्यामपि सूचिताः। अत एवैतद्विवरणरूपे द्वादशस्कन्धात्मके पुराणे दशार्थानां प्रतिपादनमुपपद्यते। भूतकृत् ब्रह्मा प्रीतः प्राह।।४३।।

स च नारदः सरस्वत्याः नद्यास्तटे परमं ब्रह्म ध्यायते ध्यानं कुर्वतेऽपरिमिततेजसे मुनये वेदशास्त्रार्थतत्त्वावगन्त्रे व्यासाय प्राह प्रोक्तवान् व्यासस्तु मह्यं प्रोक्तवानित्येतत्तु "अधीतवान् द्वापरादौ पितुर्द्वैपायनादहम्" इति पूर्वमेवोक्तम्।।४४।।

एवं सत्सम्प्रदायागतश्रीभागवत[5]व्याख्यानेनैव त्वत्कृतप्रश्नानामुत्तराण्यभिधास्यामीत्याह - **यदुतेति**। इदं विश्वं वैराजात् [6]विराडाख्यानिरुद्धसृष्टाच्चतुर्मुखाद्यथा आसीदिति यत्त्वयाऽहं पृष्टः "अतः सृजति भूतानि भूतात्मा यदनुग्रहात्" इत्यादिना तदुपाख्यास्ये भागवतो[7]पाख्यानेनोत्तरयामि, अन्यांश्च प्रश्नान् कात्स्न्र्येन उपाख्यास्ये इत्यर्थः। एवं यत्र शेते इत्यस्योत्तरमुक्तं भवति परमव्योमकथनात् अप्राकृतशुद्धसत्त्वमयलोकस्थ[8]विग्रहकथनेन ईश्वरस्य जीववद्धातुभिर्देहारम्भप्रश्नः प्रत्युक्तः। अन्यत्र व्याप्तिकथनात् परिच्छिन्नत्वमपि परिहृतम्।।४५।।

इति श्रीमद्भागवते महापुराणे
श्रीवीरराघवविदुषा लिखितायां श्रीभागवतचन्द्रचन्द्रिकायां व्याख्यायां
द्वितीयस्कन्धे नवमोऽध्यायः।।९।।

---

1. A.B. Omit पुत्राय 2. W. Omits अर्थैः 3. W "त्याः 4. A.B. "त्वेनैव 5. A B. "ताख्या" 6 A.B. वैराजाख्यादनि" 7 A B. "ताख्या"
8. A.B. "स्य परिग्र"

**विज०** मायां जगत्स्रष्टृत्वादिमाहात्म्यं विविदिषुः ज्ञातुकामः। मायेशस्यान्येषां माहात्म्यानां * पतेः "मुख्यतो विष्णुमाहात्म्यं मायाशब्दोदितं भवेत्; प्रधानन्वाञ्च मातृत्वान्मेयत्त्वं चैव तस्य हि" इति।।४१।।

पितृतोषणप्रयोजनमाह - **तुष्टमिति**।।४२।।

भगवता स्वस्य प्रोक्तं भूतं सत्तावत्सत्यं जगत् करोतीति भूतकृत् ।।४३।।

नारदस्येति सङ्कल्प्य वर्णयेति स्वपित्राज्ञापालनप्रकारमाह - **नारद** इति। मुनय इत्यादि विशेषणेभ्यो व्यासस्य सार्वज्ञ्यादिप्रतीतेः नारदादिभ्यः श्रवणं मोहानर्थमिति ज्ञातव्यम्, तदुक्तम् - हरिर्व्यासादिरूपेण सर्वज्ञोऽपि स्वयं प्रभुः" इत्यादि।।४४।।

अधुना परीक्षित्प्रश्नपरिहाराय श्रीभागवतव्याख्यानं पृथक् पृथक् प्रश्नप्रतिवचनं च प्रतिजानीते **यदुतेति**। यत्पुराणपरिज्ञानं प्रति अहं त्वया पृष्टः तत् व्यासकृतं भागवतपुराणं तवोपाख्यास्ये तत्पुराणं व्याकुर्वन् प्रथमतः सर्वेशत्वाद्विराडाख्यविरिञ्चस्थितत्वात् वैराजपुरुषाख्यहरेरिदं विश्वं यथाऽऽसीत् तथोपाख्यास्ये उताथ अन्यान् प्रश्नांश्च कृत्स्नशो व्याख्यास्ये इत्यन्वयः। श्रीभागवतप्रथमकथा नारायणोद्भूतविराडभिधविरिञ्चस्थहरेरधिदेवादिसर्वजगत्सृष्टिरुतापीति वा "उताप्यर्थविकल्पयोः इत्यभिधानम्।।४५।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
द्वितीयस्कन्धे नवमोऽध्यायः।।९।।

**रा०कृ०** राजन्! हे परीक्षिन्नरेन्द्र! मायेशस्य जगत्कारणभूतमायाविभोः विष्णोः मायां विविदिषन् वेदितुमिच्छन् महाभागवतः महामुनिः नारदः पितरं ब्रह्माणं पर्यतोषयत् परितुष्टमकरोत्।।४१।।

लोकानां प्रपितामहं पितरं स्वपितरं ब्रह्माणं तुष्टं निशाम्य दृष्ट्वा विज्ञायेति भावः। देवर्षिः भवान् मा मां प्रति यदनुपृच्छति तदेव परिपप्रच्छ परिपृष्टवान्।।४२।।

तस्मै पृष्टवते पुत्राय नारदाय प्रीतो भूतकृत् ब्रह्मा भगवता नारायणेन प्रोक्तं पुरा सङ्ग्रहेण चतुःश्लोक्या कथितम्। दशलक्षणं दशलक्षणोपेतं इदं भागवतं नाम पुराणं प्राह प्रोक्तवान्।।४३।।

---

*पत्युरिति साधीयान् पाठः

हे नृप! सोऽपि नारदः सरस्वत्याः तन्नाम्न्याः नद्याः। वाक्प्रवाहस्य सङ्केतोऽयं सरस्वतीशब्दः। तटे परमं ब्रह्म ध्यायते अमिततेजसे व्यासाय मुनये तदिदं भागवतं प्राह।।४४।।

त्वया यदुत यदपि अहं पृष्टः। इदं च विश्वं वैराजात् पुरुषात् यथा यथा वा आसीत् समभवत् तच्चान्यांश्च कृत्स्नशः प्रश्नानितरांश्च तव सर्वान् पश्चान् उपाख्यास्ये कथयिष्यामि।।४५।।

इति श्रीमद्भागवते महापुराणे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां व्याख्यायां
द्वितीयस्कन्धे नवमोऽध्यायः।।९।।

oooOooo

# दशमोऽध्यायः

**श्रीशुक उवाच**

**अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः।**
**मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः।।१।।**

**दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम्।**
**वर्णयन्ति महात्मानः श्रुतेनार्थेन चाञ्जसा।।२।।**

**भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः।**
**ब्रह्मणो गुणवैषम्यात् विसर्गः पौरुषः स्मृतः।।३।।**

**स्थितिर्वैकुण्ठविजयः पोषणं तदनुग्रहः।**
**मन्वन्तराणि सद्धर्म[1] ऊतयः कर्मवासनाः।।४।।**

**अवतारानुचरितं हरे[2]श्चास्यानुवर्[3]तिनाम्।**
**[4]सतामीशकथाः प्रोक्ताः नानाख्यानोपबृंहिताः।।५।।**

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

ततो भागवतव्याख्याद्वारैव दशमे स्फुटम्। राजप्रश्नोत्तरं वक्तुमारेभे बादरायणिः।।

[5]अतीतानन्तराध्याये दशलक्षणं पुराणं प्राह इत्युक्तं तानि दशलक्षणानि दर्शयति - **अत्रेति**। मन्वन्तराणि [6]ईशानुकथाश्चेति द्वन्द्वः। सर्गादयः अत्र द[7]शपदार्थाः लक्ष्यन्ते।।१।।

नन्वेवं अर्थभेदात् शास्त्रभेदः स्यात्तत्राह - **दशमस्येति**। दशमस्य आश्रयस्य विशुद्ध्यर्थं तत्त्वज्ञानार्थं नवानां लक्षणं स्वरू[8]पकथनम्। एकस्यैव प्राधान्यात् नायं दोष इत्यर्थः। नन्वत्र नैवं प्रतीयते। [9]अत आह – श्रुतेन श्रुत्यैव श्रुतिप्रतिपाद्यरूपेण सृष्ट्यादिस्थानेषु अञ्जसा साक्षाद्वर्णयन्ति। अर्थेन तात्पर्यवृत्त्या च तत्तदाख्यानेषु।।२।।

---

1 M Ma "र्मा 2 H V "र" 3. AF GF "र्णितम् 4 B E.I.M.Ma.N.W. पुंसा"; H.V. पुंसां च सत्कथाः 5. A.B. Omit अतीति......ये
6. B. adds च 7 A.B. "शार्थाः 8. A.B. "पम्। 9. H.V. तत्र

सर्गादीनां प्रत्येकं लक्षणमाह - **भूतमात्रेति**। भूतानि आकाशादीनि, मात्राणि च शब्दादीनि इन्द्रियाणि च। धीशब्देन महदहङ्कारौ। गुणानां वैषम्यात् परिणामात्। ब्रह्मणः परमेश्वरात् कर्तुः भूतादीनां यद्विराड्रूपेण स्वरूपतश्च जन्म स[1]ः सर्गः। विसर्गमाह पौरुषः विराजः[2] तत्कृतः पौरुषः चराचरसर्गः विसर्ग इत्यर्थः।।३।।

**स्थितिरिति**। वैकुण्ठस्य भगवतः विजयः सृष्टानां तत्तन्मर्यादापालनेन उत्कर्षः [3]भगवदवतारैः जगत्पालनमित्यर्थः। स्थितिः स्थानम्।[4] स्वभक्तेषु तस्यानुग्रहः पोषणम्। तदनुगृहीतानां सतां मन्वन्तराधिपतीनां धर्मः सद्धर्मः। [5]ऊतयः कर्मणां वासनाः। वेञ् -तन्तुसन्ताने। ऊयन्ते कर्मभिः सन्तन्यन्त इति ऊतयः। यद्वा वृद्ध्यर्थात् संश्लोषार्थाद्वा अवतेः धातोरिदं रूपम्। ऊयन्ते कर्मभिः [6]वर्धन्ते संश्लिष्यन्त इति वा ऊतयः इत्यर्थः।।४।।

[7]ईशानुकथनमाह - **अवतारेति**। हरेः अवतारानुचरितं अस्य [8]हरेः अनुवर्तिनां च [9]सत्कथा ईशानुकथाः प्रोक्ता इत्यर्थः।।५।।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ वैराजात् पुरुषात् इदं यथासीत् तदुपाख्यास्ये इति प्रतिज्ञातं समष्टिपुरुषचतुर्मुखावयवैः देवादि[10]क्लृप्ती रभिधास्यन् तावत् पुराणं दशलक्षणं प्रोक्तं भगवतेति प्रस्[11]तुतान् दशार्थानाह - **अत्रेति**। अत्र अस्मिन् पुराणे सर्गादयः आश्रयान्ताः दशार्थाः प्रतिपाद्या इत्यर्थः। मन्वन्तरेशानुकथा मन्वन्तरकथनं ईश्वरचेष्टाकथनं च इत्यर्थः।।१।।

नन्वेवं प्रतिपाद्यानां बहुत्वात् प्रतिपाद्यभेदात् शास्त्रभेदः स्यादित्याशङ्क्याऽऽह - **दशमस्येति**। इह पुराणे दशमस्या[12]श्रयस्य परब्रह्मणः विशुद्ध्यर्थ शोधनार्थं सम्यक् प्रतिपत्त्यर्थं नवानां सर्गादीनां लक्षणं अञ्जसा सुखेन महात्मानः परा[13]परयाथात्म्यज्ञाः श्रुतेनार्थेन यथाश्रुतं वर्णयन्ति। एवञ्च दशमस्यैव प्राधान्यात् तदर्थत्वेन इतरेषां प्रतिपादनात् न शास्त्रभेदः इत्यर्थः।।२।।

प्रत्येकं दशानां लक्षणमाह - **भूतेति**। भूतानि आकाशादीनि, मात्राः तन्मात्राणि शब्दादीनि। इन्द्रियाणि ज्ञानकर्मोभयेन्द्रियाणि। धीशब्दोऽन्तःकरण भूतबुद्धिशब्दवाच्यमहत्तत्त्वपरः। महदादिपृथिव्यन्तानामित्यर्थः। एतेषां तत्त्वानां यज्जन्म उत्पत्तिः तत्सर्गः इत्युदाहृतः [14]कथितः इत्यर्थः। ब्रह्मणः परस्मात्

---

1. H.V. Omit सः 2. B. adds (ब्रह्मा) 3. A.B. Omit भग.... त्यर्थः 4. B. adds ततः स्थिरेषु 5. A.B. Omit ऊतयः 6. A. बृत्यन्ते 7. A.B. Omit ईशा. ....रेति 8. B.H.V. Omit हरेः 9. B. सतां कथाः 10. W. "मिम" 11. A.B. "श्रु" 12. W. "श्रय भूतस्य 13. W. "व" 14. A.B. Omit कथित इत्यर्थः।

ब्रह्मणः प्रयोजकात् कर्तुः गुणानां सत्त्वरजस्तमसां वैषम्यात् हेतोः पौरुषः चतुर्मुखसम्बन्धी प्रयोज्य-[1]चतुर्मुखकर्तृक इत्यर्थः। एवम्भूतः सर्गः विसर्गः स्मृतः।।३।।

वैकुण्ठविजयः वैकुण्ठस्य हरेः सर्वोत्कर्षः शत्रुविजयादिरूपः स्थितिः। तस्य वैकुण्ठस्य योऽनुग्रहः जगद्रक्षणरूपः स पोषणं इत्यर्थः। सद्धर्मः सतां वैकुण्ठानुगृहीतानां मन्वन्तराधिपतीनां यो धर्मः सः मन्वन्तरानुकथनम्। कर्मवासनाः कर्मणः वासनाः संस्काराः ऊतयः इति उच्यन्ते। क्रमस्त्वविवक्षितः।।४।।

ईशानुकथां विवृणोति - **अवतारेति**। हरेः अवतारानुचरितं तदनुवर्तिनां हर्यनुवर्तिनां पुंसां च नानाख्यानोपबृंहिताः विचित्रकथाभिः युक्ताः सत्कथाश्च ईशानुकथा इत्यर्थः।।५।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अस्मिन्नध्याये वैराजाख्यहरेः सकलजगत्सृष्टिः प्रपञ्च्यते। तत्रादौ भागवतपुराणं दशलक्षणमित्युक्तम्। दशलक्षणानि कथयतीत्याह - **अत्रेति**। अत्र श्रीभागवते सर्गादिदशलक्षणानि प्रतिपद्यन्त इति शेषः।।१।।

मुक्तामुक्तप्रपञ्चाधारस्य दशमस्य हरेर्माहात्म्यवर्णनस्यावश्यापेक्षितत्वात् सर्गादिनवानां वर्णनं क्वोपयुज्यत इति तत्राह - **दशमस्येति**। महात्मानो ब्रह्मादयः इह पुराणे दशमस्य आश्रयस्य विशुद्ध्यर्थं सर्गादिनवानां लक्षणं वर्णयन्तीत्यन्वयः। अनेन अर्थात् ब्रह्मज्ञानलब्ध्यर्थत्वमुक्तं भवति। अत्र किं प्रमाणं अत्राऽऽह श्रुतेनेति। अञ्जसा मुख्यया वृत्त्या अनन्तवेदार्थसंवादेन इत्यर्थः। ब्रह्मणः सर्वगुणपूर्णत्व सर्वोत्तमत्वादि ज्ञानार्थत्वेन तदुपयोगात् तल्लक्षणकथनं युक्तमिति भावः।।२।।

तत्र प्रथमं सर्गं लक्षयति - **भूतेति**। सृष्टिकाले परब्रह्मणः सकाशात् जातात् गुणवैषम्यात् तन्त्रामकान्महत्तत्वात् अहङ्कारद्वारा भूतमात्रेन्द्रियधियां पञ्चमहाभूतानां शब्दादितन्मात्राणां श्रोत्रादिदशेन्द्रियाणां धियः बुद्धेश्च अण्डपर्यन्तं यज्जन्म स सर्गः उदाहृतः इत्यन्वयः। विसर्गं लक्षयति विसर्ग इति। पौरुषः विसर्गः स्मृत इत्यन्वयः। अण्डान्तर्गतपुरुषनाम्नः हरेः भूतानां यत् द्विविधं जन्म स विसर्गः स्मृतः शास्त्रान्तरोक्त इति शेषः। तदुक्तं - "महदाद्यण्डपर्यन्तः सर्गोऽण्डे ब्रह्मणस्तु यः। अनुसर्ग इति प्रोक्तः पौरुषश्चेति कथ्यते"।। किञ्च पञ्चभूतसमूहेन जातः पुरुषः जीवः तद्विषयसर्गः पौरुषस्सर्गः[3] इत्युच्यते। अत्राप्युक्तैव स्मृतिः प्रमाणम्। "पञ्चभूतसमूहेन जातः पुरुष उच्यते"। अण्डान्तर्हितजातानां नानाजीवानां सात्त्विकादिस्वभावानां व्यक्तिः तेषु जीवेषु तैजसाप्यादिकार्यापेक्षया भूतानां बहुत्वात्

---

1. W. Omits चतु......योज्य" 2. W. Omits सः 3. A.B.M "हि जा"

भूयस्त्वात् तथा च भूतानां काठिन्यादिस्वभावव्यञ्जकत्वेन कृतार्थत्वात् जीवतत्त्वमेकस्मात् भूतसमूहाज्जातत्वादेकजमित्युच्यते। "बहुत्वात्तत्र भूतानां तावत्त्वात्तत्त्वमेकजम्" इति च।।३।।

स्थानं लक्षयति - **स्थितिरिति**। वैकुण्ठस्य हरेः दुष्टशिष्टनिग्रहानुग्रहलक्षणो विजयः स्थितिरित्युच्यत इत्यन्वयः। तस्य वैकुण्ठस्य अनुग्रहः अनुकम्पिता प्रसादविशेषः पोषणमित्युच्यते। तत्तद्भक्तव्यैकविषयत्वात् पूर्वस्मात् विशेषः। मन्वन्तरं लक्षयति मन्वन्तराणीति। सद्धर्मा मन्वन्तरेषु सतां धारका धर्माः मन्वन्तराणीत्युच्यन्ते। ऊतीराह ऊतय इति। नानाजीवानां अनादिकर्माणि तत्संस्काराश्च नानासृष्टिहेतुभूता ऊतय इत्युच्यन्ते।।४।।

ईशानुकथामाह - **अवतारेति**। हरेः मत्स्याद्यवताराणां अनुचरितमस्य हरेः अनुवर्तिनां ब्रह्मादीनां पुंसामनुचरितं च नानाख्यानोपबृंहिता विविधेतिहासपूर्णा ईशकथेत्युच्यते।।५।।

## श्रीराधाकृष्णप्रणीता सुधीसुधा

अत्र श्रीमद्भागवतपुराणे सर्गः विसर्गः स्थानं पोषणं ऊतयः मन्वन्तरेशानुकथाः - मन्वन्तराणि ईशानुकथाश्च - निरोधः मुक्तिः आश्रयः एते दशार्थाः निरूप्यन्ते इति शेषः।।१।।

अञ्जसा सुखेन दशमस्य आश्रयस्य परब्रह्मणः विशुद्ध्यर्थं विस्पष्टज्ञानार्थं महात्मानो विदुरमैत्रेयप्रभृतयः विशुद्धान्तःकरणाः विवेकशालिनः इह भागवतपुराणे नवानां सर्गादीनां लक्षणं श्रुतेन स्तुत्यादिषु तद्वाचकशब्देनैव साक्षात् अर्थेन च तत्तदाख्यानेषु तात्पर्यवृत्त्या च वर्णयन्ति।।२।।

ब्रह्मणः प्रयोजकात् परमात्मनः गुणवैषम्यात् गुणानां सत्त्वादीनां वैषम्यात् भेदाद्धेतोः भूतमात्रेन्द्रियधियां भूतानां आकाशादीनां पञ्चमहाभूतानां मात्राणां शब्दादिपञ्चतन्मात्राणां इन्द्रियाणां चक्षुरादीनां दशेन्द्रियाणां धियः महदहङ्कारात्मिकायाश्च जन्म उत्पत्तिः, सर्ग इत्युदाहृतः तत्त्वविद्भिरिति शेषः। पौरुषः पुरुषः वैराजः ब्रह्मा तत्कृतः चराचरसर्गः विसर्ग इति स्मृतः।।३।।

वैकुण्ठविजयः वैकुण्ठस्य भगवतो नारायणस्य विजयः दुर्जनशिक्षणेन जगत्परिपालनार्थः उत्कर्षः स्थितिः स्थानमित्युच्यते। तदनुग्रहः साधुजनेषु तस्य भगवतः अनुग्रहः पोषणं इति कथ्यते। सद्धर्मः सतां भगवदनुगृहीतानां मन्वन्तराधिपतीनां आचरणीयः धर्मः मन्वन्तराणि, स एव मन्वन्तरपदेनाभिधीयते कर्मवासनाः जीवकृतपुण्यपापरूपकर्मसंस्काराः ऊतय इत्युच्यन्ते।।४।।

हरेः अवतारानुचरितं, अस्य च हरेः अनुवर्तिनां हर्यवतारोपकरणभूतानां सतां साधूनां नानाख्यानोपबृंहिताः विविधेतिहाससहिताः कथाश्च ईशकथाः ईशानुकथाः इति प्रोक्ताः।।५।।

**निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः।**
**मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिः।।६।।**

**आभासश्च निरोधश्च [1-]यतश्चाध्य[-1]वसीयते।**
**स आश्रयः परं ब्रह्म परमात्मेति [2]शब्द्यते।।७।।**

**[3]योऽध्यात्मिकोऽयं पुरुषः सोऽसावेवाधिदैविकः।**
**यस्तत्रोभयविच्छेदः [4]स स्मृतोह्याधिभौतिकः।।८।।**

**[5]एकमेकतराभावे यदा नोपलभामहे।**
**त्रितयं त[6]त्र यो वेद स आत्मा [7]स्वाश्रयाश्रयः।।९।।**

**पुरुषोऽण्डं विनिर्भिद्य यदाऽसौ स वि[8]निर्गतः।**
**आत्मनोऽयनमन्विच्छन्नपोऽस्राक्षीच्छुचिः शुचीः।।१०।।**

**श्रीध०** निरोधमाह - **निरोध** इति। अस्य आत्मनः जीवस्य हरेः योगनिद्रां अनु पश्चात् शक्तिभिः स्वोपाधिभिः सह शयनं लयः निरोधः। अन्यथारूपं अविद्याध्यस्तं कर्तृत्वादि हित्वा स्वस्वरूपेण ब्रह्मतया व्यवस्थितिः मुक्तिः।।६।।

**आभास** इति। आभासः सृष्टिः, निरोधः लयश्च यतो भवति अध्यवसीयते प्रकाशते च स [9]परं ब्रह्मेति परमात्मेति प्रसिद्धः आश्रयः कथ्यते।।७।।

आश्रयस्वरूपमपरोक्षानुभवेन स्पष्टं दर्शयितुं अध्यात्मादिविभागमाह - **य** इति। योऽयमाध्यात्मिकः पुरुषः चक्षुरादिकरणाभिमानी द्रष्टा जीवः स एवाधिदैविकश्चक्षुराद्यधिष्ठाता सूर्यादिः तत्रैकस्मिन्नेवोभयः द्विरूपः विच्छेदः यस्मात् सः आधिभौतिकश्चक्षुर्गोलकाद्युपलक्षितः दृश्यो देहः पुरुष इति पुरुषस्य जीवस्य उपाधिः। "स वा एष पुरुषोऽन्नरसमयः" इत्यादि श्रुतेः।।८।।

---

1- -1. AF.GF. तपस्तद्यत्र गीयते; I. यतो ऽस्त्य"; H.V.W. यतस्त्व"; M.Ma. यतस्तत्तयमीयते 2. AF GF. जप्यते 3. M.Ma.W. आध्या" 4. A.B.E.I.N. पुरुषो 5. M.Ma. एतदेकतमा" 6. W. "त्तु 7. W. त्वा" 8. AF.GF. "सृ" 9. H.V. Omit परं

**एकमिति**। एकमेकतराभाव इत्येतेषां अन्योन्यसापेक्ष सिद्धत्वेन अनात्मत्वं दर्शयति। तथाहि दृश्यं विना तत्प्रतीत्यनुमेयं करणं न सिद्ध्यति नापि द्रष्टा। न च द्रष्टारं विना करणप्रवृत्त्यनुमेयः तदधिष्ठाता सूर्यादिः। न च तं विना करणं प्रवर्तते, न च तद्विना[1] दृश्यं इत्येवं एकतरस्याभावे एकं नोपलभामहे। तत्र तदा तन्नितयं आलोचनात्मकेन प्रत्ययेन यो वेद साक्षितया पश्यति स परमात्मा आश्रयः। तेषामपि परस्पराश्रयत्वमस्त्येवेति तद्व्यवच्छेदार्थं विशेषणम्। स्वाश्रयोऽनन्याश्रयः। स चासावन्येषामाश्रयश्चेति। तथा च भगवान् वक्ष्यति - "दृग्रूपमार्कं वपुरत्र रन्ध्रे परस्परं सिद्ध्यति यः स्वतः खे। आत्मा यदेषामपरो य आद्यः स्वयानुभूत्याखिल सिद्धसिद्धिः" इति। एतेनैव व्यभिचारित्वात्तेषां मायामयत्वमप्युक्तम्[2]। अत एव "परुषावयवैर्लोकाः सपालाः पूर्वकल्पिताः लोकैरमुष्यावयवाः सपालैः" इत्यनेनोक्तो विरोधोऽपि परिहृतः।।९।।

उक्तमेवाध्यात्मादिविभागं प्रपञ्चयन् "यदुताहं त्वया पृष्टो वैराजात्पुरुषादिदम्, यथासीत्तदुपाख्यास्ये" इति यत्प्रतिज्ञातं तदुत्पत्तिप्रकारमाह पुरुष इत्यादिना[3]। पुरुषः वैराजः अण्डं विनिर्भिद्य पृथक्कृत्य विनिर्गतः पृथक् स्थित इत्यर्थः। अयनं स्थानं अन्विच्छन् विमृशन् यतः शुचिः स्वयमतः एव[4] शुचीः शुद्धाः अपो गर्भोदकसंज्ञाः अस्राक्षीत् ससर्ज।।१०।।

**वीर०** निरोधलक्षणमाह - **निरोध** इति। अस्य जीवात्मनः सह शक्तिभिः कर्मशक्तिभिः सह अनुशयनं सूक्ष्मावस्थ प्रकृतौ[5] अवस्थितिः निरोध इत्यर्थः। मुक्तिलक्षणमाह[6] मुक्तिरिति। अन्यथाभावं देवादिरूपं हित्वा स्वरूपेण आविर्भूतापहतपाप्मत्वादिगुणाष्टकविशिष्टेन रूपेणावस्थानमेव मुक्तिरित्यर्थः।।६।।

आश्रयलक्षणमाह[7] - **आभास** इति। आ समान्तात् भासनं आभासः जगतः आविर्भावः निरोधः प्रलयश्च। यतः[8] परब्रह्मणः अध्यवसीयते ज्ञायते प्रमाणेनावगम्यते "आविर्भावतिरोभावजन्मनाशविकल्पवत्" इत्युक्तेः यश्च परब्रह्मादिशब्दैः शब्द्यते अभिधीयते[9] स आश्रय इत्यर्थः।।७।।

अथ आश्रयस्य परमात्मनः कारणत्वौपयिकं[10] सार्वज्ञ्यं वक्तुं ज्ञातृज्ञेयज्ञानकारणानां[11] भगवदात्मकत्वं आह - **य** इति। आत्मनि जीवे ज्ञातरि नियन्तृतया वर्तमानः आध्यात्मिकः यः पुरुषः परमपुरुषः[12] सोऽसावेवाधिदैविकः। देवेषु ज्ञानकारणचक्षुरादीन्द्रियाभिमानिषु[13] आदित्यदिषु वर्तमानश्च स एव उभयविच्छेदः उभयविधः विच्छेदः भेदः यस्य स उभयविच्छेदः ज्ञातृज्ञानकारणविलक्षणः[14] ज्ञेयः

---

1. B. तद्विना 2. H.V. "मित्यु" 3. H.V. Omit आदिना 4. A.B. Omit एव 5. A.B. "कृत्यव 6. W "क्तेले" 7. W. Omits "लक्षण" 8. A.B. add यस्मात् 9. A.B. अध्यवसीयते 10. A.B. "त्वोपयुक्तसर्वज्ञतां 11. A.B. "क" 12. A.B. Omit परमपुरुष 13. A.B. "क" 14. A.B. "क"

शब्दादिः आकाशादिभूतेषु वर्तमानः तत्र यः शब्दादिषु अन्तरात्मतयावर्तमानः यः स अधिभौतिकः स्मृत इत्यर्थः। ज्ञाता[1] ज्ञानकरणं शब्दादिज्ञेयं च भगवदात्मकमित्यर्थः।।८।।

एवं त्रयाणां भगवदात्मकत्वमभिधाय तस्य सर्वज्ञतां वक्तुं जीवानां असर्वज्ञतामाह - **एकमिति**। यथा एकतराभावे चक्षुरादिकरणाभावे एकं विषयं नोपलभामहे न साक्षात्कुर्महे चक्षुरादिकरणाभावे सन्निहितमपि विषयं न पश्यामः क्षेत्रज्ञाः त्रिविधसन्निकर्षवत्सु पदार्थेषु करणाधीनज्ञानाः न तु सूक्ष्मव्य-वहितादिज्ञानवन्तः न च करणानपेक्षज्ञानाश्च इत्यर्थः।परमात्मा तु कोटित्रयसाक्षात्कर्तेत्याह त्रितयमिति। तत्र तदा त्रितयं ज्ञातृकरणज्ञेयानां त्रयं यो वेद साक्षात्कुर्यात् स त्वात्मा आश्रयाश्रयः अचिदाश्रयजीव-[2]स्याप्याश्रयः "यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्रा प्राणेऽर्पिताः" (कौ.षी.उ. 3-8) इति श्रुतेः स्वाश्रयाश्रय इति पाठे स्वस्याप्याश्रयः अन्येषाम-प्याश्रयः इत्यर्थः।।९।।

एवमाश्रयपर्यन्तान् दशार्थानभिधाय[3] "यथासीत्तदुपाख्यास्ये" इति प्रतिज्ञाते चातुर्मुखसृष्टिप्रकारं वक्तुमारभते - **पुरुष** इति। पुरुषश्चतुर्मुखरूपी असौ परमात्मा अण्डं ब्रह्माण्डं विनिर्भिद्य यदा विनिर्गतः अण्डभेदात् अनुपरुद्धसञ्चार इत्यर्थः। तेन बहिर्गमनमुक्तम्। यदेति निर्देशः कालानन्तर्याभिप्रायः चतुर्मु-खसृष्ट्यासन्नकाले हि जलसृष्टिरित्यर्थः। तदा स अनिरुद्धः परमात्मा आत्मनः स्वस्य अयनं स्थान-मिच्छन् विमृशन् यतः स्वयं शुचिः अत एव शुचीः शुद्धाः अपः जलानि अस्राक्षीत् सृष्टवान्।।१०।।

**विज०** निरोधं लक्षयति - **निरोध** इति। आत्मनः इति जातवेकवचनम्। अस्यात्मनो जीवसमु-दायस्यानभिव्यक्तस्वरूपेच्छादिशक्तिभिः सह श्रीविष्णुमनुप्रविश्य अनुशयनं स्वापो निरोध इत्युच्यते, "अनुप्रविश्य परमं जीवस्य शयनं तु यत्।सहैव शक्तिभिः स्वीयैरिच्छाद्यैरप्रकाशितैः" इत्यादेः। मुक्तिं लक्षयति मुक्तिरिति। अन्यथा रूपं प्राकृतवैकृतसूक्ष्मस्थूलेन्द्रियादिकं हित्वा केवलचिदानन्दाद्यात्मकेन[4] स्वरूपेण व्यवस्थितिः विशेषेणावस्थानं मुक्तिरित्युच्यते।।६।।

आश्रयस्वरूपं[5] लक्षयति - **आभास** इति। यतो यस्मात् जगतः आभासः मुख्यगौणवृत्या सृष्टिः चशब्दात् स्थितिः निरोधश्च भवति। तत् त्रयमपि यदाधारतया ईर्यते वेदादिषु ज्ञायते स आश्रय इत्युच्यते। किन्नामधेयोऽयमिति तत्राऽऽह परं ब्रह्मेति। मुक्तव्यावृत्त्यर्थं परमात्मेति। "सृष्टिस्थित्यप्यया-भासा यद्बलाद्यत्र च स्थिताः" इत्यादिना लक्ष्यते इत्यर्थः।।७।।

---

1. W. Omits ज्ञान" 2. A.B. अविधाश्रयजीवस्याप्याश्रयः 3. A.B. Omit दश" 4. Ma. Omits "द्य" 5. A.B.M. Omit "स्व"

प्रकारन्तरेणाश्रयं लक्षयिष्यन् आध्यात्मिकादिभगवद्रूपैक्यकथनपूर्वकं जीवानामीशतन्त्रतामाह - **आध्यात्मिक** इति। आध्यात्मिकः शरीर सम्बन्धिषु चक्षुरादिषु तत्प्रेरकत्वेन स्थितः पौरुषः विष्णुः सोऽसावेवाधिदैविकः आधिदैवेष्वादित्यादिषु स्थितः यः तत्राधिभूतेषु घटादिपदार्थेषु स्थित्वा तयोरुभयोः आध्यात्मिकाधिदैविकयोः चक्षुःप्रकाशयोर्विच्छेदः सम्यक् निश्चायकः विष्णुराधिभौतिको हि स्मृत इत्यन्वयः।।८।।

हेत्वर्थवाचिना हिशब्देन सूचितहेतुं व्यनक्ति - **एतदिति**। एतेषां त्रयाणां मध्ये एकतमाभावे चक्षुराद्यभावे प्रकाशाभावे वा तद्विषयघटादिपदार्थाभावो वा नोपलभामहे घटादिविषयामुपलब्धिं ज्ञानं नाप्नुमः इति यदा यस्मात् तस्मात् ज्ञानस्वातन्त्र्याभावात् सर्वे वयं अस्वतन्त्रा इत्यर्थः। ननु कोऽसौ ज्ञाने स्वतन्त्रः इति तत्राह त्रितयमिति। तत्र तेषां अस्वतन्त्राणां जीवानां मध्ये योऽध्यात्मादित्रितयं वेद स आत्मा विष्णुराश्रयः इत्यन्वयः। ननु अन्यदैवंविधं ज्ञानमस्तु न सुषुप्त्यादाविति अस्य इदमेवोत्तरम्। तत्र सुषुप्त्यादावपि इन्द्रियप्रकाशविषयान् अनपेक्ष्यैव यो जीवानां सर्वं स्वरूपज्ञानेनैव वेत्ति स आत्माश्रयः इति। ननु प्राणस्यापि एतत्त्रयापेक्षाभावेन ज्ञानसम्भवात् "प्राणा वा एवैतस्मिन् पुरे जाग्रति" इति श्रुतेः श्रियोऽपि नित्यमुक्तत्वात् मुक्तानां निर्देहकत्वाच्च कथमेतल्लक्षणं लक्ष्यं व्यावर्तयतीति तत्राऽऽह स्वाश्रयाश्रय इति। मुक्ताश्रयाणां रमामुख्यप्राणादीनां स्वाश्रयाणां आश्रयाणामाश्रयः आधारः अनेन स्वातन्त्र्येण प्रतीयमानं सर्वज्ञत्वं लक्षयन् लक्ष्म्यादिभ्यः लक्ष्यं व्यावर्तयतीत्युक्तं भवति सुप्त्यादावीश्वरस्य सर्ववेत्तृत्वं च। "स्वप्नेन शारीरमभिप्रहत्या सुप्तः सुप्तानभिचाकशीति" इति श्रुतिसिद्धम्।।९।।

एवं पुराणलक्षणमभिधाय अधुना विराडाख्यविरिञ्चोत्पत्तिं वक्ष्यन् प्रथमतः तत्स्रष्टृपुरुषाख्य हरेरवतारकथनपूर्वकमस्य सृष्टिमाह - **पुरुष** इति। यदा स पुरुषः सृष्टैः तत्त्वैः सह अण्डं प्रविश्य विनिर्भिद्य विभज्य विनिर्गतः प्रकाशितः पुरुषाभिध एव प्रादुर्भूतः तदात्मन एव दीपाद्दीपान्तरवत् रूपान्तरेण शेषपर्यङ्के शयनाय अयनं आश्रयं अन्विच्छन् नित्यशुचिः स भगवान् आत्मनः अयनभूताः शुचीः स्वपूजासाधनयोग्याः अपोऽस्राक्षीदित्यन्वयः। "अण्डं प्रविष्टो यो विष्णुः सोऽण्डं भित्वा प्रकाशितः" (नारायणाध्यात्मे) इत्यादेश्च।।१०।।

**रा०कृ०** अस्य आत्मनः जीवात्मनः शक्तिभिः इन्द्रियान्तःकरणादिभिः सह अनुशयनं भगवति नारायणे लयः तदेकतात्पर्येण संसृतिविस्मृतिरिति भावः। निरोध इति कथ्यते। अन्यथारूपं अज्ञानेन नरदेवगन्धर्वदेहादिषु आत्माभिमानलक्षणं हित्वा त्यक्त्वा स्वरूपेण सच्चिदानन्दरूपेण व्यवस्थितिः अवस्थानं मुक्तिरित्युच्यते।।६।।

---

1. A.B. "वे ज्ञा"

आभासः जगतः आविर्भावः चकारात् स्थितिपोषणादयः गम्यन्ते निरोधश्च लयश्च यतो यत्र भगवति अध्यवसीयते निश्चीयते स आश्रयः आश्रयभूतो नारायणः परब्रह्मेति परमात्मेति च शब्द्यते कथ्यते।।७।।

योऽयं आध्यात्मिकः पुरुषः नेत्रादीन्द्रियाभिमानी द्रष्टा जीवः वर्तते स एवासौ आधिदैविकः नेत्राद्यधिष्ठाता सूर्यादिः यस्तु पुरुषः तत्र एकस्मिन्नेव उभयविच्छेदः उभयः इन्द्रियाभिमानितदधिष्ठातृदेवतारूपः विच्छेदः विभेदः यस्मात् तादृशः वर्तते चक्षुर्गोलाद्युपलक्षितः देह इत्यर्थः। स हि आधिभौतिकः पुरुष इति स्मृतः। नेत्रादीन्द्रियाभिमानी देहस्थितः पुरुषः आध्यात्मिकः नेत्राद्यधिष्ठाता सूर्यादिरूपेण वर्तमानः पुरुषः आधिदैविकः चक्षुर्गोलाद्युपलक्षित[1]देहाकारेण वर्तमानः पुरुषः आधिभौतिक इति भावः।।८।।

यदा एकतराभावे एकतरस्य दृक्दृश्यद्रष्टृरूपेषु त्रिषु अन्यतरस्याभावे एकं अन्यतरं दृगादिकं नोपलभामहे न पश्यामः तत्र तदा त्रितयं दृगादिकं त्रयं यो वेद साक्षीभावेन यः पश्यति स आत्मा परमात्मा स्वाश्रयाश्रयः स्वाश्रयः स्वः आश्रयो यस्य सः अनन्याश्रयः इत्यर्थः। आश्रयः अन्येषामाश्रयश्च इत्यर्थः।।९।।

असौ पुरुषो वैराजाख्यःअण्डं ब्रह्माण्डं विनिर्भिद्य पृथक्कृत्य यदा आदौ सृष्टेः प्राक् विनिर्गतः पृथक् स्थितः तदा आत्मनः स्वस्य अयनं स्थानं अन्विच्छन् अभिलषन् सः वैराजः पुरुषः शुचिः स्वयं शुचिस्सन् शुचीः शुद्धाः फेनादिराहित्येन निर्मलाः अपः जलानि अस्राक्षीत् सृष्टवान्।।१०।।

**तास्ववात्सीत्स्वसृष्टासु सहस्रपरिवत्सरान्।**
**तेन नारायणो नाम यदापः पुरुषोद्भवाः।।११।।**

**द्रव्यं कर्म च कालश्च स्वभावो जीव एव च।**
**यदनुग्रहतस्सन्ति न सन्ति यदुपेक्षया।।१२।।**

**एको नानात्वमन्विच्छन् योगतल्पात् समुत्थितः।**
**वीर्यं हिरण्मयं देवो मायया व्यसृजत् त्रिधा।।१३।।**

---

1. H.V.W. देहं

**अधिदैवमथाध्यात्ममधिभूतमिति प्रभुः।**
**[1]यथैकं पुरुषं [2]वीर्यं त्रिधा भिद्यत तच्छृणु।।१४।।**

**अन्तश्शरीर आकाशा[3]त् पुरुषस्य विचेष्टतः।**
**ओजस्सहो बलं [4]जज्ञे ततः प्राणो महानसु[5]ः।।१५।।**

**श्रीध० तास्विति**। अप्सु वासं नारायणनामनिरुक्त्या स्पष्टयति। तेन अप्सु वासेन यत् यस्मात् पुरुषः नरः तस्मात् उद्भवः यासां ता नाराः आपो अयनमस्येति नारायण इत्यर्थः। तदुक्तं "आपो नारा इति प्रोक्ता आपो वै नरसूनवः। अयनं तस्य ताः पूर्वं तेन नारायणस्स्मृतः" इति।।११।।

तस्य प्रभावमाह - **द्रव्यमिति**। द्रव्यमुपादानम्। कर्मादीनि निमित्तानि। जीवः भोक्ता यस्यानुग्रहात्सन्ति कार्यक्षमा भवन्तीत्यर्थः।।१२।।

**एक** इति। योग एव तल्पं शय्या तस्मात् वीर्यं गर्भरूपं देहं हिरण्मयमिव प्रकाशबहुलम्।।१३।।

[6]अस्यैव प्रपञ्चः - [7]**अधीति**। एवमधिदैवादिरूपेण त्रिधा भिन्नस्यापि कार्यस्य एकं पौरुषं पुरुषसम्बन्धि क्रियाशक्तिरूपं त्रिधाभिद्यत इति यत् तच्छृणु।।१४।।

**अन्तरिति**। अन्तश्शरीरे यः आकाशः तस्मात् क्रियाशक्त्या [8]तत्र विविधं चेष्टमानस्य सतः ओजः इन्द्रियशक्तिः सहो मनश्शक्तिः, बलं देहशक्तिः ततः [9]क्रियाशक्त्यात्मनः सूक्ष्माद्रूपात् प्राणः सूत्राख्यः महान् मुख्यः [10]स एव असुः [11]अस्वात्मकः प्राणः सर्वेषाम्।।१५।।

**वीर०** स्वसृष्टासु तासु अप्सु [12]सहस्रपरिवत्सरान् सहस्रं परिवत्सरान् बहून् संवत्सरान् अवात्सीत् उवास। एतदेव नारायणशब्दप्रवृत्तिनिमित्तमित्याह - **तेनेति**। [13]यद्यस्मात्पुरुषोद्भवाः पुरुषात् परमपुरुषात् [14]नारायणात् उद्भवाः उत्पन्नाः पुरुषादुद्भवः यासामिति वा। नाराः आपः अयनं यस्येति शेषः। तेन ईदृशव्युत्पत्तिलभ्येन अयनत्वेन [15]निमित्तेन नारायणः नारायणशब्दवाच्योऽभूदित्यर्थः। नामेति स्मृत्यन्तरप्रसिद्धिं द्योतयति। तथाहि - स्मर्यते "आपो नारा इति प्रोक्ताः आपो वै नरसूनवः। अयनं [16]तस्य ताः पूर्वं तेन नारायणः स्मृतः"।। इति ।।११।।

---

1. B.I.N. अ॰; H.V. यदेकं; M.Ma. पुनस्तत् 2. W. बीजं 3. M.Ma. ॰शे 4. AF.GF. तेजः 5. M.Ma. ॰भूत् 6. A.B. त॰ 7. A. यथेत्यादिना; B. अथेत्यादिना 8. H.V. Omit तत्र 9. A.B. शक्त्यात्मकात् 10. A.B. Omit स एव 11. A.B. Omit अस्वात्मकः 12. A.B. Omit सह......रान् 13. W. Omits यत् 14. A.B. Omit नारायणात् 15. A.B. Omit निमित्तेन 16. A. यस्य

अस्यैव प्रभावमाह - **द्रव्यमिति**। द्रव्यादयः यदनुग्रहतः सन्ति[1] स नारायण इत्यन्वयः। द्रव्यं महदादिपृथिव्यन्तभूतवर्गः, कर्म जीवादृष्टं, कालः गुणवैषम्यहेतुः, स्वभावः प्रकृतेः परिणामस्वभावः, यदनुग्रहतः यस्यानुग्रहात्[2] सन्ति यदुपेक्षया[3] यस्य उपेक्षया[4] न सन्ति द्रव्यादयः यत्सङ्कल्पानुविधायि-सत्तास्थितप्रवृत्तिका इत्यर्थः।।१२।।

एवम्भूतो नारायणः एकः अविभक्तनामरूप सूक्ष्मचिदचिच्छरीरकत्वेनैकः नानात्वमन्विच्छन् देवमनुष्यादिरूपेण नाना[5] भवितुमिच्छन् योगः स्वात्मानुभवरूपो योगः स एव तल्पं शय्या तत्स्मात् समुत्थितः देहं स्वशरीरभूतं हिरण्मयं रमणीयं वीर्यं चिदचिदात्मकं कारणद्रव्यं मायया चतुर्मुखरूपेण त्रिधा व्यष्ट्यात्मक[6]करणज्ञातृज्ञेयरूपेण व्यसृजत् मायाशब्दः तद्गुणरजःप्रचुरचतुर्मुखपरः सङ्कल्पपरो वा। सङ्कल्पेन चतुर्मुखरूपी भूत्वा वाप्यसृजदित्यर्थः।।१३।।

त्रैविध्यं विवृणोति - **अधिदैवमिति**। अधिदैवं दिगादिदेवताधिष्ठितः[7] एकादशेन्द्रियरूपकरणवर्गः अध्यात्मं ज्ञातृवर्गः, अधिभूतमिति पृथिव्यादिभूतस्थगन्धादिज्ञेयवर्गः उक्त इति त्रिधा प्रभुर्व्यसृजदित्यर्थः। ज्ञातृसृष्टिर्नाम जीवानां तत्तद्देवादिदेहयोगसम्पादनमेव। तथाहि "तोयेन जीवान् विससर्ज भूम्याम्" इति तोयशब्दोपलक्षितभूतसङ्घपरिणामदेवादिशरीरविशिष्टत्वेनाऽऽकारेण विससर्ज इत्यर्थः। अथ सङ्ग्रहेणोक्तं देवादिव्यष्टिशरीरस्थानां प्राणेन्द्रियादीनां चतुर्मुखस्वशरीरस्थ प्राणेन्दियादि समष्टितः उत्पत्तिप्रकारं प्रति-पादयितुं प्रतिजानीते यथेति। पौरुषे समष्टिपुरुषचतुर्मुखदेहगतं पुरुषाधिष्ठितं वा एकं समष्टिरूपेणैकं वीर्यं व्यष्टिकारणं द्रव्यं त्रेधा करणभोक्तृविषयरूपेण देवादिव्यष्टीनां यथा निरभिद्यत उदपद्यत तच्छृ-ण्वित्यर्थः मत्त[8] इति शेषः।।१४।।

एवं प्रतिज्ञाय व्यष्टीन्द्रियसृष्टिविभागं वक्तुं इन्द्रियाश्रयप्राणव्यष्टिसृष्टिमाह - **अन्तरिति**। पुरुषस्य चतुर्मुखस्य विचेष्टतः प्राणव्यापारं कुर्वतः सतः[9] चतुर्मुखे प्राणव्यापारं कुर्वति सतीत्यर्थः। अन्तश्शरीरे तच्छरीरान्तस्स्थितादाकाशकार्यवायुविशेषात् प्राणात् ओजः सहो बलं जज्ञे। ओजः प्रवृत्तिसामर्थ्यं सहः वेगसामर्थ्यं बलं धारण[10]सामर्थ्यं एते धर्माः अभवन्नित्यर्थः। ततः चतुर्मुखस्वशरीरगतौजस्सहोबलधर्मि-प्राणात् प्राणाख्यः महान् मुख्यः असुः प्राणनहेतुः जज्ञे इतरेषां शरीरान्तर्वर्तिप्राणा अभवन्नित्यर्थः। प्राण इत्येकवचनमार्षम् जात्यभिप्रायं वा।।१५।।

**विज०** ततः किं तत्राह - **तास्विति**। स्वसृष्टासु तास्वप्सु सहस्रपरिवत्सरानवात्सीदिति यत् तेन नारायणो नामाभूदित्यन्वयः। ननु अनेन अयनमप्स्वास इति अबयनः इति वा जलायन इति च अन्तरेण

1. W. Omits सन्ति 2. A.B.Omit यस्यानुग्रहात् 3. A.B. Omit यदुपेक्षया 4. W. Omits यस्य उपेक्षया 5. A.B. Omit नाना°
6. A.B. Omit व्यष्ट्यात्मक° 7. A.B. °पः 8. W. Omits मत्तः.......शेषः 9. A.B. Omit सतः 10. W. °णा°

नारायण इति नाम कथमत्राह - यदिति। "अनाशात्पुरुषो नरस्तदुद्भवा आपो नारा इति यत् यस्मात् ता नारा अयनं यस्य स नारायण" इति, "सोऽपोऽसृजत्ततो नारा नरोऽनाशात्परो यत" इति च।।११।।

हरेरियं सृष्टिः स्वधीनसाधनान्तरसहकृतेत्याशयेनाऽऽह - **द्रव्यमिति**। द्रव्यं पृथिव्यादि।।१२।।

ब्रह्माण्डान्तस्त्रैविध्यमपि श्रीनारायणेनैव कृतमित्याह - **एक** इति। जले शेषपर्यङ्के शयान एको-नारायणः एव स्वसृष्टतत्तद्वस्तु नियामकतया अन्तर्यामिरूपैः नानात्वं बहुत्वसङ्ख्यागोचरत्वं आप्तुमन्वि-च्छन् योगतल्पात्समुत्थितः देवः लीलालोलः हिरण्मयं स्ववीर्यमण्डं मायया स्वेच्छया अन्तः त्रिधा व्यधात्। "तत्तन्नियामकत्वेन बहुत्वं प्राप्तुमीश्वरः" इत्यादेः। किञ्च हिरण्मयं पूर्णसुखं शतानन्दवीर्य स्वरेतो- रूपं त्रिधा व्यसृजदित्यन्वयः। "अन्तस्स्थितहरेः कामादण्डे ब्रह्मतनोर्जनिः" इत्यादेः।।१३।।

अण्डान्तस्त्रैविध्यप्रकारं कथयति - **अधिदैवमिति**। प्रभुरिति त्रिधा व्यसृजदिति शेषः। हरिवीर्य-रूपस्य विराजोऽपि त्रैविध्यमस्तीति कथयति पुनरिति। पुनर्यथा तत्पौरुषं पुरुषाख्यस्य हरेः वीर्यं विराण्णामब्रह्मात्मकं जातं त्रिधाऽभिद्यत इति त्रिविधमभवत् तथा श्रृणु इत्यन्वयः।।१४।।

तत्त्रैविध्यं विवृणोति - **अन्तरिति** विराडाख्यब्रह्मशरीरे अन्तराकाशे विचेष्टतः पुरुषस्य हरेः ओजस्सहोबलं पराभिभवसहनस्वेच्छाकरणशक्तयो जज्ञिरे। ततस्तेभ्यः ओजआदिभ्यः महान् प्राणः मुख्यप्राणः जज्ञ इत्यन्वयः। ब्रह्मान्तर्यामिहर्योजस्सहोबलानुविष्टहिरण्यगर्भौजस्सहोबलेभ्यः सर्वेन्द्रियना-यकः ओजस्सहोबलात्मको मुख्यप्राणः जात इत्युक्तं भवति। एतेन च पूर्वप्रकृताध्यात्माधिभूताधिदैवानां ब्रह्मस्थनारायणब्रह्मप्राणेभ्यः सृष्टिरिति ज्ञातव्यम्। "प्राणेन क्षिपता" इत्यादि वक्ष्यमाणत्वात्।।१५।।

**रा०कृ०** स पुरुषः स्वसृष्टासु तासु अप्सु सहस्रपरिवत्सरान् बहुसंवत्सरान् अवात्सीत् व्यवसत्। तेन कारणेन अप्सु निवासेनेत्यर्थः। यत् यतश्च आपः पुरुषोद्भवाः नरोद्भवाः नारा भवन्ति। ततश्च सः नारायणो नाम नारायण इति नाम्ना प्रसिद्धोऽभवत् आपो नरसञ्जातत्वात् 'नारा' इति कथ्यन्ते। नारा यस्य अयनं भवन्ति स नारायण इति व्यवह्रियते। एवं परमपुरुषस्य नारायणत्वकथनेन जीवानामपि शुक्राख्य नारोद्भवो यज्यते। किञ्च तादृशनारायणाख्यस्य परब्रह्मणः प्रभावो दुरधिगमः। अत एव मान-वानामादौ ब्रह्मचर्याश्रमो विहितः। ब्रह्मचर्याश्रमनिष्ठानां च ऊर्ध्वगामि शुक्रमाराधयतां ब्रह्मतत्त्वमार्गः सुगमो भवति। अनन्तरं गार्हस्थ्यावलम्बिनः जनाः दारेषु पूर्वोक्तशुक्राधानेन सत्सन्तानवन्तः भवन्ति। ततश्च ब्रह्मविद्या वंशक्रमानुगता सुरक्षिता भवति। अयमाशयः - यथाविधि ब्रह्मचर्यव्रतावलम्बिन एव गार्हस्थ्यमर्हन्ति। एवमेकपत्नीव्रतत्वपातिव्रत्यादिभिः पावनैः नियमैः ये जनाः नाराराधनं निर्वहन्ति त एव मोक्षं भजन्ते तेषामेव च सन्ततिः ब्रह्मविद्यां गृह्णाति। अन्यथा पशुकामप्रभवैः मानवैः मानवधर्मोपेतैः क्रूराचारैः भूतलं उपद्रुतं भवति। पालकाश्च दुष्टास्सन्तः प्रजाकण्टकाः भवन्ति। इत्थं मानवसमाजः स्वदुष्कृतफलमवश्यमनुभविष्यति। अत एव नारायणतत्त्वावगमे जनैः अप्रमत्तैः भवितव्यमिति।।११।।

द्रव्यं महत्प्रभृतिपृथिव्यन्तो भूतग्रामः कर्म जीवानां अदृष्टं शुभाशुभात्मकम्। कालो गुणवैषम्य-हेतुः स्वभावः परिणामहेतुः, जीवो भोक्ता - एते सर्वे यदनुग्रहतः यस्य नारायणस्य अनुग्रहात् सन्ति सत्तां प्राप्नुवन्ति कार्यसमर्था भवन्ति च। यदुपेक्षया यस्य उपेक्षया न सन्ति सत्तामेव न प्राप्नुवन्ति किं पुनः कार्यसामर्थ्यमिति भावः।।१२।।

प्रभुः सर्वसमर्थः स देवः एकः अविभक्तनामरूपस्सन् स्वस्य नानात्वमन्विच्छन् देवमानवादि-रूपेण बहुत्वं प्राप्तुमिच्छन्, योगतल्पात् योगशय्यायाः समुत्थितश्च सन् मायया स्वसङ्कल्पात्मिकया हिरण्मयं प्रकाशाधिकं वीर्यं गर्भरूपं शरीरं अधिदैवं, अथ अध्यात्म, अधिभूतमिति च त्रिधा व्यसृजत् विभक्तवान्। एकं पौरुषं पुरुषसम्बन्धि वीर्यं यथा त्रिधाऽभिद्यत भिन्नमभवत् उत्पन्नमभवदित्यर्थः तत् श्रुणु।।१३,१४।।

पुरुषस्य विचेष्टतः क्रियाशक्त्या विविधं चेष्टमानस्य सतः अन्तश्शरीरे शरीरस्यान्तः विद्यमाना-दिति शेषः, आकाशात् ओजः इन्द्रियशक्तिः, सहः मनश्शक्तिः बलं देहशक्तिश्च जज्ञे अजायत। ततः त्रिविधशक्त्यात्मकात् सूक्ष्मरूपात् महान् श्रेष्ठः असुः जीवनव्यञ्जकः प्राणः सूत्राख्यः जज्ञे।।१५।।

**अनुप्राणन्ति यं प्राणाः प्राणन्तं सर्वजन्तुषु।**
**अपानन्तमपानन्ति नरदेवमिवानुगाः।।१६।।**

**प्राणेन क्षिपता क्षुत्तृडन्तरा जायते प्रभोः[1]।**
**पिपासतो जक्षतश्च प्राङ्मुखं निरभिद्यत।।१७।।**

**मुखतस्तालु निर्भिन्नं जिह्वा तत्रोपजायते।**
**ततो नानारसो जज्ञे जिह्वया योऽधिगम्यते।।१८।।**

**विवक्षोर्मुखतो भूम्नो वह्निर्वाक् व्याहृतं तयोः।**
**[2]जले [3]वै तस्य सुचिरं निरोधस्समजायत।।१९।।**

**नासिके निरभिद्येतां दोधूयति नभस्वति।**
**तत्र वायुर्गन्धवहो घ्राणो नसि जिघृक्षतः।।२०।।**

1. H.I.M.Ma.V. वि° 2. W. ग° 3. I.M.Ma.W चै°

**श्रीध०** महत्वं दर्शयति - **अन्विति**। प्राणः इन्द्रियाणि यं प्राणन्तं चेष्टां कुर्वन्तं अनु पश्चात् प्राणन्ति चेष्टां कुर्वन्ति अपानन्तं चेष्टां त्यजन्तम[1]नु अपानन्ति चेष्टां त्यजन्ति राजानमनुगाः भृत्या इव।।१६।।

**प्राणेनेति**। क्षिपता चालयता निमित्तेन। क्षुत्तृडादिकं प्र[2]भोरिति विराड्जीवाभेदेनोपासनार्थमुक्तम्। [3]आजायते स्म। ततो जक्षतः भक्षयितुमिच्छतः इत्यर्थः। प्राक् प्रथमं निरभिद्यत विभक्तमभूत्।।१७।।

**मुखत** इति। ताल्वधिष्ठानं जिह्वेन्द्रियं नानारसो विषयः। वरुणश्च देवता ज्ञातव्या। एवं सर्वत्र अधिष्ठानमिन्द्रियं देवता विषयश्च[4] इत्येतच्चतुष्टयं अनुक्तमप्यूह्यम्।।१८।।

**विवक्षोरिति**। विवक्षोर्वक्तुमिच्छोः मुखत एव वह्निःदेवता वाक् इन्द्रियं व्याहृतं भाषणम्। तयोरिति इन्द्रियदेवताधीनत्वं कर्मणो दर्शयति।।१९।।

**नासिके** इति। नभस्वति प्राणवायौ दो[5]धूयति दोधूयमाने अत्यन्तं प्रचलति स[6]ति तत्र च न[7]सि च नासिकायां वायुर्देवता, गन्धं वहतीति तथा। अनेन गन्धो विषयः दर्शितः। घ्राणः इन्द्रियं जिघृक्षतः गन्धं ग्रहीतुमिच्छतः।।२०।।

**वीर०** तस्य महत्त्वमेवाऽऽह अनुप्राणन्तीति। प्राणा इन्द्रियाणि सर्वजन्तुषु यं प्रा[8]णं प्राणन्तं चेष्टां कुर्वन्तं अनु पश्चात् प्राणन्ति चेष्टां कुर्वन्ति। अपानन्तं चेष्टां त्यजन्तं प्राणं अनु पश्चात् सर्वे प्राणाः अपानन्ति चेष्टां त्यजन्ति नरदेवं राजानं अनुगाः भृत्या इव सर्वाण्यपि इन्द्रियाणि प्राणाधीनवृत्तीनीत्यर्थः। यद्वा व्यष्टि प्राणानां कारणस्वभावानुवर्तित्वमाह अनुप्राणन्तीति। यं चतुर्मुखशरीरस्थं समष्टिप्राणं अनु अनुसृत्य तत्स्वभावानुवर्तिनः ओजआदिसामर्थ्ययुक्ता एव व्यष्टिप्राणाः प्राणापानादिव्यापारं कुर्वन्तीत्यर्थः ।।१६।।

अथ साधिष्ठानस्य सदेवतस्य सविषयस्य जिह्वेन्द्रियस्य उत्पत्तेः मुख्यप्राणहेतुकत्वं सूचयन्नाह - **प्राणेनेति**। क्षिपता व्याप्रियमाणेन प्रा[9]णेन विभोश्चतुर्मुखस्यान्तरा जठराग्नौ दीपिते क्षु[10]त्तृट् च जायते अ[11]जायत इत्यर्थः। ततः पिपासतः पातुमिच्छतः जक्षतः अत्तुमिच्छतश्च नटस्य श्रुणोतीतिवत्[12] पञ्चम्यर्थे षष्ठी बोध्या, प्राक् प्रथमं मुखं निरभिद्यत विभक्तमभूत् चतुर्मुखमुखात् व्यष्टिशरीरमुखानि उत्पन्नानीत्यर्थः।।१७।।

ताल्वधिष्ठानं जिह्वेन्द्रियं नानारसः विषयः वरुणश्च देवता ज्ञातव्याः। एवं सर्वत्र अधिष्ठानं इन्द्रियं देवता विषयः इत्येतच्चतुष्टयं अनुक्तमप्यूह्यम्। मुखाद्यङ्गैः विना जिह्वायाः उत्पत्त्ययोगात्

1. H.V. Omit अनु 2. H.V. Omit प्रभोरिति 3. H.V. Omit आ 4. A.B. Omit "श्च 5. H.V. Omit दोधूयति 6. H.V. Omit सति 7. A. Omits नसि 8. A.B. Omit प्राणं 9. W. Omits प्राणेन 10. W. क्षुत्तृडिच्छा 11. A.B. Omit अजायत 12. W. adds पक्षे

मुखेत्पत्तिरुक्ता नत्वधिष्ठानतया अधिष्ठानं तु ताल्वेव। अनेन ज्ञातृसृष्टिरप्यर्थात् उक्ता भवति वागादीन्द्रियाश्रयमुखाद्यवयवसङ्घातात्मकदेवादिदेहयोगकरणमेव हि ज्ञातृसृष्टिः। तालुः जिह्वामूलं [1]निर्भिन्नं व्यष्टिशरीरतालूत्पन्नमित्यर्थः। तत्र तालुनि जिह्वा [2]उपजायते उपाजायतेत्यर्थः। नानारसः कट्वाम्लमधुरतिक्तादिरसः जज्ञे जिह्वया यः नानारसः अधिगम्यते ज्ञायते[3] इत्यर्थः।।१८।।

वाग्व्यष्ट्युत्पत्तिमाह - **विवक्षोरिति**। विवक्षोर्वक्तुमि[4]च्छोर्भूम्नो भगवतः [5]चतुर्मुखरूपिणो भगवतः मुखतः मुखात् वह्निः वागभिमानिनी देवता वागिन्द्रियं तयोरिन्द्रियतदभिमानिदेवतयोर्व्यापाररूपं व्याहृतमुक्तिश्चाभूदित्यर्थः। एवं सर्वत्र ब्रह्मशरीरात् समष्टिभूतात् व्यष्ट्यवयवविशेषविभाग उच्यते। [6]मुखाद्यङ्गैरित्यस्य मुखमादिर्येषां कपोलादीनां तैरङ्गैः विनेत्यर्थः मुखकपोलहन्वादिसमुच्चयं विना तदन्तर्वर्तिजिह्वायाः उत्पत्त्ययोगादित्यभिप्रायः। [7]न चेयं चतुर्मुखस्यैवेन्द्रयोत्पत्तिरिति वक्तुं युक्तं "उपरि हस्तौ रुरुहतुः" (भाग.2-10-24) इति हस्तद्वयोत्पत्तिकथनेन चतुर्मुखस्य द्विबाहुत्वाभावात् देवादिशरीरस्थहस्तादिव्यष्टियुग्मविभगस्य सूचितत्वत् घ्राणेन्द्रियव्यष्ट्युत्पत्तिमाह गले इति। एतस्य ब्रह्मणः कण्ठे सुचिरं [8]कालमित्यर्थः। निरोधः वायोरिति शेषः। वायोर्निरोधः समजायतेत्यर्थः। जले इति पाठे नभस्वतीत्यन्वयः।।१९।।

निरोधात् नभस्वति वायौ **दोधूयति**। अत्यन्तं प्रचलति सति नासिके [9]नासापुटे निरभिद्येताम्। वायुव्यापारं कुर्वतः ब्रह्मणः शरीरे वायुपूरिते नासिके निरभिद्येताम्। ब्रह्मशरीरे [10]वायोः स्तैमित्यान्नासा[11]विवरात् नासाव्यष्टयः अभवन्नित्यर्थः। [12]घ्राणाभिमानिदेवतोत्पत्तिमाह - **तत्रेति**। "वायुः प्राणो भूत्वा नासिके प्राविशत्" इति श्रुतेः। जिघृक्षतः [13]गन्धमिति शेषः गन्धं [14]ग्रहीतुमिच्छतः [15]ब्रह्मणः तत्र नसि [16]नासायां गन्धवहः [17]घ्राणग्राह्यगन्धप्रापकः [18]वायुः घ्राणाधिष्ठाता घ्राण इन्द्रियं च निरभिद्यते[19]त्यन्वयः।।२०।।

**विज०** प्राणस्य सर्वेन्द्रियप्रभुत्वं स्पष्टयति अनु प्राणन्तीति पिङ्गलया नाड्या अपानन्तं अधश्चेष्टमानम्।।१६।।

इडापिङ्गलयोः प्राणापानचेष्टाफलमाह - **प्राणेनेति**। प्राणेन अपानेन च। विभोः विरिञ्चस्य चतुर्मुखावयवोत्पत्तिकथनपूर्वकं तेभ्यः अध्यात्मादीनामुत्पत्तिप्रकारं प्रपञ्चयति पिपासत इति। प्रागादौ मुखं निरभिद्यत व्यक्तमभवत्।।१७।।

मुखतो मुखे तत्र तालु निरभिनत् जिह्वया जिह्वेन्द्रियेण।।१८।।

---

1. W. Omits निर्भिन्नं 2. W. Omits उपजायते 3. W. Omits इत्यर्थः 4. W. °च्छतः 5. A.B. Omit चतुर्मु......वतः 6. W. Omits मुखाद्यङ्गैः ......अभिप्रायः 7. W. न चेदं चतुर्मुखस्यैवेन्द्रियोत्पत्ति परं प्रकरणमिति 8. W. Omits कालमित्यर्थः 9. W. Omits नासापुटे 10. W. वायुस्तै° 11. A.B. Omit विवरात् नासा° 12. A.B. Omit घ्राण......श्रुतेः 13. A.B. Omit गन्धमिति शेषः 14. A.B. आघ्रातु° 15. W. Omits ब्रह्मणः तत्र 16. W. नासिकयां 17. A.B. Omit घ्राणग्राह्य° 18. W. Omits घ्राणाधिष्ठाता 19. W. °त्यर्थः।

वाक् वागिन्द्रियं तयोर्वह्निवाचोः अनन्तरं व्याहृतमभिवादनं शरीरान्तस्थे नभस्वति वायौ दोधूयति पुनः पुनः धुन्वति कम्पमाने सति जलेऽण्डोदके वर्तमानस्य विरिञ्चस्य वायुनिर्गमद्वारा भावेन निरोधः। क्लेशविशेषोऽभूत्।।१९।।

तदनन्तरं नासिके श्वासोच्छ्वासरूपवायुनिर्गमद्वारे व्यक्ते। वायुरित्यनेनाद्यापि निरोधः अनुभवसिद्ध इत्याह। जिघृक्षतः घ्रातुमिच्छतः धातुः तत्र नसि नासिकायां यो नासिक्यः प्राणः सः गन्धग्राही वायुः घ्राणेन्द्रियं तद्विषयो गन्धश्च जात इति शेषः।।२०।।

**रा०कृ०** सर्वजन्तुषु सर्वेषु प्राणिषु प्राणन्तं चेष्टां कुर्वन्तं यं प्राणाः इन्द्रियाणि नरदेवं राजानं अनुगाः अनुचरा इव अनुप्राणन्ति अनुसृत्य चेष्टां कुर्वन्ति, अपानन्तं चेष्टां त्यजन्तं तं अपानन्ति प्राणाः चेष्टां त्यजन्ति।।१६।।

प्रभोः वैराजस्य पुरुषस्य अन्तरा कुक्षिमध्ये क्षिपता व्यापारवता प्राणेन निमित्तभूतेन क्षुत् तृट् च जायते अजायतेति भावः। ततश्च पिपासतः पातुमिच्छतः जक्षतश्च भक्षयितुमिच्छतश्च तस्य प्रभोरिति शेषः प्राक् प्रथमं मुखं निरभिद्यत विभक्तमभूत्।।१७।।

तस्य मुखतः मुखे तालु इन्द्रियाधिष्ठानं निर्भिन्नं उत्पन्नम्। तत्र तालुनिजिह्वा जिह्वेन्द्रियमध्यात्मं उपजायते अजायतेत्यर्थः। ततः अनन्तरं जिह्वया यो रसोऽधिगम्यते सः नानारसः कट्वाम्लादिभेदेन षड्विधो रसः विषयः अधिभूतं जज्ञे अजायत। वरुणश्च देवता अधिदैवमकथितमप्यजायतेति विज्ञेयम्।।१८।।

भूम्नः व्यापकस्य विवक्षोः वक्तुमिच्छोः प्रभोः मुखतः मुखरूपाधिष्ठाने बह्निः देवता वाक् इन्द्रियं तयोः इन्द्रियतदभिमानिदेवतयोः व्याहृतं कर्मरूपं भाषणं च अभवदिति शेषः। अपि च तस्य व्याहृतस्य जले निरोधः सुचिरं समजायत।।१९।।

जिघृक्षतः तस्य विभोः गन्धं ग्रहीतुमिच्छतः सतः नभस्वति प्राणपवने दोधूयति नितरां कम्पमाने सति नासिके अधिष्ठानभूते निरभिद्येतां उत्पन्ने। तत्र नसि तस्यां च नासिकायां गन्धवहो गन्धवाहकः वायुः देवता अभवत्। अत्र गन्धो विषयवाची घ्राणः इन्द्रियं च अभवदिति शेषः।।२०।।

**यदा[1]ऽऽत्मनि निरालोकमात्मानं[2] च दिदृक्षतः।**
**निर्भिन्ने ह्यक्षिणी[3] तस्य ज्योतिश्चक्षुर्गुणग्रहः।।२१।।**

1. A. त° 2. M.Ma. °क आ° 3. H.I.M.Ma.V.W. अ°

**बोध्यमानस्य ऋषिभिः आत्मनस्तज्जिघृक्षतः[1]।**
**कर्णौ च निरभिद्येतां दिशः श्रोत्रं गुणग्रहः।।२२।।**

**वस्तुनो मृदुकाठिन्य[2] लघुगुर्वो[3]ष्णशीतताम्[4]।**
**जिघृक्षतस्त्वङ्निर्भिन्ना तस्यां रोम[5]महीरुहाः।**
**तत्र चान्तर्बहिर्वा[6]तस्त्वचा लब्धगुणो[7] वृतः।।२३।।**

**हस्तौ रुरुहतुस्तस्य नानाकर्मचिकीर्षया[8]।**
**तयोस्तु बलमिन्द्रश्च[9] आदानमुभयाश्रयम्।।२४।।**

**गतिं[10] जिगीषतः पादौ रुरुहातेऽभिकामिकाम्[11]।**
**पद्भ्यां यज्ञः स्वयं हव्यं कर्मभिः[12] क्रियते नृभिः[13]।।२५।।**

**श्रीध० यदेति**। निरालोकं प्रकाशशून्यमासीदिति शेषः। निर्मक्षिकमितिवदव्ययीभावः। तदा आत्मानं देहं चकारादन्यञ्च वस्तु दिदृक्षतः अक्षिणी स्थानम्। ज्योतिरादयः देवता, चक्षुरिन्द्रियम्। ततो गुणस्य रूपस्य ग्रहो ग्रहणम्। अनेन रूपं विषयः दर्शितः।।२१।।

**बोध्यमानस्येति**। ऋषिभिः वेदैः बोध्यमानस्य सतः[14] तत्[15] आत्मनः प्रबोधनं ग्रहीतुमिच्छतः कर्णौ[16] अधिष्ठानं दिशः देवताः श्रोत्रं इन्द्रियं ततो गुणग्रहः शब्दस्य[17] ग्रहणम्।।२२।।

**वस्तुन** इति। मृदुत्वं च काठिन्यं च लघुत्वं च गुरुत्वं च आ[18] उष्णं ओष्णं ओष्णत्वं ईषदुष्णत्वं च शीततां च इत्यर्थः। यद्यप्य[19]त्युष्णत्वमपीन्द्रियविषय एव तथाऽपि तस्य जिघृक्षाभावात् ओष्णमित्युक्तम्[20]। गुर्वुष्णोति पाठे यणादेशश्छान्दसः। वस्तुन एतान् धर्मान्[21] जिघृक्षतः त्वङ्निर्भिन्ना। त्वगिन्द्रियाधिष्ठानं चर्म जातमित्यर्थः तस्यां रोमाणि[22] इन्द्रियं महीरुहाश्च देवता जाताः। वस्तुनि हस्तेनातोलिते लघुत्वगुरुत्वयोर्ज्ञानात् तयोरपि त्वगिन्द्रियविषयत्वमिति पौराणिकाः। तत्र त्वच्यन्तर्बहिश्च वातो वायुः[23] वृतः आवृत्य स्थितः कर्तरि निष्ठा। कथम्भूतः? त्वचा लब्धो गुणः स्पर्शः येन। अयमर्थः त्वगिन्द्रियमेव बहिः कण्डूतिसहितं स्पर्शं गृह्णँल्लोमशब्देनोच्यते। तत्र महीरुहाणां देवत्वम्[24]। अन्तर्बहिश्च[25]

1. A.H.V. °स्तं 2. M.Ma. °न्यं 3. H. °र्वौ; M.Ma. °र्वु°; V. °र्वौष्ण्य° 4. E. °ता: 5. N. लो° 6. M.Ma. °र्व्यां° 7. M.Ma. °णा° 8. H.V. W. °त: 9. B.H.I.M.Ma.V.W. °वानिन्द्र° 10. H.V. जिघृक्षत:; M.Ma.W. चिकीर्षत: 11. M.Ma. °मिन: 12. M.Ma. यत् 13. AF.GF. त्रि° 14. A.B. Omit सत: 15. H.V. Omit तत् 16. A.B. Omit कर्णौ......इन्द्रियं 17. B.H.V. °ब्दग्र° 18. A. आ उष्णत्वं ई°; H.V. उष्णत्वं शी° 19. H.V. °त्युष्ण° 20. A. उष्णत्वं; H. औष्णं; V. औष्णयं 21. H.V. गुणान् 22. H.V. लो° 23. A.H.V. Omit वायु: 24. B. °वतात्वं 25. H.V. हि स°

स्पर्शं गृह्णत्तदेव त्वक्शब्देनोच्यते। तत्र वातो देवता। तथा च तृतीये वक्ष्यति "त्वचमस्य विनिर्भिन्नां विविशुर्धिष्ण्यमोषधीः अंशेन लोमभिः कण्डूं यैरसौप्रतिपद्यते" (भाग.3-6-18) "निर्भिन्नान्यस्य चर्माणि लोकपालोऽनिलोऽविशत्। प्राणेनांशेन संस्पर्शं येनासौ प्रतिपद्यते" (भाग.3-6-16) इति। तत्र चर्माणीति चर्मोपलक्षिता त्वगित्यर्थः। प्राणेनांशेनेति प्राणवायुव्याप्तेन त्वगिन्द्रियेण इत्यर्थः। बह्वृच श्रुतौ त्वेक एवांशो निर्दिष्टः। "त्वङ्निरभिद्यत त्वचो लोमानि लोमभ्य औषधिवनस्पतय" इति।।२३।।

**हस्ताविति**। रुरुहतुः निर्भिन्नौ बलं इन्द्रियं, इन्द्रो देवता तदुभयाश्रयं[1] आदानं कर्म।।२४।।

**गतमिति**। अभिकामिकां अभीष्टां विहितामित्यर्थः। पभ्द्यां सह यज्ञो विष्णुरेव स्वयं तदधिष्ठातृरूपेण स्थितः। कर्मभरिति गत्याख्या कर्मशक्तिरिन्द्रियमुक्तम्। हव्यं क्रियत इति गतिप्राप्यं यज्ञार्थं[2] द्रव्यं विषय इत्युक्तम्। नृभिरिति व्यष्टिजीवेष्वपीयमेव रीतिरिति दर्शयन् नराधिकारित्वं यज्ञादीनां[3] दर्शयति।।२५।।

**वीर०** चक्षुर्व्यष्टि सृष्टिमाह[4] - **यदेति**। यदा आत्मनि देहे निरालोकं अर्थाभावेऽव्ययीभावः। आलोकाभावः[5] आसीदिति शेषः। तदा आत्मानं देहं चकारादन्यच्च वस्तु दिदृक्षतः तस्य ब्रह्मणोऽक्षिणी अधिष्ठानं[6] निर्भिन्ने चक्षुरिन्द्रियस्य व्यष्टियुग्मान्युत्पन्नानीत्यर्थः[7]। चक्षुःचक्षुरिन्द्रियम्। गुणग्रहो रूपगुणग्राहकं ज्योतिः आदित्योत्पन्नमित्यर्थः[8] "स हि चक्षुरभिमानी आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत्" इति श्रुतेः।।२१।।

श्रोत्रव्यष्टिसृष्टिमाह[9] - **बोध्यमानस्येति**। ऋषिभिः वेदैः बोध्यमानस्य प्रबोध्यमानस्य तत्प्रबोधं ग्रहीतुमिच्छतः आत्मनः ब्रह्मणः कर्णौ दिशः, श्रोत्राभिमानिदेवताः गुणग्रहः शब्दग्रहणहेतुः श्रोत्रमिन्द्रियं निरभिद्यंत[10] इत्यर्थः। श्रोत्रेन्द्रियव्यष्टियुग्मान्यभवन्निति भावः।।२२।।

त्वगिन्द्रियव्यष्ट्युत्पत्तिमाह[11] - **वस्तुन** इति। वस्तुनः द्रव्यस्य मृदुत्वं काठिन्यं च लघुत्वं च गुरुत्वं च औष्णं[12] आ[13] उष्णं ईषदुष्णत्वं चात्युष्णत्वस्य ग्रहणायोग्यत्वादोष्णं इत्युक्तम्। गुर्वुष्णेतिपाठे यणादेशश्छान्दसः। शीततां च एतान् गुणान् जिघृक्षतः ग्रहीतुमिच्छतः त्वगिन्द्रियव्यष्टिरुत्पन्ना इत्यर्थः। वस्तुनि हस्तेनातोलिते लघुत्वगुरुत्वयोर्ज्ञानात्तयोरपि त्वगिन्द्रियविषयत्वमिति ज्ञेयम्। अत्रेदं तत्त्वं[14] बोद्धव्यम् - त्वगिन्द्रियस्य सूक्ष्मस्थूलरूप बाह्याभ्यन्तरचर्मणी द्वे स्थाने। स्थानभेदाच्च कण्डूः स्पर्शश्चेति विषयभेदः। विषयभेदाच्च महीरुहाः वायुश्चेति देवताद्वयम्। "त्वचमस्य विनिर्भिन्नां विविशुर्धिष्ण्यमोषधीः। अंशेन लोमभिः कण्डूयैरसौ प्रतिपद्यते"(भाग.3-6-18) "निर्भिन्नान्यस्य चर्माणि लोकपालोऽनिलोऽविशत् प्राणेनांशेन संस्पर्शं येनासौ प्रतिपद्यते"(भा.ग.3-6-16) इति तृतीये स्पष्टमभिधास्यमानत्वात्। एवं

---

1. H V. add देवताश्रयं 2. H.V ''र्थंद्रव्य 3. H.V. ज्ञानां 4. W. ष्टिमाह 5 A. Omits आलोकाभाव 6. A.B. ''ने 7. W. ''गा' 8. A.B. ''त्यश्चेत्यर्थः 9. W. ''व्यष्टिमाह 10. A.B. ''त 11. W. ''यस्य व्यं' 12. A.B Omit ओष्णं 13. W. Omits आ उष्णं 14. A.B. Omit तत्त्वं

चैकमेव त्वगिन्द्रियं बाह्यचर्मगतं लोमसु व्याप्तमोषधिदेवताकं कण्डूग्राहकं एतदेवान्तर्बहिश्च स्पर्शं[1] गृह्णद्वायुदैवतकं इति। एतदेव सङ्ग्रहेणाह तस्यामिति। तस्यां त्वचि त्वगिन्द्रिये निर्भिन्ने तदधिष्ठानं[2] रोमाणि अधिष्टातृदेवतामहीरुहाश्चोत्पन्ना इत्यर्थः। अथ स्पर्शं गृह्णतः तस्यैव त्वगिन्द्रियस्य वाय्वधिष्ठितत्वमाह **तत्र चेति**। तत्र च तत्रैव त्वगिन्द्रिये वातो वायुः वृतः अधिष्ठितवान् कथम्भूतम्? त्वचा स्वाधिष्ठेय त्वगिन्द्रियेण साधनेन अन्तर्बहिश्च लब्धगुणः लब्धः स्पर्शः[3] गुणः येन सः अन्तर्बहिश्च स्पर्शसम्पादक इत्यर्थः।।२३।।

पाणिव्यष्टिसृष्टिमाह - **हस्ताविति**। नानाकर्म आदानादिकर्म चिकीर्षतः लब्धस्पर्शं[4] कर्तुमिच्छतः तस्य ब्रह्मणः हस्तौ रुरुहतुः ब्रह्मगतहस्तसमष्टितः हस्तयुग्मव्यष्टयोऽभूवन्नित्यर्थः। अत्र स्थानेन्द्रियाधिष्ठातृकर्माण्याह **तयोरिति**। वृत्तिस्तृतीये स्पष्टा। तयोर्हस्तयोः स्थानभूतयोः बलवान् पाणीन्द्रियापरपर्यायबलसहितः इन्द्रः अधिष्ठातेत्यर्थः उभयाश्रयं हस्तद्वयाश्रयं[5] उपादानं कर्म। विषयस्तु इन्द्रियहस्तगतत्वादादानमपि हस्तद्वयाश्रयमित्यर्थः।।२४।।

पादेन्द्रियव्यष्टिसृष्टिमाह[6] - **गतिमिति**। अभिकामिकां इच्छानुसारां गतिं जिघृक्षतः ग्रहीतुमिच्छतः[7] ब्रह्मणः पादौ रुरुहाते निर्भिन्नावित्यर्थः। अथ स्थानेन्द्रियादीनाह पभ्द्यामिति। "यज्ञोविष्णुः" "यज्ञो वै विष्णुः" इति श्रुतेः। यज्ञः स्वयमेव[8] इन्द्रियस्य पादद्वयस्थत्वात् पभ्द्यामिति द्विवचननिर्देशः। पभ्द्यां गतिसामर्थ्यापादकपादेन्द्रियेण सह पादयोरधिष्ठितवान् इत्यर्थः। नृभिः कर्मभिः गमनागमनादिभिः कर्मभिः हव्यं हविरर्थं द्रव्यं क्रियते सम्पाद्यते इत्यर्थः। गमनादिकं कर्म हव्यं विषय इत्युक्तम्।।२५।।

**विज०** यदा स विरिञ्चः आत्मनि निरालोको निष्प्रकाशः तदाऽऽत्मानं स्वशरीरं अन्यच्च दिदृक्षतः तस्याक्षिणी गोलके व्यक्ते। ततो ज्योतिः सूर्यः रूपगुणग्रहश्चक्षुरिन्द्रियं तद्ग्राह्यं रूपं चोत्पन्नमिति शेषः।।२१।।

ऋषिभिः ज्ञानसाधनैः वेदादिभिरन्यादिभिर्वा बोध्यमानस्य वेदान्निबोधेति विज्ञाप्यमानस्य तस्य विरिञ्चस्यात्मनः तद्विज्ञापनं जिघृक्षतः ग्रहीतुकामस्य कर्णौ जातौ तयोर्दिशः दिग्देवता गुणग्रहः श्रोत्रेन्द्रियं च तद्विषयश्च शब्दः।।२२।।

वस्तुनो घटादिपदार्थस्य मृदुत्वादिगुणान् जिघृक्षतः ज्ञातुमिच्छतः तस्य विधेः त्वगिन्द्रियं तस्यां सत्वचि रोममहीरुहाः तत्र त्वचि च अन्तर्बहिर्व्याप्तोऽपि त्वचा त्वगिन्द्रियेण स्पर्शलब्धेन ज्ञानेन स्पर्शगुणे नावृतो वातः स्पर्शवायुः स्पर्शश्चाभवदित्यन्वयः गुर्वुष्णोति छान्दसः।।२३।।

---

1 A.B स्पर्शंग्रहणाद्वायुदैवतमिति 2 W तत् स्थान 3. W. स्पर्शगुण. 4. W Omits लब्धस्पर्शं 5 W. यस्याश्र" 6. W. "व्यष्टिमाह 7. A.B. Omit ग्रहीतुमिच्छत 8 A B add पभ्द्यामिन्द्रियेण

उभौ इन्द्रियाभिमानिनौ आश्रयौ यस्य तत्तथोक्तम्। आदानमुपादानहानादि कर्म च।।२४।।

गतिं गमनलक्षणं कर्म। यज्ञः इन्द्रपुत्रः स्वयं तदभिमानी गतिश्च पभ्द्यामभूताम्। तथा नृभिः यत् हव्यं हविस्सम्बन्धि हवनादिकर्म क्रियते यमुद्दिश्य स उपेन्द्रो भगवान् यज्ञान्तर्यामितयाऽभिव्यक्त इति शेषः।।२५।।

**रा०कृ०** यदा आत्मनि देहे निरालोकं प्रकाशरहितं आलोकाभाव इति भावः आसीदिति शेषः। तदा आत्मनां च देहं अन्यदपि च वस्तु दिदृक्षतः द्रष्टुमिच्छतः तस्य विभोः अक्षिणी अधिष्ठानभूते-निर्भिन्ने उत्पन्ने। तत्र ज्योतिः सूर्यो देवता अभवत् चक्षुः इन्द्रियं चाभवत्। ततश्च गुणग्रहः गुणस्य रूपात्मकस्य ग्रहः ग्रहणं अभवदिति शेषः। एतेन रूपस्य विषयत्वं दर्शितम्।।२१।।

ऋषिभिः वेदरूपैः बोध्यमानस्य तत् आत्मनः प्रबोधनं जिघृक्षतः ग्रहीतुमिच्छतः तस्य कर्णौ च अधिष्ठानभूतौ निरभिद्येताम् उद्भूतौ तत्र दिशः देवताः अभवन् श्रोत्रमिन्द्रियं च अभवत्। गुणग्रहः गुण्स्य शब्दात्मकस्य ग्रहः ग्रहणम् अभवदिति शेषः। अनेन शब्दस्य विषयत्वमुक्तम्।।२२।।

वस्तुनः मृदुकाठिन्यलघुगुर्वोष्णशीततां - मृदुत्वं, काठिन्यं, लघुत्वं, गुरुत्वं आ उष्णं ईषदुष्णत्वं शीततां च एतान् धर्मान् जिघृक्षतः ग्रहीतुमिच्छतः पुरुषस्य त्वङ्निर्भिन्ना। त्वगिन्द्रियाधिष्ठानं चर्म सञ्जातमिति भावः। तस्यां त्वचि रोममहीरुहाः रोमाणि रोमरूपमिन्द्रियं जातं, महीरुहाः वृक्षाभि-मानिन्यः देवताश्च जाता। तत्र तस्यामेव त्वचि अन्तर्बहिश्च त्वचा लब्धगुणः प्राप्तस्पर्शगुणः वातः वायुः वृतः आवृत्य स्थितः।।२३।।

नानाकर्म दानादानप्रक्षेपादिकं कर्म चिकीर्षतः कर्तुमिच्छतः तस्य पुरुषस्य हस्तौ अधिष्ठानभूतौ रुरुहतुः उद्बभूवतुः तयोस्तु हस्तयोस्तु बलमिन्द्रियं इन्द्रश्च देवता आदानं कर्म उभयाश्रयं इन्द्रियदेवतायत्तम्।।२४।।

अभिकामिकां इच्छानुरूपां गतिं जिघृक्षतः ग्रहीतुमिच्छतः पुरुषस्य पादौ रुरुहाते उत्पन्नौ। यज्ञः यज्ञस्वरूपो विष्णुः पभ्द्यां पादरूपेन्द्रियेण सह स्वयं तदधिष्ठातृरूपेण अवस्थित इति शेषः। नृभिः कर्तृरूपैः कर्मभिः पादेन्द्रियव्यापारैः गमनागमनादिभिः हव्यं यज्ञार्थद्रव्यं क्रियते सम्पाद्यते।।२५।।

**निरभिद्यत शिश्नो वै प्रजानन्दामृतार्थिनः।**
**उपस्थ आसीत्कामानां प्रियं तदुभयाश्रयम्।।२६।।**

उत्सिसृक्षो[1]र्धातुमलं निरभिद्यत वै गुदम्।
ततः पायुस्ततो मित्र उत्सर्ग उभयाश्र[2]यः।।२७।।

आसिसृप्सोः[3] पुरः[4] पुर्या[5] नाभिद्वारमपानतः[6]।
[7]तत्रापानस्ततो मृत्युः पृथक्त्वमुभयाश्रयम्।।२८।।

आदित्सोरन्नपानाना[8]मासन् कुक्ष्य[9]न्त्रनाडयः[10]।
नद्यस्समुद्राश्च[11] तयोस्तुष्टिः पुष्टः तदाश्रये।।२९।।

निदिध्यासोरात्ममायां हृदयं निरभिद्यत।
ततो मनस्त[12]तश्चन्द्रस्सङ्कल्पः काम एव च।।३०।।

**श्रीध० निरभिद्यतेति**। प्रजा अपत्यं आनन्दः रतिः, अमृतं स्वर्गादि तदर्थिनः। शिश्नः अधिष्ठानं उपस्थः इन्द्रियं प्रजापतिश्चासीदिति ज्ञेयम्। तदुभयाश्रयमिन्द्रियदेवताश्रयं कामानां [13]स्त्रीसम्भोगानां सम्बन्धि प्रियं सुखम्।।२६।।

**उत्सिसृक्षोरिति**। धातुमलं [14]भुक्तानां अन्नादीनामसारांशं त्यक्तुमिच्छोः गुदपायुमित्रोत्सर्गाः अधिष्ठानेन्द्रियदेवताविषयाः [15]उभयाश्रयः पायुमित्राश्रयः।।२७।।

**आसिसृप्सोरिति**। पुर्याः देहात्पुरः देहान्तराणि आसिसृप्सोः सर्वतो गन्तुमिच्छोः नाभिद्वारं निरभिद्यतेत्यनुषङ्गः। अपानतोऽपगच्छतः पृथक्त्वं मरणम्। नाभ्यादीन्यधिष्ठानादीनि। नाभ्यां हि प्राणापानयोः बन्धवि[16]श्लेषणं मृत्युरिति प्रसिद्धम्।।२८।।

**आदित्सोरिति**। अन्नपानानामादित्सोः सङ्ग्र[17]हीतुमिच्छोः कुक्षिश्चान्त्राणि [18]च नाड्यश्चासन्। तत्र कुक्षिरधिष्ठानम्। [19]अन्त्राण्यन्नसङ्ग्रहे, करणमिन्द्रियस्थानीयं, नाड्यस्तु पानसङ्ग्रहे, तयोर्ना[20]ड्यन्त्रवर्गयोः क्रमेण नद्यः समुद्राश्च देवते। तुष्टिरुदरभरणं, पुष्टिः तु रसपरिणामतः स्थौल्यं, तदाश्रये तदुभयनिमित्ते। तत्रान्नसङ्ग्रहेच्छोः कु[21]क्ष्यन्त्रसमुद्रतुष्टयः इति चतुष्टयं प्रेयसङ्ग्रहणेच्छोः कुक्षिनाडीनदी पुष्टय [22]चतुष्टयं इति विवेकः।।२९।।

---

1. B. °प्सो° 2. W. °त्मकः 3. M.Ma. °क्षोः 4. M.Ma.W. °रं 5. B.M.Ma. °र्यां 6. M.Ma. °वृतं 7. M.Ma. ततोऽपानस्वतो 8. M.Ma. °असृक् 9. H.V.W. °क्ष्या° 10. M.Ma. °डिकाः 11. W. °स्तु 12. H.I.M.Ma.V.W. °श्चन्द्र इति 13. A. Omits स्त्रीसम्भोगानां 14. A.B. भुक्तान्नादी नां 15. H.V. Omit उभयाश्रयः पायुमित्राश्रयः 16. A.B. विश्लेषे 17. A.B. °हेच्छोः 18. H.V. Omit च 19. H.V. आन्त्रा° 20. H.V. °ड्या° 21. H.V. °क्ष्या° 22. A.B. Omit चतुष्टयं

**निदिध्यासोरिति**। निदिध्यासोः नितरां चिन्तयितुमिच्छोः कामोऽभिलाषः हृदयमनश्चन्द्रसङ्कल्पाः अधिष्ठानादयः।।३०।।

**वीर०** उपस्थव्यष्टिसर्गमाह - **निरभिद्यतेति**। प्रजानन्दामृतार्थिनः प्रजाः अपत्यं आनन्दो रतिः आनन्दहेतुत्वात्तस्याः। ताभ्यां यदमृतं अमृततुल्यं सुखम्। तदर्थं यतः यद्वा प्रजां रत्यानन्दरूपममृतं [2]वाऽर्थयतः ब्रह्मणः समष्ट्युपस्थतः व्यष्ट्युपस्थस्थानं निरभिद्यत अभूदित्यर्थः। शिश्नः शिश्नग्रहणं योषिल्लिङ्गस्याप्युपलक्षणम्। शिश्नः अधिष्ठानं उपस्थ इन्द्रियं प्रजापतिरधिष्ठाता रतिः कर्म आनन्दो विषयश्चासीत् इत्यनुक्तमप्यूह्यम्। कामानां स्त्रीसम्भोगादीनां प्रियं सुखं उभयाश्रयं इन्द्रियदेवताश्रयमित्यर्थः। यद्वा उभयाश्रयं स्त्रीपुलिङ्गाश्रयं इत्यर्थः। इन्द्रियतत्स्थानाश्रयमिति वा।।२६।।

पायुव्यष्ट्युत्पत्तिमाह - **उत्सिसृक्षोरिति**। धातुमलं भुक्तानामन्नादीनामसारांशं त्यक्तुमिच्छोः गुदं पाय्विन्द्रियस्थानं निरभिद्यत ततो गुदतः पायुः इन्द्रियं मित्रोधिष्ठाता [3]चाभूत् उत्सर्गः त्यागः[4] उभयाश्रयः इन्द्रियतत्स्थानाश्रयः धातुमलत्याग इत्यर्थः।।२७।।

एवं ज्ञान[5]कर्मोभयेन्द्रियव्यष्टिसृष्टिमभिधाय अन्यासामपि नाभ्यादिव्यष्टीनां तत्समष्टितः उत्पत्तिमाह - **आसिसृप्सोरिति**। पुर्याः [6]शरीरात् [7]पुरः शरीरान्तराणि आसिसृप्सोः [8]आ सर्वतः गन्तुमिच्छोः ब्रह्मणः अपानतः समष्ट्यपानवातात् अपानव्यष्टिस्थानं [9]निरभिद्यत। तत्र [10]नाभिद्वारे अपानो [11]वायुरिन्द्रियस्थानीयः। [12]ततो अपानतः मृत्युरधिष्ठाता। पृथक्त्वं [13]शरीरत्यागः। उभयाश्रयं प्राणापानाश्रयं प्राणापानवायुवियोगे मरणस्य पुराणान्तरप्रसिद्धेः।।२८।।

[14]व्यष्टिकुक्ष्यन्त्रनाडीनां सृष्टिमाह - **आदित्सोरिति**। अन्नपानानां आदित्सोः सङ्ग्रहेच्छोः [15]कुक्ष्यन्त्रना[16]ड्यः आसन्नभूवन्। कुक्षिरधिष्ठानं अन्त्राणि [17]अन्नसङ्ग्रहे करणं इन्द्रियस्थानीयानि नाड्यस्तु पानसङ्ग्रहे। तयोर्ना[18]ड्यन्त्रवर्गयोः क्रमेण नद्यः समुद्राश्च देवते। तुष्टिरलम्बुद्धिः। पुष्टिर्देहपोषः तदाश्रये नदीसमुद्राश्रये सस्यादि हेतुत्वात्।।२९।।

मनोव्यष्टिसृष्टिमाह - **निदिध्यासोरिति**। आत्ममायां स्वरूपतिरोधायकप्रकृतिं निदिध्यासोः [19]निरूपयितुं इच्छतः हृदयं कमलाकारमधिष्ठानम्। ततो मन इन्द्रियं चन्द्रः अभिमानी। [20]सङ्कल्पः मनोव्यापारश्चाभूदित्यर्थः।३०।।

1. W. Omits तत् 2. W. चार्थं'' 3. A.B. वाऽभूत् 4. W. adds उभयात्मकः 5. A.B. व्यष्टिसृष्टि माह 6. W. देहात् 7. W. पुरं देहान्तरं 8. W. व्याप्तुमिऽऽच्छोर्ब्र'' 9. W. Omits निरभिद्यत 10. W. नाभौ 11. W. Omits वायुः 12. W. तदधिष्ठाता मृत्युश्चाभूदित्यर्थः। पृथ'' 13. W. मरणम् 14. W. Omits व्यष्टि.......माह 15. W.''क्ष्या''16. W.''ड्यः 17. W.''मा''18. W ''ड्या''19. W.''यतः हृ'' 20. W. ''ल्पादिम''

**विज०** प्रजा सन्ततिः तन्निमित्ता या रतिः तस्यां जातः आनन्दः स एवामृतं तदर्थयितुं शीलमस्येति प्रजानन्दामृतार्थिनः तस्य विधेः शिश्नमिन्द्रियस्थानं तस्मिन् शिश्ने कामानां प्रियं परतः प्राप्य सुखसाधनं तादृशमुपस्थेन्द्रियं तदुभयाश्रयं शिश्नोपस्थाश्रयं रतिः सुखं चासीत् कामानां भोगसाधनमिति वा।।।२६।।

धातुमलं पुरीषसंज्ञं उत्सिसृक्षोः त्यक्तुकामस्य गुदमपानद्वारं ततस्तस्मिन् गुदे वा पायुनामेन्द्रियं ततः इन्द्रियानन्तरं मित्रनामा देवः उभयाश्रयः पायुमित्राश्रयः वा इत्यनेन। "मलादिकं कदाचित्तु ब्रह्मलोकाभिपत्तये। आत्मनो निर्ममे कामात् सर्वेषामभवत्ततः" इत्यादिवाक्यं स्मारयति।।२७।।

परकायप्रवेशप्रकारमाह - **आसिसृक्षोरिति**। पुरः स्वाधिष्ठितात् देहात् पुर्यां अन्यस्मिन् देहे पुरि तन्नामनाडीविशेषमासिसृक्षोः पुवेष्टुकामस्य विरिञ्चस्य इत्युपलक्षणं योगिनाम्। नाभिद्वारमपावृतं विवृतं ततो नाभिद्वारादपानवायुस्तस्मात् मृत्युः तदुभयाश्रयं पृथक्त्वं देहान्तरप्राप्तिलक्षणं चोत्पन्नम्। अत्र मृत्युः मरणं तत्प्रापकश्च अपानः इदं ब्रह्मणो न, किन्तु देहिनामित्यनुसन्धेयम्।।२८।।

अन्नपानानां अन्नपानानि आदित्सोः आदातुकामस्य विरिञ्चस्य कुक्षिनाड्यौ अभूताम्। असृजो रुधिरस्य स्थानं कुक्षिः अन्त्रस्थानं नाडीद्वारासप्ततिभेदभिन्ना तयोः कुक्षिनाड्योः समुद्रा नद्यश्चासन् तृप्तिः पुष्टिश्च तदाश्रये तृप्तिः कुक्ष्याश्रया पुष्टिः नाड्याश्रया।।२९।।

आत्ममायां विष्णुसृष्ट्यादि महिमानं निदिध्यासोः ध्यातुकामस्य हृदयं मनः निवासस्थानमभूत्। ततो हृदयात् मनः मनसश्चन्द्रोऽधिदेवता सङ्कल्पः कामश्च मनोवृत्तिविशेषौ अभूतां इति शब्दः निरुद्धग्रहणार्थः।।३०।।

**रा०कृ०** प्रजानन्दामृतार्थिनः प्रजा सन्ततिः तस्यै यः आनन्दः रतिः स एवामृतं तदर्थिनः पुरुषस्य शिश्नः अधिष्ठानभूतः निरभिद्यत उदभूत्। उपस्थः उपस्थेन्द्रियं आसीत् प्रजापतिश्च आसीत्। किञ्च तदुभयाश्रयं इन्द्रियदेवताऽधीनं कामानां स्त्रीसम्भोगानां प्रियं सुखं च आसीत्।।२६।।

धातुमलं अत्र धातुपदेन त्वगादिपोषकाः अन्नादयो व्यज्यन्ते। तथा च धातूनां भुक्तानामन्नादीनां मलं असारमंशं उत्सिसृक्षोः त्यक्तुमिच्छोः तस्य पुरुषस्य गुदं वै गुदस्थानं निरभिद्यत। ततो गुदात् पायुः इन्द्रियमासीत्। ततः तस्य मित्रो देवता उभयाश्रयः इन्द्रियदेवताधीनः उत्सर्गःमलत्यागरूपो विषयश्चासीत्।।२७।।

पुर्याः शरीरात् पुरः शरीरान्तरणि आसिसृप्सोः आ समन्तात् सिसृप्सोः गन्तुमिच्छोः पुरुषस्य अपानतः अपानवायोः नाभिद्वारं निरभिद्यत। तत्र नाभिद्वारे अपानः अपानेन्द्रियमासीत्। ततोऽपानात् मृत्युः देवताऽऽसीत् उभयाश्रयं इन्द्रियदेवताश्रयं पृथक्त्वं प्राणापानवियोगरूपं मरणं च आसीत्।।२८।।

अन्नपानानामादित्सोः ग्रहीतुकामस्य पुरुषस्य कुक्ष्यन्त्रनाड्यः कुक्षिः अधिष्ठानभूतः। अन्त्राणि अन्नसङ्ग्रहे करणभूतानि इन्द्रियस्थानीयानि नाड्यः पानसङ्ग्रहे करणभूताः इन्द्रियस्थानीयाः आसन्। तयोः नाड्यन्त्रवर्गयोः नद्यः समुद्राश्च देवते तदाश्रये इन्द्रियदेवतोभयाश्रये, तुष्टिः उदरभरणानन्तरं जाता अलम्बुद्धिः पुष्टिः रसपरिणामतो जाता स्थौल्यात्मिका च आस्ताम्।।२९।।

आत्ममायां आत्मनो मायां प्रकृतिकार्यात्मिकां निदिध्यासोः नितरां ध्यातुमिच्छोः पुरुषस्य हृदयं अधिष्ठानभूतं निरभिद्यत। ततो हृदयात् मनः इन्द्रियं अजायत। ततः तस्मात् मनसः चन्द्रो देवता अजायत; सङ्कल्पः तत्तत्पदार्थचिन्तनात्मकः अजायत, काम एव च तत्तद्विषयाभिलाषश्च अजायत।।३०।।

**त्वक्चर्ममांसरुधिरमेदोमज्जास्थिधातवः।**
**भूम्यप्तेजोमयास्सप्त प्राणो[1] व्योमाम्बुवायुभिः।।३१।।**

**[2]गुणात्मकानीन्द्रियाणि भूतादिप्रभवा गुणाः।**
**मनस्सर्वविकारात्मा बुद्धिर्विज्ञानरूपिणी।।३२।।**

**एतद्भगवतो रूपं स्थूलं ते व्याहृतं मया।**
**मह्यादिभिश्चावरणैः अष्टभिर्बहिरावृतम्।।३३।।**

**अतः परं सूक्ष्मतमं अव्यक्तं निर्विशेषणम्।**
**अनादिमध्यनिधनं नित्यं वाङ्मनसः[3] परम्।।३४।।**

**अमुनी भगवद्रूपे मया ते ह्यनुवर्णिते[4]।**
**उभे अपि न गृह्णन्ति माया सृष्टे[5] विपश्चितः।।३५।।**

**श्रीध०** तदेवं अधिदैवादिभेदं विभज्य उक्त्वा तदंशभूतानां धात्वादीनां स्वरूपमाह - **त्वगिति**

1. W. °णा 2. AF.GF. भूतात्म° 3. M.Ma. °सोः 4. A. अ° 5. M.Ma. °ष्टेऽवि°; W. °ष्टेवि°

द्वाभ्याम्। त्वक् स्थूलं चर्म, तदुपरि स्थितं सूक्ष्मम्। त्वागादयोऽस्थ्यन्ताः द्वन्द्वैकवद्भावेन निर्दिष्टाः। सप्त ये धातवः ते भूम्यप्तेजोमयाः तेषां च[1] पाञ्चभौतिकत्वेऽपि वाय्वाकाशयोः आहारा[2]दिरूपेण संवर्धकत्वाभावात् एवमुक्तम्।।३१।।

**गुणात्मकानीति**। गुणात्मकानि गुणेषु शब्दादिषु आत्मा येषाम्। विजयाभिमुखस्वभावानीत्यर्थः। भूतादिरहङ्कारः। ततः प्रकर्षेण भवन्तीति त[3]था गुणाः शब्दादयः अहङ्कारां[4]शकल्पित शोभनस्वभावाः न तु वस्तुतः तथेति ता[5]त्पर्यम्। अ[6]त्र हेतुः यतो मन एव सर्वविकाराणां आत्मा स्वरूपं बुद्धिस्तु तथा भूतार्थं विज्ञानरूपिणी न तु परमार्थ ग्राहिणीति वैराग्यार्थमुक्तम्। अनेनैव बुद्धिमनसोः स्वरूपं च उक्तम्।।३२।।।

उपसंहरति - **एतदिति**। प्रकृत्या सह अष्टभिः।।३३।।

स्थूलमुक्त्वा सूक्ष्मं समष्टिलिङ्गशरीरमाह - **अत** इति। अतः परं अस्य कारणभूतं सूक्ष्मं अतीन्द्रियं यतोऽव्यक्तं तत्कुतः? यतो निर्विशेषणम्। त[7]त्कुतः अनादिमध्यनिधनमुत्पत्तिस्थितिलयशून्यम्। नित्यं सदा एकरूपं अपक्षयादिशून्यमित्यर्थः। अत एव वा[8]ङ्मनसश्च इति द्वन्द्वैक्यं तस्मात्परम्।।३४।।

उपासनार्थं भगवत्यारोपि[9]तं रूपद्वयमपवदति - **अमुनी** इति। न गृह्णन्ति वस्तुतः नाङ्गीकुर्वन्ति य[10]तो मायासृष्टे।।३५।।

**वीर॰** एवं ब्रह्मशरीरात् समष्टेः व्यष्ट्यवयवविशेषविभागमभिधाय तेषां सार्वभौतिकत्वेऽपि तत्तद्भूतांश भूयस्त्वनिबन्धनं तदात्मकत्वमाह - **त्वगिति**। चर्म स्थूलं अन्तस्त्वक्। तदुपरि स्थितं सूक्ष्मं चर्म त्वक् त्वगादयोस्थ्यन्ताः द्वन्द्वैकवद्भावेन निर्दिष्टाः एते सप्त धातवः भूम्यप्तेजोमयाः प्रा[11]णस्तु व्योमाम्बुवायुभिः आरब्ध[12] इति शेषः।।३१।।

**गुणात्मेति**। इन्द्रियाणि गुणात्मकानि शब्दादिगुणग्रहणस्वभावानि। गुणाः यदात्मकाः ते[13] के इत्यत आह - भूतादिरिति। भूतादिः अहङ्कारः तत्प्रभवाः शब्दादयो गुणाः इन्द्रियाण्यपि तत्प्रभवत्वात् तदात्मकान्येवेत्यभिप्रायः। मनः सर्वविकाराणां कामसङ्कल्पादीनां आत्मा आश्रयः। बुद्धिः विज्ञायते अनेनेति विज्ञानं म[14]हत्तत्वं तद्रूपिणी बुद्धिः "महान्वै बुद्धिलक्षणः" इति वचनात्।।३२।।

उपसंहरति - **एतदिति**। एतच्चेतनाचेतनात्मकं देवादिव्यष्टिवस्तुजातगर्भम्। एतच्छब्दः

1. H.V. Omit च 2. H.V. "रूः" 3. A. यथा 4. A B. "रक" 5. H.V. अथः 6. H.V. तत्र 7. A. Omits तत्कुतः 8. A.B. वाक् च मनश्च 9. HV. "ततया तद्द्वय" 10. H.V. Omit यतो 11. W. "णा" 12. W. "ब्धा" 13. W. Omits ते के 14. W. महत् तद्रू"

अण्डकटाहपरः, पृथिव्यप्तेजोवाय्वाकाशाहङ्कारमहदव्यक्तरूपैः अष्टाभिः अण्डावरणैः बहिरावृतम्। [1]तोयादिभिश्चावरणैः सप्तभिः बहिरावृतम् इति पाठान्तरम्। भगवतः स्थूलं रूपं ते तुभ्यं मया व्याहृतं सम्यगभिहितम्।।३३।।

[2]ततो विलक्षणं रूपान्तरमस्तीत्याह - **अत** इति। अयं श्लोकः जीवपरः अव्यक्तस्योक्तत्वात्, अन्यथा [3]अष्टसङ्ख्यानुपपत्तेः अतः स्थूलरूपात् परं परत्वेनावस्थितं[4] [5]सूक्ष्मतमं "[6]वालाग्रशतभागस्य" इति श्रुत्युक्तं मुक्तात्मस्वरूपं रूपान्तरमपि भगवतोऽस्तीति शेषः। [7]सूक्ष्मतमत्वं कुतः? अव्यक्तं चक्षुरादिभिः न व्यज्यते इत्यव्यक्तम्। चक्षुराद्यग्राह्यं तत्कुतः निर्विशेषणं शब्दस्पर्शरूपादि गुणाभावात् शब्दादिविशेषवदेव चक्षुरादिग्राह्यमिति भावः। निर्विशेषत्वं कुतः? वाङ्मनसः परं देवमनुष्यादि बुद्धिशब्दागोचरम्। तदपि कुतः? अनादिमध्यनिधनम्। आदिः उत्पत्तिः, निधनं विनाशः मध्यं उत्पत्तिनिधनयोः अन्तरालावस्था एतदवस्थात्रयशून्यमित्यर्थः। तदपि वा कुतः? नित्यं कालापरिच्छिन्नमेव अवस्थात्रयवदिति भावः।।३४।।

एवं प्रकृतिमण्डलोत्तीर्णं मुक्तात्मस्वरूपं विशोध्य संसृष्टासंसृष्टयोरुभयोः संसृष्टस्य अविद्यावेष्टितत्वात् मुक्तस्वरूपस्य निष्पन्नयोगिध्येयतया योगयुङ्मनसोऽनालम्बनतया शुभाश्रयत्वं प्रतिषेधति - **अमुनी** इति। ते तुभ्यं मया अनुवर्णिते भगवतः अमुनी स्थूल[8]सूक्ष्मरूपे न गृह्णन्ति नोपासते उपासका इति शेषः। उपासकाः उपास्यशुभाश्रयत्वेन न गृह्णन्तीत्यर्थः। कुतः विपश्चितः सर्वज्ञस्य ब्रह्मणः माया सृष्टेः सङ्कल्पसृष्टेः भगवत्सङ्कल्पायत्तत्वात् बन्धमोक्षयोरित्यर्थः। मूर्तस्य संसृष्टचेतनस्य अविद्यावेष्टितत्वेन अशुद्धत्वात् मुक्तस्वरूपस्य स्वतश्शुद्धिविरहाञ्च नोपासनाविषयत्वं किन्तु "आदित्यवर्णं" इत्यादि वेदान्तसिद्धं परमात्मनो मूर्तं रूपमेव उपास्यमित्यर्थः। तथा च शौनकेन चतुर्मुखसनकादीनां जगदन्तर्वर्तिनां अविद्यावेष्टितत्वेन शुभाश्रयतानर्हतामुक्त्वा बद्धानामेव पश्चाद्योगेन उद्भूतबोधानां स्वस्वरूपापन्नानां च स्वतश्शुद्धिविरहात् शुभाश्रयताप्रतिषेधः उक्तः "आब्रह्मस्तम्बपर्यन्ताः जगदन्तर्व्यवस्थिताः। प्राणिनः कर्मजनितसंसारवशवर्तिनः।। यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः अविद्यान्तर्गतास्सर्वे ते हि संसारगोचराः। पश्चादुद्भूतबोधाश्च ध्यानेनैवोपकारकाः नैसर्गिको [9]न वै बोधः तेषामप्यन्यतो यतः।। तस्मात्तदमलं ब्रह्म निसर्गादवबोधवत्" इत्यादिना प्राधान्येन उपास्यत्वनिषेधः भगवद्विभूतित्वेन उपासनं तु इष्टमेव।।३५।।

**विज०** त्वगाद्याः सप्तधातवः शरीरस्थितिहेतुभूता जाता इति शेषः। तेषां निदानमाह - **भूमीति**।

---

1. A.B. Omit तोयादि......पाठान्तरम् 2. W. इतो 3. A.B. सम॰ 4. W. adds सूक्ष्मं 5. A.B. ॰रं 6. A.B. बा॰ 7. W. ॰क्ष्मत्वं; A. B. ॰क्ष्मतरत्वं 8. W. ॰सूक्ष्मे 9. W. नैव

मुख्यप्राणाभिमन्यमानजडरूपप्राणोपादानकारणमाह - **प्राण** इति। मुख्यप्राणेन अभिमन्यमानजडप्राणो व्योमाम्बुवायुभिः सृष्ट इति शेषः।३१।।

इन्द्रियोपादानकारणमाह - **गुणेति**। गुणास्सत्वादयः गुणकारणमाह बुद्धिरिति। विज्ञानरूपिणी निश्चयज्ञानरूपिणी।।३२।।

ब्रह्मशरीरस्य भगवत्प्रतिमात्वं स्पष्टयति - **एतदिति**। पञ्चभूताहङ्कारतत्त्वप्रकृत्याख्याष्टावरणावृतमेतत् स्थूलं विराडाख्यं ब्रह्मशरीरं भगवतो नारायणस्य प्रतिमारूपं ते तव मया व्याहृतमित्यन्वयः तदुक्तं "स्थूलं भगवतो रूपं ब्रह्मदेह उदाहृतः[1] तत्तन्त्रत्वाच्च" इति।।३३।।

ननु तर्हि हरेः निजरूपं कीदृशम्? अत्राऽऽह - **अत** इति। अतो ब्रह्मणः देहाच्च परं विलक्षणमपि स्थूलं किं नेत्याह सूक्ष्मतममिति। सूक्ष्माणामप्यतिशयेन सूक्ष्मम् "अणोरणीयान्" इति श्रुतेः। महत्परिमाणाभावेन अचाक्षुषत्वेन भक्तानां दिदृक्षा उपासना व्यर्थेत्यत उक्तं अव्यक्तमिति। महत्परिमाणवत्वेऽपि स्वप्रसादमन्तरेण चाक्षुषं न स्यादित्यर्थः "महतो महीयान्" इति श्रुतिः। "यमेवैष वृणुते तेन लभ्यः" इति श्रुतेः। सूक्ष्मं शङ्खचक्रगदाधरमिति च, अन्यस्य कस्यचित् अतिशयलक्षणविशेषणसम्भवे कथमेतदित्यत उक्तं - निर्विशेषणमिति। निर्गतं विशेषणं अतिशयलक्षणं यस्मात्तत्तथोक्तम्। अस्य काव्यस्य कवयः न समर्थाः विशेषण इति दर्शनात्। एवंविधस्यापि वस्तुत्वेन घटवत् आद्यन्तवत्वं किं न स्यादिति मन्दाशङ्कापरिहाराय उक्तं अनादीति। आदिमध्यान्तशून्यं नैतदौपचारिकं अत उक्तं नित्यमिति। "नित्यं अविनाशि", "नित्यो नित्यानां" इति श्रुतिः। चाक्षुषस्वभावाभावेऽपि वागादिविषयत्वं स्यात् अत उक्तं वाङ्मनसोः परमिति वाङ्मनसयोरगोचरं सरस्वती रुद्रोत्तमं वा।।३४।।

प्रेक्षावद्गृहीतत्वेन ते उभे अपि ग्राह्ये इत्याशयेनोपसंहरति - **अमुनी** इति। स्थूलसूक्ष्मे अमुनी भगवद्रूपे मया ते तव अनुवर्णिते माया सृष्टे भगवदिच्छया प्रकृत्या च विरचिते जगति येऽविपश्चितः ज्ञानदुर्बलाः ते जनाः उभे अपि रूपे न गृह्णन्ति न जानन्तीत्यन्वयः।।३५।।

**रा०कृ०** तस्य पुरुषस्य त्वक् चर्म मांसरुधिरमेदोमज्जास्थिधातवः - त्वक् उपरितना सूक्ष्मा त्वगिति कथ्यते चर्म स्थूलं अन्तस्त्वक् चर्म इत्यभिधीयते। मांसः रुधिरं रक्तं मेदःबुद्धिप्रभृतिषु प्रसिद्धम्। मज्जा अस्थ्यन्तर्गता। अस्थि एते सप्तधातवः भूम्यप्तेजोमयाः पृथिवीजलतेजसां कार्यभूताः प्राणः व्योमाम्बुवायुभिः आकाशजलमरुद्भिः आरब्ध इति शेषः।।३१।।

---

1. B.M.Ma. °तम्

तस्यैव परमपुरुषस्य इन्द्रियाणि चक्षुःप्रभृतीनि गुणात्मकानि गुणकार्यरूपादि विषयाभिमुख-स्वभावानि। गुणाः रूपादयः भूतादिप्रभवाः भूतादिः अहङ्कारः ततः सञ्जाताः। मनः सर्वविकारात्मा सर्वविकाराणां कामक्रोधादीनां आत्मा स्वरूपम्। बुद्धिः विज्ञानरूपिणी विविधज्ञानरूपिणी।।३२।।

मह्यादिभिः पृथिव्यप्तेजो वाय्वाकाशाहङ्कारमहदव्यक्तात्मकैः अष्टभिः आवरणैः बहिः आवृतं एतद्ब्रह्माण्डात्मकं भगवतः स्थूलं रूपं ते तुभ्यं मया व्याहृतं कथितम्।।३३।।

अतः स्थूलरूपात् परं अन्यत् स्थूलरूपस्य कारणभूतं सूक्ष्मतमं अव्यक्तं चक्षुरादिभिः इन्द्रियैः अग्राह्यं निर्विशेषणं सर्वव्यावर्तकधर्मशून्यं, अनादिमध्यनिलयं उत्पत्तिस्थितिलयरहितं वाङ्मनसः परं वाचां मनसश्चागोचरं निखिलव्यवहारातीतमिति भावः। तादृशं भगवतो रूपं विद्यते इति शेषः।।३४।।

अमुनी स्थूलसूक्ष्मे भगवद्रूपे भगवतः रूपे मया ते तुभ्यं अनुवर्णिते प्रतिपादिते। मायासृष्टे मायया सृष्टे प्रकृतिकार्यभूते इति भावः। ते उभे अपि रूपे विपश्चितः विवेकवन्तः न गृह्णन्ति परमार्थतो न स्वीकुर्वन्ति। उभयोरपि स्थूलसूक्ष्मरूपयोर्मायाकार्यत्वात् न तयोर्ग्रहणं ज्ञानिभिः क्रियत इति भावः। अनयोरत्र वर्णनंतु साधकानामुपासनार्थमिति ज्ञेयम्।।३५।।

स वाच्यवाचकतया भगवान् ब्रह्मरूपधृक्[1]।
नामरूपक्रिया धत्ते सकर्माकर्मकः परः।।३६।।

प्रजापतीन् मनून् देवान् ऋषीन् पितृगणान् पृथक्।
सिद्धचारणगन्धर्वान् विद्याध्रा[2]सुरगुह्यकान्।।३७।।

किन्नराप्सरसो[3] नागान् सर्पान् किम्पुरुषो[4]रगान्।
मातृ[5]रक्षःपिशाचांश्च प्रेतभूतविनायकान्।।३८।।

कू[6]ष्माण्डोन्मादवे[7]तालान् यातुधानान् ग्रहानपि।
खगान् मृगान् पशून् वृक्षान् गिरीन् नृप! सरीसृपान्।।३९।।

द्विविधाश्चतुर्विधा ये[8]न्ये जलस्थलवनौकसः।
कुशलाकुशला[9]मिश्राः कर्मणां गतयस्त्विमाः ।।४०।।

---

1. V.W. °त् 2. H.M.Ma.V. °ध्रान् 3. W. यक्षान् 4. H.V. °षपूरुषान्, B.I. °षात्ररान्; M.Ma.W. °षानपि 5. I.N °तृ 6. H.V.W. °श्मा° 7. H.V. °मे 8. M.Ma. °ह्यन्ये 9. M.Ma. °लमिश्राणां°

**श्रीध०** यद्रूपगुणकर्मक इति यदुक्तं भगवता ब्रह्माणं प्रति तत्प्रपञ्चयितुं ब्रह्मादिरूपाणि [1]तत्तत्कर्माणि चाऽऽह - **स** इत्यादिना इत्थं भावेन इत्यतः प्राक्तनेन ग्रन्थेन। स भगवान् ब्रह्मरूपधृक्[2] सन् वाच्यवाचकतया वाच्यतया रूपाणि वाचकतया नामानि क्रियाश्च धत्ते सृजतीत्यर्थः। मायया सकर्मा सव्यापारः सन् वस्तुतस्त्वकर्मकः।।३६।।

एतत्प्रपञ्चयति - **प्रजापतीनिति** सार्धे त्रिभिः। द्वितीयान्तानां धत्त इत्यनेनान्वयः। तत्र प्रजापत्या-दीनि नामानि [3]तत्तद्वाच्यानि रूपाणि [4]तत्तत्कर्माणि च ज्ञेयानि पृथक् तत्तदवान्तरभेदेन।।३७,३८।।

**कूष्माण्डेति**। गिरीनित्यस्यानन्तरं नृपेति सम्बोधनम्।।३९।।

**द्विविधा** इति। द्विविधाः स्थावरजङ्ग[5]मरूपेण। तत्र चतुर्विधाः जरायुजाण्डजस्वेदजोद्भिज्ञरूपेण। जलस्थलनभांसि ओकांसि येषां तानपि धत्त इति पूर्वेणान्वयः। यच्च राज्ञा पृष्टं "यावत्यः कर्मगतयो यादृशी द्विजसत्तम" इति तस्यापि प्रसङ्गादनेनैवोत्तरमाह कुशलाः उत्तमाः अकुशलाः नीचाः। मिश्राः इति पदान्तरम्। मिश्रा मध्यमाः कर्मणां पु[6]ण्यपापमिश्राणां गतयः फलानि।।४०।।

**वीर०** स्थूलस्य[7] भगवद्रूपत्वमेव उपपादयितुं भगवत एव ब्रह्मादिरूपेण स्रष्टृत्वादिकमाह - **स इति**। [8]स भगवान् वाच्यवाचकतयाऽवस्थितः जगच्छरीरकत्वात् वाच्यतयावस्थितः आकाशशरीर-कत्वाच्च वाचकाकाशगुणशब्दरूपेणावस्थितः ब्रह्मरूपधृ[9]क् नामरूपक्रियाः धत्ते। ब्रह्मरूपधृ[10]क् इत्यनेन प्रागुक्तव्यष्टिसृष्टिः चतुर्मुखशरीरकात् इत्यवगम्यते। नाम देवादिनाम, रूपं देवादिरूपं, क्रिया तेषां कृत्यानि [11]धत्ते [12]विधत्ते स्वपर्यन्ता[13]ः नामरूपक्रियाः। यथा "नामरूपं च भूतानां कृत्यानाञ्च प्रपञ्चनम्। वेदशब्देभ्य एवादौ देवादीनां चकार सः" इति। कथम्भूतो विधत्ते अकर्मकः अकर्मवश्यः सकर्मा सङ्कल्पमात्रव्यापा[14]रकः।।३६।।

नामरूपक्रियाधानमेव प्रपञ्चयति - **प्रजापतीनित्यादिना**। द्वितीयान्तानां धत्ते इत्यनेनान्वयः। तत्र प्रजापत्यादिनामानि तद्वाच्यानि रूपाणि तत्कर्माणि च ज्ञेयानि पृथक् तत्तदवान्तरभेदेन। गिरीनित्यस्या नन्तरं नृपेति सम्बोधनम्।।३७,३८,३९।।

चतुर्विधाः जरायुजाण्डजस्वेदजोद्भिज्ञरूपेण चतुर्विधाः "पुमान् न देवो न नरो न पशुः न च पादपः। चतुर्विधो विभेदोऽयं" इत्युक्तदेवादिरूपेण [15]वा चतुर्विधाः। [16]ये च द्विविधाः स्थावरजङ्गमरूपेण

1. A.B. तत्क° 2. H.V. °धृत् 3. H.V. तद्वा° 4. H.V. तत्क° 5. H.V. °मादिरू° 6. B. °ण्यापुण्यमि°; H.V. °ण्यापुण्यविमि° 7. A.B. °त्वं 8. A.B. Omit सः 9. W. °धृत् 10. W. °धृत् 11. W. Omits धत्ते 12. A.B. Omit विधत्ते 13. A.B. °न्ता नामक्रियाः व्याकरोदित्यर्थः 14. W. °रः 15. W. Omits वा 16. A.B. Omit येच......द्विविधाः

द्विविधाः। जलस्थलनभांसि ओकांसि स्थानानि[1] येषां तान्[2] धत्ते इति पूर्वेणान्वयः। नन्वेकरूप्येणैव[4] किं न धत्ते इत्यत आह - कुशलेत्यादिना। कर्मणां क्षेत्रज्ञपुण्यापुण्यरूपाणां कर्मणां पराः प्राप्याः गतयः फलानि कुशलाः उत्तमाः, अकुशलाः नीचाः, मिश्राः मध्यमाः[5]। कर्मणां विचित्रत्वात् तत्फलानामपि वैचित्र्यमिति भावः।।४०।।

**विज०** मायामये जगति विपश्चितः उभे कार्यकारणरूपे न गृह्णन्ति नाङ्गीकुर्वन्ति इत्येतदपव्याख्यानं प्रत्याह - **स वाच्येति**। "नामैव वाचकत्वेन नामरूपक्रिया अपि।वाच्यत्वेन हरिर्देवो नियामयति चैकराट्। कर्तृत्वात्तु सकर्मासौ निष्फलत्वादकर्मकः"। इत्यनेन व्याख्यातोऽयं श्लोकः। निष्फलत्वात् कर्मफलानपेक्षत्वात्। नन्वेकस्य नानानामरूपक्रियाकारकत्वं मायामन्तरेण कथं स आघटीति अत उक्तं ब्रह्मेति। अन्तर्बहिर्व्याप्तं यद्ब्रह्मशब्दवाच्यं रूपं तस्य धारकत्वात् घटते इत्यर्थः। "ब्रह्म वेदस्तपस्तत्त्वम्" इत्यतो वेदादिशब्दराशिधृतत्वाद्वा अनेन प्रपञ्चस्य वेदादिसिद्धत्वेन सत्यत्वात् तस्य मायामयत्वे वेदादेरप्रमाणत्वेन तदुक्ततदैक्यस्यापि तथात्वेन विश्वस्यैव सत्यत्वं न्यायप्राप्तमित्युक्तं भवति।।३६।।

उक्तमेव विशदयति - **प्रजापतिरित्यादिना**। सर्वनामरूपक्रिया यतः प्रजापत्यादिनामरूपक्रियाश्च धत्त इति पूर्वेणान्वयः।।३७।।

मातरोऽदित्यादयः ब्रह्माद्या वा, पिशाचाः घण्टाकर्णादयः, भूताः भृङ्गिरुद्रानुगाः, विनायकाः विघ्नादयः।।३८।।

कूष्माण्डाः रुक्माण्ड्वादयः। उन्मदाः कालकर्णादयः। यातुधानाः रक्षोविशेषाः भृगकुत्सादयः। ग्रहाः अष्टादश नवग्रहा वा। हे नृप! प्रियव्रतादयो वा। सरीसृपाः सहस्रपदादयः।।३९।।

सङ्ख्यातुमशक्यत्वात् सामान्यतो निर्दिशति - **द्विविधा** इति। "व्योमर्क्षपथमाकाशनभश्शब्द गुणोऽम्बरम्। पुष्करं गगनं विष्णोः पदं द्यौ रात्रमुच्यते" इत्यभिधानात् नभश्शब्दः उभयलिङ्गः। तेषामुत्तमादित्वे कारणमाह कुशलेति। उक्ता इमा जातयः कुशलादिकर्मणां गतयः फलानि।।४०।।

**रा०कृ०** परः प्रकृतिगुणसम्बन्धविरहितः स भगवान् अकर्मकः सकलव्यापारशून्योऽपि ब्रह्मरूपधृक् ब्रह्मरूपधारी सन् सकर्मा व्यापारसहितश्च सन् वाच्यवाचकतया नामरूपक्रियाः धत्ते वाच्यतया देवादिरूपाणि वाचकतया देवादिनमानि तत्तन्नामरूपानुगुणाः क्रियाश्च सृजति।।३६।।

---

1. A.B. Omit स्थानानि 2. W. adds अपि 3. W. "चैवा" 4. A.B. "न्वेकरूपे" 5. W. मध्याः

हे नृप! प्रजापतीन् दक्षप्रभृतीन् मनून् स्वायम्भुवादीन् देवान् इन्द्रादीन् ऋषीन् मरीचिमुख्यान् पितृगणान् अर्यमादीन् सिद्धचारणगन्धर्वान् कपिलादीन् सिद्धान् सुयज्ञप्रभृतीन् चारणान् चित्ररथादीन् गन्धर्वान् विद्याध्रासुरगुह्यकान् सुदर्शनादीन् विद्याधरान् नमुचिमुख्यान् असुरान् कामुकादीन् गुह्यकान् किन्नराप्सरसः किन्नरान् अप्सरसः नागान् सर्वान् किम्पुरुषोरगान् किम्पुरुषान् उरगान् शेषादयो नागाः तक्षकादयस्सर्पाः कुण्डधरादयः उरगा इति विवेकः। मातृरक्षःपिशाचांश्च ब्राह्मीमुख्या मातरः रक्षांसि पिशाचांश्च प्रेतभूतविनायकान् अत्र विनायकपदेन विघ्नविशेषास्सूच्यन्ते। कूष्माण्डोन्मादवेतालान् यातुधानान् रक्षोभेदान् ग्रहानपि बालग्रहादीन् खगान् गरुडादीन् मृगान् पशून् गवादीन् वृक्षान् अश्वत्थादीन् गिरीन् मेरुमुख्यान् सरीसृपान् सहस्रपादादीन् सः भगवान् धत्ते इति पूर्वेणान्वयः। अपि च अन्ये पूर्वोक्तेभ्यः परे ये द्विविधाः स्थावराः जङ्गमाश्च चतुर्विधाः जरायुजाः अण्डजाः स्वेदजाः उद्भिज्जाश्च जलस्थलनभौकसः जलचराः, भूचराः, खेचराश्च वर्तन्ते तानपि स भगवान् धत्ते। कुशलाकुशलाः कुशलाः उत्तमाः, अकुशलाः अधमाः, मिश्रा मध्यमाः ये जीवास्सन्ति ते सर्वेऽपि कर्मणां पुण्यपापमिश्राणां स्वकर्मणां इमाः गतयः फलानि। प्रागुक्तनानाजन्मफलकाः प्रभवन्तीति भावः।।३७,३८,३९,४०।।

**सत्त्वं रजस्तम इति तिस्रः सुरनृनारकाः।**
**तत्राप्येकैकशो राजन् भिद्यन्ते गतयस्त्रिधा।**
**यदै[1]कैकतरो[2]ऽन्याभ्यां स्वभाव उपहन्यते।।४१।।**

**स[3] एवेदं जगद्धा[4]ता भगवान् धर्मरूपधृक्[5]।**
**पुष्णाति स्थापयन् विश्वं तिर्यङ्नरसुरात्म[6]भिः।।४२।।**

**ततः कालाग्निरुद्रात्मा यत्सृष्टमिदमात्मनः।**
**संनियच्छति का[7]लेन घनानीकमिवानिलः।।४३।।**

**इत्थम्भावेन कथितो भगवान् भगवत्तमः।**
**नेत्थम्भावेन हि परं द्रष्टुमर्हन्ति सूरयः।।४४।।**

**श्रीध०** सत्त्वादिभेदेन कर्मगतिवैचित्र्यं प्रपञ्चयति - **सत्त्वमिति** सार्धेन। सत्त्वादयः तिस्रो गतयः ता[8] एव शृङ्गग्राहिकया दर्शयति सुरनृनारका इति। सुरादिशब्दाः उपलक्षणार्थाः। अन्याभ्यां गुणाभ्यां स्व[9]र्गादीनां स्वभावो गुणः उपहन्यतेऽनुविध्यते। त[10]त्रापि सत्त्वादिगतिषु एकैकशो गतयः।।४१।।

---

1. M.Ma. °वै' 2. M.Ma. °मो" 3. M.Ma. तदे" 4. B. °धतो 5. H.V.W. °त् 6. H.I.V.W. °हि° 7. B.H.I.M.Ma.V.W. तत्काले
8. A.B. Omit ता एव......इति 9. A.B. ऋष्यादीनां 10. A.B. Omit तत्रापि......गतयः

ब्रह्मरूपेण स्रष्टृत्वमुक्त्वा विष्णुरूपेण पालकत्वमाह - **स इति**। स एव भगवान् तिर्यगाद्यवतारैः इदं विश्वं स्थापयन् [1]पालयन् धर्मरूपेण पुष्णाति भोगैः संवर्धयति।।४२।।

रुद्ररूपेण संहर्तृत्वमाह - **तत इति**। आत्मनः सकाशात् यदिदं सृष्टं तत् [2]कालादिरूपेण संनियच्छति संहरति।।४३।।

कर्तृत्वाद्य[3]नुवादेन दशमस्य शुद्धिमाह - **इत्थम्भावेनेति**। [4]भगवान् अतिशयेन भगवान् भगवत्तमः इत्थम्भावेन स्रष्टृत्वादिरूपेण। "तस्माद्वा एतस्मादात्मनः आकाशस्सम्भूतः। सोऽकामयत बहु स्यां प्रजायेय" इत्यादिश्रुत्या [5]प्रतिपादितः। सूरयस्तु परं केवलमेवंरूपे[6]णैव द्रष्टुं नार्हन्ति।।४४।।

**वीर०** एतदेव प्रपञ्चयति - **सत्त्वमिति** सार्धेन। सत्त्वं सात्त्विककर्मफलरूपा देवत्वप्राप्तिरुत्तमा सुखप्राचुर्यात्। रजोगतिः मनुष्यतामिश्रा, नारकशब्दः स्थावराद्युपलक्षकः। तमोगतिर्ना[7]रकौ नीचेत्यर्थः। तत्रापि सात्त्विकराजसतामससुरनृनारकासु गतिष्वपि यदैकैकतरः सात्त्विकादिः स्वभावः इतराभ्यां अवशिष्टाभ्यां स्वभावाभ्यां उपहन्यतेऽनुविध्यतेऽभिभूयते इत्यर्थः। तदा [8]एकैकशः एकैकं त्रिधा गतयः भिद्यन्ते। यथा रजः प्रचुराः एव नराः केचित् केवलरजःप्रचुराः केचित्सत्त्वप्रचुराः केचित्तमःप्रचुराः एवं सात्त्विकतामसा अपि प्रत्येकं त्रिधेत्यर्थः। एतेन यावत्यः कर्मगतयः इत्यस्याप्युत्तरमुक्तं भवति।।४१।।

एवं ब्रह्मान्तर्यामित्वेन स्रष्टृत्वमभिधाय साक्षात्पालयितृत्वमाह - **स इति**। जगद्धाता जगत्स्रष्टा स एव भगवान् तिर्यङ्नरसुरात्[9]मभिः तिर्यञ्चो वराहमीनकच्छपहंसादयः, नराः रामकृष्णादयः, सुराः वामनसुयज्ञादयः एतैरवतारैरिदं विश्वं स्थापयन् पालयन् धर्मरूप[10]धृक् धर्मशरीरकः सन् पुष्णाति संवर्धयति।।४२।।

रुद्रशरीरकत्वेन संहर्तृत्वमाह - **तत** इति। कालाग्निरुद्रात्मा कालाग्निरुद्रः आत्मा शरीरं यस्य सः, कालाग्निरुद्रस्यात्मभूत इति वा। स भगवान् उपादानभूतात् आत्मनः सृष्टं यद्विश्वं तत्काले कल्पान्ते सन्नियच्छति संहरति अनिलो वायुः मेघसमूहमिवेति दृष्टान्तः।।४३।।

जगद्व्यापारस्य जीववत् [11]भगवतः कर्मायत्तत्वमाशङ्क्य नेत्याह - **इत्थमिति**। इत्थम्भावेन प्रकृतस्रष्टृत्वादिभावेन [12]युक्तः भगवत्तमः ज्ञानादिपूर्णतमः भगवान् कथितः सम्यक् प्रतिपादितः सूरयो

---

1. B. Omits पाल्यत् 2. A.B. Omit कालादिरूपेण 3. A.B. °प° 4. A.B. Omit भावान्.......तमः 5. B.H.V. कथितः 6. H.V. °णद्र°
7. B. °कता 8. W. Omits एकैकशः 9. W.°द्दि° 10. W. °धृत् 11. A.B. Omit भगवतः 12. A.B. प्रयुक्तः

ब्रह्मविदः इत्थम्भावेन चिदचिद्रूपेण परं केवलं द्रष्टुं नार्हन्ति, किन्तु तद्विलक्षणत्वेन द्रष्टुमर्हन्ति भगवान् भगवत्तम इति च विशेषणद्वयं जीववैलक्षण्यप्रतिपादकं जीवस्याभगवत्वात् तद्व्यापारः कर्मायत्तः परमात्मनः कर्तृत्वं अकर्मायत्तमिति भावः।।४४।।

**विज०** उक्तजातीः त्रिधा विभजति - **सत्त्वमिति**। सत्त्वं रजस्तम इति गुणत्रयहेतुकाः सुरनृनारकाः इति तिस्रः ज्ञेया इत्यन्वयः। सत्त्वहेतुकपुण्यफला सुरगतिः, रजोहेतुकपुण्यपापफला मनुष्यगतिः, तमोहेतुकपापफला नारकी गतिः, अनेन नरकयोग्या असुरा इत्युक्तं भवति। अवान्तर-भेदोऽपि त्रिधेत्याह तत्रापीति। गुणत्रयमूलकर्मभ्यः प्राप्तसुरनरासुरगतयः प्रत्येकं सात्त्विकराजसतामस-तया त्रिधा भवन्ति। तथाहि - कल्पादिप्रधानाः असुराः तामसतामसाः प्रधानासुरभृत्याः तामसराजसाः अप्रसिद्धासुराः तामससात्त्विकाः केवलपापचारिणः मनुष्याः राजसतामसाः मिश्रकर्मकृतो मनुष्याः राजसराजसाः। मनुष्येषु पुण्यैककर्मकृतः उत्तमाः मनुष्याः राजससात्त्विकाः पृथक्प्रसिद्धाः देवाः सात्त्विकतामसाः, अतत्त्वाभिमानिनो लोके ख्याताः सात्त्विकराजसाः, तत्त्वाभिमानिनो देवाः सात्त्विकसात्त्विकाः सात्त्विकेभ्योऽपि सत्त्विकाः गरुडादित्रिकतद्भार्याः, तेभ्योऽपि सात्त्विकी ब्रह्मभार्या सरस्वती, ततोऽपि सात्त्विको ब्रह्मेति भेदः एकैकशः इति शप्रत्ययेन ज्ञायते। तदुक्तं - "तामसास्ता-मसा दैत्या प्रधाना देवशत्रवः" इत्यादिना।।४१।।

एवं जगत्स्वरूपं निरूप्याधुना भगवदवतारावसरमाह - **यदेति**। यदैकतमस्वभावः सात्त्विकः अन्याभ्यां रजस्तमोभ्यामुपहन्यते तदैव तस्मिन्नवसर एव धाता पोषणादिकर्ता वर्णाश्रमधर्मप्रवर्तक-रूपधरः भगवान् तिर्यङ्नरसुरात्मभिः मत्स्यकूर्मवराहरामकृष्णोपेन्द्रादिरूपैः अवतीर्य इदं जगत् सत्त्वेन स्थापयन् पुष्णाति संवर्धयति स्थितं रक्षतीत्यन्वयः। तेषु त्रिष्वेकतमः भावः सात्त्विकतामसः सात्त्विकराजसः सात्त्विकसात्त्विको वा तामसराजसाभ्यामुपहन्यते तदेति वा। यद्वा तैस्तामसादिभिः ते त्रयः सात्त्विकभेदाः बाध्यन्ते तदा वराहादिरूपैरिति वा। तदुक्तं "सात्त्विकेषु त्रिषु यदा त्वेकस्य प्रतिबाधनम्" इत्यादिना।।४२।।

ननु संहारोऽनियतश्चेत्तदुपद्रवेण जगद्रक्षणं दुश्शकं इत्याशङ्क्य स्वनियतरूपभेदेन संहारस्य क्रियमाणत्वात् न तदुपरोधो जगद्रक्षणस्येति ध्वनयति - **तत** इति। ततः स्थित्यनन्तरं प्रलयकाले प्राप्ते कालाग्निरुद्राणामात्मान्तर्यामी स भगवान् आत्मनो ब्रह्मणोन्तर्यामिणः स्वोदरात् यत्सृष्टं जगत् तदिदं सर्वं नियच्छति। कथमिव? अनिलो घनानीकं मेघपटलमिवेत्यन्वयः। तदुक्तं "मत्स्यादिरूपी पोषयति नृसिंहो रुद्रसंस्थितः" इत्यादिना। कालो यमः।।४३।।

उक्तमर्थं प्रमाणयति - **इत्थम्भावेनेति**। भगवन्तो ब्रह्मादयः तेभ्यः अतिशयेनोत्तमो भगवत्तमो भगवानैश्वर्यगुणो नासर्वजगन्नेता परमपुरुषः इत्थम्भावेन सृष्टिस्थितिसंहारादिकर्तृत्वेन सर्वस्माद्भिन्नत्वेन सर्वदोषविवर्जितत्वेन कथितः प्रतिपादितः, श्रुत्यादाविति शेषः। "यतो वा इमानि भूतानि जायन्ते" इत्यादि। तथा कथने कारणमाह इत्थमिति। सूरयः परं परमात्मानं इत्यम्भावेन सर्ववैलक्षण्येन द्रष्टु-मर्हन्ति हि नाभेदज्ञानेन, अतस्तत्कथनं युक्तमिति भावः। यद्वा भगवान् जगत्स्रष्टृत्वादिलक्षणविशिष्टत्वेन कथित इति यत् यस्मात् तस्मात्सूरयः परमार्थदर्शिनः। इत्थम्भावे अचेतसि परं द्रष्टुं नार्हन्तीति न, अर्हन्त्येवेति। अनेन ज्ञानिप्रत्यक्षमपि प्रोक्तार्थे प्रमाणमिति सूचितम्।।४४।।

**रा०कृ०** हे राजन्! सत्त्वं, रजः, तम इति हेतुभ्यः सुरनृनारकाः तिस्रो गतयः भवन्ति। तत्रापि तास्वपि यदा एकैकतरः स्वभावः सात्त्विकादिः अन्याभ्यामवशिष्टाभ्यां स्वेतराभ्यां स्वभावाभ्यां उपहन्यते अभिभूयते तदा एकैकशः त्रिधा भिद्यन्ते ताः तिस्रः गतयः प्रत्येकं त्रिधा भिद्यन्त इत्यर्थः। इदमुपलक्षणं शुद्धसत्त्वा रजोमिश्रसत्त्वा तमोमिश्रसत्त्वा शुद्धराजसी सत्त्वमिश्रराजसी इत्यादयो बह्वयो गतयः भवन्तीति ज्ञेयाः।।४१।।

जगद्धाता जगत्कर्ता स एव भगवान् धर्मरूपधृक् - अत्र धर्मपदेन धर्मरक्षको विष्णुरुच्यते - विष्णुरूपधारीसन् तिर्यङ्नरसुरात्मभिः तिर्यञ्चो वराहदयः, नराः रामादयः, सुराः वामनादयः - एतदा-त्मकैः स्वावतारैः इदं विश्वं स्थापयन् स्वमर्यादायां स्थापयन् पुष्णाति पालयति।।४२।।

ततः अनन्तरं स भगवान् कालाग्निरुद्रात्मा कालाग्निः प्रलयकालाग्निः स इव यो रुद्रः तदात्मा प्रलयकालानलतुल्यरुद्ररूपधारी सन्नित्यर्थः। आत्मनः स्वस्मात् स्वेन उपादानकारणीभूतेनेति भावः। यत् सृष्टं इदं विश्वं वर्तते तद्विश्वं अनिलोवायुः घनानीकमिव मेघसमूहमिव कालेन करणभूतेन संनियच्छति उपसंहरति।।४३।।

भगवत्तमः भगवतां समग्रैश्वर्यस्य धर्मयशश्श्रीज्ञानवैराग्याख्यषडैश्वर्यवतां मध्ये उत्कृष्टः भगवान् नारायणः इत्थम्भावेन विश्वस्रष्टृत्वादिरूपेण कथितो हि निरूपितः खलु। सूरयो विवेकिनस्तु परं केवलं मायातीतं भगवन्तं इत्थम्भावेन विश्वस्रष्टृत्वादिरूपेण द्रष्टुं नार्हन्ति किन्तु विशुद्धमेव पश्यन्तीति भावः।।४४।।

**[1]नास्य कर्मणि जन्मादौ परस्या[2]नुविधीयते।**
**कर्तृ[3]त्वप्रतिषेधार्थं माययाऽऽरोपितं हि [4]तत्।।४५।।**

**अयं तु ब्रह्मणः कल्पः सविकल्प उदाहृतः।**
**विधिस्साधारणो यत्र सर्गाः प्राकृतवैकृताः।।४६।।**

**परिमाणं च कालस्य कल्पलक्षणविग्रहम्।**
**यथा [5]पुरस्ताद्व्याख्यास्ये पाद्मं कल्प[6]मथो श्रुणु।।४७।।**

**श्रीध०** तत्किम्? नेति। यतोऽस्य विश्वस्य जन्मादौ कर्मणि परस्य ईश्वरस्य इत्थम्भावः कर्तृत्वं नास्ति श्रुत्यापि तात्पर्येण न प्रतिपाद्यते, किन्तु अनुविधीयतेऽ[7]नुवर्त्यते। किमर्थम्? कर्तृत्वप्रतिषेधार्थम्। हि यतो मायया [8]तत् आरोपितं प्रकाशितम्। [9]यथा च श्रु[10]तयः - "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्", "इन्द्रो मायाभिः पुरुरूप ईयते" इत्या[11]द्याः।।४५।।

उक्तमर्थं उपसंहरति - **अयन्त्विति**। ब्रह्मणः सम्बन्धी कल्पो [12]महाकल्पः विकल्पोऽवा[13]न्तरकल्पः तत्सहितः [14]उदाहृतः उदाहरणत्वेन सङ्क्षेपतः उक्तः। [15]कथम्भूतः? यत्र महाकल्पे प्राकृताः महदादिसर्गाः अवान्तरकल्पे च वैकृताः स्थावरादिसर्गाः इत्ययं विधिः प्रकारः अन्यैः महाकल्पादिभिः साधारणः।।४६।।

वक्ष्यमाणं विस्तरं प्रतिजानीते - **परिमाणमिति**। परिमाणं स्थूलं सूक्ष्मं च कल्पस्य लक्ष[16]णमियानेवंरूपं इति तद्विग्रहमवान्तरकल्पं मन्वन्तरादिरूपं [17]तद्विभागं च यथावद्विस्तरेण पुरस्तात्तृतीयस्कन्धे [18]व्याख्यास्यामि। तत्र [19]च "पाद्मं कल्पमथो" इति कार्त्स्न्येन व्याख्यायमानं श्रुणु।।४७।।

**वीर०** ननु "स एव सृज्यः स च सर्गकर्ता" "यो मामजमनादिं च" "तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम्" इत्यादिना सृज्यत्वमसृज्यत्वं कर्तृत्वमकर्तृत्वं [20]चावगम्यते तत्कथं घटत इत्याशङ्क्य विधिनिषेधयोः विषयव्यव[21]स्थां दर्शयति - **नेति**। अस्य जगतः कर्मणि सृष्टौ परस्य परमात्मनः जन्मादिर्नानुविधीयते परमात्मा न स्वरूपेण सृज्यः अपि तु सृज्यवस्त्वन्तरात्मतया तद्विशिष्टत्वात् सृज्य इत्युच्यते तस्मादजत्वं स्वरूपेण, सृज्यत्वं तु सद्वारकमित्यविरोधः इत्यर्थः। कर्तृत्वाकर्तृत्वविरोधं

1. M.Ma. न चास्य जन्मकर्माणि 2. M.Ma. °स्य न 3. M.Ma.W. °त्वं 4. W. य° 5. M.Ma.W. प° 6. M.Ma.W. °मिमं 7. A. °नुवर्ण्यते; B. °नूद्यते 8. A. Omits तत् 9. B.H.V. तथा 10. B.H.V. °तिः 11. B.H.V. °द्या 12. H.V. Omit महाकल्पः 13. A.B. °न्तरः तत्स° 14. A. Omits उदाहृतः 15. H.V. Omit कथम्भूतः 16. H.V. °णं नेह निरूपतति तद्वि° 17. A.B. विभा° 18. H.V. Omit व्याख्यास्यामि 19. A. Omits च 20. A.B. वाऽव° 21. A.B. °स्थानं च द°

परिहरति कर्तृत्वमिति। मायया प्रकृत्या जीवेष्वारोपितं प्राकृतकरणकलेबरसापेक्षं जीवगतकर्तृत्वं यत्तदेव प्रतिषेधार्थं प्रतिषेधविषय[1]परं सङ्कल्पमात्रेण कर्तृत्वं तु विधीयते इत्यविरोध इत्यर्थः। कामाश्च नानुमानापेक्षेति प्रकृत्यधीनकर्तृत्वाभावो हि सूत्रितः प्रतिषेधार्थमित्यत्रार्थशब्दः विषयपरः "अर्थस्या-द्विषये मोक्षे" इति प्रसिद्धेः। कर्मणि जन्मादौ परस्या[2]नुविधीयते कर्तृत्व प्रतिषेधार्थमित्यपि पाठः। तस्यायमर्थः - ननु जीवविलक्षणत्वेन पश्यन्तीत्युक्तं कथमेतदुपपद्यते? जीववत् अस्यापि जन्मकर्मादि-दर्शनात् इत्यत आह - **नास्येति**। अस्य चिदचिदात्मकप्रपञ्चस्य जन्मादौ कर्मणि च यद्वा जन्मादिरूपे कर्मणि सत्यनुसृत्य प्रपञ्चानुसारिजन्मादिकमित्यर्थः। [3]परस्य परमात्मनो न विधीयते प्रपञ्चवत्कर्मायत्त-जन्मादिकं परमात्मनो न विधीयते न प्रतिपाद्यते "अजायमानो बहुधा विजायते" इत्यादिवेदान्तवाक्यै-रिति शेषः। परमात्मनो जन्मादिकं अकर्मायत्तमिति कुतोऽवगम्यते इत्यत्र[4] आह कर्तृत्वेत्यादिना। हि यस्मात्तज्जन्मकर्मादिकं मायया स्वकीयसङ्कल्परूपज्ञानेन "मायावयुनं ज्ञानम्" इति ज्ञानपर्यायोऽत्र मायाशब्दः "मायया सततं वेद्मि प्राणिनां च शुभाशुभम्" इति प्रयोगाच्च। कतृत्वप्रतिषेधार्थं कर्मायत्त-कर्तृत्वस्य प्रतिषेधार्थं प्रतिषेधायारोपितं, स्वस्मिन्निति शेषः। मदीयजन्मकर्मादिकं जीववन्नकर्मायत्तमिति प्रदर्शनाय स्वेच्छयैव स्वस्मिन् दैवमानुषजन्मकर्मादिकमारोपितं [5]परिगृहीतमित्यर्थः। तथा च [6]भगवतैव गीयते "अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोपि सन्। प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया" इति।।४५।।

पुरुषोऽण्डं विनिर्भिद्य इत्यादिनोक्तमर्थमुपसंहरति - **अयन्त्विति**। ब्रह्मणः अयं कल्पः महाकल्पः सविकल्पः अवान्तरका[7]लविभागवानुदाहृतः दिङ्मात्रत्वेनो[8]क्तः। अस्मिन् कल्प इव कल्पान्तरेऽपि सृष्टिरित्याह विधिरिति। यत्र महाकल्पे प्राकृताः महदादिपृथिव्यन्ताः सर्गाः वैकृताः पृथि-व्यादिवि[9]कारैरारब्धाः सर्गाः इत्ययं विधिः प्रकारः अन्यैर्महाकल्पादिभिः साधारणः समानः। एतेन "पुरुषावयवैर्लोकाः सपालाः पूर्वकल्पिताः" इत्यादिनोद्भावितः "धाता यथापूर्वमकल्पयत्" इत्यादिश्रु-तिविरोधःपरिहृतः। पुरुषावयवानां लोकानां चोपासनार्थं मिथस्तादात्म्योपदेशेऽपि प्रतिकल्पं सृष्टेरै-करूप्ये विरोधाभावत्।।४६।।

वक्ष्यमाणं सविस्तरं प्रतिजानीते - **परिमाणमिति**। कालस्य परिमाणं सूक्ष्मं स्थूलं च परिमाणं कल्पस्य लक्षणमियानेवंरूप इत्येवं रूपं लक्षणं विग्रहमवान्तरकल्पं मन्वन्तरादिरूपं च यथा यथावत् [10]पुरस्तात्तृतीयस्कन्धे व्याख्यास्ये [11]विस्तरेण कथयिष्ये। [12]तत्रैव पाद्मं कल्प[13]मपि कार्त्स्न्येन व्याख्यायमानं श्रृण्वित्यर्थः।।४७।।

---

1. W. यः सङ्क° 2. W. °स्य न वि° 3. A.B. Omit परस्य 4. A.B. °त 5. A.B. गृहीतं 6. W. Omits भगवतैव 7. W. °र्यं° 8. W. °नोदाहृतः 9. W. °काराख्याः 10. W. °त्य° 11. W. Omits विस्तरेण कथयिष्ये 12. A.B. Omit तत्रैव 13. A.B. °मथो

**विज०** अत्रोच्यमानं जन्मादिकर्तृत्वं मायामयं किं न स्यादत्राह - **न चेति**। अस्य परस्य कर्तृत्वं जन्मकर्माणि यथा जीवानां बन्धस्य प्रतिषेधार्थं भवन्ति, तथा न विधीयते इति न वेदादौ कर्तृत्वं जन्म कर्म च विधीयत एव। अतो मायया स्वेच्छया आरोपितं नित्यारूढम्। स्वरूपाविभिन्नत्वात् कर्तृत्वं न अनिर्वाच्यम्। "प्रतिषेधाय बन्धस्य जीवानां परमेशितुः। स्वेच्छयैव तु कर्तृत्वं नित्यारूढं चिदात्मकम्" इति वचनात् रुप उपरि इति धातोः सुभद्रां रथमारोप्येति प्रयोगाच्च। "स्वाभाविकी ज्ञानबलक्रिया च" इति चानेन मायाशब्दस्य इच्छार्थत्वं न मिथ्यार्थत्वमित्युक्तं भवति। हिशब्देन निरस्तकुहकमिति पूर्वोक्तं सूचयति।।४५।।

सम्प्रत्युक्तब्रह्मकल्पेन अन्यब्रह्मकल्पानां साधारण्यमाह - **अयमिति**। अयं ब्रह्मणः प्रथमः कल्पः तवोदाहृतः, मयेति शेष इत्यन्वयः। कीदृशः? सविकल्पः मन्वन्तरादिविविधकल्पेन सहितः। यत्र ब्रह्मकल्पे अन्यब्रह्मकल्पानामन्यकल्पानां च साधारणः समानः विधिः यत्र च प्राकृतवैकृताः सर्गास्सन्तीत्यर्थः। अनेन प्राकृतादिसर्गकथनं साधारण्ये करणमित्युक्तं भवति।।४६।।

श्रोतृप्रवृत्त्यर्थमुत्तरस्कन्धार्थं प्रतिजानीते - **परिमाणमिति**। कल्पानां लक्षणानि विग्रहं इयत्तां च कल्पलक्षणस्वरूपं वा परस्तात्पश्चात् यथा यथावत् व्याख्यास्ये प्रथमत इमं पाद्मं कल्पं श्रुण्वित्यन्वयः।।४७।।

**रा०कृ०** अस्य विश्वस्य जन्मादौ सृष्टिस्थितिसंहाररूपे कर्मणि परस्य परमेश्वरस्य न प्रागुक्तः इत्यम्भावः कर्तृत्वं नास्ति। किन्तु कर्तृत्वप्रतिषेधार्थं कर्तृत्वस्य निषेधार्थं अनुविधीयते तत् कर्तृत्वं केवलं अनुवर्ण्यते। हि कुत इति चेत् तत् गुणगतं कर्तृत्वं मायया आरोपितं परमेश्वरे आरोपितम्।

ननु विश्वजन्मादौ सर्वशक्तिमतः परमेश्वरस्य कर्तृत्वं यदि नास्ति तर्हि कस्य वा अन्यस्य स्वल्पशक्तिमतः तद्भवति? कर्तृत्वप्रतिषेधार्थं कर्तृत्वमेव तस्य कथमनुविधीयते? गुणगतं च जन्मादिकर्तृत्वं मायया परमेश्वरे कथं वाऽऽरोपितं भवति? उच्यते - सर्वस्य हि जीवस्य मनोऽस्ति मनश्च बहुविधाः भावनाः कुरुते, मनःकल्पितानां भावनानां जीवः कारणं नैव भवति। तथापि मनस्समाश्रयत्त्वात् जीवस्य भावनाहेतुत्वं प्रकल्प्यते। एवमेव परमेश्वरस्य क्रीडासाधनी दृश्यादृश्योभयात्मकस्य कृत्स्नस्यैव प्रपञ्चस्य परमेश्वरत्वप्रतिपादिका मायाशक्तिः विश्वजन्मादौ कारणं भवति। तथापि मायानियामकत्वादीश्वरस्य विश्वजन्मादिकर्तृत्वं कल्प्यते।

एवं परमेश्वरस्य कर्तृत्वप्रतिषेधार्थमेव कर्तृत्वानुविधानमपि युज्यते। प्राप्तिपूर्वको हि निषेधः। मायानियामकत्वेन प्राप्ता परमेश्वरस्य विश्वजन्मादिकर्तृता च परमार्थपर्यालोचनया मायाकल्पितेत्येव निश्चीयते।

---

1. A.B. Omit यथा

किञ्च गुणगतमपि जन्मादिकर्तृत्वं मायागुणगतत्वाविशेषं सत् मायानियामके परमेश्वरे समारोपितं भवतीति सर्वमनवद्यम्। उक्तं च भगवता स्वयमेव स्वस्य सर्वातीतत्वं गीतासु "त्रिभिर्गुणमयैर्भावैः एभिस्सर्वमिदं जगत्। मोहितं नाभिजानाति मामेभ्यः परमव्ययम्"(भ.गी.7-13) इति।।४५।।

यत्र यस्मिन् ब्रह्मकल्पे प्राकृतवैकृताः सर्गाः प्राकृताः महदादिपृथिव्यन्ताः सर्गाः वैकृताः पृथिव्यादिविकारारब्धाः स्थावरादिसर्गाश्च इत्ययं विधिः प्रकारः साधारणः। अन्यैर्महाकल्पैः साधारणः समानः सोऽयं तु सविकल्पः अवान्तरकल्पविभागसहितः ब्रह्मणः कल्पः उदाहृतः सङ्ग्रहेण कथितः।।४६।।

कालस्य परिणामं कल्पलक्षणविग्रहं च कल्पस्य लक्षणं स्वरूपं विग्रहं च मन्वन्तरादिरूपं विभागश्च यथा याथातथ्येन पुरस्तात् अग्रे तृतीयस्कन्धे इत्यर्थः व्याख्यास्ये कथयिष्यामि। एतत्सर्वमपि पाद्मकल्पेऽस्ति। अतः पाद्मं कल्पमथो सामस्त्येन कथ्यमानं श्रुणु।।४७।।

**शौनक उवाच**

**यदाह[1] नो भवान् सूत क्षत्ता भागवतोत्तमः।**
**चचार तीर्थानि भुवस्त्यक्त्वा बन्धून्[2] सुदुस्त्यजान्।।४८।।**

**कुत्र[3] कौषारवेस्तस्य संवादोऽध्यात्मसंश्रितः[4]।**
**यद्वा स भगवांस्तस्मै पृष्टस्तत्त्वमुवाच[5] ह।।४९।।**

**ब्रूहि नस्तदिदं सौम्य! विदुरस्य विचेष्टितम्।**
**बन्धुत्यागनिमित्तं च यथैवागतवान्[6] पुनः।।५०।।**

**सूत उवाच**

**राज्ञा परीक्षिता पृष्टो यदवोचन्महामुनिः[7]।**
**तद्वोऽभिधास्ये श्रुणुत राज्ञः[8] प्रश्नानुसारतः।।५१।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
द्वितीयस्कन्धे दशमोऽध्यायः।।१०।।

---

1. H.V. यथासौ भगवान्; W. यथाह भगवान् 2. AF.GF. कृत्स्नं च दुस्त्यजं 3. I. क्षत्तुः 4. AF.GF. सश्रयः; M.Ma. सम्भवः 5. N. त्तु" 6. A.E.G.N. तं" 7. M.Ma. "वादी" 8. H.V. "ज्ञप्र"

**श्रीध०** यदर्थं सृष्ट्यादिनिरूपणं तदेव साक्षाच्छ्रोतुकामः कथान्तरं पृच्छति - **यदाहेति**[1]। क्षत्ता[2] विदुरः भुवः सम्बन्धीनि तीर्थानि यद्वा भुवः क्षेत्रणि चेति[3]।।४८।।

**कुत्रेति**। कौषारवेः मैत्रेयस्य तस्य क्षत्तुश्च अध्यात्मज्ञानसंश्रितः संवादः परमात्मविषयक[4] इत्यर्थः।।४९।।

**ब्रूहीति**। पुनरागतवांस्तत्र च निमित्तं ब्रूहि।।५०।।

**राज्ञेति**। राज्ञा पृष्ट इति। अयमर्थः यत् यूयं पृच्छथ इदमेव राजाऽपि शुकं पृष्टवान् शुकोऽपि विदुरमैत्रेयसंवादं पुरस्कृत्य ये पूर्वं राज्ञा कृताः प्रश्नाः तदनुसारेणैव[5] सर्वं पुराणार्थमवोचत् तदेवाहं वोऽभिधास्यामि। तथैव श्रुणुतेति।।५१।।

* श्रीमद्भागवतं येन स्वब्रह्ममुखतो मितम्। ब्रह्मनारदयोः प्रोक्तं तं वन्दे गुरुमीश्वरम्।।१।।
यत्सूत्रयन्त्रितं विश्वं नरीनर्ति जगत्त्रयम्। सन्तस्तमेव पृच्छन्तु यदत्र स्खलितं मम।।२।।
द्वितीयस्कन्धसम्बन्धि पदभावार्थदीपिका। उद्दीप्यतामियं सद्भिर्यथा स्यात्तत्त्वदीपिका[6]।।३।।
ईक्षन्तामिच्छया सन्तः क्षमन्तां मम साहसम्। मया हि[7] स्वीयबोधाय कृतमेतत्र सर्वतः[8]।।४।।

इति श्रीमद्भागवते महापुराणे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
द्वितीयस्कन्धे दशमोऽध्यायः।।१०।।

**वीर०** एवं स्थिते शौनकः "इत्यभिव्याहृतं राजा निशम्य भरतर्षभ" इत्यादिना स्वकृतस्य राजकृतप्रश्नस्य "वैयासकेरिति वचस्तत्त्वानिश्चयमात्मनः" इत्यादि[9] सूतेनोक्तं शुकोक्तमुत्तरं श्रुत्वा पुनरपि राजकृतप्रश्नानामेव शुकोक्तान्युत्तराणि विदुरमैत्रेयसंवादरूपेण श्रोतुकामः पृच्छति - **यथेति** त्रिभिः[10]। हे सूत! भागवतश्रेष्ठ! भगवान् "उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् वेत्ति विद्यामविद्यां च" इत्युक्त-गुणसम्पन्नो योऽसौ क्षत्ता विदुरः सुदुस्त्यजान् त्यक्तुमशक्यान् बन्धून् त्यक्त्वा भुवः पृथिव्याःसम्बन्धीनि तीर्थानि चचार।।४८।।

तस्य विदुरस्य कौषारवेर्मैत्रेयस्य च कुत्र प्रदेशो[11]ऽध्यात्मसम्मत आत्मवित्सम्मतः[12] संवादोऽभूत्। पृष्टो विदुरेण पृष्टः स भगवान् मैत्रेयः तस्मै विदुराय यद्वा यदेव तत्त्वमुवाच तंत्रो[13] ब्रूहीत्युत्तरेणान्वयः।।४९।

1. H.V. यथेति 2. A.B. Omit क्षत्ता विदुरः 3. H.V. Omit चेति 4. A.B. Omit पर......इत्यर्थः। 5. H.V. °ण सर्वं *H.V. Omit श्रीमद्भागवतं......स्खलितं मम।।२।। 6. H.V. °पनम् 7. H.V. °ऽपि 8. H.V. त्र° 9. A.B. °दिना 10. W. Omits त्रिभिः 11. W. Omits प्र° 12. W. Omits आत्मवित्सम्मतः 13. W. Omits तत्रो.....न्वयः

तदिदं तत्त्वं सौम्य! हे सूत! विदुरस्य विचेष्टितं बन्धुत्यागे निमित्तं च यत् तदपि पुनर्यथा येन प्रकारेणागतवान् तं प्रकारञ्च नोऽस्मभ्यं ब्रूहीत्यर्थः।।५०।।

सूतस्तु भवत्पृष्टमेव राज्ञा श्रीशुकं प्रति पृष्टमतः शुकोक्तमेव भवदीय प्रश्नस्याप्युत्तरमित्याह - **राज्ञेति**। परीक्षिता राज्ञा आसमन्तात्पृष्टो महामुनिः श्रीशुकः यन्मैत्रेयोक्तमवोचत्तदेव राजप्रश्नानुसारतः राजप्रश्नानुक्रमेण वो युष्मभ्यमभिधास्ये कथयिष्ये श्रुणुत श्रवणं कुरुतेत्यर्थः। यूयमिति शेषः।।५१।।

इति श्रीवत्सान्वयपयःपारावारराकासुधाकरस्य सर्वविद्यानिधेः चक्रवर्तिनः
श्रीशैलगुरोः सुतेन तच्चरणकमलपरिचर्या प्रसादिततत्सूक्तिसमधिगत
श्रीमद्भागवतार्थहृदयेन श्रीवैष्णवदासेन श्रीवीरराघवविदुषा लिखितायां
श्रीमद्भागवतचन्द्रचन्द्रिकायां श्रीमद्भागवतव्याख्यायां द्वितीयस्कन्धे दशमोऽध्यायः।।१०।।

**विज०** अस्य ग्रन्थस्य शुकशिष्यसुतशौनकसंवादत्वं स्पष्टयन् शौनकप्रश्नप्रकारमाह - **यदाहेति**। "विदुरस्तीर्थयात्रायां मैत्रेयादात्मनो गतिम्" इत्यादिना क्षत्ता बन्धून् त्यक्त्वा भुवः तीर्थानि चचार। तत्र तीर्थसञ्चरणसमये मैत्रेयादात्मज्ञानं चापेति यद्भवानाह।।४८।।

ततः किं तत्राह - **कुत्र** इति। तस्य विदुरस्याध्यात्मसम्भवः आत्मनां पुरुषाणामधिकस्य हरेः कथायाः सम्भवो यस्मात् स तथा। यद्वा आत्मानं शरीरमधिकृत्य वर्तमानं देहेन्द्रियादितद्विषयः विदुरेण पृष्टः स भगवांस्तस्मै विदुराय यद्वा तत्त्वमुवाच ह। हेत्यनेन ग्रन्थान्तरप्रसिद्धिमाह "प्रत्यारम्भे प्रसिद्धौ ह" इति यादवः।।४९,५०।।

तत्र सूतः शौनकप्रश्नपरिहारप्रकारं प्रतिजानीते - **राज्ञेति**। यत्समाधानं राज्ञः प्रश्नानुसारत इति पुनरुक्त्या प्रश्नयोरेकविषयत्वेन परिहारोऽपि तदविनाभूत इति तत्प्रश्नप्रतिवचनमपि युष्मत्प्रश्नप्रतिवचनमेवेति दर्शयति।।५१।।

द्वितीयस्कन्धगा ह्येषा पदरत्नावलीमया। स्वर्पिता चरणाम्भोजे पद्मनाभस्य भासताम्।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
द्वितीयस्कन्धे दशमोऽध्यायः।।१०।।

---

1. A.B. "क्तिरेव 2. A. Omits राज......रतः 3. W. "श्रुक्र" 4. W. Omits कथयिष्ये 5. W. Omits श्रव......शेषः 6. A.B. उक्तः तत्प्रश्न"

**रा०कृ०** हे सूत! भागवतोत्तम! क्षत्ता विदुरः सुदुस्त्यजान् त्यक्तुमशक्यान् बन्धून् त्यक्त्वा भुवः भूमेः सम्बन्धीनि तीर्थानि चचार अचरत् इति भवान् यत् यं प्रति नः अस्मभ्यं आह उक्तवान् तस्य कुत्र संवाद इति अग्रिमेण श्लोकेनान्वयः।।४८।।

तस्य विदुरस्य कौषारवेः मैत्रेयस्य च अध्यात्मसंश्रितः अध्यात्मज्ञानविषयकः संवादः सम्भाषणं कुत्र कस्मिन् स्थाने, अभूदिति शेषः। भगवान् सः मैत्रेयश्च पृष्टः विदुरेण पृष्टस्सन् तस्मै विदुराय यत् तत्वं वा उवाच ह उक्तवान् तन्नो ब्रूहीत्यग्रिमश्लोकेनान्वयः।४९।।

हे सौम्य! सौम्यस्वभाव! सूत! तदिदं तत्त्वं विदुरस्य विचेष्टितं तीर्थाटनादिकं तस्य बन्धुत्यागनिमित्तञ्च बन्धुत्यागे कारणञ्च तथैव पुनः कथमागतवान् बन्धून् समागतवान्? इत्येतत् सर्वं नः अस्मभ्यं ब्रुहि।।५०।।

राज्ञा परीक्षिता पृष्टः अस्मिन् विदुरमैत्रेयसंवादविषये पृष्टः महामुनिः श्रीशुकः यदवोचत् यत्समाधानमुक्तवान् तत् राज्ञः परीक्षितः प्रश्नानुसारतः प्रश्नानुसारेण वः युष्मभ्यं अभिधास्ये कथयिष्यामि श्रुणुत सावधानमाकर्णयत।।५१।।

इति श्रीमद्भागवते महापुराणे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां व्याख्यायां
द्वितीयस्कन्धे दशमोऽध्यायः।।१०।।

**द्वितीयस्कन्धस्समाप्तः**

oooOooo

# श्रीमद्भागवत द्वितीयस्कन्धस्थश्लोकपादानुक्रमणिका

| | अध्याय: | श्लोक: | पाद: | | अध्याय: | श्लोक: | पाद: |
|---|---|---|---|---|---|---|---|
| अ | | | | अन्तस्सरस्युरुबलेन पदे गृहितो | 7 | 15 | a |
| अकाम: पुरुषं परम् | 3 | 9 | d | अन्तस्तिलोक्या स्त्वपर: | 6 | 19 | c |
| अकाम: सर्वकामो वा | 3 | 10 | a | अन्तर्हितेन्द्रियार्थाय | 9 | 38 | a |
| अज: सृजति भूतानि | 8 | 9 | a | अन्तेत्वधर्महरमन्यु वशासुराद्या: | 7 | 39 | c |
| अणीयसा विरजेनात्मनैक: | 2 | 25 | b | अन्ते नारायण स्मृति: | 1 | 6 | d |
| अण्डं निर्भिद्य निर्गत: | 5 | 35 | b | अन्नाद्यकाम स्त्वदितिं | 3 | 4 | a |
| अतप्यत स्माखिलल्लोकतापनं | 9 | 8 | c | अन्यत्र कुपितात् द्विजात् | 8 | 26 | d |
| अत: कविर्नामसु यावदर्थ: | 2 | 3 | a | अन्यस्मात् सदसञ्च यत् | 7 | 50 | d |
| अत:परं सूक्ष्मतमम् | 10 | 38 | a | अन्ये च ये प्रेतपिशाचभूत | 6 | 43 | e |
| अत्र प्रमाणं हि भवान् | 8 | 25 | a | अन्ये च विविधा जीवा | 6 | 14 | a |
| अत्र सर्गो विसर्गश्च | 10 | 1 | a | अन्ये च शाल्वकपि बल्वलद- | 7 | 34 | c |
| अत्रे रपत्य मभिकाङ्क्षत आहतुष्टो | 7 | 4 | a | अन्वयव्यतिरेकाभ्यां | 9 | 35 | c |
| अथाभिधेह्यङ्गमनोऽनुकूलं | 2 | 25 | a | अपश्यता मात्मतत्त्वं | 1 | 2 | c |
| अथो अनन्तस्य मुखानलेन | 2 | 26 | a | अपानन्त मपानन्ति | 10 | 16 | c |
| अदीनलीलाहसितेक्षणोल्लसत् | 2 | 12 | a | अपां वीर्यस्य सर्गस्य | 6 | 7 | a |
| अधिदैव मथाऽध्यात्मम् | 10 | 14 | a | अपोऽस्रक्षीच्छुचि श्शुचि: | 10 | 10 | d |
| अधिभूत मिति प्रभु: | 10 | 14 | b | अप्युत्तमाङ्गं न नमेन्मुकुन्दं | 3 | 29 | b |
| अधीतवान् द्वापरादौ | 1 | 8 | c | अप्रजानां य आश्रमा: | 6 | 19 | h |
| अध्यक्षोऽवस्थितो गुहाम् | 9 | 24 | b | अभूत्स्पर्शगुणोऽनिल: | 6 | 26 | h |
| अध्यर्हणीयासन मास्थितं परं | 9 | 16 | a | अभ्यसेन्मनसाशुद्धं | 9 | 17 | a |
| अनन्तवीर्य:श्वसितं मातरिश्वा | 1 | 33 | c | अमुनी भगवद्रूपे | 10 | 35 | a |
| अनादिमध्यनिधनं | 10 | 34 | c | अमृतंक्षेम मभयं | 6 | 18 | c |
| अनुक्तमिष्ये त इमान् सुपेशान् | 6 | 45 | d | अम्भसोगन्धवानभूत् | 5 | 29 | b |
| अनुप्रणान्ति यं प्राणा: | 10 | 16 | a | अम्लानलक्ष्म्या वनमालया- | 2 | 10 | d |
| अनुव्रता यत्र सुरासुरार्चिता: | 9 | 10 | d | अयजन् व्यक्तमव्यक्तं | 6 | 28 | c |
| अन्तकालेतु पुरुष: | 1 | 15 | a | अयन्तु ब्रह्मण: कल्प: | 10 | 46 | a |
| अन्तराजायते प्रभो: | 10 | 17 | b | अवतारानुचरितं(यदा०) | 8 | 17 | c |
| अन्तर्भवायानुपलक्ष्यवर्त्मने | 4 | 12 | d | अवतारानुचरितं (हरे०) | 10 | 5 | a |
| अन्तर्महार्णव उपागत मादिदैत्यं | 7 | 1 | c | अविक्लवस्ते परिकर्मणिस्थितो | 9 | 29 | c |
| अन्तश्शरीर आकाशात् | 10 | 15 | a | अविज्ञाय परं मत्त: | 5 | 10 | c |

3

| | अध्याय: | श्लोक: | पाद: | | अध्याय: | श्लोक: | पाद: |
|---|---|---|---|---|---|---|---|
| तदिदं विश्वमहितम् | 6 | 30 | b | तलातलं वै पुरुषस्य जङ्घे | 1 | 26 | d |
| तद्धात्रं वस्तुसाराणां | 6 | 3 | e | तवा प्येतर्हि कौरव्य | 1 | 14 | a |
| तद्दर्शनाह्लादपरिप्लुतान्तर: | 9 | 17 | a | तस्मा ददा दध्रुवगतिं गृणते | 7 | 8 | c |
| तद्द्रव्यमत्यगा द्विश्वं | 6 | 21 | c | तस्मा इदं भागवतं | 9 | 43 | a |
| तद्भ्रूविजृम्भ: परमेष्ठिधिष्ण्यं | 1 | 30 | c | तस्मा द्धारत सर्वात्मा | 1 | 5 | a |
| तद्विजानीहि यज्ज्ञानम् | 5 | 1 | c | तस्माद् भ्रुवोरन्तरमुन्नयेत | 2 | 21 | a |
| तद्विधा दाश्रनो मायाम् | 9 | 33 | b | तस्मा त्सर्वात्मना राजन् | 2 | 36 | a |
| तद्विश्वनाभि न्त्वतिवर्त्य विष्णो: | 2 | 25 | a | तस्मै नमोभगवते | 5 | 12 | a |
| तद्वैपदं भगवत: परमस्य पुंसो | 7 | 41 | a | तस्मै भगवते: नम: | 6 | 37 | d |
| तद्वोऽभिधास्ये शृणत | 10 | 51 | c | तस्मै सुभद्रश्रवसे नमोनम: | 4 | 15 | d |
| तथातद्विषयां धेहि | 9 | 27 | c | तस्मै सुभद्रश्रवसे नमोनम: | 4 | 16 | d |
| तथा तेषु न तेष्वहम् | 9 | 34 | d | तस्मै सुभद्रश्रवसे नमो नम: | 4 | 17 | d |
| तथाऽपि नाथमानस्य | 9 | 25 | a | तस्मै स्वलोकं भगवान् सभा- | 9 | 9 | a |
| तथा ससर्जेद ममोघदृष्टि: | 2 | 1 | c | तस्य मात्रा गुण: शब्द: | 5 | 25 | c |
| तथैव तत्त्वविज्ञानम् | 9 | 31 | c | तस्यतें यत्क्षणो नित: | 3 | 17 | c |
| तथैवागतवान्पुन: | 10 | 40 | d | तस्यां रोममहीरुहा: | 10 | 23 | c |
| तन्तुं तन्वन् पितृन् यजेत् | 3 | 8 | b | तस्यापि द्रष्टुरीशस्य | 5 | 17 | a |
| तत्रासे परमायने | 6 | 2 | b | तांनाध्यगच्छत् दृशमत्र सम्मतां | 9 | 5 | c |
| तत्रायया मोहितबुद्धय स्त्विदं | 6 | 36 | c | तातप्यमानमकरोरगनक्रचक्र: | 7 | 24 | d |
| तपत्यन्तर्बहि: पुमान् | 6 | 16 | d | तामसश्चेति यद्भिदा | 5 | 24 | d |
| तपस्तपीयां स्तपतां समाहित: | 9 | 8 | d | तामसादपि भूतादे: | 5 | 25 | a |
| तपस्युपादिष्ट इवाऽऽदधेमन: | 9 | 7 | d | तावत्स्थवीय:पुरुषस्य रूपं | 2 | 14 | c |
| तपस्विनो दानपरा यशस्विन: | 4 | 17 | a | तावद् यत्साम्परायिकं | 1 | 14 | d |
| तपो मे हृदयं साक्षात् | 9 | 22 | c | तावानसाविति प्रोक्त: | 8 | 8 | e |
| तपो ररार्टी विदुरादिपुंस: | 1 | 28 | c | तास्ववात्सीत् स्वसृष्टसु | 10 | 11 | a |
| तपोलोक: स्तनद्वयात् | 5 | 39 | b | तिरोधीयेत विप्लुतं | 6 | 40 | d |
| तप्तं तपो विविधलोकसिसृक्षया- | 7 | 5 | a | तिर्यग्जना अपि किमुश्रुतधारणा- | 7 | 46 | d |
| तमसश्चापि पश्चिम: | 6 | 9 | b | तिर्यङ्नरसुरात्मभि: | 10 | 42 | d |
| तमेव पुरुषं यज्ञं | 6 | 27 | c | तिष्ठन् वनं सदयितानुज आवि- | 7 | 23 | c |
| तमोविशीर्यते मह्यं | 4 | 5 | c | तिस्र: सुरनृनारका: | 10 | 41 | b |
| तम: प्रधान स्त्वभवत् | 5 | 23 | c | तीर्थश्रव: श्रवणमङ्गलनामधेय! | 7 | 15 | c |
| तयोस्तु बलमिन्दश्च | 10 | 24 | c | तीव्रेण भक्तियोगेन | 3 | 10 | c |
| तरव: किं नजीवन्ति | 3 | 18 | a | तुभ्यञ्च नारद भृशं भगवान् | 7 | 19 | a |

| | अध्याय: | श्लोक: | पाद: |
|---|---|---|---|
| तुष्टं निशाम्य पितरं | 9 | 42 | a |
| तुष्टिः पुष्टि स्तदाश्रये | 10 | 29 | d |
| तेजसस्तु विकुर्वाणात् | 5 | 28 | a |
| तेजस्कामो विभावसुं | 3 | 3 | b |
| ते दुस्तरा मतितरन्ति च देवमा- | 7 | 42 | c |
| तेन खेदयसे न स्त्वं | 5 | 7 | c |
| तेन नारायणो नाम | 10 | 11 | c |
| तेनाऽऽनाऽऽत्मान मुपेति- | 2 | 31 | a |
| तेनाऽऽत्मानाऽऽपोऽनलमूर्ति | 2 | 28 | b |
| तेनेद मावृतं विश्वं | 6 | 15 | c |
| ते वै विदन्त्यतितरन्तिच देव- | 7 | 46 | a |
| तेषां प्रमत्तो निधनं | 1 | 4 | c |
| तेषु यज्ञस्त पशवः | 6 | 23 | a |
| तैजसात्तु विकुर्वाणात् | 5 | 31 | a |
| तैनै वायजमीश्वरं | 6 | 27 | d |
| तोकेन जीवहरणं यदुलूकिकायाः | 7 | 27 | a |
| तं दंष्ट्रयाद्रिमिव वज्रधरोददार | 7 | 1 | d |
| तं नाध्यगच्छं यत आत्मसम्भवः | 6 | 34 | d |
| तं नारदः प्रियतमः | 9 | 40 | a |
| तं निर्वृतो नियतार्थो भजेत | 2 | 6 | c |
| तं प्रीयमाणं समुपस्थितं तदा | 9 | 18 | a |
| तं सत्यमानन्दनिधिं भजेत | 1 | 39 | c |
| त्यक्त्वा बन्धून् सुदुस्त्यजान् | 10 | 47 | d |
| त्यक्त्वोदास्ते तदोभयम् | 9 | 3 | d |
| त्रयीमयो धर्ममय स्तपोमयः | 4 | 19 | b |
| त्रात्वर्थितो जगति पुत्रपदं च लेभे | 7 | 9 | c |
| त्रितयं तत्र यो वेद | 10 | 9 | c |
| त्रिधाऽभिद्यत तच्छृणु | 10 | 14 | d |
| त्रिभि रेभि रधोक्षजः | 5 | 20 | b |
| त्रिमूर्ध्नोऽधायि मूर्धसु | 6 | 18 | d |
| त्रिरन्वीक्ष्य मनीषया | 2 | 34 | b |
| त्रिवर्गस्य च यो विधिः | 8 | 21 | d |
| त्रिवृद्ब्रह्माक्षरं परं | 1 | 17 | b |
| त्रिस्सप्तकृत्व उरुधारपरश्वधेन | 1 | 22 | d |
| त्रैमासिकस्य च पदा शकटोऽप- | 7 | 27 | b |
| तौविष्टपोरुभयहास नृसिंहरूपं | 7 | 17 | a |
| त्वक्चर्ममांसरुधिर | 10 | 31 | a |
| त्वगस्य स्पर्शवायोश्च | 6 | 4 | a |
| त्वमेत द्विपुलीकुरु | 7 | 51 | d |
| त्वयाभिपृष्टे ह सनातने च | 2 | 32 | b |
| त्वचालब्धगुणो वृतः | 10 | 23 | f |
| त्वयाऽहं तोषितः सम्यक् | 9 | 19 | a |
| त्वयि कर्मविमोहिते | 9 | 22 | b |
| **द** | | | |
| दक्षादयो ये भवदादयश्च | 6 | 42 | b |
| दक्षिणाश्च व्रतानि च | 6 | 25 | b |
| दत्तो मया ह मिति यद् भगवान् | 7 | 4 | b |
| ददर्श तत्राखिलसात्वतां पतिं | 9 | 14 | a |
| ददृशे येन तद्रूपं | 8 | 9 | c |
| दन्तै विडाम्बितककुब्जुष ऊढ- | 6 | 25 | b |
| दन्दह्यमानं स निरीक्षय विश्वम् | 2 | 26 | b |
| दशमस्य विशुद्ध्यर्थं | 10 | 2 | a |
| दाम्पत्यार्थं उमां सतीं | 3 | 7 | d |
| दावाग्निना शुचिवने परिदह्यमाने | 7 | 29 | b |
| दिग्वल्कलादौ सति किं दुकूलैः | 2 | 4 | d |
| दिग्वातार्क प्रचेतोऽश्वि० | 5 | 30 | c |
| दिव स्सूर्यस्य चाक्षिणी | 6 | 3 | b |
| दिवाचार्थेहया राजन् | 1 | 3 | c |
| दिव्यं सहस्राब्दममोघदर्शनः | 9 | 8 | a |
| दिव्याः स्तुवन्ति मुनयो यदुपर्य- | 7 | 8 | d |
| दिशः श्रोत्रं गुणग्रहः | 10 | 22 | d |
| दुग्धा वसूनि वसुधा स्कलानि - | 7 | 9 | d |
| दुरन्तदुःखप्रभवानुदर्शनात् | 2 | 27 | d |
| दुरन्तसर्गो यदपाङ्गमोक्षः | 1 | 31 | d |
| दुर्विभाव्य मधीश्वरैः | 4 | 3 | d |
| दुर्विभाव्य मिवाऽऽभाति | 4 | 8 | [illegible] |

| | अध्यायः | श्लोकः | पादः |
|---|---|---|---|
| दुष्टेषु राजसु दमं व्यदधात् स्व- | 7 | 20 | c |
| दुस्तोषः कूटयोगिनाम् | 9 | 19 | d |
| दूरे सुहन्मथितरोष सुशोणदृष्ट्या | 7 | 24 | c |
| दृश्यै र्बुद्ध्यादिभिर्द्रष्टा | 2 | 35 | c |
| दृष्ट्वाऽग्न्मनो भगवतो नियमा- | 7 | 6 | c |
| देवतानुक्रमः कुल्पः | 6 | 25 | c |
| देवदेव, नमस्तेऽस्तु | 5 | 1 | a |
| देवद्विषां निगमवर्त्मनि निष्ठितानां | 7 | 37 | a |
| देव व्रतो बलिरमूर्तरयो दिलीपः | 7 | 44 | d |
| देवा नारायणाङ्गजाः | 5 | 15 | b |
| देवा वैकारिका दश | 5 | 30 | b |
| देवर्षिः परिपप्रच्छ | 9 | 42 | c |
| देवीं मायान्तु श्रीकामः | 3 | 3 | a |
| देवेऽभिवर्षति पशून् कृपया | 7 | 32 | b |
| देव्य स्त्वनङ्गपृतजा घटितुं न - | 7 | 6 | d |
| देहापत्य कलत्रादिषु | 1 | 4 | a |
| देहारम्भोऽस्य धातुभिः | 8 | 7 | b |
| देहे स्वधातुविगमेऽनुविशीर्यमाणे | 7 | 49 | c |
| दैत्येन्द्र माशु गदयाभिपतन्त | 7 | 14 | c |
| दैत्येन्द्र सिद्धेश्वर दानवेन्द्राः | 6 | 43 | d |
| दोधूयति नभस्वति | 10 | 20 | b |
| दंष्ट्रा यमः स्नेहकलाद्विजानि | 1 | 31 | b |
| द्यौ रक्षिणीचक्षुरभूत् पतङ्गः | 1 | 30 | a |
| द्रव्यात्मकः कर्म वितानयोगः | 1 | 37 | d |
| द्रव्यज्ञानक्रियात्मकः | 5 | 23 | d |
| द्रव्यज्ञानक्रियाश्रयाः | 5 | 19 | b |
| द्रव्यशक्तिः क्रियाशक्तिः | 5 | 24 | e |
| द्रव्यं कर्म च कालश्च | 10 | 12 | a |
| द्रव्यं कर्म च कालश्च | 5 | 14 | a |
| द्रव्यं विकारो गुण इन्द्रियाणि | 6 | 41 | c |
| द्रष्टु मर्हन्ति सूरयः | 10 | 44 | d |
| द्विविधाश्चतुर्विधा येऽन्ये | 10 | 40 | a |
| द्वेजानुनी सुतलं विश्वमूर्तेः | 1 | 27 | a |

| | अध्यायः | श्लोकः | पादः |
|---|---|---|---|
| **ध** | | | |
| धन्वन्तरिश्च भगवान् स्वयमेव- | 7 | 21 | a |
| धर्तोच्छिलीन्ध्रमिव सप्तदिनानि- | 7 | 33 | c |
| धर्मस्स्तनोऽधर्मपथोऽस्य पृष्ठम् | 1 | 33 | b |
| धर्मस्य दक्षदुहितर्यजनिष्ट मूर्त्यां | 7 | 6 | a |
| धर्मस्य मम तुभ्यञ्च | 6 | 11 | a |
| धर्मः कृच्छ्रेषु जीवतां | 8 | 18 | d |
| धर्मार्थ उत्तरश्लोकं | 3 | 8 | a |
| धर्मोयश्च युगेयुगे | 8 | 17 | b |
| धारणा यत्र सम्मता | 1 | 22 | b |
| धियाऽनुपश्यन्ति हि तत्त्व मात्म- | 4 | 21 | b |
| धियां पतिर्लोकपतिर्धरापतिः। | 4 | 20 | b |
| धुनोति शमलं कृष्णः | 8 | 5 | c |
| धौतात्मा पुरुषः कृष्णः | 8 | 6 | a |
| ध्यायते ब्रह्मपरमं | 9 | 44 | c |
| **न** | | | |
| न कर्मभिस्तां गतिमाप्नुवन्ति | 2 | 23 | c |
| न खादन्ति न मेहन्ति | 3 | 18 | c |
| न घटेतार्थसम्बन्धः | 9 | 1 | c |
| न चान्योऽर्थोऽस्ति तत्त्वतः | 5 | 14 | d |
| न चोपगायत्युरुगाय गाथाः | 3 | 20 | d |
| न जातु मर्त्योऽभिलषेत यस्तु | 3 | 23 | b |
| नतोऽस्म्यहं तच्चरणं समीयुषां | 6 | 35 | a |
| नद्य स्समुद्राश्च तयोः | 10 | 29 | c |
| नद्योऽस्य नाड्योऽथ तनूरुहाणि | 1 | 33 | a |
| ननाम पदाम्बुजमस्य विश्वसृक् | 9 | 17 | c |
| नन्दश्च मोक्ष्यति भयाद् वरुणस्य- | 7 | 31 | a |
| न पराभावयन् स्वयं | 5 | 5 | b |
| न प्रतीयेत चाऽऽत्मनि | 9 | 33 | b |
| नभसोऽथ विकुर्वाणात् | 5 | 26 | a |
| नभस्तलं नाभिसरो गृणन्ति | 1 | 27 | d |
| न भारती मेऽङ्ग मृषोपलक्ष्यते | 6 | 33 | a |
| नमस्कृतं ब्रह्मविदामुपैति | 2 | 25 | c |

19

| | अध्यायः | श्लोकः | पादः |
|---|---|---|---|
| विद्धः सपत्न्युदितपत्रिभिरन्ति | 7 | 8 | a |
| विद्याकामस्तु गिरिशं | 3 | 7 | c |
| विद्यातपोयोगस माधिभाजां | 2 | 23 | d |
| विद्याध्राश्चारणा द्रुमाः | 6 | 13 | d |
| विद्याध्रासुरगुह्यकान् | 10 | 37 | d |
| विद्योतमानः प्रमदोत्तमा द्युभिः | 9 | 12 | c |
| विधिवत्कल्पितासने | 1 | 16 | d |
| विधिस्साधारणो यत्र | 10 | 46 | c |
| विधूतकल्कोऽथ हरेरुदस्तात् | 2 | 24 | c |
| विनिर्मितश्चाऽऽत्मसमं विचक्ष्महे | 6 | 36 | d |
| विप्लुष्टपौरुषभगं निरये पतन्तम् | 7 | 9 | b |
| विबुभूषुरुपाददे | 5 | 21 | d |
| विभूषितं मेखलयाङ्गुलीयकैः | 2 | 11 | a |
| विमूढं मन आत्मनः | 1 | 20 | b |
| विमोहिता विकत्थन्ते | 5 | 13 | c |
| विराट् स्वराट् स्थास्नु चरिष्णु- | 6 | 41 | d |
| विरूढां ममतां जहौ | 4 | 2 | d |
| विरोचमानाननहासपेशलं | 2 | 11 | d |
| विलज्जमानया यस्य | 5 | 13 | a |
| विलुम्पन् विसृजन् गृह्णन् | 9 | 26 | c |
| विलोक्य ततान्यदपश्यमानः | 9 | 7 | b |
| विवक्षोर्मुखतो भूम्नः | 10 | 19 | a |
| विशतः संसृता विह | 2 | 33 | b |
| विशारदो नृपतिं साधु पृष्टः | 3 | 25 | d |
| विशुद्धं केवलं ज्ञानं | 6 | 39 | a |
| विशेषस्तस्य देहोऽयं | 1 | 24 | a |
| विशेषस्तु विकुर्वाणात् | 5 | 29 | a |
| विश्वं पुरुषरूपेण | 6 | 31 | c |
| विश्वस्थित्युद्भवाप्ययः | 8 | 10 | b |
| विश्वान् देवान् राज्यकामः | 3 | 4 | c |
| विश्वेश्वरे द्रष्टरि भक्तियोगः | 2 | 14 | b |
| विष्णुरातेन संसदि | [illegible] | 27 | d |
| विष्णोर्नु वीर्यगणनां कतमोऽर्ह- | 7 | 40 | a |

| | अध्यायः | श्लोकः | पादः |
|---|---|---|---|
| विसर्गः पौरुषः स्मृतः | 10 | 3 | d |
| विसृज्य दौरात्म्यमनन्यसौहृदाः | 2 | 18 | c |
| विसृज्य वा यथा मायाम् | 8 | 23 | c |
| विस्फूर्जितैर्धनुष उच्चरतोऽधिसै- | 7 | 25 | d |
| विस्रंसितानुरुभये सलिले मुखा- | 7 | 12 | c |
| वीर्यं मे दुश्चरं तपः | 9 | 23 | d |
| वीर्यं हिरण्मयं देवः | 10 | 13 | c |
| वीर्यकामोऽथ वीर्यवान् | 3 | 3 | d |
| वृतं चतुष्षोडशपञ्चशक्तिभिः | 9 | 16 | b |
| वेदगर्भासिसृक्षया | 9 | 19 | b |
| वेदगर्भोऽभ्यधात्साक्षात् | 4 | 25 | c |
| वेदद्रुमं विटपशो विभजिष्यति- | 7 | 36 | d |
| वेद ह्यप्रतिरुद्धेन | 9 | 24 | c |
| वेदाहमङ्ग परमस्य हि योगमायां | 7 | 43 | a |
| वेदोपवेदधर्माणाम् | 8 | 20 | c |
| वेषं विधाय बहुभाष्यत औप- | 7 | 37 | d |
| वैकरिक स्तैजसश्च | 5 | 24 | c |
| वैकारिकान्मनोजज्ञे | 5 | 30 | a |
| वैयासकिं मृषिं कविं | 3 | 13 | d |
| वैयासकिश्च भगवान् | 3 | 16 | a |
| वैयासकेरिति वचः | 4 | 1 | a |
| वैराजः पुरुषो योऽसौ | 1 | 25 | c |
| वैराजात्पुरुषादिदं | 9 | 45 | b |
| वैश्वानरं याति विहयसा गतः | 2 | 24 | a |
| वैहायसाना मुत यद्विहारं | 2 | 22 | b |
| व्यपेतसंक्लेशविमोह साध्वसं | 9 | 9 | c |
| व्यवस्थानं स्वरूपतः | 8 | 22 | d |
| व्यवस्थितानामनुमृग्य दाशुषे | 4 | 13 | d |
| व्यवायेन च वा वयः | 1 | 3 | b |
| व्याजाह्वयेन हरिणा निलयं तदी- | 7 | 35 | d |
| व्यासायामिततेजसे | 9 | 44 | d |
| व्योमेव तत्र पुरुषो न विशीर्यते- | 7 | 49 | d |
| व्रजन्ति तच्चरणसरोरुहान्तिकं | 2 | 37 | d |

